# कलिकाता-संस्कृत-ग्रन्थमाला

१। ब्रह्मसूत्रशाङ्करभाष्यम्—भामती-पञ्चपादिका-पञ्चपादिकाविवरण-तत्त्वदीपन-पञ्चपादिकाविवर-
ऋजुविवरण-भामतीटीकाऋजुप्रकाशिका-चित्सुखकृतभाष्यभावप्रकाशिका-नारायणसरस्वतीकृतवार्तिक-नवीनवि
प्रदीप-व्याख्योपव्याख्यानवकोपेतम्। संस्कृतभूमिका-सूचीपत्रादिसमेतम्। कलिकाताविश्वविद्यालयाध्या
महामहोपाध्याय-श्रीअनन्तकृष्णशास्त्रिणा संस्कृतम्। गोवर्द्धनमठाधीश-श्रीश्रीशङ्कराचार्य-लिखिताङ्गलभूमि
समलङ्कृतम्। चतुःसूत्री-पर्यन्तम्। मूल्यम्—१५) रौप्यकपञ्चद

२। वाल्मीकि-रामायणम्—लोकनाथचक्रवर्त्तिकृत-टीका—टिप्पनी—बङ्गानुवादसमेतम्। कलि
विश्वविद्यालयाध्यापक-श्रीअमरेश्वरठाकुर-एम्-ए-पि-एच्-डि-वेदान्तशास्त्रिणा संस्कृतम्, किष्किन्धा-काण्डान्तम्।

ततः, अक्षपादगोतम-न्यायदर्शनेतिहासादिग्रन्थकृत कलिकाता-संस्कृत-ग्रन्थमालाध्यक्ष-श्रीनरेन्द्रचन्द्र-वे
तीर्थ-एम्-ए-संस्क्रियमाणम्। प्रतिमासं खण्डशः प्रकाश्यमानम्।

अस्य १२खण्डानि प्रकाशितानि। बङ्गाक्षरैर्मुद्रितानि। प्रतिखण्डं मूल्यम्—१) रौप्यक

३। कौलज्ञाननिर्णयः—बौद्धतन्त्रम्। मत्स्येन्द्रनाथप्रस्थानभूत-कौलज्ञाननिर्णय-ज्ञानकारिका-
वीरतन्त्राद्यात्मकः। आङ्गलभूमिका-सूचीपत्रादिभिः समलङ्कृतः। कलिकाताविश्वविद्यालयाध्यापक-श्रीप्रबोध
बागचि-एम्-ए-डि-लिट्-संस्कृतः। मूल्यम्—६) रौप्यक

४। वेदान्तसिद्धान्तसूक्तिमञ्जरी—सिद्धान्तलेशसिद्धान्तसारिमका। गङ्गाधरेन्द्रसरस्वती-कृता। प्र
टीकासमेता। संस्कृतभूमिकाङ्गलभूमिका-संस्कृतटिप्पन्याङ्गलटिप्पनी-सूचीपत्रादिभिः समलङ्कृता। अ
श्रीनरेन्द्रचन्द्र-वेदान्ततीर्थ-एम्-ए-संस्कृता। मूल्यम्—४) रौप्यक

५। अभिनयदर्पणम्—आङ्गिकाभिनयोपयोगिशरीरसंस्थानोपदेशको नाट्यशास्त्रविशेषः। नन्दि
कृतम्। आङ्गलभूमिकानुवाद-टिप्पनी-सूचीपत्रादिभिः समलङ्कृतम्। कलिकाताविश्वविद्यालयाध्यापक-श्रीमनो
घोष-एम्-ए-काव्यतीर्थ-संस्कृतम्। मूल्यम्—५) रौप्यक

६। काव्यप्रकाशः—अलङ्कारशास्त्रम्। मम्मटभट्ट-कृतः। महेश्वरन्यायालङ्कारभट्टाचार्य-कृतादर्श
संस्कृतभूमिका-टिप्पनी-सूचीपत्रादिसमेतः। रवीन्द्रनाथ-गीताञ्जल्यनुवादात्मक-संस्कृतगीताञ्जलि-कृत्'नवद्वीप-
टोल'-विद्यालयाध्यक्ष-श्रीअमरेन्द्रमोहनतर्कतीर्थ-संस्कृतसाहित्यपरिषत्पत्रिका—सहकारिसम्पादक-श्रीउपेन्द्रमोहन-
तीर्थ-संस्कृतः। ढाकाविश्वविद्यालयाध्यापक-श्रीसुशीलकुमार दे एम्-ए-डि-लिट्-लिखिताङ्गलभूमिकया, अध्य
श्रीअमरेश्वर-ठाकुर एम्-ए-पि-एच्-डि-वेदान्तशास्त्रि-लिखिताङ्गलसंक्षिप्तसारेण च समलङ्कृतः।

मूल्यम्—८) रौप्यक

७। मातृकाभेदतन्त्रम्—संस्कृतभूमिका-टिप्पनी-सूचीपत्रादिसमेतम्। अध्यापक-श्रीचिन्तामणिभ
संस्कृतम्। अध्यापक-श्रीनरेन्द्रचन्द्र वेदान्ततीर्थ एम्-ए-लिखिताङ्गलभूमिकया समलङ्कृतम्। मूल्यम्—२) रौप्य

८। सप्तपदार्थी—वैशेषिकतन्त्रसिद्धपदार्थविवेचनरूपा। शिवादित्यकृता। मितभाषिणी-पदार्थ
बलभद्रसन्दर्भ-जिनवर्धनकृतटीका-टिप्पन्यादिसमेता। संस्कृतभूमिकाङ्गलभूमिका-सूचीपत्रादिभिः समलङ्कृता। अ
श्रीनरेन्द्रचन्द्रवेदान्ततीर्थ-एम्-ए-अध्यापक-श्रीअमरेन्द्रमोहन-तर्कतीर्थ-संस्कृता। मूल्यम्—४) रौप्यक

९। न्यायामृताद्वैतसिद्धी—न्यायामृततरङ्गिणी—न्यायामृतकण्टकोद्धार—सिद्धिव्याख्या—गौड
(लघुचन्द्रिका)-न्यायामृतसौगन्ध्य-विट्ठलेशोपाध्यायी-सौगन्ध्यविमर्श-नामकव्याख्योपव्याख्यासप्तकोपेते।
भूमिकाङ्गलभूमिका-टिप्पनी-सूचीपत्रादिभिः समलङ्कृते। महामहोपाध्याय-श्रीअनन्तकृष्णशास्त्रि-संस्कृते।

साक्षिबाधविचार-पर्यन्तं प्रथमखण्डम्। मूल्यम्—१२) रौप्यक

१०। डाकार्णवः—बौद्धतन्त्रम्। आङ्गलभूमिका-टिप्पनी-सूचीपत्रादिभिः समलङ्कृतः। शान्ति
कालेजाध्यापक-श्रीनगेन्द्रनारायणचतुर्धुरीण-एम्-ए-पि-एच्-डि-संस्कृतः। मूल्यम्—५) रौप्यक

११। अध्यात्मरामायणम्—नरोत्तम-गोपालचक्रवर्ति-रामवर्म-कृतटीका-टिप्पनी-सूचीपत्रादिसमे
अध्यापक-श्रीनगेन्द्रनाथसिद्धान्तरत्न-संस्कृतम्। अध्यापक-श्रीप्रबोधचन्द्र-बागचि-एम्-ए-डि-लिट्-लिखिता
कया समलङ्कृतम्। मूल्यम्—१५) रौप्यक

१२। देवतामूर्तिप्रकरणम्—मूर्तिनिर्माणोपदेशकः शिल्पशास्त्रविशेषः। सूत्रधारमण्डन-कृतम्।
टीका-पाठभेद-सूचीपत्रादिसमेतं ग्रन्थकृत्कृत-रूपमण्डन-तत्सूचीसहितञ्च। अध्यापक-श्रीउपेन्द्रमोहनसां
संस्कृतम्। शान्तिनिकेतनस्थविश्वभारत्यध्यापक-श्रीहरिदासमित्र-एम्-ए-लिखिताङ्गलभूमिकया समलङ्कृतम्।

मूल्यम्—५) रौप्यक

THE CALCUTTA SANSKRIT SERIES

*General Editor :*

NARENDRACHANDRA VEDANTATIRTHA, M. A.

No. XIX

Pūrṇānanda's

# ŚRĪTATTVACINTĀMAṆI

An authoritative work on Tantra

*Critically edited from original manuscripts*

**( Chapters I—XVIII )**

*With an original commentary*

BY

**BHUVANMOHAN SANKHYATIRTHA**

**AND**

**( Chapters XIX—XXVI )**

*With notes*

BY

**CHINTAMANI BHATTACHARYA**

*Kavyatirtha-Sankhyaratna-Nyaya-Sahityacharya*

**With an Introduction**

BY

**PRABODHCHANDRA BAGCHI, M. A., D.Litt.**

*Lecturer, Calcutta University.*

METROPOLITAN PRINTING &
PUBLISHING HOUSE, LIMITED
CALCUTTA, 1936



कलिकाता-संस्कृत-ग्रन्थमाला—१६

सम्पादकः—श्रीनरेन्द्रचन्द्र-वेदान्ततीर्थ-एम्-ए-
वागचि-भट्टाचार्य-सांख्यतीर्थ-मीमांसातीर्थ-तत्त्वरत्न-शास्त्री

# श्रीतत्त्वचिन्तामणिः

⁄भुवनमोहन सांख्यतीर्थेन
तथा
श्रीचिन्तामणि भट्टाचार्येण
संस्कृतः

*Printed & published by*
DINESH CHANDRA GUHA,
AT METROPOLITAN PRINTING & PUBLISHING HOUSE, LIMITED,
90, LOWER CIRCULAR ROAD, CALCUTTA

## PREFACE

*Śrītattvacintāmaṇi* is a *hitherto unpublished* tantric treatise by Paramahaṃsa Pūrṇānanda, who has, to his credit, many other works on Tantra and Vedānta, some of which have already been published. The book contains as many as 26, twenty-six chapters (*Prakāśa*) on almost all the subjects of tantric importance, the most important of which is the sixth (chapter), known by the name of *Ṣaṭcakranirūpaṇa*, published several times as an independent book in itself, with the commentary of Kalicharana Siddhanta.

Now, as the whole book is found out, it should be noted that this *Ṣaṭcakranirūpaṇa* is not an independent book in itself but a chapter, namely, prakāśa vi, of the *Śrītattvacintāmaṇi*. *Ṣaṭcakranirūpaṇa* is an important, perhaps the most important chapter, on Indian Anatomy and Physiology, complete in itself. This unique importance of the chapter, perhaps, led Kalicharana to comment on it alone. It may be that he commented on the whole book but in course of time the original text and the commentary were, somehow or other, forgotten save and except the chapter on *Ṣaṭcakranirūpaṇa* with its commentary and it, being the most important chapter of the book, laterly, passed for an independent work in itself. The complete commentary of Kalicharana on *Śrītattvacintāmaṇi* is not yet discovered.

Paramahaṃsa Pūrṇānanda belonged to the Mymensingh district of Bengal. His descendants are now shining in Itamratala, Nahata, Kathihali, Ashujiya and many other villages in the district of Mymensingh.

Kalicharana Siddhanta belonged to Sylhet. He commented on almost all the tantric works of Pūrṇānanda. He was a Barendra brahmin whose ancestors went to Sylhet from Puthia, Rajshahi. His descendants are shining in the Habiganj subdivision of Sylhet,

even today. The Bagchis of Puthia had been the disciples of Pūrṇānanda and as such their descendants who fled to Sylhet, also, continued to be the disciples of the descendants of Pūrṇānanda. Even now they are the disciples of some worthy descendant of Pūrṇānanda, living in Itamratala (formerly, Nahata), Mymensingh. All these go to show that Kalicharana, the commentator of *Ṣaṭcakranirūpaṇa* was not a vaidika brahmin as the writer of *Śrīhaṭṭer Itivṛtta* fancied to suggest without rime and reason. Pūrṇānanda lived about 400 years ago. He was a rāḍhīya brahmin and a great tantric sādhaka with super-human powers about which there are many strange stories current in the country. He was a disciple of Brahmānanda Sarasvatī the renowned commentator of *Advaitasiddhi* and therefore tried to reconcile Tantra and Vedānta in his works, e. g., *Śrītattvacintāmaṇi*, etc. Kalicharana lived about 200 years ago. He was a great Naiyāyika and tantric scholar. His nephew Sadāśiva was a tantric sādhaka of no ordinary merit. Kalicharana's great grand-sons are still living in Habiganj, Sylhet. The curious readers will do well to read the Introduction for the life, career and date of these two personages.

Now to turn up to the subject matter of the book.

The following analysis will enable the readers to make a general idea of the whole subject matter of the present work.

Chapter I. Prefatory note regarding knowledge and its character.

मङ्गलाचरणम् ; ब्रह्मस्वरूपम् ; तत्त्वज्ञानप्रतिबन्धकारणानि ; शब्दब्रह्मस्वरूपम् ; तत्त्वज्ञानस्वरूपञ्च ।

Chapter II. A fuller account of consecration or initiation for a religious ceremony.

दीक्षाशब्दार्थः ; दीक्षायाः फलम् ; दीक्षाभेदाः ; गुरुशिष्यलक्षणम् ; गुरौ शिष्यस्य व्यवहारः ; अकथहादिचक्रविचारः ; दीक्षायां दिनविचारः ( तत्रानुकूलप्रतिकूलमास-तिथि-वार-नक्षत्र-लग्नादिनिरूपणम् ) ; मन्त्रशब्दार्थः ; मन्त्राणां दशसंस्काराश्च ।

Chapter III. An account of places prescribed for initiation and other minor things.

दीक्षायां विहितस्थानानि ; दीक्षास्थाननिरूपणप्रयोजनम् ; कूर्मचक्रम् ; वास्तुयागस्तदङ्ग-चतुःषष्टिपदवास्तुमण्डलं बलिमन्त्राश्च ।

Chapter IV. The preparing of a building consecrated to a deity.

मण्डपनिर्माणम् ; तोरणध्वजपताकादिनिरूपणम् ; अङ्कुरार्पणमङ्कुरपरीक्षा च ।

Chapter V. The subsidiary duties connected with initiation, e. g., making a divinity assume its abode (in an image).

दीक्षाङ्गाधिवासनविधिर्दीक्षाविधिश्च ।

Chapter VI. The character of the six mystical circles of the body.

षट्चक्रनिरूपणम् ।

Chapter VII. The definition of a pool, well ; especially one consecrated to some deity or holy purpose.

कुण्डानां लक्षणानि ; भेदाः ; मेखलादिस्वरूपम् ; वर्णभेदेन कुण्डभेदाः ; कुण्डकरणा-सम्भवे स्थण्डिले होमविधानम् ; स्रुक्स्रुवयोर्लक्षणञ्च ।

Chapter VIII. The rules of offering oblations to gods by throwing ghee into the consecrated fire.

होमविधानम् ।

Chapter IX. Different results in offering oblations in accordance with differences of things.

द्रव्यभेदेन होमे फलभेदाः ; होमद्रव्यपरिमाणभेदाः ; अरिमन्त्रत्यागविधिश्च ।

Chapter X. The account of various differences in the mantras or incantations.

आदौ पञ्चमी, तत एकाक्षरी, ततस्त्रिकूटचतुष्कूटमन्त्रभेदाः ।

Chapter XI. Different tantric Śaktis or female deities.

शाक्तकामराजविद्या, लोपामुद्राभेदनिरूपणम्, शाक्तपञ्चमीभेदनिरूपणञ्च ।

Chapter XII. An investigation into the different mantras, etc.

शुद्धाशुद्धशबलमन्त्रनिरूपणम् ; तत्र मेरुनिर्णयः ; ऋषिभिर्दैवतैश्चाराधिता मन्त्रभेदाः ; दीपनी ; वामकेशीविद्यास्वरूपनिरूपणञ्च ।

Chapter XIII. An account of the female deity, named Ṣoḍaśī, the third of the ten tantric Mahāvidyās.

षोडशीविद्यानिर्वचनम् ।

Chapter XIV. Morning duties, etc.

प्रातःकृत्यम् , तत्र श्रीगुरुमन्त्र-नवकुलनाथ-गुरुमण्डलादिनिरूपणम् ।

Chapter XV. The order of ablutions.

स्नानक्रमस्य द्वैविध्यम् ।

Chapter XVI. The inner sacrifice, the process of creation etc.

अन्तर्यागनिरूपणम् ; समासतः सृष्टिप्रक्रिया ।

Chapter XVII. The nature of Śrīcakra or the circle of Tripurasundarī, etc., for which the book is so called.

श्रीचक्रस्वरूपम् ; मुद्रास्वरूपम् ; यन्त्रनिर्माणोपकरणादिनिर्णयः ; रात्रौ यन्त्रनिर्माण-निषेधः ; तत्र व्यवस्था ; श्रीचक्रोद्धारः ; तत्र विशेषः ; नवचक्रभेदाः ; चक्ररहस्यम् ; पीठार्चा ।

Chapter XVIII. The worship of the deity in greater detail.

सामान्यार्घ्यस्थापनादिविसर्जनान्तसपर्याक्रमः ।

Chapter XIX. The Hymn addressed to Tripurasundarī.

त्रिपुरार्णवोक्तं त्रिपुरसुन्दरीस्तोत्रम् ।

Chapter XX. An account of the repetition of the name of a deity accompanied with burnt offerings in relation to mantras.

मन्त्राणां पुरश्चरणकथनम् ।

Chapter XXI. An account of expiatory rites for killing a brahmin, etc.

ब्रह्महत्यादिप्रायश्चित्तकथनम् ।

Chapter XXII. An account of the sacrifice, called Jñānadūtī.

ज्ञानदूतीयागकथनम् ।

Chapter XXIII. An account of the means of reviving the deity Tripurasundarī.

त्रिपुरसुन्दरीविद्याया जीवनप्राप्त्युपायकथनम् ।

Chapter XXIV. An investigation into the reading of hymns to the deity.

देवतास्तवपाठनिर्णयः ।

Chapter XXV. The hymn containing one thousand names of the great Tripurasundarī.

श्रीमहात्रिपुरसुन्दरीसहस्रनामस्तोत्रम् ।

Chapter XXVI. An account of the consecration of a mystical diagram used as an amulet.

महायन्त्रसंस्कारकथनम् ।

The publication of this work is connected with sad events. The main editor of the work could not finish it with his original commentary. Our esteemed and learned friend lived to finish his commentary as far as 17, seventeen chapters of the book. May his soul rest in peace.

The remaining portions of the book have been edited with notes by a second editor who has, too, lost his dear eldest son during the period of his editing.

The editors have spared no pains to make the edition a useful one.

The present edition of the *Śrītattvacintāmaṇi* is based on the following manuscripts :

A.—The manuscript belonging to Kumar Saratkumar Ray of Dighapatia, Rajshahi.

B.—The manuscript belonging to Maharaja Pradyutkumar Tagore of Calcutta.

C.—The manuscript, No. I. G. 44, belonging to the Asiatic Society of Bengal, Calcutta.

All the manuscripts are complete and generally correct.

We are specially thankful to Kumar Saratkumar Ray, Maharaja Pradyutkumar Tagore and the Secretary, Asiatic Society of Bengal, for lending us these manuscripts.

The whole work is planned in two volumes :

(1) The original text with commentary and notes of the first 19, nineteen chapters of the book.

(2) The last 7, seven chapters of the original text with notes, Introduction and miscellaneous indices.

Most cordial thanks are due to Dr. Prabodh Chandra Bagchi of the Calcutta University, who has kindly written an Introduction to this important work.

We shall be failing in our duty if we do not express our heartiest thanks to Dr. Amareswar Thakur of the Calcutta University and formerly General Editor of the Series, who did much for the publication of this work.

Finally, we may hope that the readers will excuse us for any imperfection they may notice and specially for misprints that have crept in.

Calcutta,
March, 1936 } Narendra Chandra Bhattacharya

# श्रीतत्त्वचिन्तामणिः

## प्रथमः प्रकाशः

[ मङ्गलाचरणम्, ब्रह्मस्वरूपम्, तत्त्वज्ञानप्रतिबन्धकारणानि, शब्दब्रह्मस्वरूपम्, तत्त्वज्ञानस्वरूपञ्च ]

[ मङ्गलाचरणम् ]

ॐ नमः परमदेवतायै । ॐ नमः परायै ।

[1]दशशतदलपद्मप्रोल्लसत्पूर्णचन्द्रे[2]
हिमरुचिरुचिराङ्गो हंसपीठान्तरस्थः ।
अभयवरकराब्जो योगपूर्णो[3] द्विनेत्रः
कुलकमलविलासी पातु मां देवदेवः ॥ १ ॥

१ । अथ तत्रभवान् पूर्णानन्दपरमहंसः श्रीविद्योपासनारहस्यप्रतिपादकं श्रीतत्त्वचिन्तामणिं चिन्तामणिमिव साधकानां प्रणिनीषुर्ग्रन्थसमाप्तिप्रतिबन्धकीभूताशेषविघ्ननिवारणाय मङ्गलमाचरति । तत्र च—

सच्चिदानन्दविभवात् सकलात् परमेश्वरात् ।
आसीच्छक्तिस्ततो नादो नादाद् बिन्दुसमुद्भवः ॥ ( १।७ )

इत्यादिशारदातिलकप्रथमपटलवचनेन,

शिवशक्तिसमायोगादव्यक्तात् परमेश्वरात् ।
आद्या भगवती देवी सैव त्रिपुरसुन्दरी ।
आसीच्छक्तिस्ततो नादो नादाद् बिन्दुसमुद्भवः ॥

1. 'दशदश-' C. 2. '-न्द्रो' A. C. 3. '-र्ण-' A. '-घूर्ण-' C, D.

इति षट्चक्रटीकाधृतपाञ्चरात्रवचनेन च ग्रन्थप्रतिपाद्यायास्त्रिपुरसुन्दरीशक्तेर्बीजरूपतया निरूपितं श्रीगुरुस्वरूपं परमशिवमादौ प्रार्थयते—दशेति ।

दशशतदलं सहस्रारं यत् पद्मं शिरसि स्थितं तस्मिन् प्रोल्लसन् देदीप्यमानः स्फुरज्ज्योत्स्नाजाल इत्यर्थः, यः पूर्णचन्द्रः तस्मिन् स्थित इत्यर्थः । तथाहंसपीठान्तरस्थः 'हंस'-वर्णद्वयरूपपीठाभ्यन्तरवर्त्ती । तदुक्तं महाकालीतन्त्रे प्रथमपटले—

सहस्रारान्तरे शून्ये दिव्यतोरणशोभिते ।
चन्द्रमण्डलमध्ये तु हंसवर्णद्वयोपरि ।
शुद्धस्फटिकसङ्काशं शुद्धक्षौमविराजितम् ॥ इति ।

अत्र सहस्रारकमलकर्णिकान्तरालस्थ स ह ख फ्रें ह स क्ष म ल व र युम् इति गुरुमन्त्रात्मक-द्वादशवर्णविशिष्ट-द्वादशदलपद्मे परमशिवस्य स्थितिरिति मतान्तरम् । तदुक्तं पादुकापञ्चकटीकायाम्—

शिरःपद्मे सहस्रारे शुक्लवर्णे त्वधोमुखे ।
तरुणारुणकिञ्जल्के सर्व्ववर्णविभूषिते ।
कर्णिकान्तःपुटे तत्र द्वादशार्णसरोरुहे ॥ इति ।

तथा सहस्रारं प्रकृत्यैव—

कर्णिकान्तःपुटे तत्र द्वादशार्णसरोरुहे ।
तेजोमये कर्णिकान्तश्चन्द्रमण्डलमध्यगे ॥
अकथादित्रिरेखीये ह-ल-क्ष-त्रयभूषिते ।
हंसपीठे मन्त्रमये स्वगुरुं शिवरूपिणम् ॥ इति ।

पादुकापञ्चकस्तोत्रेऽपि—

ब्रह्मरन्ध्रसरसीरुहोदरे नित्यलग्नमवदातमद्भुतम् ।
कुण्डलीविवरकाण्डमण्डितं द्वादशार्णसरसीरुहं भजे ॥

इत्यादिभिस्तद् विशेषेण प्रतिपादितम् । नैतत् पूर्णानन्दसम्मतमिति षष्ठप्रकाशे षट्चक्रविवरणे व्यक्तीकरिष्यामः ।

एतेन सहस्रारशिरःपद्मकर्णिकान्तरालस्थचन्द्रमण्डलाभ्यन्तरीणहंसपीठे परमशिवस्य स्थितिरुक्तेति सुव्यक्तम् । हंसस्य पीठत्वञ्च—

हंसपीठे मन्त्रमये स्वगुरुं शिवरूपिणम् ।
अमुकानन्दनाथान्तं स्मरेत्तन्नामपूर्व्वकम् ॥

इति प्रपञ्चसारवचनेनोपपादितमेव। अथ कोऽयं हंसो नाम? उच्यते—

'हं'कारो बिन्दुरित्युक्तो विसर्गः 'स' इति स्मृतः।
बिन्दुः पुरुष इत्युक्तो विसर्गः प्रकृतिः स्मृतः।
पुंप्रकृत्यात्मको हंसस्तदात्मकमिदं जगत्॥

इति प्रपञ्चसारवचनेन 'हं' इति पदेन पुरुषः, 'सः' इति पदेन च प्रकृतिर्लभ्यते, ततश्च 'हंस' इति पदेन पुंप्रकृत्यात्मकोऽन्तरात्मेत्यवगम्यते।

सहस्रदलमध्यस्थमन्तरात्मानमुत्तमम्।

इत्यादिकङ्कालमालिनीतन्त्रवचनेन पुंप्रकृत्यात्मकान्तरात्मनोऽन्तः परमशिवस्य स्थितिरभिहिता। ततश्च हंसोऽन्तरात्मा स एव पीठः तस्यान्तः अभ्यन्तरे तिष्ठतीति हंसपीठान्तरस्थो देवदेव इत्यस्य विशेषणम्।

हिमरुचिरुचिराङ्ग इति—हिमरुचिश्चन्द्रः तद्वद् रुचिरमङ्गं यस्य सः। महानिर्व्वाणतन्त्रे प्रथमपटले—

सदाशिवं सदानन्दं करुणामृतसागरम्।
कर्पूरकुन्दधवलं शुद्धसत्त्वमयं विभुम्॥ (१।६)

इत्यादिना तस्य शुभ्रवर्णतायाः प्रतिपादनात्। तस्यैव च श्रीगुरुस्वरूपत्वसूचनाय अभयवरकराब्जः, योगपूर्णः, द्विनेत्र इति विशेषणत्रयम्। तथाहि—

गन्धानुलेपनं शान्तं वराभयकराम्बुजम्।
स्ववामस्थितया शक्त्या धृतचारुकलेवरम्।
पूर्णानन्तरसोल्लासं लोचनद्वयपङ्कजम्॥

इति पूजाक्रमेऽभिहितेन,—

प्रातः शिरसि शुक्लाब्जे द्विनेत्रं द्विभुजं गुरुम्।

इति प्रातःकृत्योक्तेन च ध्यानेन तस्य वराभयकरत्वं योगपूर्णत्वं द्विनेत्रत्वञ्च प्रतिपादितानि। तत एव कुलार्णवे त्रयोदशोल्लासे—

यः शिवः सर्व्वगः सूक्ष्मश्चोन्मना निष्कलोऽव्ययः।
व्योमाकारो ह्यजोऽनन्तः स कथं पूज्यते प्रिये॥ (१३।५१)

इति प्रश्नमुद्भाव्य तत्रैव—

अत एव शिवः साक्षाद् गुरुरूपं समाश्रितः।
भक्त्या संपूजितो देवि भुक्तिं मुक्तिं प्रयच्छति॥

शिवोऽहं नाकृतिर्देवि नरदृग्गोचरो न हि।
तस्माच्छ्रीगुरुरूपेण शिष्यान् रक्षति धार्म्मिकान्॥
मनुष्यचर्म्मणा नद्धः साक्षात् परशिवः स्वयम्।
सच्छिष्यानुग्रहार्थाय गूढं पर्य्यटति क्षितौ॥ (१३।१३-५२-५४)

इत्यादिना परमशिव एव सच्छिष्याणां त्राणार्थं श्रीगुरुरूपमास्थाय धरायां गूढं विहरतीति प्रतिपाद्य, तत्रैव—

सदाशिवस्य देवस्य श्रीगुरोरपि पार्व्वति।
उभयोरन्तरं नास्ति यः करोति स पातकी॥ (१३।६१)

इत्यादिना परमशिवस्यैव श्रीगुरुत्वमुपदिष्टम्। अस्यैवार्थस्य प्रतिपादनाय श्रीमत्-पूर्णानन्दपरमहंसेन अभयवरकराब्ज इत्यादि विशेषणत्रयमुपात्तमिति निष्कर्षः।

कुलकमलविलासीति। कुलशब्दार्थमाह महानिर्व्वाणतन्त्रे सप्तमोल्लासे—

जीवः प्रकृतितत्त्वञ्च दिक्कालाकाशमेव च।
क्षित्यप्तेजोवायवश्च कुलमित्यभिधीयते॥ इति (७।९७)

ततः कुलाचारमप्याह तत्रैव—

ब्रह्मबुद्ध्या निर्व्विकल्पमेतेष्वाचरणञ्च यत्।
कुलाचारः स एवाद्ये धर्म्मकामार्थमोक्षदः॥ इति (७।९८)

ततश्च वचनाभ्यामाभ्यां जीवादिवाय्वन्तेषु पदार्थेषु जीवत्व-प्रकृतित्व-दिक्त्वादि-प्रकारकज्ञानपरिहारपुरःसर-ब्रह्मत्वप्रकारकज्ञानसहकृताचारविशेष एव कुलाचारः, स च धर्म्मार्थकाममोक्षरूपं पुरुषार्थचतुष्टयं निर्व्वर्त्तयतीत्युक्तं भवति। ततश्च—कुलं जीवादि-वाय्वन्ततत्त्वजातमेव कमलं तत्र विलसति स्वभावेन परमार्थसत्तया क्रीडतीति कुलकमल-विलासीत्यस्यार्थः। एतेनास्य पुरुषार्थचतुष्टयसाधकत्वं वर्त्तत इति ततः प्रार्थना समुचितैवेति सूचितम्।

अत्र कुले कमलत्वारोपेण यथा सूर्य्यः स्वप्रभासम्पर्केण कमलानां विकाशस्वरूपता-मुद्भावयति, तथा परमेश्वरोऽपि कुलशब्दप्रतिपाद्येषु जीवादिवाय्वन्तेषु ब्रह्मबुद्धि-मुत्पादयतीति सूचितम्। अत एव—

नराकृतिपरब्रह्मरूपायाज्ञानहारिणे।
कुलधर्म्मप्रकाशाय तस्मै श्रीगुरवे नमः॥ (५।३२)

इति महानिर्व्वाणपञ्चमोल्लासवचनेन कुलाचारप्रकाशकत्वमभिहितम्। अथवा कुल-पथस्थानि कमलानि कुलकमलानि तेषु विलसतीति कुलकमलविलासी। तदुक्तं षट्चक्रविवृतौ विश्वनाथेन—

तत्रैतद्दक्षिणं षट्कमाज्ञापूर्व्वं कुलोद्भवम्। इति।

ननु नमस्योऽयमीश्वरः सकलो वा निष्कलो वेत्याशङ्कायामाह—देवदेव इति।

अज्ञानां ज्ञाननेत्रं निविडनव-[1]जवारागसन्तानहासि
ज्योत्स्नाजालैर्नखानां[2] कुलकमल[3]-वनीकान्तकान्तिप्रकाशम्।
गङ्गाकाश्यादितीर्थो[4]-ल्लसदमल-महापुण्य[5]-पुञ्जप्रवाहं
वन्दे दीक्षागुरूणां चरणसरसिजद्वन्द्वमानन्दकन्दम् ॥ २ ॥

दीव्यन्ति मायामाश्रित्य प्रपञ्चरूपेण क्रीडन्ति इति देवा हरिहरब्रह्मादयः, तेषां देवः स्वरूपशक्त्या प्रवृत्तिनिवृत्तिरूपक्रियासम्पादकः परमशिव इत्यर्थः। तदुक्तं शारदायां प्रथमपटले—

निर्गुणः सगुणश्चेति शिवो ज्ञेयः सनातनः।
निर्गुणः प्रकृतेरन्यः सगुणः सकलः स्मृतः॥ इति। (१।६)

२। पूर्व्वश्लोकेन सहस्रारविलासिनः परशिवस्यैव गुरुत्वमुपपाद्य दीक्षागुरोस्तदभेदेन तं नमस्कुरुते—अज्ञानामित्यादि। ज्ञाननेत्रमित्यादिद्वितीयान्तपदानि चरणसरसिजद्वन्द्वमित्यस्य विशेषणानि। अज्ञानां सच्चिदानन्दस्वरूपब्रह्मज्ञानरहितानां ज्ञाननेत्रम्। यथा लोको नेत्रेण सर्व्वानपि लौकिकान् पदार्थानवलोकयति, तथा साधकोऽपि श्रीगुरुचरणद्वन्द्वप्रसादपरम्परालब्धदीक्षाप्रभावेणैव ब्रह्मदर्शी भवति। अत एव—

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः॥

इत्यनेन गुरोरेव ज्ञानचक्षुरुन्मीलकत्वमुक्तम्। रुद्रयामलोत्तरखण्डे प्रथमपटलेऽभिहितेन—

गुरोः प्रसादमात्रेण शक्तितोषो महान् भवेत्।
शक्तिसन्तोषमात्रेण मोक्षमाप्नोति साधकः॥ (१।२२४)
गुरुमूलं जगत् सर्व्वं गुरुमूलं परन्तपः।
गुरोः प्रसादमात्रेण मोक्षमाप्नोति सद्वशी॥ (१।२२५)

इत्यादिवचनेनापि श्रीगुरुप्रसादस्यैव मोक्षदातृत्वमुक्तम्।

निविडनवजवारागसन्तानहासि—निविडः सान्द्रो यो नवजवारागः सद्यःप्रस्फुटितजवाकुसुमरक्तिमा तस्य सन्तानो विस्तारस्तद्वद् हासः प्रकाशः अस्यास्तीति, सद्यो विकसितजवाकुसुमारुणमित्यर्थः। तथा नखानां ज्योत्स्नाजालैः प्रभापटलैः कुलकमलवनीकान्तकान्तिप्रकाशम्। कुलशब्दार्थः प्रथमश्लोके प्रदर्शितः। कुलं जीवादितत्त्व-

1. '-यशो-' A. B. 2. '-र्नखेन्दोः' D. 3 '-लिनी-' ? A B (पाठोऽयं छन्दोभङ्गदोषकलुषः)। 4. '-तीर्थस्नपनमिव' A. 5. '-पुण्यसन्दोहलक्ष्मीं A.

अज्ञानौघमहान्धकारपटलध्वंसप्रचण्डद्युति-
र्ब्रह्मानन्दपरम्परैकनिलयः पूर्णेन्दुकोटिप्रभः।
पाणिभ्यामभयं वरञ्च जगतामुच्चैस्तरामादिशन्
मूर्ध्नि श्वेतसरोरुहासनसमासीनः[1] शिवः पातु नः[2] ॥ ३ ॥

---

जातमेव कमलवनी तत्र कान्ता कमनीया या कान्तिर्ब्रह्मस्फूर्त्तिरूपा तां प्रकाशयतीति तथाभूतम्। चरणनखमयूखमालया जीवादिवाय्वन्तकुलपदार्थेषु स्थितां वृत्तिज्ञाना-गोचरीभूतां ब्रह्मसत्तां श्रीगुरुरेव प्रकाशयति। तदुक्तं महानिर्व्वाणतन्त्रे सप्तमोल्लासे—

सद्गुरोः सेवया प्राप्य विद्यामेनां परात् पराम्।
कुलाचाररता भूत्वा पञ्चतत्त्वैः कुलेश्वरीम्॥ इत्यादि। (७।१०१)

गङ्गेत्यादि। गङ्गाकाश्यादितीर्थेषु उल्लसन् यः पुण्यपुञ्जस्ततत्सदृशं पुण्यपुञ्जं प्रवाहयतीति, तथाभूतम्। गङ्गादितीर्थेषु स्नानादिना यादृशः पुण्यराशिरुत्पद्यते, श्रीगुरु-चरणवन्दनादिनापि तादृश एवेत्यर्थः। तदुक्तं प्राणतोषणीधृतगुरुतन्त्रे—

गङ्गाद्याः सरितः सर्व्वा गन्धर्व्वाः सर्पजातयः।
स्थावरा जङ्गमाश्चान्ये पर्व्वताः सार्व्वभौतिकाः।
एते चान्ये च तिष्ठन्ति नित्यं गुरुकलेवरे॥ इति।

तथा विश्वसारतन्त्रीयगुरुगीतायाम्—

काशीक्षेत्रं निवासोऽस्य जाह्नवी चरणोदकम्। इति।

विशेषस्तु कुलार्णवे द्वादशोल्लासे—

कोटिमन्त्रजपाद्देवि कोटितीर्थावगाहनात्।
कोटिदेवार्च्चनाद्देवि परा श्रीपादुकास्मृतिः॥ (१२।५)

इत्यादिभिरभिहितः। आनन्दकन्दम्,—'आनन्दं ब्रह्मणो रूपम्' इति श्रुतेरानन्दस्य परब्रह्मणः कन्दं तत्त्वज्ञानमूलभूतमित्यर्थः। तदुक्तं कुलार्णवे द्वादशोल्लासे—

मन्त्रमूलं गुरोर्व्वाक्यं मोक्षमूलं गुरोः कृपा। इति। (१२।१३)

तथा— गुरोः प्रसादमूलोऽयं परतत्त्वमहाक्रमः। इति च। (१२।१७)

दीक्षागुरूणां चरणसरसिजद्वन्द्वं वन्दे इत्यर्थः।

३। पूर्व्वश्लोकेन दीक्षागुरुं प्रणम्य तदीयकरुणालब्धोपासनक्रमाणामेव साधकानां

---

1. '-नासनः' A 2. 'वः' A. C.

ब्रह्मोपासनसम्भवात् तत्रापि दुर्बलाधिकारिणां दशशतदलपद्मप्रोल्लसत्पूर्णचन्द्र इत्यादि-प्रथमश्लोकप्रतिपादितस्य परमशिवस्योपासनायाः सर्व्वथा दुःसाध्यत्वात् सविशेष-ब्रह्मोपासनमभिदधानः—

आदौ शिवं पूजयित्वा शक्तिपूजा ततः परम्।
यत्किञ्चिदुपचारं हि तस्यः किञ्चिन्निवेदयेत्॥ (५।४०)
अन्यथा मूत्रवत् सर्व्वं गङ्गातोयं भवेद् यदि।

तथा— अन्यदेवं पूजयित्वा शिवं पश्चाद् यजेद् यदि।
तस्य पूजाफलञ्चैव भुज्यते यक्षराक्षसैः॥ (५।४५)

इत्यादितोडलतन्त्रपञ्चमोल्लासवचनेन शिवोपासनाया एव प्रथमकर्त्तव्यत्वश्रवणाच्छिव-मेवादौ प्रसादयति—अज्ञानेति। अज्ञानौघ एव महान्धकारपटलः निर्व्विशेषब्रह्म-स्वरूपाच्छादकत्वाद् गाढान्धकारराशिस्वरूपः, तस्य ध्वंसे विनाशे प्रचण्डद्युतिः मार्त्तण्डस्वरूपः। यथा सूर्य्यो गाढान्धकारनिकरं दूरीकृत्य लौकिकं तत्त्वजातं जनानां ज्ञानगोचरतां नयति, तथा शिवोऽप्यविद्यावरणमपाकृत्य ब्रह्मस्वरूपतामात्मनः साधकानां पुरतः प्रकाशयतीत्यर्थः। ब्रह्मानन्दपरम्परैकनिलयः निरवच्छिन्नब्रह्मानन्दस्य आश्रयस्वरूपः। अत एव गन्धर्व्वतन्त्रे प्रथमपटले—

स्मितपूर्व्वो महादेवः पूर्णानन्दमयो विभुः।

इत्यनेन शिवस्य पूर्णानन्दस्वरूपत्वमुपपादितम्। पूर्णेन्दुकोटिप्रभः—कोटिपूर्णचन्द्र-प्रभासदृशप्रभाविशिष्टः। पाणिभ्यां जगताम् अभयं वरञ्च उच्चैस्तराम् आदिशन् प्रचुरतरं हितं विदधान इत्यर्थः। मूर्द्ध्नि श्वेतसरोरुहासनसमासीनः—शिरःस्थसहस्रारकमलासनस्थित इत्यर्थः। सकलशिवस्यापि सहस्रारमेव स्थानम्। तदुक्तं षट्चक्रटीकाधृतगन्धर्व्वमालिकातन्त्रे—

सहस्रारं शिवपुरं रम्यं दुःखविवर्जितम्। इति

अत्रेदं रहस्यम्,—'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादिश्रुत्या—

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः।
क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे॥ (६।२४)
परे ब्रह्मणि विज्ञाते समस्तैर्नियमैरलम्।
तालवृन्तेन किं कार्य्यं लब्धे मलयमारुते॥ (६।२८)

इत्यादिकुलार्णव-नवमोल्लासवचनेन,

निराकारं समासाद्य निरञ्जनपदं लभेत्।
निराकारेण देवेशि कृतकृत्यश्च साधकः॥

इति कुब्जिकातन्त्रनवमपटलवचनेन,

यल्लाभान्नापरो लाभो यत्सुखान्नापरं सुखम्।
यज्ज्ञानान्नापरं ज्ञानं तद् ब्रह्मेत्यवधारय॥
यद्दृश्यान्नापरं दृश्यं यद्दृष्ट्वा न पुनर्भवः।
तिर्य्यगूर्द्ध्वमधःपूर्णं सच्चिदानन्दमव्ययम्।
अनन्तं नित्यमेकं यत्तद् ब्रह्मेत्यवधारय॥

इति गन्धर्व्वतन्त्रप्रथमपटलवचनेन च परब्रह्मज्ञानं तत एव साधकानां कृतकृत्यत्वञ्चाभिहितम्, परं दुर्बलाधिकारिणां जीवानां सर्व्वथा तदसम्भवात् सगुणब्रह्मोपासनतः क्रमेण निर्गुणब्रह्मावाप्तिर्भवति। अत एव कुलार्णवे त्रयोदशोल्लासे—

यः शिवः सर्व्वगः सूक्ष्मश्चोन्मना निष्कलोऽव्ययः।
व्योमाकारो ह्यजोऽनन्तः स कथं पूज्यते प्रिये॥ ५१

इति शिवस्य प्रश्न उपपद्यते। अत्र साधु मीमांसितं वेदान्तपरिभाषायाम्—

निर्व्विशेषं परं ब्रह्म साक्षात्कर्त्तुमनीश्वराः।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः॥
वशीकृते मनस्येषां सगुणब्रह्मशीलनात्।
तदेवाविर्भवेत् साक्षादपेतोपाधिकल्पनम्॥ इति।

अस्यैवार्थस्य प्रतिपादनाय कुब्जिकातन्त्रे नवमपटले—

साकारेण महेशानि निराकारञ्च भावयेत्।
साकारेण विना देवि निराकारं न पश्यति॥ इति।

हरतत्वदीधितिधृतागस्त्यसंहितायामपि—

सर्व्वेश्वरः सर्व्वमयः सर्व्वभूतहिते रतः।
सर्व्वेषामुपकाराय साकारोऽभून्निराकृतिः॥

इत्यभिहितम्। तदेतत्पूर्व्वपूर्व्ववचनसंवादेन परमशिवः स्थूलाधिकारिणां स्वरूपग्रहणेऽसमर्थानां परमपुरुषार्थसम्पत्तये शिवशक्त्यादितत्तद्रूपेणाविर्भूय ध्यानादिगम्यतामाश्रयन् साधकाननुगृह्णातीति सर्व्वमवदातम्।

यस्याम्भोधरकान्तिसुन्दरतरे वक्षःस्थले निर्मले
भास्वत्कौस्तुभनामकेन मिलिता संशुद्धमुक्तावली ।
कालिन्दीसलिलैकपङ्कजलसद्गङ्गाम्बुधारोपमां
शोभामातनुते स मे वितनुतां दामोदरो मङ्गलम् ॥ ४ ॥
भक्त्याऽऽनम्रविरिञ्चिमौलिविलसन्मन्दारमालावली-
निर्यातैर्मकरन्दबिन्दुविसरैः[1] स्नाताङ्घ्रिपीठान्तिका ।
ध्यानैरेव[2] निषेविता गुरुतरैरिन्द्रादिवृन्दारकैः
शम्भोरम्बुजलोचना भगवती देवी शिवायास्तु नः ॥ ५ ॥

४ । पूर्व्वश्लोकेन शिवं प्रसाद्य विष्णुरूपेणाविर्भूतं परमशिवं प्रसादयति—यस्येति । अम्भोधरकान्तिसुन्दरतरे—अत्राम्भोधरपदेन मेघस्यातिशयकृष्णवर्णत्वं सूचितम्, जलापगमे मेघस्य शुभ्रत्वान्न तेन सह दामोदरस्योपमा सम्भवति । जलमयमेघस्य या कान्तिस्ततोऽपि मनोज्ञतरकान्तिशालिनि यस्य दामोदरस्य निर्म्मले वक्षःस्थले विलसन्ती संशुद्धमुक्तावली संशुद्धा मालिन्यादिदोषशून्या स्वच्छा इत्यर्थः । मुक्तावली मुक्तामाला भास्वत्कौस्तुभनामकेन भास्वत् दीप्तिमत् यत् कौस्तुभं तन्नामकरत्नं तेन मिलिता सङ्गता सती, कालिन्दीसलिलैकपङ्कजलसद्गङ्गाम्बुधारोपमाम्—कालिन्द्याः यमुनायाः सलिले उत्फुल्लमिति शेषः, यदेकं पङ्कजं तत्र लसन्ती शोभमाना या गङ्गाम्बुधारा तया उपमा सादृश्यं यस्याः तथाभूतां शोभामातनुते, स दामोदरो मङ्गलं वितनुताम् । अत्र दामोदरस्य कृष्णवर्णत्वाद् यमुनाजलसादृश्यम्, कौस्तुभरत्नस्य शुभ्रत्वात् पङ्कज-सादृश्यम्, मुक्तावल्याः शुभ्रत्वाल्लम्बमानत्वाच्च गङ्गाम्बुधारासादृश्यमित्यवधेयम् । तथाच—यः परमार्थतो नीरूपोऽपि साधकजनगणानुग्रहार्थमीदृशं किञ्चन कमनीयं रूपं धत्ते, यश्चापरिच्छिन्नोऽपि मातुरभीप्सितपूरणार्थमतिदुःसहं दामबन्धनमप्यङ्गीचकार, साधकजनमनोविनोदनसमुल्लसत्करुणः स भगवान् प्रार्थनया प्रसादितो नूनं मङ्गलं विदध्यादित्यभिप्रायेण वितनुतां दामोदरो मङ्गलमित्युक्तम् ।

५ । एवं भगवन्तं शिवं दामोदरञ्च प्रसाद्य ग्रन्थप्रतिपाद्यां परमशिवस्य स्वरूपशक्ति-रूपाम् अरूपामपि साधकजनेष्वनुग्रहबुद्ध्या रूपधारिणीं श्रीमत्त्रिपुरसुन्दरीं प्रसादयति—भक्त्याऽऽनम्रेति । भक्त्या श्रीमत्त्रिपुरसुन्दर्य्यां जगदम्बिकायामनुरागविशेषेण आनम्रो यो

1. '-विमलैः' A. B. 2. 'ध्यानेनैव' D.

विरिञ्चिर्ब्रह्मा तस्य मौलौ विलसन्ती या मन्दारमालावली तस्या निर्यातैर्निष्च्यूतैः मकरन्दबिन्दूनां विसरैः समूहैः स्नातम् अङ्घ्रिपीठान्तिकं पादपीठसमीपं यस्याः सा। तदुक्तं गन्धर्व्वतन्त्रे एकादशपटले—

ब्रह्मविष्णुशिरोरत्ननिघृष्टचरणाम्बुजाम्। इति।

अनेनास्या ब्रह्मादिभिराराध्यत्वमभिहितम्। इन्द्रादीनान्त्वस्याः साधनप्रकारो नैतादृश इत्याह—गुरुतरैः आधिपत्यरूपगुरुत्वविशिष्टैः इन्द्रादिवृन्दारकैस्तु ध्यानैस्तत्स्वरूपचिन्तनैरेवोपासिता। स्वर्गाद्यधीश्वरा इन्द्रादिलोकपाला अपि यस्याः स्वरूपमवलोकयितुमप्रभविष्णवो यत्स्वरूपावलोकनलालसया ध्यानयोगमाश्रित्य यां सेवन्ते सा अम्बुजलोचना भगवती षडैश्वर्य्यशालिनी शम्भोः परमशिवस्य देवी प्रकाशस्वरूपा श्रीमत्त्रिपुरसुन्दरी नः अस्माकं साधकानां शिवायास्तु।

अत्रेदं रहस्यम्—शम्भोर्देवीत्यनेन परशक्त्याः सृष्ट्यादिकर्त्तृत्वं तस्य च शम्भुसम्बन्धनिर्बाह्यत्वमिति सूच्यते। अत एव कामकलाविलासे—

स्फुटशिवशक्तिसमागमबीजाङ्कुररूपिणी परा शक्तिः इत्युक्तम्। तट्टीकायामप्यन्यत्र—

न शिवेन विना देवी न देव्या च विना शिवः।
उभयोरन्तरं नास्ति चन्द्रचन्द्रिकयोरिव॥

इत्यभिहितम्। तन्त्रनये प्रकाशसत्ता विमर्शसत्ता चेति द्विविधा सत्ताङ्गीकृता। तत्र स-परशक्तिकपरब्रह्मसत्ता प्रकाशसत्ता, शिवादिक्षित्यन्त-षट्त्रिंशत्तत्त्वरूपप्रपञ्चसत्ता तु विमर्शसत्ता। तत्र च स-परशक्तिकपरशिवः प्रकाशस्वरूपः स्वलीलया विमर्शात्मकमखिलं प्रपञ्चजातं सूक्ष्मतया स्वस्मिन्नवस्थितं प्रकाशयति संहरति च।

तत्र च परशक्त्या एव क्रियाशक्त्यधिष्ठानतया सृष्ट्यादिकर्त्तृत्वम्, तच्च परशिवस्य ज्ञानशक्त्यधिष्ठानतया निर्व्वर्त्तते। ततश्च परशिवसम्बन्धाभावे परशक्तेरपि कर्त्तृत्वं नोपपद्यत इति सूचनाय शम्भोर्देवीति ग्रन्थकृद्भिरभिहितम्।

चितिरूपा महामाया परंब्रह्मस्वरूपिणी।
सेवकानुग्रहार्थाय नानारूपं दधार सा॥

इति हरतत्त्वदीधितिधृतदेव्यागमवचनेन,

सा एव पञ्चमी शक्तिः परंब्रह्मस्वरूपिणी।
परमानन्दरूपं यज्जगतां कारणं महत्॥
तस्या देव्यास्तु तद्रूपमुदयास्तविवर्ज्जितम्।
स्थूलत्वे स्थूलरूपा सा सूक्ष्मत्वे सूक्ष्मरूपिणी।

[1]हृदयकमलमध्ये प्रोल्लसत्कर्णिकान्तः-
प्रमुदितशिवशय्यासंस्थिता कापि मूर्त्तिः ।
सुरवरहरमौलिस्मेरमुक्ताप्रधान-
प्रविलसितपदाब्जा पातु मां मोहकूपात् ॥ ६ ॥

---

योऽसौ विश्वेश्वरो देवो विश्वं व्याप्य व्यवस्थितः ।
सैव विश्वेश्वरी देवी व्यापकत्वेन संस्थिता ॥

इत्यादिगन्धर्व्वतन्त्रतृतीयपटलवचनेन च शिवशक्त्योरभेदं साधकानामनुग्रहार्थं नानारूपपरिग्रहञ्चोपपाद्य,

तस्याः पुनः पुनः सृष्टिर्जायते लीयते सदा ।
तस्माच्छक्तिः प्रधाना च शक्त्या व्याप्तमिदं जगत् ॥

इति गन्धर्व्वतन्त्रतृतीयपटलवचनेन महेश्वरः शक्त्या एव सृष्ट्यादिकर्त्तृत्वमभ्यधात् । एवञ्च या ब्रह्मादिभिरिन्द्रादिभिश्चाराधिता रूपविशेषं परिगृह्य साधकाननुगृह्य तेषां भोगं मोक्षञ्च निर्व्वर्त्तयति सा प्रार्थिता नूनमस्माकं मङ्गलं विदध्यादित्यभिप्रायः ।

६ । एवं देवीं प्रसाद्य शास्त्रस्यास्योपासनापरतया तदुपासनानुकूलां मूर्त्तिं तदुपासनयोग्यस्थानञ्च निरूपयन् ग्रन्थकृत्, निर्व्वाणतन्त्रे सप्तमपटले द्वादशारमनाहतपद्म-मुपक्रम्याभिहितेन—

महर्लोकमिदं भद्रे पूजास्थानं सुरेश्वरि ।
अत्रैव मानसं यागं कुरुते योगवित्तमः ॥

इति वचनेन हृत्पद्मस्यैव मानसयागस्थानत्वाभिधानादाह—हृदयेति । हृदयकमलमध्ये प्रोल्लसन्ती या कर्णिका तस्या अन्तः अभ्यन्तरे स्थिता या प्रमुदितशिवशय्या देवीचरण-स्पर्शसुखानन्दितशिवरूपशय्या तत्र संस्थिता । अथवा प्रोल्लसन्तीति मूर्त्तिविशेषणम् । अत्र यद्यपि हृत्पद्ममध्ये बीजकोषः, ततः षट्कोणमण्डलम्, ततो वायुमण्डलं महर्लोका-परपर्य्यायम्, इत्येवं क्रमस्तथापि सामान्यतोऽभिहितमित्यवधेयम् ।

सुरवरहरमौलिस्मेरमुक्ताप्रधानप्रविलसितपदाब्जा—मुक्ताप्रधाने प्रविलसिते च पदाब्जे यस्याः सा, "मुक्तामणिप्रवालैश्च पादपद्मविभूषिताम्" इति वक्ष्यमाणध्यानैकदेशेन यन्मुक्ताविभूषितत्वमुक्तम्, तत्र मुक्ताशब्दस्य प्रथममभिधानान्मुक्तामणिप्रवालानां पादभूषणत्वसाम्येऽपि मुक्तानामेव प्राधान्यमित्येवाह—मुक्ताप्रधानेति पदेन । स्मेरा

---

1. श्लोकोऽयं C-D-पुस्तकयोर्नास्ति ।

न पीतं[1] नापीतं[2] नहि परिमितं नापरिमितं
न रक्तं [3]नारक्तं नहि धवलितं नाधवलितम् ।
निराकारं नित्यं त्रिगुणरहितं देवमजडं
तमात्मानं वन्दे परमसुखसन्ताननिलयम् ॥ ७ ॥

चासौ मुक्ताप्रधानप्रविलसितपदाब्जा चेति कर्म्मधारयः। वक्ष्यमाणत्रिपुरसुन्दरीध्याने "ईषत्सहास्यवदनजितमाधुर्य्यसागराम्" इत्युक्त्या, स्मेरेति देवीविशेषणम्। ततश्च सुरवरहरमौलिस्थिता चासौ स्मेरमुक्ताप्रधानप्रविलसितपदाब्जा चेति मध्यपदलोपी कर्म्मधारयः। ईदृशी कापि अनिर्व्वाच्यस्वरूपा मूर्त्तिर्मां मोहकूपात् पातु। ततोऽपगतमोहोऽहं ग्रन्थनिर्म्माणं निर्व्विघ्नं निर्व्वर्त्तयेयमिति ग्रन्थकृतोऽभिप्रायः।

७। अथेदानीं प्रागुक्तदेवतोपासनाविशेषेण निर्म्मलमनसां मुमुक्षूणां चरमज्ञानविषयं परमशिवस्वरूपं निरूपयति। तत्र—

स एक एव सद्रूपः सत्योऽद्वैतः परात् परः।
स्वप्रकाशः सदा पूर्णः सच्चिदानन्दलक्षणः॥
निर्व्विकारो निराधारो निर्व्विशेषो निराकुलः।
गुणातीतः सर्व्वसाक्षी सर्व्वात्मा सर्व्वदृग विभुः॥
गूढः सर्व्वेषु भूतेषु सर्व्वव्यापी सनातनः।
सर्व्वेन्द्रियगुणाभासः सर्व्वेन्द्रियविवर्ज्जितः।
लोकातीतो लोकहेतुरवाङ्मनसगोचरः॥

इत्यादि महानिर्व्वाणतन्त्रद्वितीयपटलवचनेन परमशिवस्य सच्चिदानन्दाद्वैतनिर्व्विकारस्वप्रकाशनिर्गुणत्वादिस्वरूपत्वाभिधानाद्ग्रन्थकारेण च प्रथमप्रकाशे 'अस्ति सत्यं परं ब्रह्मे'त्यादिना तथैव वक्ष्यमाणत्वान् निर्व्विशेषब्रह्मरूपपरमशिवस्वरूपमाह—न पीतमित्यादि। आत्मात्र निर्व्विशेषब्रह्म। ब्रह्म पीतमिति निरूपयितुं न शक्यते प्रकाशस्वरूपत्वांशे निर्गुणत्वात्, अपीतमित्यपि निरूपयितुं न शक्यते विमर्शांशे सगुणत्वात्, अतः पीतापीतादिविलक्षणमनिर्व्वाच्यस्वरूपं ब्रह्मेत्युक्तं भवति। एवमुत्तरत्रापि योज्यम्।

एवञ्चेत् तत् किंस्वरूपं ब्रह्मेत्याह—निराकारमिति। यत् प्रत्यक्षेण नोपलभ्यते तस्यास्तित्वे किं मानमित्यत आह—नित्यमिति। प्रागुक्त-महानिर्व्वाणवचनस्थ-'सनातन'-

1. '-नं' C, 2, '-नं' C. 3. 'नो पीतं' A.

[ ग्रन्थोपक्रमः ]

अथ खलु दुरन्त-[1]दुस्तर-घोरतरसंसारसागरान्तरुद्दाम-शोकसन्तान-प्रबलबडवानलज्वाला[2]जाल-[3]कवलन-विकलसकल-[4]पशुजन[5]त्रातात्मविज्ञानदत्तमनाः परमकारुणिको भगवान् परम-शिवः परदेवताराधनरहस्यप्रतिपादनपरानेकशतकोटिविस्तारतन्त्र-

---

पदेन तस्य नित्यत्वावगमात्। अथ वयमिव सुखदुःखमोहादिभिरुपगतं कथं न स्यादित्यत आह—त्रिगुणरहितमिति। एवञ्चेत् प्रवृत्त्यनुपपत्तेः कस्यापि नोपकारायालं किं तेनास्माकमित्यत आह—देवमिति। निर्गुणोऽपि परमात्मा स्वरूपशक्तिमाश्रित्य दीव्यति जीवानां प्रीणनाय स्वान्तःस्थं प्रपञ्चजातम् उद्गीर्य्य निगीर्य्य च क्रीडतीति देवस्तमित्यर्थः। अथवा देवं द्योतनशीलं विश्वप्रकाशकमित्यर्थः। ननु देवनं चेतनगतो धर्म्मः, पूर्व्वपूर्व्वविशेषणैस्तु तस्य चैतन्यस्वरूपत्वं न प्रतीयत इत्यत आह—अजडमिति। चैतन्यस्वरूपमित्यर्थः। प्रागुक्त-महानिर्व्वाणवचनस्थ-'सच्चिदानन्दलक्षण'-पदेन तस्य चित्स्वरूपत्वावगमात्। एतेन देवनं तस्य लीलामात्रमित्युक्तम्। ननु भवत्वेवंस्वरूपं ब्रह्म तथापि निर्गुणत्वेन सुखस्वरूपत्वाभावात् तत्स्वरूपत्वावाप्त्या नास्माकं सुखोदयः सम्भवतीति चेत्तत्राह—परमसुखसन्ताननिलयमिति। निर्गुणत्वेऽपि सच्चिदानन्द-लक्षण इति पदेन तस्यानन्दस्वरूपत्वमवगम्यते। नन्वानन्दोऽस्माकमपि वर्त्तते, तत् कोऽस्य विशेष इत्याशङ्कानिरासार्थं सुखस्य परमेति विशेषणम्। परमं दुःखासम्भिन्नं सुखं तत्र वर्त्तत इति विशेषः। तदपि सुखं निरवच्छिन्नमित्याह—सन्तानेति। अस्मदादीनां सुखं क्षणिकम्, परमशिवस्य तु सुखं धारावाहिकमित्ययमेव विशेषः, अतः सच्चिदानन्दस्वरूपतावाप्तये तमात्मानं परमशिवं वन्दे इति तात्पर्य्यम्।

अत्रेदमवधेयम्—प्रागुक्तमहानिर्व्वाणवचनैः "शरीरकञ्चुकितः शिवो जीवो निष्कञ्चुकः परमशिवः" (१।५) इति परशुरामकल्पसूत्रेण च परमशिवस्य यत् स्वरूप-मुक्तं तदेवोपनिषदुक्तं निर्व्विशेषब्रह्मेति। प्रथमश्लोकेन तस्य श्रीगुरुस्वरूपत्वमभिहितम्, न पीतमित्यादिना तु निर्व्विशेषस्वरूपत्वमिति। एतन्निर्व्विशेषस्वरूपत्वं ग्रन्थकारः स्वय-मेव वक्ष्यति किन्तावदात्मवस्त्वित्यादिना।

---

1. 'दुःसन्तर-' C. D. 2. अत्र B-C-पुस्तकयोः 'जराजवाजाले'ति प्रामादिकः पाठः। 3. '-पटल-' C. 4. '-प्रभुजन-' B-D-पुस्तकयोस्तु '-जन' इत्येतावन्मात्रम्। 5. '-कृतत्रतीर्थ-' B.

सारमुपन्यस्तवान्। तत्र च निरन्तरभावनावगाह्य[1]-दुरवगाह्य-विविधतन्त्र-स्वतन्त्रसिद्धान्त-शुद्धिबोध-विधुर-महालसव्रजो[2]द्वेग-समुद्विग्नमनाः श्रीमत्-[3]परमहंसपरिव्राजक-श्रीगुरुब्रह्मानन्दमुखार-विन्दनिस्यन्दमान-परमरहस्यातिरहस्य-निगम-मकरन्द-सन्दोह-तुन्दिलानन्दः श्रीपूर्णानन्दपरमहंसः श्रीतत्त्वचिन्तामणिं चतुर्दश-शताधिक-नवनवति-शकाब्दे वितनोति।

[ परमात्मजीवात्मनोः स्वरूपम् ]

ननु किन्तावदात्मवस्तु ? परंब्रह्म विश्वायतनस्थूलसूक्ष्म-रहित-नित्यशुद्धबुद्धमुक्तस्वरूपजाग्रत्-स्वप्न-सुषुप्त्यादिप्रपञ्चप्रका-शक-गुणत्रयातीत-निराकाराबाधितादिमध्यान्तरहितमेवात्मवस्तु, तदंशा जीवसंज्ञकास्त एवानाद्यविद्योपहताः[4] शरीरमास्थाय नानाविध[5]-सुखदुःखभोगं कुर्व्वन्तीति। तदाश्रया तद्विषयाऽ-नाद्यविद्या यथा गर्भागारमन्धकारस्य विषयाश्रयौ, तदाश्रयत्व-तद्विषयत्वबलेनावरणविक्षेपरूपं प्राप्य तमात्मानमाच्छाद्य विक्षिपति। यद्यप्यवस्त्वविद्या तथाप्यात्मसत्तास्फूर्त्तिं प्राप्य वस्तुवद्भाति[6], यथा निर्मल[7]दर्पणसन्निकर्षस्थवस्तुप्रतिविम्बमनि-वारितं जायते, तद्वत् कूटस्थचिदाभासोऽपि सत्त्वादिगुणत्रया-त्मिकायामविद्यायां प्रतिफलति।

---

1. '-बाह्य-' A. '-मरबाह्य-' D. 2. '-त्तो-' ? B. C. 3. '-परिव्राजकपरमहंस-' A, B.
4. अत्र 'उपहिता' इति पाठः समीचीनः प्रतिभाति, उपाधिविशिष्टा इत्यर्थे उपहतपदव्यवहारानुपयोगात् "अनाद्यविद्योपहिता यथाग्नौ विस्फुलिङ्गकाः" (१।९) इति कुलार्णवपञ्चमखण्डप्रथमोल्लासवचने 'उपहित'पददर्शनाच्च। 5. '-दुःखभोगं' D. 6. '-भवति' A. 7. '-आदर्श-' C. D.

[ तत्र सत्त्वोपहितस्येश्वरसंज्ञा ]

तन्मध्ये कारणभूतसत्त्वांशप्रतिविम्बितो यश्चिदाभासः सोऽहमिति स्थिराध्यासादीश्वर इत्युच्यते। तस्य सत्त्वगुणोपाधित्वात् सर्व्वज्ञत्वं सर्व्वेश्वरत्वं सर्व्वकार्य्यकर्त्तृत्वञ्च।

[ रजस्तमोभ्यामुपहितस्य जीवसंज्ञा ]

सत्त्वगुणप्रधान-कारणरूपमायायाः कार्य्यभूतरजस्तमोंऽशोपाधितः प्रतिविम्बितो यश्चिदाभासः स यदा कर्म्मनिमित्तवशाद्देशकालवस्तुत्रिविधपरिच्छेदं गृहीत्वा स्वरूपं पूर्णं विहाय सजातीय-विजातीय-स्वगतभेदं प्राप्य अहं ममेत्यध्यासो भवति तदा जीव इत्युच्यते। अस्य कार्य्योपाधित्वाज्जाड्यम्। तेनाहं कर्त्ता अहं भोक्ता अहं सुखी अहं दुःखी मामहं न जानामीति मन्यते।

श्रुतिरपि—'कार्य्योपाधिरयं जीवः कारणोपाधिरीश्वरः' इति। जगत्सृष्ट्यादिप्रतिपादन[1] ईश्वरः कल्पितो वेदान्ते।

[ ईश्वरकृतसृष्ट्यादि ]

ईश्वरस्तूपाधिगुणत्रयभेदेन ब्रह्मविष्णुरुद्रादिरूपेणाविद्याया [2]आवरणविक्षेपरूपद्वयं प्राप्याब्रह्मस्तम्बपर्य्यन्तं नवविधसंसारं सृजत्यवति संहरतीति च।

[ अत्र पर्य्यनुयोगः ]

ननु केवलासङ्गोदासीन-नित्यमुक्तशुद्धबुद्ध-गुणातीताहङ्कार-ममकारेच्छाद्वेषप्रयत्नरहितस्य परमात्मनो नरविषाणवत् कथ-

1. '-त्वन' A, B. 2, 'प्रावरण-' A. B.

मावरण-विक्षेपौ सम्भाव्येते ? यथा गगनारविन्दं सुरभीत्युक्ते गगनारविन्दमेवासत् तस्य सुरभित्वं कुतः ?

[ समाधानम् ]

सत्यं [1]एतत् सर्व्वमाविद्यकं तत्कार्य्यमावरणविक्षेपरूपं वस्तुगत्या नास्त्येव, किन्त्वज्ञातात्मनोऽविवेकाद् भ्रममात्रसिद्धम् । यदा स्वप्नावस्थितो जनस्तदा किं तं प्रति स्वाप्नो व्यवहारः सत्यतया न प्रतिभाति, ऐन्द्रजालिकस्य वा । पुनरपि स्वप्ने निवृत्ते ऐन्द्रजालिकमायानिवृत्तौ च सर्व्वं मिथ्यैव जानाति, इदन्तु सर्व्वेषामनुभवसिद्धम् । तद्वज्ज्ञानोत्पत्तेः प्राक् सत्यमेव निश्चिनोति, तदनन्तरं मिथ्यात्वे ज्ञाते अज्ञानं तत्कार्य्यञ्चा-वरणविक्षेपरूपं सुतरां नश्यतीति ।

[ साधनप्रकारनिरूपणप्रतिज्ञा ]

अथेदानीं मुमुक्षोः पुरुषार्थसिद्धावनाद्यविद्याप्रतिबन्ध-निवृत्त्यर्थं साधनप्रकारा उच्यन्ते,—यतो वैदिककर्म्मानुष्ठानात्

पूर्व्वं नन्वित्यादिना असङ्गत्वादिहेतुभिः परमात्मन्यावरणविक्षेपादेरसम्भवमुपपाद्य 'यथा गगनारविन्द'मित्यादिना दृष्टान्तञ्चोपदर्श्य पूर्व्वपक्षस्योत्तरमाह सत्यमित्यादिना । ऐन्द्रजालिकस्य वेति । ऐन्द्रजालिको यदा पिच्छिकाभ्रमणादितत्तत्क्रियानुष्ठानेन मायामुण्डादिनानाविधविचित्रनिर्म्माणवैदग्ध्यं प्रदर्शयति, तदा किमैन्द्रजालिकस्य स व्यवहारः सत्यतया न प्रतिभाति इति सम्बन्धः । पुनरपीति परन्त्वित्यर्थः । स्वप्ने निवृत्त इति,—स्वप्नावस्थितस्य स्वप्ने निवृत्ते स्वप्नानुभूतं सुवर्णाट्टालिकावासा-दिकम्, ऐन्द्रजालिकस्य च ऐन्द्रजालिकमायानिवृत्तौ ऐन्द्रजालिकप्रक्रियादशानुभूतं मायामुण्डादिकं मिथ्यैव जानातीत्यर्थः । एवं दृष्टान्तमुपदर्श्य दार्ष्टान्तिकप्रदर्शनमुखेन फलितमाह—तद्वदिति ।

1. 'तत्' D.

पुण्योपचयपापक्षयाद् [1]रजस्तमोनिवृत्तिद्वारा रागद्वेषनिराकरणम्। यथा वृक्षस्य बीजं कारणं बीजस्यापि वृक्षः कारणम्, रजस्तमसी पापबुद्धेः[2] पाप[3]बुद्धिरपि रजस्तमसोरिति परस्परानुबन्धित्वादेकस्यापि नाशे इतरस्यापि नाश इत्येतदन्यदपि श्रुत्यागमपुराणसत्सम्प्रदायानुगत्या समासतः श्लोकबन्धेन विस्तार्य्यते—

[ परमात्मजीवात्मनोः स्वरूपम् ]

अस्ति सत्यं परंब्रह्मस्वरूपो निष्कलः शिवः।
सर्व्वज्ञः सर्व्वकर्त्ता च सर्व्वेशो निर्म्मलोऽद्वयः[4] ॥ १ ॥
स्वयंज्योतिरनाद्यन्तो निर्व्विकारः परात् परः।
निर्गुणः सच्चिदानन्दस्तदंशा जीवसंज्ञकाः ॥ २ ॥
अनाद्य[5]विद्योपहता यथाग्नौ विस्फुलिङ्गकाः।
[6]सर्व्वे ह्युपाधिसंभिन्नास्ते कर्म्मभिरनादिभिः ॥ ३ ॥
सुखदुःखमयैः स्वीयैः पुण्यपापैर्नियन्त्रिताः।
स्थावराः पक्षिणश्चैव कीटाश्च पशवो नराः।
[7]जायन्ते च म्रियन्ते च संसारे[8] दुःखसागरे ॥ ४ ॥

[ देहिषु मनुष्याणामुत्कर्षः ]

[9]प्रधानः सर्व्वजन्तूनां सुकृती मानुषो जनः।
ज्ञानी भूत्वा यतो धीरो लभेन्मुक्तिं चतुर्व्विधाम्।
मानुषं सफलं जन्म सर्व्वशास्त्रेषु गोचरम् ॥ ५ ॥

---

५। सुकृतिनो मानुषस्य प्राधान्ये हेतुमाह—ज्ञानीत्यादि। मुक्तिं चतुर्व्विधामिति—

---

1. 'रजस्तमसोर्नि-' C. D. 2. '-वृद्धेः' B. C. 3. '-वृद्धि-' B. C. 4. '-लस्तु यः' A. 5. '-नित्यो यथाग्नौ विस्फुरन्ति स्फु-' A. 6. 'सर्व्व' इत्यादि पादद्वयं B-C-D-पुस्तकेषु नास्ति। 7. इत आरभ्य 'प्रकाशो व्यञ्जको यथा' इत्यन्ताः श्लोकाः C-पुस्तके न दृश्यन्ते। 8. '-रदुः-' A. 9. प्रधानं-' A. B.

चतुरशीतिलक्षेषु शरीरेषु शरीरिणाम् ।
न मानुष्यं विनाऽन्यत्र तत्त्वज्ञानन्तु[1] विद्यते ॥ ६ ॥
कदाचिल्लभ्यते जन्म मानुष्यं पुण्यसञ्चयात् ।
सोपानभूतं मोक्षस्य मानुष्यं जन्म दुर्लभम् ॥ ७ ॥

[ देहसम्बन्धमन्तरेण पुरुषार्थावाप्तिर्न भवति ]

विना देहेन कस्यापि पुरुषार्थो न लभ्यते ।
तस्माच्छरीरं संरक्ष्य[2] नित्यं कर्म्म प्रसाधयेत्[3] ॥ ८ ॥

[ आत्मनो देहसम्बन्धरक्षार्थमहितान्निवृत्त्यर्थञ्च प्रयत्नः समाश्रयणीयः ]

रक्षेत् सर्व्वात्मनात्मानमात्मा सर्व्वस्य भाजनम् ।
[4]रक्षार्थं यत्नमातिष्ठेज्जीवन् भद्राणि पश्यति ॥ ९ ॥
आत्मना यदि नात्मानमहितेभ्यो निवारयेत् ।
कोऽन्यो हितकरस्तस्मादात्मानं तारयिष्यति ॥ १० ॥

[ वर्त्तमानजन्मन्येव पापप्रतीकार आधेयः ]

इहैव नरकव्याधेश्चिकित्सां न करोति यः ।
गत्वा [5]निरौषधं देशं व्याधितः किं करिष्यति ॥ ११ ॥
यावत्तिष्ठति देहोऽयं तावत्तत्त्वं समाश्रयेत्[6] ॥ १२ ॥

---

ब्राह्मणो निर्व्वाणम्, क्षत्त्रियः सायुज्यम्, वैश्यः सारूप्यम्, शूद्रः सालोक्यं लभेतेत्यर्थः । तदुक्तं निर्व्वाणतन्त्रे द्वितीयपटले—

ब्राह्मणस्य महामोक्षं सायुज्यं क्षत्त्रियस्य च ।
सारूप्यञ्चोरुजातस्य शूद्रस्य सहलौकिकम् ॥ इति ।

---

1. '-नं न' A. ( न विद्यत इति A-पुस्तकधृतः पाठो न साधुः प्राकरणिकार्थानुपपत्तेः "न मानुष्यं विनान्यत्र तत्त्वज्ञानन्तु लभ्यते" इति कुलार्णवप्रथमपटलवचनविरोधाच्च ।)
2. '-संरक्ष' A. 3. '-धनात्' A 4. 'रक्षार्थ'मित्यादि पादद्वयं D-पुस्तके नास्ति
5 'विषौषधम्' A 6. '-य' D.

यावन्नाश्रयते दुःखं यावन्नायान्ति चापदः ।
यावन्नेन्द्रियचापल्यं तावच्छ्रेयः [1]समाश्रय ॥ १३ ॥

[ संसारासक्तिर्हितं प्रतिबध्नाति ]

[2]कालश्च जायते(?) नानाकार्य्यैः संसारसम्भवैः ।
न वेत्ति हितमात्मानं सुखदुःखविभूतिभाक्[3] ॥ १४ ॥
लोको मोहसुरां पीत्वा न वेत्ति हितमात्मनः ॥ १५ ॥

[ सम्पदादीनामस्थायित्वम् ]

सम्पदः [4]स्वप्नसङ्काशा यौवनं कुसुमोपमम् ।
तडिच्चपलमायुश्च कस्याप्यज्ञानतो धृतिः ॥ १६ ॥

[ देहिनां जीवनं वृथैवातिवहति ]

शतं जीवति मर्त्त्यश्च निद्रा स्यादर्द्धहारिणी ।
बाल्यरोगजरादुःखैरर्द्धं[5] तदपि निष्फलम् ॥ १७ ॥

[ कार्य्याकार्य्यविचारमूढा विपद्यन्ते ]

[6]प्रारब्धव्ये निरुद्योगो जागर्त्तव्ये सुषुप्तिमान् ।
विश्वासवान् भयस्थाने हा नरः [7]को न हन्यते ॥ १८ ॥
जलरेखासमु[8]द्रोर्म्मिसहोदरकलेवरः ।
[9]अनित्यप्रियसंसारे कथं तिष्ठति निर्भयः ॥ १९ ॥

---

१६ । अज्ञानतः सम्पदामस्थायित्वज्ञानाभावाद् धृतिः सन्तोषः । मूढो नश्वरीस्वपि सम्पत्स्वतिमात्रं रमत इत्यर्थः ।

---

1. A-पुस्तके 'समाश्रयः' इति सविसर्गः पाठो दृश्यते, तत्र श्रेयःसमाश्रयो भवेत्यर्थः । 2. अत्र कुलार्णवप्रथमपटले प्रायःसमानानुपूर्व्वीके तुल्ये प्रकरणे 'कालो न ज्ञायते' इति दृश्यमानः पाठः समीचीनः प्रतिभाति । 3. '-तिषु' A. C. 4. '-स्वप्नमेव स्याद्' A. C. 5. '-रल्पं' D. 6. पादोऽयम् A-पुस्तके नास्ति । 7. '-को नु-' ? A. '-केन-' B. C. 8. '-द्रोऽसि महोदरकलेवरे' A. 9. 'अनित्येन्द्रियसंवासे' ।

[ जीवानां मुग्धत्वम् ]

पश्यन्नपि प्रस्खलति शृण्वन्नपि न बुध्यते ।
[1]प्रतिबिम्बसमः कालः क्षीयमाणो न [2]लभ्यते ॥ २० ॥

[ कालः सर्व्वं हन्ति ]

पृथिवी दह्यते[3]ऽनेन मेरुश्चापि विशीर्य्यते ।
शुष्यते सागरजलं [4]शरीरे हन्त का कथा ॥ २१ ॥
अपत्यं मे कलत्रं मे धनं मे बान्धवाश्च मे ।
लपन्ति मतिहीनास्तु [5]हन्त कालवृकेच्छया ॥ २२ ॥

[ श्रेयःसाधने कृत्ये कालहरणमनुचितम् ]

श्वःकार्य्यमद्य कुर्व्वीत पूर्व्वाह्णे चापराह्णिकम् ।
न हि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम् ॥ २३ ॥

[ सर्व्वेषामेव मृत्युरव्यभिचारी ]

बालांश्च यौवनस्थांश्च वृद्धान् गर्भगतानपि ।
[6]सर्व्वानादिशते मृत्युरेवंभूतमिदं जगत् ॥ २४ ॥
ब्रह्मविष्णुमहेशादि[7]देवता भूतजातयः ।
नाशमेवात्र धावन्ति तस्माच्छ्रेयः समाश्रय[8] ॥ २५ ॥

[ आयुःक्षयकारणम् ]

आत्मवर्णाश्रमाचारहीन-हीनप्रतिग्रहात् ।
परस्त्रीधनलोभाच्च नृणामायुःक्षयो भवेत् ॥ २६ ॥
वेदशास्त्राद्यनभ्यासात्तथैव गुरुवञ्चनात् ।
नृणामायुःक्षयो भूयादिन्द्रियाणामनिग्रहात् ॥ २७ ॥

---

1. 'प्रतिसमः क्षयः' A. 2. 'लक्ष्य-' B. 3. 'येन' B. D. 4. 'शरीरस्य च' B.
5 'हतं' ? A. 6. '-सर्व्वमा-' A. 7. '-ना' A. B. C. 8. '-यः' D.

[ सङ्गः सर्व्वथा परित्याज्यः ]

निःसङ्ग एव मोक्षः स्याद्दोषाः सर्व्वे च सङ्गमात् ।
तस्मात् सङ्गं परित्यज्य तत्त्वनिष्ठः सुखी[1]भव ॥ २८ ॥

[ तदसम्भवे सत्सङ्ग एवोपादेयः ]

सङ्गः सर्व्वात्मना त्याज्यः[2] [3]स चेत्त्यक्तुं न शक्यते ।
[4]स सद्भिरेव कर्त्तव्यः सतां सङ्गो हि भेषजम् ॥ २९ ॥

[ सत्सङ्गविवेकयोः प्रकर्षः ]

सत्सङ्गश्च विवेकश्च [5]निर्म्मलं नयनद्वयम् ।
यस्य नास्ति नरः सोऽन्धः[6] कथं न स्यादमार्गगः ॥ ३० ॥

[ जीवात्मनः स्वाश्रये देहेऽपि सम्बन्धः क्षणिकः का कथा स्त्रीपुत्रादिषु ]

[7]स्वदेहमपि जीवोऽयं त्यक्त्वा याति कुलेश्वरि ।
[8]स्त्रीपुत्रपितृमात्रादिसम्बन्धः केन हेतुना ॥ ३१ ॥

[ कः सुखी को वा दुःखी ]

दुःखमूलं हि संसारः स यस्यास्ति स दुःखितः ।
तस्य त्यागः कृतो येन स सुखी नात्र संशयः ॥ ३२ ॥

[ त्यागिनः स्वरूपम् ]

त्यजेत् कर्म्मफलं यो हि स त्यागीत्यभिधीयते ।
आलयं सर्व्वपापानां संसारं वर्जयेत् सुधीः ॥ ३३ ॥

---

३१ । स्वदेहेत्यादिपादचतुष्टयात्मकं वचनं कुलार्णवप्रथमोल्लासे दृश्यते । तत्र कुलेश्वरीति देवीं प्रतीश्वरकृतं सम्बोधनम् । तदेव वचनमत्राविकलमाहृतमिति कुलेश्वरीति पदमपि न परिवर्त्तितं ग्रन्थकृतेति सम्भाव्यते ।

---

1. 'भवेत्' D. 2. '-ज्यो' B. 3. 'भवे-' A. 4. 'सद्भिः सह प्रकुर्व्वीत' A. B. 5. 'निश्चलं' D. 6. '-ज्ञः' A. B. 7. '-स्वदेहेत्यादि' पादद्वयं D-पुस्तके नास्ति । 8. 'स्त्रीमातृ-पितृपुत्रादि-' A. B.

[ संसारस्य हेयत्वं तत्त्वज्ञानस्योपादेयत्वञ्च ]

आदिमध्यावसानेषु सर्व्वदुःखमिदं जगत् ।
तस्मात् सन्त्यज्य संसारं तत्त्वनिष्ठः सुखी [1]भव ॥ ३४ ॥

[ तत्त्वनिष्ठस्य पुण्यपापकर्म्मभिरननुषङ्गः ]

अश्वमेधशतेनापि ब्रह्महत्याशतेन वा ।
पुण्यपापैर्न लिप्यन्ते येषां ब्रह्म हृदि स्थितम् ॥ ३५ ॥

[ इन्द्रियवृत्तिपारतन्त्र्यमेव कर्म्मणां हेतुस्तस्य परित्यागे न कर्म्मोदयः ]

पृथिव्यां यानि कर्म्माणि [2]जिह्वोपस्थ-निमित्तकम् ।
जिह्वोपस्थपरित्यागी कर्म्मणा किं करिष्यति ॥ ३६ ॥

[ के नरकगामिनः ]

हिताहितं न जानन्तो नित्यमुन्मार्गगामिनः[3] ।
कुक्षिपूरणनिष्ठा ये ते जना नारकाः स्मृताः ॥ ३७ ॥

[ ज्ञानवतां प्रकर्षो भोगमात्रसाराणां पशुतुल्यत्वञ्च ]

निद्राभीमैथुनाहाराः सर्व्वेषां प्राणिनां समाः ।
ज्ञानवान् मानुषः प्रोक्तो ज्ञानहीनो महापशुः ॥ ३८ ॥

[ संसारिणः स्वस्वकृत्याकुलतया निरन्तरं पीडाविशेषमनुभवन्ति ]

प्रभाते मलमूत्राभ्यां मध्याह्ने क्षुत्पिपासया ।
रात्रौ मदननिद्राभ्यां बाध्यन्ते मानवाः किल ॥ ३९ ॥

[ मूढा विषयिणः पुनः पुनर्जन्ममरणानुबन्धिनो भवन्ति ]

स्वदेहपुत्रदारादिनिर्भराः[4] सर्व्वजन्तवः ।
जायन्ते च म्रियन्ते च हा [5]हन्ताज्ञानमोहिताः ॥ ४० ॥

---

1. 'भवेत्' D. 2. 'जपतस्तु' (?) A. 3. '-दिमार्गगाः' D. 4 '-निरताः' B
5. '-हता' A. B.

[ न हि वर्णाश्रमाचारपरिपालनेनैवात्मलाभः ]

स्वस्ववर्णाश्रमाचारनिरताः सर्व्वमानवाः ।
न [1]जानन्ति परं ब्रह्म मूर्खा नश्यन्ति निश्चितम् ॥ ४१ ॥

[ केचिन्मूढा ब्रह्मचर्य्याद्याडम्बरैर्लोकान् प्रतारयन्ति, ततोऽपि नात्मलाभः ]

क्रियायासपराः केचिद् ब्रह्मचर्य्यादिसंयुताः ।
अज्ञान[2]संवृतात्मानः सञ्चरन्ति प्रतारकाः ॥ ४२ ॥

[ न ह्युपवासादिनियमैरेवात्मलाभः ]

एक[3]भुक्त्युपवासाद्यैर्नियमैः कायशोषणैः ।
मूढाः परोक्तमिच्छन्ति महामायासमावृताः[4] ॥ ४३ ॥
देहदण्डनमात्रेण का मुक्तिर[5]विवेकिनाम् ॥ ४४ ॥

[ प्रतारकाणां प्रकारः ]

धनदारजनासक्ता [6]अभिका वेशधारिणः ।
भ्रमन्ति ज्ञानिवल्लोके भ्रामयन्ति[7] जनानपि ॥ ४५ ॥
सांसारिकसुखासक्तं ब्रह्मज्ञोऽस्मीति वादिनम् ।
त्यजेत्तं[8] सततं धीरश्चण्डालमिव दूरतः ॥ ४६ ॥

[ न हि गृहारण्यसाम्याव्रीडत्वदिगम्बरत्वादि-ज्ञानिसाधर्म्म्यादेव ज्ञानी भवति ]

गृहारण्यसमा लोके[5] गतव्रीडा दिगम्बराः ।
[9]चरन्ति गर्द्दभाद्याश्च विविक्तास्ते भवन्ति किम् ॥ ४७ ॥
तृणपर्णोदकाहाराः सततं वनवासिनः ।
हरिणादिमृगाश्चैव तापसास्ते भवन्ति किम् ॥ ४८ ॥

---

४५ । अभिकाः कामुकाः । वेशधारिणः रक्तवस्त्रमालाकमण्डलुप्रभृतिभिः सन्न्यासिजनोचितवेशधराः ।

---

1. '-च यान्ति' A. B. 2. '-संभृता-' A. B. 3. '-भक्तो-' A. B. 4. '-हताः' A. B. 5. '-र्न' A. B. 6. 'भीतका' ? A. D. 7. '-न्तो' D. 8. '-तं' A. B. 9. 'धाव-' A.

शीतवातातपसमा भक्ष्याभक्ष्यसमा अपि ।
तिष्ठन्ति शूकराद्याश्च व्रतिनस्ते भवन्ति किम् ॥ ४९ ॥
[1]आजन्ममरणान्तन्तु गङ्गादितटिनीस्थिताः ।
मण्डूकमत्स्यप्रवरा व्रतिनस्ते भवन्ति किम् ॥ ५० ॥

[ ज्ञानमेव साक्षान्मुक्तिकारणं न कर्म्म ]

[2]तस्मादित्यादिकं कर्म्म लोकरञ्जनकारणम् ।
मोक्षस्य कारणं साक्षात्तत्त्वज्ञानं न चान्यथा ॥ ५१ ॥

[ न हि षड्दर्शनानुशीलनेनैवात्मलाभः ]

षड्दर्शनमहाकूपपतिताः पशवः सदा ।
परमार्थं न जानन्ति पशुपाशनियन्त्रिताः ॥ ५२ ॥

[ न हि वेदादिविदोऽप्यतत्त्वज्ञस्य वाक्यमुपकाराय कल्पते ]

वेदागमपुराणज्ञः परमार्थं न वेत्ति यः ।
विडम्बकस्य तस्यापि तत्सर्व्वं काकभाषितम् ॥ ५३ ॥

[ परतत्त्वपराङ्मुखाणां निरन्तरशास्त्रानुशीलनेनापि नात्मलाभः ]

इदं ज्ञानमिदं ज्ञेयमिति चिन्तासमाकुलाः ।
पठन्त्यहर्निशं शास्त्रं [3]परतत्त्वपराङ्मुखाः ॥ ५४ ॥

[ शास्त्रादिज्ञानं सुलभं तात्पर्य्यज्ञानं तु न तथा ]

शिरो वहति पुष्पाणि गन्धं जानाति नासिका ।
पठन्ति वेदशास्त्राणि दुर्लभो भावबोधकः ॥ ५५ ॥

---

1. आजन्मेत्यादिपादचतुष्टयं A-पुस्तके नास्ति । B. पुस्तकेऽपि तत् पादचतुष्टयं पतितोद्धार-रूपेणावस्थितं दृश्यते । 2. तस्मादित्यादिपादचतुष्टयं A-B-पुस्तकयोः शीतवातेत्यादिश्लोकात् पूर्व्वं परञ्च दृश्यते । C-पुस्तके नास्ति । D-पुस्तके आजन्मेत्यादिश्लोकात् परं दृश्यते । एवं स्थितेऽवस्थितिस्थानक्रमभेदेऽस्य प्रागुक्तोपसंहाररूपतयात्रैवावस्थानं समीचीनमिति सुधीभिरव-धेयम् । 3. 'पञ्च-' A. B,

[ प्रज्ञावतः शास्त्रानुशीलनमुपकाराय भवति नेतरस्य ]

प्रज्ञाहीनस्य पठनमन्धस्यादर्शदर्शनम् ।
प्रज्ञावतो धर्म्मशास्त्रं तत्त्वज्ञानस्य कारणम् ॥ ५६ ॥
अप्रज्ञस्य धर्म्मशास्त्रं बन्धनायोपपद्यते ।
[1]तत्त्वमीदृक् तादृगिति प्रवदन्ति परस्परम् ॥ ५७ ॥
इदं ज्ञानमिदं ज्ञेयं सर्व्वतः श्रोतुमिच्छति ।
अपि वर्षसहस्रेण शास्त्रान्तं नैव गच्छति ॥ ५८ ॥

[ शास्त्रेभ्यः सार आदेयः ]

तर्काद्यनेकशास्त्राणि स्वल्पायुर्विघ्नकोटयः ।
तस्मात् सारं विजानीयात् क्षीरं हंस इवाम्भसि ॥ ५९ ॥

[ शास्त्राभ्यासस्य तत्त्वज्ञानाऽवधिकत्वम् ]

अभ्यस्य सर्व्वशास्त्राणि तत्त्वं ज्ञात्वा तु बुद्धिमान् ।
पलालमिव धान्यार्थी [2]सर्व्वशास्त्राणि संत्यजेत् ॥ ६० ॥

---

५५ । भावबोधको दिव्य-वीर-पशुभावानां वेदिता । तथाच—रुद्रयामलोत्तरखण्डे प्रथमपटले—

महावीरो महाधीरो दिव्यभावस्थितोऽपि वा ।
अथवा पशुभावस्थो मन्त्री पीठे विवासयेत् ॥
तथा—कलौ च दिव्यवीराभ्यां नित्यं तद्गतचेतसः ।
महाभक्ताः प्रपश्यन्ति महाविद्यापरं पदम् ॥
तथा—साधवो मौनशीलाश्च सदा साधनतत्पराः ।
दिव्यवीरस्वभावेन पश्यन्ति मत्पदाम्बुजम् ॥

इत्यादिना दिव्यादिभावानां प्रशंसामभिधाय प्रायेणैतद्वचनसमानानुपूर्व्वीकं वचनमुपन्यस्तम् । यथा—

वृक्षो वहति पुष्पाणि गन्धं जानाति नासिका ।
पठन्ति वेदशास्त्राणि दुर्लभा भावबोधकाः ॥ इति ।

एतद्वचनसंवादेनात्र विशेषाभावेऽपि भावशब्देन दिव्यादिभावा एवाभिहिता इत्यवधेयम् ।

---

1, 'तत्त्वमसीहभागित्वे' A. 2. 'त्यजेद् ग्रन्थान् बहूनपि' A, B.

यथा मृतशरीरस्य नाहारेण प्रयोजनम् ।
[1]तत्त्वज्ञस्य शास्त्रजालैस्तथैवेति सुनिश्चितम् ॥ ६१ ॥

[ ज्ञानमेव मुक्तिप्रयोजकं न शास्त्रानुशीलनम् ]

न वेदाध्ययनान्मुक्तिर्न शास्त्रपठनादपि ।
ज्ञानादेव हि मुक्तिः स्याद[2]न्यथा नैव कर्हिचित् ॥ ६२ ॥

[ मुक्तेः स्वरूपम् ]

अनन्तदुःखविरहो मुक्तिरित्युच्यते बुधैः ।

[ तत्र मतान्तरम् ]

तृष्णानाशो भवेन्मोक्ष [3]इति तत्त्वविदो विदुः ॥ ६३ ॥

[ तत्र स्वमतम् ]

आनन्दघनसन्दोहपरमात्मनि चाव्यये ।
जीवात्मनिलयो मोक्ष इति मे वस्तुतो मतिः ॥ ६४ ॥

[ ज्ञानाननुबन्धिनः कर्म्माद्युपाया न मुक्तिप्रयोजकाः ]

किं कायक्लेशनेनैव [4]यज्ञविस्तारणेन च ।
किमाचार[5]विचारेण यदि ज्ञानं [6]न लभ्यते ॥ ६५ ॥

[ वेदादिशास्त्राणि न मुक्तिप्रयोजकानि, ज्ञानमेव मुक्तिप्रयोजकम् ]

न वेदाः कारणं मुक्तेर्दर्शनानि न कारणम् ।
तथैव सर्व्वशास्त्राणि, [7]ज्ञानमेव हि कारणम् ॥ ६६ ॥

---

६६ । सर्व्वशास्त्राणि मुक्तेर्न कारणमिति पूर्व्वेणान्वयः । तर्हि मुक्तेः किं कारणमित्याह—ज्ञानमिति । 'ज्ञानस्यैवे'ति पाठे सर्व्वशास्त्राणि ज्ञानस्यैव कारणं न मुक्तेः, मुक्तिं प्रति ज्ञानस्यैव कारणत्वादित्यर्थः ।

---

1. 'तत्त्वस्य शास्त्रजालैस्त-' A. 2. '-न्नान्यथा सर्व्वथा भवेत्' D. 3. इतः प्रभृति पादचतुष्टयं A-पुस्तके नास्ति । 4. 'किं यज्ञविस्तरेण च' D 5. '-रेण तेषां वै' A, B, 6. 'भवेन्न हि' D. 7. 'ज्ञानस्यैव' A. B.

[ ज्ञानस्य द्वैविध्यम् ]

तदेव द्विविधं ज्ञानं विवेकागमसम्भवम् ।
शब्दब्रह्माऽऽगममयं परंब्रह्म विवेकजम् ॥ ६७ ॥

[ शब्दब्रह्मस्वरूपम् ]

भिद्यमानात् पराद्बिन्दोरव्यक्तात्मा रवोऽभवत्[1] ।
शब्दब्रह्मेति तं प्राहुः सर्व्वागमविशारदाः ॥ ६८ ॥

---

६७। पूर्व्वश्लोके ज्ञानमेव हि कारणमित्युक्तम्, तस्य ज्ञानस्य भेदावाह—तदेवेति। तज्ज्ञानं द्विविधमेव। अत्रैवकारेण व्यावहारिकघटपटादिज्ञानानां मुक्त्यनुपयोगिनां व्यावृत्तिः। ज्ञानस्य द्वैविध्यं विवेकसम्भवत्वेनागमसम्भवत्वेन च। तदेवाह—शब्देति। शब्दब्रह्म ब्रह्मात्मकः शब्दः तज्ज्ञानमित्यर्थः, आगममयम् आगमजन्यं श्रुत्यैव तत्प्रतिपादनात्। परब्रह्मज्ञानन्तु विवेकजन्यं विवेकादेव परब्रह्मज्ञानावाप्तेः।

६८। अत्र राघवभट्टः—"शब्दब्रह्मण उत्पत्तिमाह—भिद्यमानादिति। पराद् बिन्दोरित्यनेन शक्त्यवस्थारूपो यः प्रथमो बिन्दुस्तस्मादव्यक्तात्मा वर्णादिविशेषरहितोऽखण्डो नादमात्र उत्पन्नः। तदुक्तमाचार्य्यैः—

स रवः श्रुतिसम्पन्नैः शब्दब्रह्मेति कथ्यते।

इति सृष्ट्युन्मुखपरमशिव-प्रथमोल्लासमात्रमखण्डोऽव्यक्तो नादबिन्दुमय एव व्यापको ब्रह्मात्मकः शब्दः शब्दब्रह्मेत्यर्थः। उक्तञ्च—

क्रियाशक्तिप्रधानायाः शब्दशब्दार्थकारणम्।
प्रकृतेर्बिन्दुरूपिण्याः शब्दब्रह्माऽभवत् परम् ॥ इति।"

इदमवधेयम्—परमेश्वरो निष्कलः सकलश्च। कलाशब्देन प्रकृतिरुच्यते, तत्सम्बन्धशून्यो निष्कलः, तत्सम्बद्धश्च सकलः। इयमेव प्रकृतिः परशिवस्य स्वरूपशक्तिरूपा, ततश्च सच्चिदानन्दस्वरूपस्य परमशिवस्य स्वरूपशक्तिरूपतया प्रकृतेरपि सच्चिदानन्दरूपत्वम्। तत्र परशिवः प्रकाशस्वरूपः, पराशक्तिरपि तथैव ; लीलावशात् परमशिवस्य जातायां सिसृक्षायां पराप्रकृतिरपि विमर्शरूपेण परिस्फुरति। तदुक्तं राघवभट्टधृतवायवीयसंहितायाम्—

शिवेच्छया परा शक्तिः शिवतत्त्वैकतां गता।
ततः परिस्फुरत्यादौ सर्गे तैलं तिलादिव ॥ इति।

---

1. 'भवेत्' D.

[ स्फोटवादिमतद्वयम् ]

**शब्दब्रह्मेति शब्दार्थं शब्द[1]मित्यपरे विदुः ।**

[ तन्मतद्वयनिरासः ]

**न हि तेषां तयोः सिद्धिर्जडत्वादुभयोरपि ॥ ६६ ॥**

---

राघवभट्टधृतपाञ्चरात्रेऽपि—

एवमालोक्य सर्गादौ सच्चिदानन्दरूपिणीम् ।
समस्ततत्त्वसंघातस्फूर्त्यधिष्ठानरूपिणीम् ।
व्यक्तां करोति नित्यां तां प्रकृतिं परमः पुमान् ॥ इति ।

कामकलाविलासेऽपि—

सा जयति शक्तिराद्या निजसुखमयनित्यनिरुपमाकारा ।
भाविचराचरबीजं शिवरूपविमर्शनिर्मलादर्शः ॥

इत्यनेन परशक्तेः परशिवस्वरूपत्वं जगत्कारणत्वं परशिव स्याहन्तानिर्व्वाहकत्वमप्युपपादितम् । एतेन परमशिवशक्त्योः परस्परसम्बन्धजन्या प्रपञ्चसृष्टिरित्युक्तं भवति ।

एवञ्च प्रकाशस्वरूपोऽपि परमेश्वरो विमर्शरूपस्वरूपशक्तिसम्बन्धवशात् पूर्णोऽहमित्येवंरूपबिन्दुस्वरूपतां धत्ते, तथा परमा प्रकृतिरपि । तदुक्तं कामकलाविलासटीकाकृता नटानन्दनाथेन—"परमेश्वरः स्वाङ्गभूतनिखिलप्रपञ्चविलयात्मकविमर्शशक्तिमनुप्रविश्य बिन्दुभावमयते । ततः सा विमर्शशक्तिरपि स्वान्तर्गतप्रकाशमय-बिन्दुमनुप्रविशति ततश्च बिन्दुरुच्छूनो भवती"त्यादि ।

एतेन परमशिवस्य प्रकाशस्वरूपस्य प्रथमस्फूर्त्तिरूपा या शक्त्यवस्था सैव प्रथमो बिन्दुरित्यापतति । 'भिद्यमानात् पराद् बिन्दो'रित्यनेनायमेव बिन्दुरभिहितः । एतदभिप्रायेणैव राघवभट्टेन "पराद् बिन्दोरित्यनेन शक्त्यवस्थारूपो यः प्रथमो बिन्दु"रित्युक्तम ।

६६ । अत्र राघवभट्टः—"अथान्तरस्फोटवादिमतं जातिव्यक्तिस्फोटात्मकं वा स्फोटमतं दूषयितुमुपक्रमते—शब्देति । एक आचार्य्याः शब्दार्थमान्तरस्फोटं शब्दब्रह्मेत्याहुः । यथाह—निरंश एवाभिन्नो नित्यो बोधस्वभावः शब्दार्थमय आन्तरस्फोट इति । अपरे वैयाकरणाः पूर्व्वपूर्ववर्णोच्चारणाभिव्यक्त-तत्तत्पदसंस्कारसहाय-चरमपदग्रहोद्बुद्धं

---

1. '-मित्युच्यते बुधैः' B.

[ शब्दब्रह्मस्वरूपे स्वमतम् ]

चैतन्यं सर्व्वभूतानां शब्दब्रह्मेति [1]मे मतिः ॥ ७० ॥

[ वर्णाभिव्यक्तिः ]

तत् प्राप्य कुण्डलीरूपं प्राणिनां देहमध्यगम् ।
वर्णात्मनाविर्भवति गद्यपद्यादिभेदतः ॥ ७१ ॥

[ द्वैताद्वैतनिरूपणम् ]

केचिद् द्वैतमिच्छन्ति द्वैतमिच्छन्ति चापरे ।
[3]द्वे पदे बन्धमोक्षाय निर्ममेति ममेति च[4] ॥ ७२ ॥

---

वाक्यस्फोटलक्षणं शब्दमखण्डैकार्थप्रकाशकं शब्दब्रह्मेति वदन्ति। यदाह एक एव नित्यो वाक्याभिव्यङ्ग्योऽखण्डो व्यक्तिस्फोटो जातिस्फोटो वा बहीरूप" इति। तथाचात्र मतद्वयमुपदर्श्य निराकृतम एके शब्दार्थमेव शब्दब्रह्मेति विदुः, अपरे शब्द एव शब्दब्रह्मेति विदुरिति सम्बन्धः।

एवं शब्दार्थः शब्दब्रह्मेति आन्तरस्फोटवादिमतम, शब्द एव शब्दब्रह्मेति जातिव्यक्तिस्फोटवादिमतञ्च प्रागुक्तं दूषयति—न हीत्यादिना। अत्र राघवभट्टः—"तेषां वादिनां मते तयोः शब्दार्थयोः सिद्धिः शब्दब्रह्मत्वसिद्धिर्न, उभयोस्तयोर्जडत्वात्। यदि शब्दार्थः शब्दो वा शब्दब्रह्मेत्युच्यते, तदा ब्रह्मपदवाच्यत्वं नोपपद्यते। यतः सच्चिदानन्दरूपो ब्रह्मपदार्थः। तौ च जडौ। तदुक्तं—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥ इति।"

७०। स्वमतमाह—चैतन्यमिति। सर्व्वभूतानां चैतन्यमेव शब्दब्रह्मेत्यर्थः। तदुक्तं राघवभट्टधृतप्रयोगसारे—

सोऽन्तरात्मा तदा देवि नादात्मा नदते स्वयम्॥ इति।

एतेन भिद्यमानादित्यादिना प्रतिपादित एव सिद्धान्तश्चैतन्यमित्यादिनाभिहित इति प्रतिपद्यते।

७१। एवं परां नादात्मिकां शब्दसृष्टिमभिधाय वर्णसृष्टिमाह—तदिति। अत्र राघवभट्टः—प्राणिनां देहमध्यगं कुण्डलीरूपं कुण्डलिनीस्वरूपं तच्चैतन्यं गद्यपद्यादिभेदतो वर्णात्मनाऽऽविर्भवतीति सम्बन्धः। किं कृत्वा, प्राप्य कण्ठादिकरणानीति शेषः।

७२। पूर्वं शब्दब्रह्माऽऽगममयं परं ब्रह्म विवेकजमित्युक्त्वा शब्दब्रह्मस्वरूपमुपपाद्य

---

1. 'चापरे' D. 2. '-च' ? A. 3. 'द्वैतमेवेत्य-' B. अत्र द्वे पदे बन्धमोक्षाय ममेति निर्ममेति च। ममेति बध्यते जन्तुर्न ममेति विमुच्यते॥ इति कुलार्णवप्रथमोल्लासवचनसंवादादितरथा प्रकृतार्थसङ्गतेरसम्भवाच्च 'ममेति निर्ममेति चे'ति पाठः समीचीनतया प्रतिभाति। 4. अतःपरं 'ममेत्यध्यासनायुक्तं निर्मुक्तिनिर्ममेति च।' इति B-पुस्तकेऽधिकः पाठः।

अविद्याविद्ययोर्भेदात् पत्तद्वयमुदीरितम् ॥ ७३ ॥

[ विद्याऽविद्यात्मककर्म्मजन्यौ बन्धमोक्षौ ]

तत् कर्म्म यच्च बन्धाय साऽविद्या परिकीर्त्तिता ।
[1]यन्न बन्धाय तत् कर्म्म सा विद्या समुदाहृता ॥ ७४ ॥

[ सङ्कल्पस्य सत्तासत्ताभ्यामेव बन्धमोक्षौ ]

यावत् सङ्कल्प एवास्ति तावदेव हि [2]बन्धनम् ।
[3]यावत्तदेव नैवास्ति तावदेव हि मोक्षणम् ॥ ७५ ॥

[ कर्मणस्तत्त्वज्ञानपर्यन्तमनुष्ठेयत्वम् ]

जपहोमार्च्चनं तीर्थं वेदशास्त्रागमादिकम् ।
तावदेव हि सर्व्वञ्च यावत्तत्त्वं न विन्दति ॥ ७६ ॥

[ तत्त्वनिष्ठैव मोक्षावाप्तिहेतुः ]

अत एव प्रयत्नेन सर्व्वावस्थासु सर्व्वदा ।
तत्त्वनिष्ठो भवेद्धीरो यदीच्छेन्मोक्षमात्मनः ॥ ७७ ॥

[ तत्त्वज्ञानस्वरूपम् ]

तत्प्रकारमहं वक्ष्ये निगमागमलक्षितम् ॥ ७८ ॥
एकमेव परंब्रह्म रसरूपी सनातनः ।
प्रकृत्या क्रियते [4]व्यक्तस्तथा व्यक्तस्तया[5] पुनः ॥ ७९ ॥
तस्मात् प्रकृतियोगेन क्षिप्रं प्रत्यक्षमाप्नुयात् ।
घटप्र[6]त्यक्षसमये प्रकाशो व्यञ्जको यथा ॥ ८० ॥

---

परब्रह्मस्वरूपमाह—केचिदिति । मायावादिन इत्यर्थः । अपरे नैयायिकादयः । अत्र केचिदपरे इत्येताभ्यां मतद्वयस्याप्यस्वारस्यं सूचितम् । 'मम तत्त्वं न जानन्ति द्वैताद्वैतविवर्जितम् ।' इति कुलार्णवप्रथमोल्लासवचनेन परब्रह्मणो द्वैताद्वैतवैलक्षण्यस्योक्तत्वादित्यर्थः । द्वे पद इति । ममेति ज्ञानं बन्धाय निर्ममेति ज्ञानञ्च मुक्तये भवतीत्यर्थः ।

---

1. यन्नेति पादद्वयं A-B-C-पुस्तकेषु नास्ति । 2. A-पुस्तके 'बन्धन'मित्यत्र 'मोक्षण'मिति पाठः प्रामादिकः । 3. यावदित्यादि पादद्वयं A-पुस्तके नास्ति । 4. 'व्यक्ति-' A. B 5. '-था' A. 6. '-काश-' A.

[1]विना घटत्वयोगेन न प्रत्यक्षो यथा घटः ।
इतराद् भिद्यमानोऽपि न भेदमुपगच्छति ॥ ८१ ॥
पुरुषे नैव[2]भेदोऽस्ति विना शक्तिं कथञ्चन ।
न प्रयोगैर्न च ज्ञानैर्न श्रुत्या न गुरुक्रमात् ॥ ८२ ॥

[ परा प्रकृतिरेव तत्त्वज्ञानं प्रति साक्षात् कारणम् ]

प्रकृत्या ज्ञायते ब्रह्म प्रकृत्या लीयते पुमान् ।
प्रकृत्याधिष्ठितं सर्व्वं प्रकृत्या वाञ्छितं जगत् ।
तयोः समरसं ज्ञानं वस्तुतत्त्वं परं पदम् ॥ ८३ ॥
उपायाः सन्ति बहुधा ज्ञातुं ब्रह्म सनातनम् ।
तथापि प्रकृतेर्योगात् क्षिप्रं प्रत्यक्षतां लभेत् ॥ ८४ ॥
सांयात्रिकः कुदेशे तु यथा नावं प्रगृह्य च ।
नानादेशं समुत्तीर्य्य समुद्रं विशते चिरात् ॥ ८५ ॥
तत्तटे नावमादाय क्षणाद् याति यथा [3]पुनः ।
तस्मात् परम्परायातास्ते हि कारणतां गताः ॥ ८६ ॥
न साक्षात् कारणं ते हि साक्षात् प्रकृतिकारणम् ।
तस्मात्तां प्रकृतिं वक्ष्ये दीक्षाविधिपुरःसराम् ॥ ८७ ॥

इति श्रीपूर्णानन्दपरमहंसविरचिते श्रीतत्त्वचिन्तामणौ तत्त्वज्ञानविवेचनं नाम
प्रथमः प्रकाशः ॥ १ ॥

---

८७। प्रकृतीति। अत्र कारणत्वस्य विधेयतया उद्देश्यीभूतप्रकृतिपदेनानुपपन्नोऽपि समासश्छन्दोभङ्गभयादङ्गीकृतः।

---

1. इतः प्रभृति 'प्रकृतिकारण'मित्यन्तं श्लोकसप्तकम् A-पुस्तके नास्ति, B-पुस्तके च क्रोडपत्रे पतितोद्धाररूपेण दृश्यते। 2. 'दोषो-' D. 3. 'प्रभो'? B, D.

# द्वितीयः प्रकाशः

[ दीक्षाप्रकरणम् ]

[ तत्र दीक्षाशब्दार्थः, दीक्षायाः फलम्, दीक्षाभेदाः, गुरुशिष्यलक्षणम्, गुरौ शिष्यस्य व्यवहारः, अकथहादिचक्रविचारः, दीक्षायां दिनविचारः, ( तत्रानुकूलप्रतिकूलमासतिथिवार-नक्षत्रलग्नादिनिरूपणम् ) मन्त्रशब्दार्थः, मन्त्राणां दश संस्काराश्च ] ।

[ दीक्षानिरूपणोपयोगित्वम् ]

**[1]अथादीक्षितलोकानामधिकारोऽत्र नैव हि ।**
**[2]अतो दीक्षां प्रवक्ष्यामि चतुर्वर्गप्रदायिनीम्[3] ॥ १ ॥**

१ । पूर्व्वप्रकाशे ब्रह्मज्ञानस्य परमपुरुषार्थसाधकत्वमुक्त्वा प्रकाशेऽस्मिन् ब्रह्मज्ञानस्योपासनामूलकतया उपासनायाश्चादीक्षितानामनधिकारिताश्रवणादेतत्तन्त्रप्रतिपाद्यश्रीमत्त्रिपुरसुन्दरीदेवताराधनाधिकारप्रतिपादिकां दीक्षामवतारयति—अथेति । उपासनाधिकारस्य दीक्षापेक्षित्वमाह गौतमीयतन्त्रे सप्तमपटले—

अथ दीक्षां प्रवक्ष्यामि सर्व्वकामार्थसिद्धिदाम् ।
यां विना नैव सिद्धः स्यान्मन्त्रो वर्षशतैरपि ॥ इति ।

बृहन्नीलतन्त्रे तृतीयपटले दीक्षां प्रकृत्य—

तया विना महादेवि ह्यधिकारो न कर्म्मणि ।
सर्व्वाश्रमेषु भूतेषु सर्व्वदेवेषु सुव्रते ॥
दीक्षां विना महादेवि तस्य सर्व्वं वृथा भवेत् ।
दीक्षामूलं जगत् सर्व्वं दीक्षामूलं परं तपः ।
दीक्षामूलं महासिद्धिस्तस्माद्दीक्षां समाचरेत् ॥ इति ।

कुलार्णवे चतुर्द्दशोल्लासे च—

अदीक्षिता ये कुर्व्वन्ति जपपूजादिकाः क्रियाः ।
न भवन्ति प्रिये तेषां शिलायामुप्तबीजवत् ॥ इति ।

---

1. 'दीक्षितानाञ्चाधिकारश्चान्येषामत्र' B. 2 'ततो' C, 3. '-काम्' C,

[ दीक्षाशब्दव्युत्पत्तिः ]

दिव्यं ज्ञानं यतो दद्यात् कुर्य्याच्च[1] पापसंक्षयम् ।
तस्माद्दीक्षेति सा प्रोक्ता देशिकैस्तत्त्ववेदिभिः ॥ २ ॥

[ तस्याः प्रकारान्तरम् ]

अथवा गुरुणा [2]सम्यग् दीक्षणाद्देवमन्त्रयोः ।
दीक्षेति कथिता [3]सद्भिः सर्व्वपापप्रणाशिनी ॥ ३ ॥

[ प्रकारान्तरञ्च ]

[4]ददाति यस्मादिह दिव्यभावं मायामये कर्म्म च संक्षिणोति ।
फलं चतुर्व्वर्गभवञ्च यस्मात्तस्मात्तु दीक्षेत्यभिधानमस्याः ॥४॥

[ दीक्षाफलम् ]

कोटिजन्मकृतं पापं ज्ञानाज्ञानकृतञ्च यत् ।
दीक्षाग्रहणमात्रेण पलायेत न संशयः ॥ ५ ॥
ब्रह्महत्या-सुरापान-स्वर्णस्तेयादिपातकम् ।
उपपातकलक्षाणि हन्ति दीक्षा[5]त्रयान्नरः ॥ ६ ॥

[ वर्णभेदेन दीक्षायाः फलभेदाः ]

दीक्षितो ब्राह्मणो याति ब्रह्मलोकमनामयम्[6] ।
इन्द्रलोकं क्षत्रियोऽपि[7] प्राजापत्यं तथा विशः ॥ ७ ॥
शूद्रो गन्धर्व्वनगरं याति दीक्षाप्रभावतः[8] ।
चतुर्णामपि वर्णानामतो दीक्षा प्रशस्यते[9] ॥ ८ ॥

---

देवि दीक्षाविहीनस्य न सिद्धिर्न च सद्गतिः ।
तस्मात् सर्व्वप्रयत्नेन गुरुणा दीक्षितो भवेत् ॥
इत्यादिवचनैः प्रतिपादितम् ।

---

1. '-त् पापस्य सं-' C. 2. 'सत्या' C. 3. 'सर्व्वपापनाशनकारिणी' C 4 श्लोकोऽयं A-पुस्तके नास्ति । 5. '-श्र-' B. C. 6. '-कं सुरालयम्' A. C. 7. '-यस्तु' C. 8. '-प्रयत्नतः' A. 9. '-दृश्यते' C.

[ दीक्षायास्त्रैविध्यम् ]

शाम्भवी चैव शाक्तेयी[1] मान्त्री चैव शिवागमे ।
[2]दीक्षोपदिश्यते त्रेधा शिवेन परमात्मना ॥ ९ ॥

[ तत्र मान्त्री दीक्षा ]

मन्त्रमार्गानुसारेण साक्षात् कृत्वेष्टदेवताम्[3] ।
गुरुः [4]सद्बोधये[5]च्छिष्यं मन्त्रदीक्षेति सोच्यते ॥ १० ॥

[ तस्या एव क्रियावतीत्याख्यं प्रकारान्तरम् ]

अथवा मन्त्रपूजादि-[6]ध्यानयोगादिभिः [7]कृता ।
गुरुणा योगमार्गेण [8]तथा शास्त्रानुसारतः ॥ ११ ॥
मान्त्री क्रियावती सा तु कुण्डमण्डलपूर्व्विका ।

[ मान्त्र्या एव प्रकारान्तरम् ]

मन्त्रोपदेशमात्रन्तु मन्त्रदीक्षेति चापरे ॥ १२ ॥

[ मान्त्री दीक्षेयं सर्व्ववर्ण-सम्प्रदायसाधारणी ]

सामान्यभूता खलु मान्त्रिकी स्या-
द्दीक्षा स्मृता मन्त्रगणेषु तद्वत् ।
वर्णेषु चापि द्विजपूर्व्वकेषु
स्याच्चैव शाक्तेष्वपि वैष्णवेषु ॥ १३ ॥

---

९—१७ । शाम्भवीति । शाम्भवी शाक्तेयी मान्त्री चेति त्रिविधा दीक्षा । त्रेधेत्यनेनान्येषामाणवादिदीक्षाभेदानामत्रैवान्तर्भावः सूचितः ।

नन्विह शाम्भवी शाक्तेयी मान्त्रीति क्रमेण त्रिविधां दीक्षामुद्दिश्य मन्त्रमार्गानुसारेणेत्यादि-तत्तद्विशेषलक्षणनिरूपणावसरे मान्त्री शाक्तेयी शाम्भवीति व्युत्क्रमेण निर्द्देशः कथम् ? कथं वा—

---

1. 'शाक्ती च' A. C. 2. '-दीक्षापि ह-' A. B. 3. '-कृदिष्टदेवताम्' A. B. 4. 'संबो-' B, '-चोद्बो-' C, 5. '-द्दिव्यं' A. 6 'ध्यानोपाया-' C. 7. 'क्रमात्' A. B. 8. 'यथा' B. C.

[ शाक्तेयी दीक्षा ]

सिद्धे[1] स्वशक्तिमालोक्य तया केवलया शिशोः ।
निरुपायं[2] कृता दीक्षा शाक्तेयी परिकीर्त्तिता ॥ १४ ॥

[ ज्ञानवती दीक्षैव शाक्तेयी दीक्षेति मतान्तरम् ]

अथ ज्ञानवती दीक्षा शक्तिदीक्षेति चापरे ॥ १५ ॥

[ शाम्भवी दीक्षा ]

अभिसन्धिं विनाऽऽचार्य्यशिष्ययोरुभयोरपि ।
[3]देशिकानुग्रहेणैव शिवताव्यक्ति[4]रूपिणी ।
सेयन्तु शाम्भवी प्रोक्ता शिवावेशनकारिणी ॥ १६ ॥

[ तस्याः प्रकारान्तरम् ]

गुरोरालोकमात्रेण स्पर्शात् सम्भाषणादपि ।
सद्यः संज्ञा भवेज्जन्तोः शाम्भवी चेति चागमे ॥ १७ ॥

---

त्रिविधा सा भवेद्दीक्षा मान्त्री शाक्ती च शाम्भवी ।

इति गन्धर्व्वतन्त्रषडविंशपटलवचने दीक्षाणां विशिष्टक्रमनिर्द्देशे सत्यपि अत्र व्युत्क्रमेणोद्देशः ? उच्यते—राघवभट्टधृतषडाम्नायमहारत्ने—

त्रिविधा सा भवेद्दीक्षा प्रथमा आणवी परा ।
शाक्तेयी शाम्भवी चान्या सद्यो मुक्तिविधायिनी ॥

इत्यनेनाणवदीक्षायाः प्राथम्यमुपदर्श्य

मन्त्रार्च्चनासनस्थानध्यानयोगादिभिः कृता ।
दीक्षा सा त्वाणवी प्रोक्ता यथाशास्त्रोक्तकारिणी ॥

इति यदाणवदीक्षालक्षणं कृतं तेन सह

"अथवा मन्त्रपूजादिध्यानयोगादिभिः कृता ।"

इत्यादिपूर्णानन्दोक्तमान्त्रदीक्षालक्षणस्याभेदात् क्रियावती मान्त्री दीक्षैवाणवी दीक्षा, तस्याश्च प्राथम्यं प्रागुक्तषडाम्नायमहारत्नवचनेनोपपादितमेव । ततश्च प्रथमा मान्त्री, द्वितीया शाक्ती, तृतीया शाम्भवीति स्थितम् । अत एव गन्धर्व्वतन्त्रे षड्विंशपटले मान्त्री शाक्ती शाम्भवीति क्रममुद्दिश्य—

---

1. '-पु श-' A. 2. '-य-' A. 3. 'देशिके'त्यादि पादद्वयं A-पुस्तके नास्ति । 4. 'क-' C.

मन्त्रार्चनासनस्थानध्यानयोगादिभिः कृता ।
मान्त्री दीक्षा च सा प्रोक्ता यथाशास्त्रोक्तकारिणी ॥
सिद्धैः स्वशक्तिमालोक्य तया केवलया शिशोः ।
निरुपायैकृता दीक्षा शाक्तेयी परिकीर्त्तिता ॥
अभिसन्धिं विनाऽऽचार्य्य-शिष्ययोरुभयोरपि ।
देशिकानुग्रहेणैव शिवताव्यक्तिकारिणी ।
सेयन्तु शाम्भवी दीक्षा शिवावेशनकारिणी ॥

यथायथं लक्षणानि कृतानि । एवञ्च प्रागुक्ततत्तद्दीक्षालक्षणैः प्रथमं विधिबोधितमान्त्र-दीक्षया लब्धप्रवेशे शिष्ये मन्त्रसिद्धस्य गुरोः स्वशक्तेरुन्मीलनं द्वितीया मान्त्री दीक्षा। ततश्चाविर्भावितशक्तेः शिष्यस्य शिवतासम्पादनं तृतीया शाम्भवी दीक्षेत्यवगम्यते इति षडाम्नायमहारत्नानुसारी सिद्धान्तः ।

राघवभट्टधृतवायवीयसंहितायान्तु—

शाम्भवी चैव शाक्ती च मान्त्री चैव शिवागमे ।
दीक्षोपदिश्यते त्रेधा शिवेन परमात्मना ॥

इत्युद्दिश्य—

गुरोरालोकमात्रेण स्पर्शात् सम्भाषणादपि ।
सद्यः संज्ञा भवेज्जन्तोर्दीक्षा सा शाम्भवी मता ॥
शाक्ती ज्ञानवती दीक्षा शिष्यदेहं प्रविश्य तु ।
गुरुणा योगमार्गेण क्रियते ज्ञानचक्षुषा ।
मान्त्री क्रियावती सा तु कुण्डमण्डलपूर्व्विका ॥

इत्येतानि लक्षणानि कृतानि । अस्मिन् कल्पे प्रागुक्ततत्तल्लक्षणैः प्रथमं विषय-विमुग्धात्मनः शिष्यस्य सद्गुरुदर्शनमात्रेण संज्ञालाभस्ततो विषयवैमुख्यम् इति शाम्भवी दीक्षा । ततोऽनया दीक्षया सम्भावितशम्भुभावस्य द्वितीया शाक्ती दीक्षा । सा च ज्ञानवतीति तया दीक्षया ज्ञानोत्पादे तृतीया मान्त्री दीक्षा । सा च प्रागुक्तदीक्षाद्वयेन सम्भावितशम्भुभावस्य समुत्पन्नज्ञानस्य च शिष्यस्य कुण्डमण्डलाद्युपायपूर्व्विका कर्म्मभूयिष्ठा च मन्त्रप्रदानरूपा क्रियावती ।
एतदभिप्रायेणैव—

महादीक्षा तथा दीक्षा उपदेशस्ततः परम् ।
युगे युगे च कर्त्तव्य उपदेशः कलौ युगे ॥

इति तन्त्रसारधृतविश्वसारवचनेनापि प्रतियुगं दीक्षात्रयस्य कर्त्तव्यतामुपपाद्योपदेशरूप-मान्त्रदीक्षायाश्चरमत्वमभिहितम् । अत्र 'ततः पर'मित्यभिधानाद्दीक्षात्रयस्यैव कर्त्तव्यत्व-मवगम्यते ।

षट्चक्रादिज्ञानापेक्षिणामन्तर्यागादिकर्म्मणामुपदेशस्य प्रबलाज्ञानमलीमसे शिष्य-मनसि सर्व्वथा प्रवेशासम्भवात्,—

[ आगमशब्दार्थः ]

आगतः शिववक्त्रेभ्यो गतश्च गिरिजामुखे ।
मतश्च वासुदेवेन तेनागम इहोच्यते ॥ १८ ॥

[ गुरुलक्षणम् ]

अथ वक्ष्ये गुरूणान्तु लक्षणं तन्त्रसूचितम्[1] ।
उद्धर्त्तुं चैव संहर्त्तुं समर्थो ब्राह्मणोत्तमः ॥ १९ ॥

---

देवतागुरुमन्त्राणामैक्यं सम्भावयन् धिया ।
जपेदेकमनाः प्रातःकालान्मध्यन्दिनावधि ॥

इति गन्धर्व्वतन्त्राद्याविंशपटलोक्तदेवतागुरुमन्त्रैक्यभावनानुपपत्तेश्च ज्ञानविशोधित एव शिष्यहृदये कर्म्मोपदेशः समीचीन इति । एतन्मतद्वयप्रदर्शनार्थमेव श्रीमत्परमहंसैः शाम्भवी शाक्ती मान्त्रीति दीक्षाक्रममुद्दिश्य व्युत्क्रमेण लक्षणानि कृतानीत्यवधेयम् । तथा चात्र श्रीमत्परमहंसैर्दीक्षाभेदानामुभयविधमेव लक्षणमथवेत्यादिना सूचितमिति निष्कर्षः ।

१९ । गुरुशिष्यावुभौ मोहादपरीक्ष्य परस्परम् ।
उपदेशं ददद् गृह्णन् प्राप्नुयातां पिशाचताम् ॥

इति कुलार्णव-पञ्चमखण्डीय-चतुर्द्दशोल्लासवचनेन गुरुशिष्ययोः परस्परमपरीक्ष्य मन्त्रदानग्रहणनिषेधात् परीक्षायाश्च लक्षणज्ञानापेक्षित्वेन गुरुशिष्ययोर्लक्षणे वक्तव्ये क्रमप्राप्तं गुरुलक्षणमाह—अथेति । तथा बृहन्नीलतन्त्रे तृतीयपटले—

अनिन्दितवेशधारी कपटेन विनाकृतः ।
आचारवान् महाविद्याराधनेषु च तत्परः ॥
तत्कल्पाचारसक्तश्च गुरुरित्यभिधीयते ।
कौलज्ञानी महायोगी गुरुरेव च दैवतम् ॥
कुलीनः सर्व्वमन्त्राणां दाता सर्व्वेषु सुन्दरि ।
दीक्षाप्रभुः स एवात्मा नापरो वेदपारगः ॥ इति ।

विशिष्याह कुलार्णवे पञ्चमखण्डे त्रयोदशोल्लासे—

श्रीगुरुः परमेशानि शुद्धवेशो मनोहरः ।
सर्व्वलक्षणसम्पन्नः सर्व्वावयवशोभितः ॥

---

1. '-सम्मतम्' (.

**तत्त्वज्ञो मन्त्रयन्त्राणां [1]मर्मवेत्ता रहस्यवित् ।**
**[2]पुरश्चरणकृत् सिद्धो मन्त्रसिद्धिप्रयोगवित् ॥ २० ॥**

---

सर्व्वागमार्थतत्त्वज्ञः सर्व्वमन्त्रविधानवित् ।
लोकसम्मोहनकरो देववत् प्रियदर्शनः ॥
सुमुखः सुलभः स्वच्छो भ्रमसंशयनाशकः ।
इङ्गिताकारवित् प्राज्ञ ऊहापोहविदुज्ज्वलः ॥
अन्तर्लक्ष्यो बहिर्दृष्टिः सर्व्वज्ञो देशकालवित् ।
आज्ञासिद्धिस्त्रिकालज्ञो निग्रहानुग्रहक्षमः ॥
बेधको बोधकः शान्तः सर्व्वजीवदयापरः ।
स्वाधीनेन्द्रियसञ्चारः षड्वर्गविजयक्षमः ॥
अग्रगण्योऽतिगम्भीरः पात्रापात्रविशेषवित् ।
शिवविष्णुसमः साधुर्म्मन्ददर्शनदूषकः ॥
निर्म्मलो नित्यसन्तुष्टः स्वतन्त्रो मन्त्रशक्तिमान् ।
सद्भक्तवत्सलो धीरः कृपालुः स्मितपूर्णवाक् ॥
भक्तप्रियः सदोदारो गम्भीरः शिष्टसाधकः ।
स्वेष्टदेवगुरुज्येष्ठवनितापूजनोत्सुकः ॥
नित्ये नैमित्तिके काम्ये रतः कर्म्मण्यनिन्दिते ।
रागद्वेषभयक्लेशदम्भाहङ्कारवर्जितः ॥
स्वविद्यानुष्ठानरतो धर्म्मादीनामुपार्जकः ।
यदृच्छालाभसन्तुष्टो गुणदोषविभेदकः ॥
स्त्रीधनादिष्वनासक्तो दुःसङ्गव्यसनादिषु ।
सर्व्वाहम्भावसंयुक्तो निर्द्वन्द्वो नियतव्रतः ॥
अलोलुपो ह्यसङ्कल्पपक्षपाती विचक्षणः ।
वित्तविद्यादिभिर्मन्त्रयन्त्रतन्त्राद्यविक्रयी ॥
निःसङ्गो निर्व्विकल्पश्च निर्णीतार्थोऽतिधार्म्मिकः ।
तुल्यनिन्दास्तुतिर्मौनी निरपेक्षो निरामयः ॥
इत्यादिलक्षणोपेतः श्रीगुरुः कथितः प्रिये ॥ इति ।

गन्धर्व्वतन्त्रे षड्विंशपटलेऽपि—गुरुः सर्व्वगुणोपेतो दोषैरस्पृष्टमानसः । इत्यादि । एवमन्यत्रापि ज्ञेयम् ।

---

1. 'सम-' A. B. 2. 'पुरश्चरण'मित्यादि पादद्वयं A-पुस्तके नास्ति ।

दाता दान्तः शान्तमना नितान्तशान्तविग्रहः ।
अध्यात्मविद् ब्रह्मचारी कुलीनो गुरुरुच्यते ॥ २१ ॥

[ शिष्यलक्षणम् ]

सुन्दरः[3] सुमुखः स्वच्छः प्रज्ञावान् सुस्थिराशयः ।
अलुब्धः स्थिरगात्रश्च प्रेक्षाकारी जितेन्द्रियः ॥ २२ ॥
आस्तिको दृढभक्तिश्च गुरौ मन्त्रे च दैवते ।
एवंभूतो भवेच्छिष्यस्त्वितरो दुःखकृद् गुरोः ॥ २३ ॥

[ दीक्षायाः पूर्वं शिष्यो गुरुं सेवेत ]

आदौ सेवा गुरोः कार्य्या शरीरवाङ्मनोधनैः ॥ २४ ॥

[ गुरुसेवाप्रकारः ]

शुभेऽह्नि स्नानमाचर्य्य संपूज्य गणनायकम् ।
सूर्य्यं हरिं शिवं दुर्गां वाणीञ्च कमलालयाम् ॥ २५ ॥

---

२२ । शिष्यलक्षणमाह सुन्दर इति । गन्धर्व्वतन्त्रे षड्विंशपटलेऽपि—

यथायोग्यगुणैः पूर्व्वैर्युक्तश्चातिप्रियंवदः ।
विशुद्धदेहवदनः शुक्लाम्बरधरः शुचिः ॥
विमुखः परनिन्दासु देवतादर्शनेषु च ।
परीयवनिताभूमिपीडासु विगतस्पृहः ॥
दयान्वितः सर्व्वजने प्रेक्षाकारी जितेन्द्रियः ।
आस्तिको गुरुभक्तश्च शुद्धिमान् सुस्थिराशयः ॥
अलुब्धः स्थिरमैत्रश्च गुरुवाक्यप्रमाणकः ।
सर्व्वदा दृढभक्तिश्च गुरौ मन्त्रे सदैवते ॥
एवंविधो भवेच्छिष्यस्त्वितरो दुःखकृद् गुरोः ॥ इति ।

निषिद्धगुरुशिष्यलक्षणन्तु ग्रन्थकृता न धृतमिति अस्माभिरप्युपेक्षितम्, तद्विस्तरस्तु कुलार्णवादौ द्रष्टव्यः ।

---

3, 'सुन्दर' इत्यादिश्लोकद्वयं A-पुस्तके नास्ति ।

मातरं पितरं नत्वा [1]ब्राह्मणान् परितोष्य च ।
फलपुष्पसुभोज्यादीन् गृहीत्वा भक्तिसंयुतः ॥ २६ ॥
पुरुषार्थ[2]-समावाप्त्यै सच्छिष्यो गुरुमाश्रयेत् ।
शिववत् पूजयेद् भक्त्या शिवज्ञानप्रकाशकम् ॥ २७ ॥
त्रिधा प्रदक्षिणीकृत्य दण्डवत् प्रणमेत् क्षितौ ।
विज्ञापयेत् समुत्थाय[3] जानुभ्यामवनीं गतः ॥ २८ ॥
कृताञ्जलिपुटो भूत्वा प्रणिपत्य पुनर्गुरुम् ।
गुरोराज्ञां समासाद्य [4]विरमेद् विधिपूर्व्वकम् ॥ २९ ॥
[5]गुरूच्यमाने वचने दद्यादित्थं वचस्तदा ।
प्रसीद नाथ देवेति स तथेति कृतादरः ॥ ३० ॥
प्रतिकूलं गुरोर्नित्यं मनसापि न कारयेत् ॥ ३१ ॥
नारायणधिया[6] नित्यमेकग्रामनिवासिनम् ।
कर्म्मणा मनसा वाचा वन्दनं समुपाचरेत् ॥ ३२ ॥
प्रातः शिरसि शुक्लाब्जे द्विनेत्रं द्विभुजं गुरुम् ।
[7]वराभयकरं शान्तं स्मरेत्तन्नामपूर्व्वकम् ॥ ३३ ॥
गुरुं नाम्ना न भाषेत जपकालादृते क्वचित् ।
श्रीनाथ देव स्वामीति विवादे साधने वदेत् ॥ ३४ ॥

[ गुरुसेवाफलम् ]

ब्रह्मविष्णुशिवादीनां पूजने यत् फलं लभेत् ।
तत् फलं समवाप्नोति प्रत्यहं [8]वन्दने गुरोः ॥ ३५ ॥

---

1. 'ब्रह्माणं' A. B. 2. '-र्थं समाराध्य' A B. 3 '-दय' ? A. B. 4. '-नयेद्' A. 5. 'गुर्व्वि'त्यादिपादचतुष्टयं A-पुस्तके नास्ति । 6. '-समं' C. 7. 'वरे'त्यादिपादद्वयं A-पुस्तके नास्ति । 8. 'गुरुवन्दने' C.

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
भवार्णवतरिः शान्तो गुरुरेव परा गतिः ॥ ३६ ॥

[ गुरोरग्रे मानवान्तरपूजानिषेधः ]

गुरौ तिष्ठति यस्त्वन्यं मानुषं पूजयेन्नरः ।
स दुर्गतिमवाप्नोति सत्यं सत्यं न संशयः ॥ ३७ ॥

[ गुरुमङ्गीकृत्य तत्र वैमनस्यं दोषाय ]

[1]प्रतिपद्य गुरुं यस्तु मोहाद्विप्रतिपद्यते ।
युगकोटीः[2] स नरके पच्यते नात्र संशयः ॥ ३८ ॥

[ गुर्व्वाज्ञाया अपरिपालनं नरकाय भवति ]

ये गुर्व्वाज्ञां न कुर्व्वन्ति पापिष्ठाः पुरुषाधमाः ।
न तेषां नरकक्लेशान्निस्तारोऽस्ति कथञ्चन ॥ ३९ ॥

[ गुरोरधिक्षेपादौ दोषः ]

अधिक्षिप्य गुरुं मोहात् [3]परुषं प्रवदन्ति ये ।
शूकरत्वं भवत्येव तेषां जन्मशतेष्वपि ॥ ४० ॥

[ गुरुद्रोहपरिणामः ]

ये गुरोर्द्रोहिणो मूढाः सततं पापकारिणः ।
तेषान्तु यावत् सुकृतं दुष्कृतं स्यान्न संशयः ॥ ४१ ॥

[ गुरुभक्तेर्मुक्तिप्रयोजकत्वम् ]

गुरौ येषां स्थिरा भक्तिर्मुक्तिस्तेषां करे स्थिता ।
रात्रौ दिने [4]च तस्याज्ञां दासवत् परिपालयेत् ॥ ४२ ॥

---

1. 'प्रणिपत्य' A. C. 2. '-टिं' B. '-टीं' C. 3. 'पुरुषं' B. 4. 'वा' C.

[ गुरौ शिष्यस्य व्यवहारः ]

[1]असह्यमशुभं तद्वद्बहुवाक्यं परित्यजेत् ।
अभिमानं न कुर्व्वीत [2]धनजात्याश्रमादिभिः ॥ ४३ ॥
गुरुद्रव्यं न भोक्तव्यं तेनादत्तं कदाचन ।
दत्तं प्रसादवद् ग्राह्यं लोभतो न कदाचन ॥ ४४ ॥
अद्वैतं देवपूजाञ्च जपयज्ञस्तवादिकम् ।
परिहासं प्रलापञ्च गुरोः साक्षाद् विवर्जयेत् ॥ ४५ ॥
पादुकायोगपट्टादि[3]-गुरुचिह्नानि साधनम् ।
न लङ्घयेत् स्पृशेन्नैव पादाभ्यां प्रणमेत् सदा ॥ ४६ ॥
काष्ठासनोपवेशञ्च यानाद्यारोहणं तथा ।
पल्यङ्कशयनं तद्वत्तथा पादप्रसारणम् ॥
अङ्गभङ्गञ्च लीलाञ्च न कुर्य्याद् गुरुसन्निधौ ॥ ४७ ॥
गमनागमनं कुर्य्यात् प्रणम्य गुरुपादुकाम् ।
विचार्य्य कार्य्यं कुर्व्वीत गुरुवाक्यप्रसादवान् ॥ ४८ ॥
छायां न लङ्घयेत्तद्वन्न गच्छेत् पुरतो गुरोः ।
पश्चात् पादेन निर्गच्छेत् प्रणम्य च गुरोर्गृहात् ॥ ४९ ॥
गुरोरग्रे न कुर्व्वीत प्रभावं शिष्यसंग्रहम् ॥ ५० ॥

[ गुरोस्तोषस्येष्टसाधनत्वं रोषस्येष्टप्रतिबन्धकत्वञ्च ]

गुरौ तुष्टे शिवस्तुष्टः शिवे तुष्टे जगत्त्रयम् ।
शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ॥ ५१ ॥

---

1. 'समक्ष-' A. 2. 'धने'त्यादि 'गुरोरग्रे न कुर्व्वीते'त्यन्तोऽंशः A-पुस्तके नास्ति, B-पुस्तकेऽपि पतितोद्धाररूपेण दृश्यते । 3. '-नि' B.

[ तत्रोपसंहारः ]

तस्मात् सर्व्वप्रयत्नेन[1] गुरोः कोपं न कारयेत् ।
एवंविधविधानेन[2] सेवां कुर्य्यादतन्द्रितः ॥ ५२ ॥

[ वर्णेषु कतमः कियता कालेन गुरुसेवया शिष्यत्वयोग्यतामर्हति ]

अब्दैकेन भवेद् योग्यो ब्राह्मणोऽब्दद्वयान्नृपः ।
वैश्यो वर्षैस्त्रिभिः शूद्रश्चतुर्भिर्वत्सरैर्गुरोः ॥ ५३ ॥

[ गुरोः कर्त्तव्यम् ]

गुरुश्चात्मविशुद्धयर्थं शिष्यांस्तु[3] परितोषयेत् ।
चिरं विचार्य्य [4]यत्नेन देयमन्त्रान् विचारयेत् ॥ ५४ ॥

[ अ-क-थ-ह-चक्रम्, तत्र रेखापातः ]

पूर्व्वाग्राः पञ्च रेखाः स्युर्दक्षिणाग्रा लिखेत्तथा ।
चतुश्चतुःप्रकारेण चतुःकोष्ठं भवेदथ ॥ ५५ ॥

---

५३। अब्दैकेनेति। तन्त्रराजे द्वितीयपटले—

एकद्वित्रिचतुःपञ्चवर्षाण्यालोच्य योग्यताम् ।
भक्तियुक्तान् गुणांश्चापि क्रमाद् वर्णेषु सङ्करे ॥
पश्चादुक्तक्रमेणैव वदेद्विद्यामनन्यधीः ।
अन्यथा चेद् वदेन्नाशं सशिष्यो गुरुराप्नुयात् ॥

इति वचनाभ्यामुक्तक्रमेणैव ब्राह्मणादिवर्णचतुष्टयस्य परीक्षाकालमभिधाय सङ्करवर्णानां पञ्चभिर्वर्षैः परीक्षाभिहितेति विशेषो दृश्यते ।

५५। पूर्व्ववचने देयमन्त्रान् विचारयेदित्युक्तम्, तत्र मन्त्रविचारक्रमे चक्रस्यापेक्षितत्वात्—

महाकथहचक्रार्थं सर्व्वचक्रोत्तमोत्तमम् ।
यस्य विचारमात्रेण कामरूपी भवेन्नरः ॥

इति रुद्रजामलोत्तरखण्डीयपञ्चमपटलवचनेन,

वैष्णवे च तथा शैवे देवीमन्त्रे च भैरव ।
अकथहं महाचक्रं विचार्य्य यत्नपूर्व्वकम् ।
यो गृह्णाति महामन्त्रं स शिवो नात्र संशयः ॥

इति रुद्रजामलोत्तरखण्डीयतृतीयपटलवचनेन च अकथहचक्रस्य सर्व्वचक्रोत्तमोत्तमत्व-

---

1. '-प्रकारेण' B. 2. '-प्रकारेण' A. B. 3. '-श्च' C. 4. 'मतिमान्' C.

ईशानस्थ-चतुःकोष्ठमाग्नेय्याञ्च चतुस्तथा ।
तदधःस्थं[1] चतुःकोष्ठं तद्वामस्थं तथैव च ॥ ५६ ॥

[ कोष्ठानां संज्ञा ]

सिद्धं साध्यं सुसिद्धञ्च रिपुञ्च(?) समुदाहृतम् ॥ ५७ ॥

[ तत्र वर्णन्यासक्रमः ]

एतेषामाद्यकोष्ठेषु द्वितीयेषु ततः परम् ।
तृतीयेषु चतुर्थेषु क्रमादावृत्तितः[2] पुनः ॥ ५८ ॥

---

प्रतिपादनात् फलविशेषप्रसवितृत्वावधारणाच्च प्रथमं तदेव निरूपयति—पूर्व्वेत्यादिना । तत्र पश्चिमतः पूर्व्वाग्राः पञ्च, उत्तरतो दक्षिणाग्राश्च पञ्च रेखाः कर्त्तव्याः । एवं कृते षोडश कोष्ठानि सम्पद्यन्ते ।

५६ । तेषाञ्च षोडशकोष्ठानां चतुर्धा विभागः कर्त्तव्यः । तत्र ऐशानं कोष्ठचतुष्कम्, आग्नेयं कोष्ठचतुष्कम्, तदधःस्थम् आग्नेयकोष्ठचतुष्कादधःस्थं नैर्ऋतकोष्ठचतुष्कम्, तद्वामस्थं नैर्ऋतकोष्ठचतुष्कवामस्थं वायव्यं कोष्ठचतुष्कञ्च कल्पयेदित्येवाह पूर्व्ववचने चतुश्चतुःप्रकारेणेत्यनेन ।

५७ । तत्र प्रथमचतुष्कं सिद्धाख्यम्, द्वितीयचतुष्कं साध्याख्यम्, तृतीयचतुष्कं सुसिद्धाख्यम्, चतुर्थचतुष्कञ्चारिरिति संज्ञां भजते ।

५८ । एतेषामिति । एतेषां षोडशकोष्ठानाम् आद्यकोष्ठचतुष्केषु ईशानस्थेष्वित्यर्थः । द्वितीयेषु आग्नेयेषु, तृतीयेषु नैर्ऋतेषु, चतुर्थेषु वायव्येषु च प्रागुक्तन्यासक्रमेण लभ्येषु सिद्धादिचतुश्चतुःकोष्ठेषु प्रादक्षिण्येनावृत्त्या वक्ष्यमाणान् वर्णान् लिखेदिति परेणान्वयः । अत्र यद्यपि क्रमादावृत्तित इत्यनेन दक्षिणावृत्तिर्वामावृत्तिर्वा विशेषतो नाभिहिता, तथापि—

"सर्व्वेषु गृहमध्येषु प्रादक्षिण्यक्रमेण तु ।
अकारादिक्षकारान्तं लिखित्वा गणयेत्ततः ॥ ५ ।५।

इति रुद्रजामलपञ्चमपटलवचनेन दक्षिणावृत्तिः स्फुटमवगम्यते । अत एव तन्त्रसार-

---

1. '-दन्तस्थं' C. 2. '-वर्त्तितः-' A.

**अकारादिविसर्गान्तान् कादि-मान्ताल्लिखेत् सुधीः ।**
**यादि-सान्तान् समालिख्य हलक्षांश्च लिखेत्ततः ॥ ५६ ॥**

---

कृतापि "दक्षिणावर्त्तयोगेन कोष्ठे वर्णाल्लिखेत् सुधी"रित्युक्तम्। राघवभट्टेनापि शारदाटीकायां "प्रादक्षिण्येने"त्यभिहितम् इति निष्कर्षः।

५६। तान् वर्णानाह—अकारेत्यादि। अकारादिविसर्गान्तान्, ततः ककारतो मकारान्तान्, ततो यकारतः सकारान्तान् ततश्च हलक्ष इति वर्णत्रयं लिखेत्।

एतेनैतदुक्तं भवति--आद्यकोष्ठचतुष्कस्य प्रथमे कोष्ठे अकारम्, द्वितीयचतुष्कस्य प्रथमे आकारम्, तृतीयचतुष्कस्य प्रथमे इकारम्, चतुर्थचतुष्कस्य प्रथमे ईकारम्। एवमाद्यचतुष्कस्य द्वितीये उकारम्, द्वितीयचतुष्कस्य द्वितीये ऊकारम्, तृतीयचतुष्कस्य द्वितीये ऋकारम्, चतुर्थचतुष्कस्य द्वितीये ॠकारम्। एवमाद्यचतुष्कस्य तृतीये लृकारम्, द्वितीयचतुष्कस्य तृतीये ॡकारम, तृतीयचतुष्कस्य तृतीये एकारम्, चतुर्थचतुष्कस्य तृतीये ऐकारम्। एवं प्रथमचतुष्कस्य चतुर्थे ओकारम्, द्वितीयचतुष्कस्य चतुर्थे औकारम्, तृतीयचतुष्कस्य चतुर्थे अंकारम्, चतुर्थचतुष्कस्य चतुर्थे अःकारं लिखेत्। इति स्वरवर्णन्यासक्रमः। एवमनेनैव क्रमेण ककारादिक्षकारान्तान् वर्णान् लिखेत्। तथाच प्रथमचतुष्कस्य प्रथमे कोष्ठे ककारम, द्वितीयचतुष्कस्य प्रथमे खकारम्, तृतीयचतुष्कस्य प्रथमे गकारम्, चतुर्थचतुष्कस्य प्रथमे घकारं लिखेत्; एवमनया रीत्या ङकारादीनां क्षकारान्तानामपरेषामपि वर्णानां प्रादक्षिण्येन पुनः पुनरावृत्त्या न्यासः कर्त्तव्य इति। अत्र—

अकारादिहकारान्तं मूलकोष्ठादितः सुधीः।
दक्षिणावर्त्तयोगेन कोष्ठे वर्णाल्लिखेत् सुधीः॥

इति तन्त्रसारधृतविश्वसारवचनेन अकारादिहकारान्तानां वर्णानां चक्रे सन्निवेश उपदिश्यते, ततश्च 'हलक्षांश्च लिखेत्ततः' इति श्रीतत्त्वचिन्तामणिवचनेन सह तन्त्रसारवचनविरोधः स्यात्। रुद्रजामलीयपञ्चमपटले अकथहचक्रप्रकरणे—

अकारादिक्षकारान्तं लिखित्वा गणयेत्ततः। इति।

तन्त्रराजतन्त्रप्रथमपटले च—

एवं चतुर्षु कोष्ठेषु क्षान्तावधि समालिखेत्।

इत्युक्तम्, एतदपि वचनद्वयम् अकारादिक्षकारान्तवर्णसन्निवेशनस्यैव समर्थकम्। प्रकृते तथानङ्गीकारे लादिक्षादिनाम्नां दीक्षार्थिनां मन्त्रविचारासम्भवः। अतोऽकारादिक्षकारान्त-

मित्याकारकं विश्वसारवचनं विकृतं सदकारादिहकारान्तमित्याकारेणाधुनातनेषु तन्त्रसारेषु वर्त्तत इति प्रतीमः। न च,—

अपभ्रंशाक्षरं ल-क्षौ हित्वा षण्डचतुष्टयम्।
मन्त्राक्षरैः सहैकैकं नामवर्णान् विशोधयेत्॥

इत्यागमतत्त्वविलास-राघवभट्टधृतपिङ्गलामतवचने लक्षयोर्व्वर्जनदर्शनात् प्रागुक्त-तन्त्रसारवचनमविरुद्धमिति वाच्यम्, प्रागुक्तपिङ्गलामतवचनस्य स्वरव्यञ्जनभेदभिन्न-नाममन्त्रघटकप्रत्यक्षरशोधनविषयत्वात्। अत एव राघवभट्टेन—"पिङ्गलामते प्रत्यक्षरं सिद्धादिगणनोक्ता।

मातापितृकृतं नाम यच्चाप्यभिजनैः कृतम्।
विश्लिष्य तत्र वै वर्णान् स्वरव्यञ्जनभेदतः॥
तथैव मन्त्रबीजानि ततः शोधनमारभेत्।
बिन्दुद्विबिन्दुकोपध्मानीयजिह्वाङ्घ्रिसम्भवान्।
संहतोच्चारणप्राप्तमधिकाक्षरमेव च॥"

इत्युपक्रम्य अपभ्रंशाक्षरमित्याद्युक्त्वा

व्यञ्जनैर्व्यञ्जनान्येव स्वरैः साकं स्वरांस्तथा।
आद्यमाद्येन संशोध्य द्वितीयेन द्वितीयकम्॥

इत्यादिना तस्य प्रत्यक्षरशोधनरूपकल्पान्तरत्वमुक्तम्। अपि च अपभ्रंशेत्यादि-पिङ्गलामतवचने षण्डचतुष्टयमित्यनेन 'ऋ ॠ ऌ ॡ' संज्ञकानां नपुंसकार्णानामपि वर्जनं तस्य कल्पान्तरत्वं प्रमाणयति। ततश्च नाममन्त्राद्यक्षरशोधनविधायके कल्पेऽस्मिन् ल-क्षयोरादानं युक्तमेवेति सर्व्वमवदातम्।

तन्त्रराजतन्त्रे प्रथमपटले—

चतुश्चतुर्व्विभागेन कल्पयेत्तानि वै क्रमात्।
प्रथमप्रथमे त्वाद्यं द्वितीयप्रथमे तथा॥
द्वितीयमन्यतश्चान्यत्तथान्यदपि कल्पयेत्।
तत्तत्कोष्ठेषु विलिखेत्तत्तत्पञ्चममक्षरम्।
एवं चतुर्षु कोष्ठेषु क्षान्तावधि समालिखेत्॥

इत्यादि-वचनैरपीयमेव वर्णस्थापनापरिपाटी निरूपिता। विशदीकृतमेतत् तन्त्रराजप्रथम पटलटीकायां सुभगानन्दनाथेन—

"एवं लिखिते सति प्रथमचतुष्कप्रथमकोष्ठे अ क थ ह इति चत्वार्य्यक्षराणि।

[ तत्र मन्त्रगणनाक्रमः ]

निजनामादिवर्णन्तु [1]यस्मिन् कोष्ठे प्रदृश्यते ।
तत्कोष्ठाद् गणयेन्मन्त्री मन्त्रस्याद्यक्षरावधि ॥ ६० ॥
सिद्धसिद्धं सिद्धसाध्यं सिद्धसुसिद्धमेव च ।
सिद्धारिश्च क्रमेणैव साध्यकोष्ठे लिखेत्ततः ॥ ६१ ॥
साध्यसिद्धं साध्यसाध्यं साध्य[1]सुसिद्धमेव च ।
साध्यारिश्च क्रमेणैव सुसिद्धे गणयेद् बुधः ॥ ६२ ॥
सुसिद्धसिद्धमादौ च सुसिद्धसाध्यमेव च ।
ततः सुसिद्धसुसिद्धं सुसिद्धारिमथो [2]ततः ॥ ६३ ॥
अरिसिद्धमरिसाध्यमरिसुसिद्ध[3]मेव च ।
अर्य्यरिश्चैव मन्त्रज्ञो वर्ज्जयेच्च[4] चतुष्टयम् ॥ ६४ ॥

---

तद्द्वितीयकोष्ठे उ ङ प इति त्रीणि । तत्तृतीयकोष्ठे ऌ झ म इति त्रीणि । तच्चतुर्थ-कोष्ठे ओ ड व इति त्रीणि ।

द्वितीयचतुष्कप्रथमकोष्ठे--आ ख द ल इति चत्वार्य्यक्षराणि । तद्द्वितीयकोष्ठे—ऊ च फ इति त्रीणि । तत्तृतीयकोष्ठे ॡ ञ य इति त्रीणि । तच्चतुर्थकोष्ठे औ ढ श इति त्रीणि ।

तृतीयचतुष्कप्रथमकोष्ठे इ ग ध क्ष इति चत्वारि । तद्द्वितीयकोष्ठे ऋ छ ब इति त्रीणि । तत्तृतीयकोष्ठे ए ट र इति त्रीणि । तच्चतुर्थकोष्ठे अं ण ष इति त्रीणि ।

चतुर्थचतुष्कप्रथमकोष्ठे ई घ न इति त्रीणि । तद्द्वितीयकोष्ठे ॠ ज भ इति त्रीणि । तत्तृतीयकोष्ठे ऐ ठ ल इति त्रीणि । तच्चतुर्थकोष्ठे अः त स इति त्रीणि । एवं लिखिते प्रथमचतुष्ककोष्ठाक्षराणामुपरितनाक्षराणि द्वितीयचतुष्ककोष्ठेषु यथाक्रमं दृश्यन्ते" इत्यन्तेन ग्रन्थेन ।

६०-६४ । एवं वर्णन्यासक्रममुक्त्वा गणनाक्रममाह--निजेति । पूर्व्वोक्तानां षोडशकोष्ठानां मध्ये यस्मिन् कोष्ठे निजनामादिवर्णं साधकस्य नाम्नः प्रथममक्षरं दृश्यते, तत्कोष्ठात् मन्त्रस्याद्यक्षरावधि, यस्मिन् कोष्ठे मन्त्रघटकाक्षराणां प्रथममक्षरं दृश्यते तत्कोष्ठं यावद् "येनैव लिखनं कुर्य्यात्तेनैव गणनं स्मृत"मिति तन्त्रसारधृतविश्वसारोक्तरीत्या गणयेत् वक्ष्यमाण-सिद्धसिद्ध-सिद्धसाध्यादीनीति शेषः ।

---

1, '-त्र' C,

अरिसिद्धः सुतं[5] हन्यादरिसाध्यस्तु[6] कन्यकाम् ।
पत्नीमरिसुसिद्धस्तु[7] अर्य्यैरिर्म्मल (?) नाशयेत् ॥ ६५ ॥
सिद्धसिद्धो यथोक्तेन सिद्धसाध्यो गुणद्वयात् ।
सिद्धसुसिद्धोऽर्द्धजपात् सिद्धारिर्हन्ति बान्धवान् ॥ ६६ ॥
द्विगुणात् साध्यसिद्धस्तु साध्यसाध्यो निरर्थकः ।
द्विगुणात् साध्यसुसिद्धः साध्यारिर्हन्ति गोत्रजान् ॥ ६७ ॥

---

तदेव गणनाक्रममुपदिशति सिद्धेत्यादिना अर्य्यरिञ्चैवेत्यन्तेन । एतदुक्तं भवति—यत्र चतुष्के स्वनामाद्यक्षरं तत् सिद्धसिद्धकोष्ठं ततस्तस्मिन्नेव चतुष्के प्रादक्षिण्येन कोष्ठत्रये सिद्धसाध्य-सिद्धसुसिद्ध-सिद्धारीन् गणयेत् । अस्मिन्नेव चतुष्के यदि मन्त्राद्यक्षरमपि स्यात् तदा अनयैव गणनया सिद्धम् । यद्यन्यस्मिन् स्वनामाद्यक्षरम्, प्रादक्षिण्येन द्वितीयचतुष्के मन्त्राद्यक्षरम्, तदा पूर्व्वचतुष्के यस्मिन् कोष्ठे नामाद्यक्षरम्, अत्र द्वितीयचतुष्केऽपि तदेव कोष्ठमारभ्य साध्यसिद्धादिगणनक्रमः इति राघवभट्टाः । एवं तृतीयचतुष्कादिष्वपि ।

एवञ्च स्वनामाद्यक्षरयुक्तं सिद्धसिद्धं तदपेक्षया द्वितीयं सिद्धसाध्यम्, तृतीयं सिद्धसुसिद्धम्, चतुर्थं सिद्धारि । क्रमेणैवेत्यनेनायमेवार्थः सूचितः ।

साध्यकोष्ठ इत्यादि । प्रागुक्तक्रमेण साध्याख्यस्य प्रथमं कोष्ठं साध्यसिद्धम्, द्वितीयं साध्यसाध्यम्, तृतीयं साद्धसुसिद्धम्, चतुर्थञ्च साध्यारि इति । क्रमेणैवेति इयमपि गणना प्रागुक्तगणनक्रमेणैवेत्यर्थः ।

तृतीयमाह—सुसिद्ध इति । प्रागुक्तरीत्या सुसिद्धाख्यस्य प्रथमं सुसिद्धसिद्धम्, द्वितीयं सुसिद्धसाध्यम्, तृतीयं सुसिद्धसिद्धम्, चतुर्थञ्च सुसिद्धारि ।

चतुर्थमाह—अथो इति । तदपेक्षया चतुर्थचतुष्कस्य प्रथमं कोष्ठम् अरिसिद्धाख्यम्, द्वितीयमरिसाध्याख्यम्, तृतीयमरिसुसिद्धाख्यम, चतुर्थञ्चार्य्यर्य्याख्यमिति षोडश-कोष्ठानां संज्ञाभेदा उन्नेयाः ।

गणनाप्राप्तस्यारिकोष्ठचतुष्कस्य वर्जनीयत्वमाह—मन्त्रज्ञो वर्जयेच्च चतुष्टयमिति ।

६५ । वर्जने हेतुमाह—अरिसिद्ध इत्यादि । एतादृगनिष्टफलजनकत्वमेव वर्जनीयत्वे हेतुरित्यर्थः ।

---

1. '-ध्यं' C. 2. 'यतः' A. B. 3. '-कल्पनम्' C. 4. 'त्तत्-' C. 5. '-तान्' C. 6. '-न्तु' A. B. 7. '-न्तु' B. '-द्धं स्यात्' C.

सुसिद्धसिद्धोऽर्द्धजपात् तत्साध्यो द्विगुणाधिकात् ।
ततुसुसिद्धः क्षणादेव सुसिद्धारिस्तु जातिहा ।
अकथहमहाचक्रं [1]कथितं तन्त्रवर्त्मना ॥ ६८ ॥

अ-क-थ-ह-चक्रम्

चतुष्कम् आग्नेयकोष्ठ-

ऐशानकोष्ठ- चतुष्कम्

| | | | |
|---|---|---|---|
| अ क थ ह<br>सिद्धसिद्ध | उ ङ प<br>सिद्धसाध्य | आ ख द ल<br>साध्यसिद्ध | ऊ च फ<br>साध्यसाध्य |
| ओ ड व<br>सिद्धारि | ऌ झ म<br>सिद्धसुसिद्ध | औ ढ श<br>साध्यारि | ॡ ञ य<br>साध्यसुसिद्ध |
| ई घ न<br>अरिसिद्ध | ॠ ज भ<br>अरिसाध्य | इ ग ध क्ष<br>सुसिद्धसिद्ध | ऋ छ ब<br>सुसिद्धसाध्य |
| अः त स<br>अर्य्यरि | ऐ ठ ल<br>अरिसुसिद्ध | अं ण ष<br>सुसिद्धारि | ए ट र<br>सुसिद्धसुसिद्ध |

तद्वामस्थवायव्यकोष्ठ- पश्चिम

चतुष्कम् तदधो नैर्ऋतकोष्ठ-

[ ऋणधनचक्रम् ]

पूर्व्वजन्माराधितानां मन्त्राणां ज्ञानमुच्यते ॥ ६९ ॥

६९ । अकथहचक्रमुक्त्वा ऋणधनचक्रमाह—पूर्व्वजन्मेति ।

1. 'गुरुक्रमात् प्रकीर्त्तितम्' C.

[ तत्र रेखापातः, साध्यसाधकाङ्कानां न्यासपरिपाटी च ]

पूर्व्वापरं[1] द्वादशसंख्यसूत्रं
याम्योत्तरस्थञ्च [2]तथाच पञ्चकम् ।
साध्याङ्कमूर्द्ध्वे खलु मध्यतोऽर्णा-
नधो लिखेत् साधकमङ्कमीशात् ॥ ७० ॥

[ वर्णन्यासपरिपाटी ]

द्वौ द्वौ स्वरौ पञ्चसु कोष्टकेषु
शेषान् स्वरान् षट्सु षडेकमेकम् ।
कादीन् हशेषान् विलिखेत्ततोऽर्णा-
नेकैकमेकादशसु स्थलेषु ॥ ७१ ॥

[ तत्र साध्यसाधकाङ्कन्यासपूर्व्वको गुणनक्रमः ]

इन्द्रर्त्त-नेत्र-रवि-पञ्चदशर्त्तुवेद-
वह्नयायुधाष्टनवभिर्गणितांस्तु[3] साध्यान् ।

---

७० । ऋणधनचक्रं त्रिविधं भवति, तत्र प्रथमे रेखापातनक्रममाह—पूर्व्वेति । पूर्व्वतः पश्चिमान्ता द्वादश रेखाः, तथा दक्षिणत उत्तरान्ताः पञ्च रेखाः कर्त्तव्याः । साध्याङ्कमिति । ऊर्द्ध्वे दत्तोत्तररेखापञ्चकानामूर्द्ध्वे बहिरूर्द्ध्वप्रदेशे पूर्व्वपश्चिमायतद्वादश-रेखासम्पादितैकादशकोष्ठानामुपरि क्रमेण एकैकशो वक्ष्यमाणान् साध्याङ्कान् लिखेत् । मध्यतश्चतुश्चत्वारिंशत्कोष्ठेषु वक्ष्यमाणान् वर्णान् लिखेत् । अधो दत्तोत्तररेखा-पञ्चकानामधः क्रमेण वक्ष्यमाणान् साधकाङ्कान् लिखेदित्यर्थः ।

७१ । तत्र प्रथममेव वर्णन्यासक्रममाह—द्वौ द्वाविति । प्रागुक्तरेखासम्पादितचतु-श्चत्वारिंशत्कोष्ठानां प्रथमकोष्ठपञ्चकेषु द्वौ द्वौ स्वरौ लिखेत् । एतेन अकारादय ऌकारान्ता दश स्वराः प्राथमिकपञ्चकोष्ठेषु निवेशनीया इत्युक्तं भवति । शेषानिति । प्रथमपङ्क्तेरवशिष्टेषु षट्सु कोष्ठेष्वेकैकश एकारादिविसर्गान्तान् स्वरान् लिखेदित्यर्थः । कादीनिति । अवशिष्टेषु त्रयस्त्रिंशत्कोष्ठेषु एकैकशः कादिहान्तान् वर्णान् लिखेत् । एकादशस्विति प्रतिपङ्क्त्यभिप्रायेणोक्तम् ।

---

1. '-र-' A. 2. 'तथा चतुष्कम्' ? A. B. 3. '-श्च' C.

दिग्भूगिरिश्रुतिगजाग्निमुनीषुवेद-
षड्वह्निभिश्च गुणितानथ साधकार्णान् ॥ ७२ ॥

[ मन्त्राणामृणधनत्वनिरूपणपरिपाटी, तत्फलविशेषाश्च ]

नामाज्झलादकठवाद् गजभुक्तशेषं
ज्ञात्वोभयोरधिकशेषमृणं धनं स्यात् ।
[1]मन्त्रस्त्वृणी शुभफलोऽप्यशुभो धनी च
तुल्यं यदा समफलः कथितो मुनीन्द्रैः ॥ ७३ ॥

---

७२-७३ । इन्द्रेति । साध्याङ्कमूर्द्ध्वे इत्युक्तक्रमेण प्रथमाद्येकादशकोष्ठानामूर्द्ध्वेषु क्रमेण १४।२७।२।१२।१५।६।४।३।५।८।६ एतैरिन्द्रादिपदगम्यैरङ्कैर्गुणितान् साध्यार्णान्, अधो लिखेत् साधकमङ्कमित्युक्तक्रमेण दिगादिपदवेद्यैः १०।१।७।४।८।३।७।५।४।६।३ एतैरङ्कैर्गुणितान् साधकार्णांश्चेत्यर्थः । नामाज्झलादक-ठ-वादिति । अ-क-ठ-वात्मकमेकादशैकादशात्तररूपं साध्यसाधकनामघटकस्वरव्यञ्जनभेदभिन्नवर्णसमुदायं प्राप्य इन्द्रर्त्वादिभिर्गुणितान् साध्यार्णान् दिगादिभिर्गुणितान् साधकार्णांश्च ज्ञात्वा उभयोः साध्याङ्कसाधकाङ्कयोरधिकमवशिष्टमृणं धनञ्च स्यादित्यर्थः । तथाच राघवभट्टः—"तत्र प्रकारः—साधकस्य, साध्यस्य मन्त्रस्य च नामाक्षराणि स्वरव्यञ्जनभेदेन पृथक्कृतानि स्थापयेत् । ततो मातृकायाः अ-क-ठ-वात्मकमेकादशैकादशाक्षरं वर्गचतुष्टयं कृत्वा मन्त्राक्षराणि स्वरव्यञ्जनरूपेण पृथक्कृतानि इन्द्रादिभिरङ्कैर्गुणयेत् । साधकनामाक्षराणि स्वरव्यञ्जनरूपेण पृथक्कृतानि दिगादिभिरङ्कैर्गुणयेत् । तत्र गुणनप्रकारः—यस्मिन् स्थाने यो वर्णस्तं वर्णं तेनाङ्केन गुणयेत्, तत्स्थाननिताङ्कं गुणयेदित्यर्थः । तद् यथा—प्रथमकोष्ठस्थो वर्णोऽकारः, तञ्च चतुर्दशभिर्गुणयेत् तत्रैकश्चतुर्दशगुणितश्चतुर्दशैव । तथा द्वितीयकोष्ठस्थो वर्ण इकारस्तं सप्तविंशत्या गुणयेत्, तेन द्वाभ्यां सप्तविंशतिर्गुणिता चतुःपञ्चाशत् । एवं तृतीयस्थानस्थो वर्ण उकारो द्विगुणितः षड् भवति । एवं साधकनामाक्षराण्यपि दिगादिभिर्गुणयेदिति" ॥

गजभुक्तशेषम् अष्टभिर्विभाजितस्यावशिष्टमित्यर्थः । तत्र भागफलञ्चेदधिकं तदृणम्, यच्च न्यूनं तद् धनमित्यवधेयम् । एतादृशप्रक्रियायाः फलमाह—मन्त्रस्त्वृणीत्यादि । मन्त्रो यदि ऋणी अधिकाङ्कः स्यात्तदा स शुभफलो मङ्गलदायको भवति । यदि धनी न्यूनाङ्कः स्यात्तदा फलमशुभं प्रसूत इत्यर्थः । यदा मन्त्रसाधकयोरवसिताङ्कस्तुल्यस्तदा समफलः । न शुभदो नाप्यशुभद इत्यर्थः । इत्ययमृणधनचक्रस्य मन्त्ररत्नावलीसम्मतः क्रमः ।

---

1. 'मन्त्र' इत्यादि पादद्वयं C-पुस्तके नास्ति ।

ऋण-धन-चक्रम्

पूर्व्वा

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| साध्याङ्काः | १४ | २७ | २ | १२ | १५ | ६ | ४ | ३ | ५ | ८ | ९ | |
| | अ आ | इ ई | उ ऊ | ऋ ॠ | ऌ ॡ | ए | ऐ | ओ | औ | अं | अः | |
| उत्तरा | क | ख | ग | घ | ङ | च | छ | ज | झ | ञ | ट | दक्षिणा |
| | ठ | ड | ढ | ण | त | थ | द | ध | न | प | फ | |
| | ब | भ | म | य | र | ल | व | श | ष | स | ह | |
| साधकाङ्काः | १० | १ | ७ | ४ | ८ | ३ | ७ | ५ | ४ | ६ | ३ | |

पश्चिमा

[ एतन्मूलीभूतागमनिरूपणम् ]

मन्त्ररत्नावलेश्चैतन्मतं शेषमथोच्यते ॥ ७४ ॥

[ पूर्व्वतोऽन्यादृशी साध्यसाधकाङ्कन्यासपरिपाटी ]

षट्-काल-[1]काल-वियदग्नि-समुद्र-वेद-
खाऽऽकाशशून्यदहनाः खलु साध्यवर्णाः ।
युग्म-[2]द्वि-पञ्च-वियदम्बर-युक्-शशाङ्क-
व्योमाब्धिवेदशशिनः खलु साधकार्णाः ॥ ७५ ॥

७५। प्रागुक्तर्णधनचक्रस्यैव साध्यसाधकाङ्कस्थापनायां क्रमान्तरमाह—षडिति। 'पूर्व्वापरं द्वादशसंख्यसूत्रम्' इत्यादि प्रागुक्तक्रमेणैव रेखा विन्यस्य तत्र 'इन्द्रर्त्तनेत्ररविपञ्चदशर्त्तुवेदे'त्यादि प्रागुक्तक्रममुल्लङ्घ्य षट्कालेत्यादिवचनक्रमेण साध्याङ्कान् साधकाङ्कांश्च निवेशयेदित्ययमेवास्मिन् कल्पे विशेषः। तन्त्रसारकृता तु "षट्-कालेत्यादि विष्णुविषयमिति केचित्। वस्तुतस्तु पूर्व्वस्यैव विवरण"मित्युक्तम्। तथा च इन्द्रर्त्तेत्यादिना गुणितेऽष्टाभिर्विभाजिते च यदवशिष्टं तद्रूपमिदमिति केषाञ्चिदाशयः।

तथाच ऊर्द्ध्वानामेकादशकोष्ठानामूर्द्ध्वे क्रमेण—षट् ६। काळ ६। काल ६। वियत् ०। अग्नि ३। समुद्र ४। वेद ४। ख ०। आकाश ०। शून्य ०। दहनाः ३, एतानङ्कान् लिखेत्, एत एव साध्याङ्काः।

1. '-द्विष्ठ-' C. 2. '-स्थ-' C.

## प्रकारान्तरेण ऋण-धन-चक्रम्

पूर्व्वा

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| साध्याङ्काः | ६ | ६ | ६ | ० | ३ | ४ | ४ | ० | ० | ० | ३ | |
| | अ आ | इ ई | उ ऊ | ऋ ॠ | ऌ ॡ | ए | ऐ | ओ | औ | अं | अः | |
| उत्तरा | क | ख | ग | घ | ङ | च | छ | ज | झ | ञ | ट | दक्षिणा |
| | ठ | ड | ढ | ण | त | थ | द | ध | न | प | फ | |
| | ब | भ | म | य | र | ल | व | श | ष | स | ह | |
| साधकाङ्काः | २ | २ | ५ | ० | ० | २ | १ | ० | ४ | ४ | १ | |

पश्चिमा

[ अस्यैव चक्रस्य क्रमान्तरम् ]

अथ कादिमतेनापि वक्ष्ये [1]तच्चक्रमुत्तमम् ॥ ७६ ॥

[ चक्रेणानेन मन्त्रशोधनस्य प्रक्रिया ]

निजनामादिकं वर्णमादाय [2]परतः सुधीः ।
मन्त्राद्यक्षरपर्य्यन्तं गणनीयन्तु सर्व्वतः ॥ ७७ ॥
रामेण गुणितं कृत्वा सप्तभिश्च हरेद् बुधः ।
शेषा भवति या मात्रा [3]ऋणं तावदुदाहृतम् ॥ ७८ ॥

---

अधःस्थानामेकादशकोष्ठानामधोऽपि क्रमेण—युग्म २। द्वि २। पञ्च ५। वियत् ०। अम्बर ०। युक् २। शशाङ्क १। व्योम ०। अब्धि ४। वेद ४। शशिनः १। एतानङ्कान् लिखेत्, एत एव साधकाङ्काः। गणनया मन्त्रविचारस्य प्रक्रिया तु पूर्व्ववदिति नात्र पुनरुच्यते।

७६। अथ कादिमतानुसारेण ऋणधनचक्रस्य तृतीयं क्रमं प्रतिपिपादयिषुः प्रतिजानीते—अथेति।

७७। तमेव क्रममाह—निजेति। निजनाम्नः साधकनाम्न आदिकम् आदौ भवं प्रथमवर्णं गृहीत्वा ततः प्रभृति मन्त्रस्याद्यक्षरपर्य्यन्तं गणयेत्, ततो यावन्तो वर्णा भवन्ति, तान् रामेण त्रिभिर्गुणितान् कृत्वा समष्ट्या जातां संख्यां सप्तभिर्हृत्वा यदवशिष्टं तदृणम् इत्यर्थः।

---

1. 'चक्रमनुत्तमम्' A. B. 2. 'यावतः' A. B. 3. 'ऋण'मित्यतो 'विलोमे'नेत्यन्तोऽंशः A-B-पुस्तकयोर्नास्ति।

एतदेव विलोमेन साध्यं तावद् वदाम्यहम् ॥ ७९ ॥
कृते भागे तु शिष्टाङ्कान् द्वयोः सम्यङ्निरूपयेत् ।
योऽधिकः स ऋणी ज्ञेय इति तन्त्रविदो विदुः ॥ ८० ॥

[ अस्यैव चक्रस्य क्रमान्तरम् ]

[1]अथवान्यप्रकारेण धनमृणं विशोधयेत् ॥ ८१ ॥

[ ततो मन्त्रशोधनप्रक्रिया ]

साध्यनाम द्विगुणितं स्वरव्यञ्जनभेदतः ॥
साधकस्य च नामार्णं स्वरव्यञ्जनमण्डितम् ॥ ८२ ॥
एकीकृत्य हरेत् पश्चाद्वसुभिः साधकस्य च ।
स्वरव्यञ्जनरूपेण नामार्णं[2] द्विगुणं चरेत् ॥ ८३ ॥
साध्यनामाङ्कितं कृत्वा पूर्ववद् भागमाहरेत् ।
योऽधिकः स ऋणी ज्ञेयः प्रकारश्चापरः स्मृतः ॥ ८४ ॥

---

७९। एवं साधकाङ्कान् निरूप्य साध्याङ्कान् निरूपयति—एतदेवेति। एतदेव विलोमेन गुणितम्, साध्यं साध्याङ्कं वदामीति सम्बन्धः। तथाच मन्त्राद्यवर्णतः साधकनामादिवर्णपर्य्यन्तं गणयित्वा समष्ट्या जातां संख्यां सप्तभिर्गुणितां त्रिभिर्हृत्वा यदवशिष्टं तद् धनमिति प्रक्रिया।

८०। कृत इति। एवं भागे कृते साध्याङ्कानां साधकाङ्कानाञ्चावशिष्टानङ्कान् द्वयोः साध्यसाधकयोः 'भागावशिष्टा एते साध्याङ्काः एते च साधकाङ्का' इति निरूपयेदित्यर्थः। तत्फलमाह—य इति। भागफलस्याधिक्ये ऋणम्, न्यूनत्वे धनमित्यर्थः।

८१। ऋणधननिरूपणे व्यवस्थान्तरं दर्शयितुमुपक्रमते—अथवेति।

८२-८४। ततो मन्त्रशोधनस्य प्रक्रियामाह—साध्येति। साध्यनाम मन्त्रम्, तद्घटकवर्णान् स्वरव्यञ्जनभेदभिन्नान् द्विगुणीकृत्य तांश्च द्विगुणितान् वर्णान् स्वरव्यञ्जनभेदभिन्नैः साधकनामघटकवर्णैरेकीकृत्य तानेकीकृतान् वर्णानष्टभिर्हरेत्। तथा तद्वैपरीत्येन पूर्वोक्तरीत्या साधकनामघटकवर्णान् द्विगुणितान् साध्यनामघटकवर्णैरेकीकृत्य पूर्ववदष्टभिर्हरेत्। एवं कृते साध्यसाधकाङ्कयोर्यद् भागावशिष्टं तत्र योऽधिकाङ्कः स ऋणी, यश्च न्यूनाङ्कः स धनीत्यवधेयम्।

---

1. 'अथवेत्यादिपादद्वयं A- C- पुस्तकयोर्नास्ति। 2. '-र्णाञ्च' A.

[ एतच्चक्रविशोधितस्य मन्त्रस्य फलम् ]

ऋणी मन्त्रः शुभफलो धनी स्यादशुभोदयः ।
तुल्योदयः शुभः प्रोक्त इति तन्त्रविदो विदुः ॥
उक्तमृणधनं चक्रं सर्व्वसिद्धिप्रदायकम् ॥ ८५ ॥

[ नक्षत्रचक्रं तत्र रेखापातः ]

दश रेखाः प्रकर्त्तव्याः पूर्व्वपश्चिमयोगतः ।
रेखाचतुष्टयञ्चैव विलिखेद्दक्षिणायतम् ।
तन्मध्ये विलिखेद् वर्णान् वक्ष्यमाणक्रमेण तु ॥ ८६ ॥

[ वर्णन्यासपरिपाटी ]

द्व्येकत्रि-वेद-शशिचन्द्रमुखेन्दुयुग्मं
युग्मं कलाधरयुगद्वयजन्मभूमीः ।
[1]पक्षत्रिचन्द्रहरनेत्रमहीन्दु-चन्द्र-
पक्षैकपक्ष-शिवलोचन-वेदवर्णम् ॥ ८७ ॥

---

८५ । एवं ऋणधनस्वरूपमभिधाय तस्य फलमाह—ऋणीति । तुल्योदयः साध्य-साधकयोस्तुल्योऽङ्कः, शुभफलदायक इत्यर्थः ।

८६ । ऋणधनचक्रमुपदिश्य नक्षत्रचक्रमाह—दशेति । पूर्व्वतः पश्चिमान्ता दश, उत्तरतो दक्षिणान्ताश्च चतस्रो रेखाः कर्त्तव्याः। एवं कृते सप्तविंशतिः कोष्ठानि सम्पद्यन्ते । तन्मध्य इति । वर्णान् एकपञ्चाशद् वर्णानित्यर्थः ।

८७ । तामेव वर्णविन्यासपरिपाटीमाह—द्व्येकेत्यादिना समालिखेदित्यन्तेन । तथाच तेषु कोष्ठेषु अश्विन्यादिक्रमेण प्रथमे कोष्ठे अ आ । द्वितीये इ । तृतीये ई उ ऊ । चतुर्थे ऋ ॠ ऌ ॡ । पञ्चमे ए । षष्ठे ऐ । सप्तमे ओ औ । अष्टमे क । नवमे ख ग । दशमे घ ङ । एकादशे च । द्वादशे छ ज । त्रयोदशे झ ञ । चतुर्द्दशे ट ठ । पञ्चदशे ड । षोडशे ढ ण । सप्तदशे त थ द । अष्टादशे ध । ऊनविंशे न प फ । विंशे ब । एकविंशे भ । द्वाविंशे म । त्रयोविंशे य र । चतुर्विंशे ल । पञ्चविंशे व श । षड्विंशे ष स ह । सप्तविंशे ळ क्ष अं अः । इत्यनया रीत्या वर्णान् लिखेदित्यर्थः ।

---

1. 'युग्म-' B,

बिन्दु-विसर्गौ स्वरान्त्यौ [1]च शेषे[2] गेहे समालिखेत् ।

[ न्यसनीयानां वर्णानामश्विन्यादिक्रमत्वम् ]

अश्विन्यादिक्रमेणैव वर्णनाम समीरितम् ॥ ८८ ॥

[ एतच्चक्रकरणकमन्त्रशोधनपरिपाटी ]

[3]जन्मभादाद्यनाम्नस्तु वर्णाद्वा विलिखेत् सुधीः ।

साध्याद्यक्षरपर्य्यन्तं जन्मादीनि पुनः पुनः ॥ ८९ ॥

---

८९ । एतच्चक्रकरणकमन्त्रशोधनपरिपाटीमाह—जन्मेति । स्वजन्मनक्षत्राश्रयकोष्ठस्थितवर्णात् साधकनामाद्यक्षरसम्बन्धिनक्षत्राद् वा मन्त्राद्यक्षरपर्य्यन्तं जन्मसम्पदित्यादिवक्ष्यमाणक्रमेण पुनः पुनर्गणयेदित्यर्थः । अत्र नाम्नो वर्णाद्वेति कल्पान्तरं स्वजन्मनक्षत्राज्ञाने मन्त्रशोधनार्थम् । तदुक्तं तन्त्रसारे—"तत्र स्वनक्षत्रादेव नक्षत्रं गणनीयम् । स्वनक्षत्राज्ञाने स्वनामाद्यक्षरसम्बन्धिनक्षत्रादेव नक्षत्रं गणनीयम् । पिङ्गलातन्त्रे—

प्रकटं यस्य जन्मर्क्षं तस्य जन्मर्क्षतो भवेत् ।

प्रनष्टं जन्मभं यस्य तस्य नामर्क्षतो भवेत् ॥

इति वचनात् ।

प्रादक्षिण्येन गणयेत् साधकाद्यक्षरात् सुधीः ॥

इति वचनाच्च" इति ।

जन्मादीनि पुनः पुनरित्युक्तम्, तदेवाह—जन्मेत्यादि । नामतुल्यफलप्रदा इति सम्पदः सम्पज्जनकत्वं विपदो विपज्जनकत्वमित्यनया रीत्या फलमुन्नेयमित्यर्थः । इममर्थं स्फुटमाह राघवभट्टधृतनिबन्धतन्त्रे—

रसाष्टनवभद्राणि युगयुग्मगतान्यपि ।

इतराणि न भद्राणि परित्याज्यानि सूरिभिः॥ इति ।

एतेन साधक-मित्र-परममित्र-क्षेमसम्पदो ग्रहणीया इतरा वर्जनीया इत्यापतति । अत एव तन्त्रसारकृतापि जन्म-तृतीय-पञ्चम-सप्तमानि नक्षत्राणि वर्जनीयानीत्युक्तम् ।

अत्रेदमवधेयम्—प्रागुक्तसप्तविंशतिनक्षत्राणि मानुष-राक्षस-दैवतभेदेन त्रिविधानि भवन्ति । तदुक्तं तन्त्रसारधृतनिबन्धतन्त्रे—

पूर्व्वोत्तरत्रयञ्चैव भरण्यार्द्राथ रोहिणी ।

इमानि मानुषाण्याहुर्नक्षत्राणि मनीषिणः ॥

---

1. 'तु' C. 2. '-ष-' B. 3. 'स्वनाम्नस्त्वाद्यवर्णाच्च' C.

जन्म सम्पद् विपत् क्षेमः प्रत्यरिः साधको वधः ।
मित्रं परममित्रश्च नामतुल्यफलप्रदाः ॥ ६० ॥

नक्षत्र-चक्रम्

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १<br>अश्विनी<br>अ आ<br>देवः | २<br>भरणी<br>इ<br>मानुषः | ३<br>कृत्तिका<br>ई उ ऊ<br>राक्षसः | ४<br>रोहिणी<br>ऋ ॠ ऌ ॡ<br>मानुषः | ५<br>मृगशिराः<br>ए<br>देवः | ६<br>आर्द्रा<br>ऐ<br>मानुषः | ७<br>पुनर्व्वसुः<br>ओ औ<br>देवः | ८<br>पुष्या<br>क<br>देवः | ९<br>अश्लेषा<br>ख ग<br>राक्षसः |
| १०<br>मघा<br>घ ङ<br>राक्षसः | ११<br>पूर्व्वफल्गुनी<br>च<br>मानुषः | १२<br>उत्तरफल्गुनी<br>छ ज<br>मानुषः | १३<br>हस्ता<br>झ ञ<br>देवः | १४<br>चित्रा<br>ट ठ<br>राक्षसः | १५<br>स्वाती<br>ड<br>देवः | १६<br>विशाखा<br>ढ ण<br>राक्षसः | १७<br>अनुराधा<br>त थ द<br>देवः | १८<br>ज्येष्ठा<br>ध<br>राक्षसः |
| १९<br>मूला<br>न प फ<br>मूला | २०<br>पूर्व्वाषाढा<br>ब<br>मानुषः | २१<br>उत्तराषाढा<br>भ<br>मानुषः | २२<br>श्रवणा<br>म<br>देवः | २३<br>धनिष्ठा<br>य र<br>राक्षसः | २४<br>शतभिषा<br>ल<br>राक्षसः | २५<br>पूर्व्वभाद्रपद<br>व श<br>मानुषः | २६<br>उत्तरभाद्रपद<br>ष स ह<br>मानुषः | २७<br>रेवती<br>ळ क्ष<br>अं अः<br>देवः |

ज्येष्ठा-शतभिषा-मूला-धनिष्ठाश्लेष-कृत्तिकाः ।
चित्रा-मघा-विशाखाः स्युस्तारा राक्षसदेवताः ॥

[ नक्षत्रचक्रोपसंहारः ]

नक्षत्रचक्रं कथितं राशिचक्रमथोच्यते ।

[ राशिचक्रम् ]

राशिचक्रं समालिख्य तत्र वर्णाल्लिखेत् क्रमात् ॥ ६१ ॥

[ तत्र वर्णन्यासपरिपाटी ]

वेदाग्निवह्नियुगलश्रवणाक्षिसंख्यान्
पञ्चेषु[1]वाण-शरपञ्च-चतुष्टयार्णान् ।
मेषादितः प्रविलिखेदथ [2]शादिवर्णान् ।
कन्यागृहेषु[3] पुनरेव [4]ततो लिखेच्च ॥ ६२ ॥

---

अश्विनी रेवती पुष्या स्वाती हस्ता पुनर्व्वसुः ।
अनुराधा-मृगशिरःश्रवणा देवतारकाः ॥
तथा—स्वजातौ परमा प्रीतिर्मध्यमा भिन्नजातिषु ।
रक्षोमानुषयोर्नाशो वैरं दानवदेवयोः ॥

ततश्च नक्षत्रचक्रविचारे मानुषादिभेदेन तत्तत्फलभेदोऽपि विवेक्तव्य इति ।

६१ । एवं नक्षत्रचक्रं निरूप्य राशिचक्रमाह—राशिचक्रं समालिख्येति । लेखनक्रममाह तन्त्रसारधृतागमकल्पद्रुमे—

रेखाद्वयं पूर्वपरेण कुर्य्यात्तन्मध्यतो याम्यकुबेरभेदात् ।
एकैकमीशाननिशाचरे तु हुताशवाय्वोर्विलिखेत्ततोऽर्णान् ॥ इति ।

एतेन पूर्व्वतः पश्चिमान्तं रेखाद्वयं दक्षिणत उत्तरान्तञ्च रेखाद्वयं विधाय ईशानादिचतुष्कोणेष्वेकैकशो रेखाचतुष्टयं कुर्य्यादित्यर्थः । एवं कृते मेषादिद्वादशराशीनां द्वादश कोष्ठानि सम्पद्यन्ते ।

६२ । तेषु मेषादिकोष्ठेषु वर्णन्यासपरिपाटीमाह—वेदाग्नीति । एतेन मेषकोष्ठे अ आ इ ई इति चत्वार्य्यक्षराणि । वृषकोष्ठे उ ऊ ऋ इति त्रीणि । मिथुनकोष्ठे ॠ ऌ ॡ इति त्रीणि । कर्कटकोष्ठे ए ऐ इति द्वे । सिंहकोष्ठे ओ औ इति द्वे । कन्याकोष्ठे अं अः इति द्वे । तुलाकोष्ठे क ख ग घ ङ इति पञ्च । वृश्चिककोष्ठे च छ ज झ ञ

---

1, '-नाग-' ? A. 2. 'का-' C. 3. 'तु' 4. 'लिखेद् विधिज्ञः' C.

[ राशीनां संज्ञास्तन्मूलको मन्त्रशोधनक्रमश्च ]

जप्तुः स्वराशितो मन्त्री यावत् साध्यादिवर्णकम् ।
लग्नं धनं भ्रातृबन्धु-पुत्रशत्रुकलत्रकाः ॥ ६३ ॥
मरणं धर्म्मकर्म्मायव्यया द्वादश राशयः ।

[ राशीनां प्रागुक्तसंज्ञानुरूपफलदातृत्वम् ]

नामानुरूपमेतेषां शुभाशुभफलं दिशेत् ॥ ६४ ॥

---

इति पञ्च। धनुःकोष्ठे ट ठ ड ढ ण इति पञ्च। मकरकोष्ठे त थ द ध न इति पञ्च। कुम्भकोष्ठे प फ ब भ म इति पञ्च। मीनकोष्ठे य र ल व इति चत्वार्य्यक्षराणि लिखेत्। अथ शादिवर्णान् कन्यागृहेषु पुनरित्यनेन कन्यागृहे लिखितात् अं अः इति वर्णद्वयादनन्तरं श ष स ह ल क्ष इति वर्णषट्कं च लिखेदित्यवगन्तव्यम्।

६३-६४। अनेन चक्रेण मन्त्रशोधनस्य क्रममाह—जप्तुरिति। जप्तुः साधकस्य स्वराशितः साध्यादिवर्णकं मन्त्रप्रथमाक्षरं यावन्मन्त्री देशिको गणयेदित्यर्थः। गणनफलमाह—लग्नमित्यादि। मेषादिद्वादशराशीनां लग्नादिद्वादशसंज्ञास्तत्तत्संज्ञानुरूप-शुभाशुभफलदातृत्वञ्चेत्यर्थः। अत एव तन्त्रसारे "स्वराशीनामनुकूलं मन्त्रं भजेत्। 'सतारराशिकोष्ठानामनुकूलान् भजेन्मनूनि'ति नारदवचना"दित्याह।

स्वराशेरज्ञाने शोधनक्रममाह तत्रैव—"यदा तु स्वराशेरज्ञानं तदा साधकनामाद्यक्षरसम्बन्धिनं राशिं गृहीत्वा गणयेत्। नारायणीये—

अज्ञाते राशिनक्षत्रे नामाद्यक्षरदर्शनात्।
साध्यस्याक्षरराश्यन्तं गणयेत् साधकाक्षरात्॥

इति रामार्च्चनचन्द्रिकाधृतत्वादित्यन्तेन। अत्र नामानुरूपमेतेषां शुभाशुभफलं दिशेदित्युक्तम्। विशेषमाह तन्त्रसारधृततन्त्रान्तरतन्त्रे—

लग्ने सिद्धिस्तथा नित्यं धने धनसमृद्धिदम्।
भ्रातरि भ्रातृवृद्धिः स्याद् बान्धवे बान्धवप्रियः॥
पुत्रे पुत्रविवृद्धिः स्याच्छत्रौ शत्रुविवर्द्धनम्।
कलत्रे मध्यमा प्रोक्ता मरणे मरणं भवेत्॥
धर्म्मे धर्म्मविवृद्धिः स्यात् सिद्धिदः कर्म्मसंस्थितः।
आये च धनसम्पत्तिर्व्यये च सञ्चितव्ययः॥

इति राशिचक्रसङ्केतः।

राशिचक्रम्




[ अ-क-ड-म-चक्रं तत्र वर्णन्यासक्रमश्च ]

**राशिचक्रे लिखेद् वर्णान् क्लीवहीनान् स्वरान् बुधः ।**
**[1]ककारादित्तकारान्तान् दक्षावर्त्तक्रमेण तु ।**
**मेषादितोऽपि[2] मीनान्तं गणयेत् क्रमशः सुधीः ॥ ६५ ॥**

६५ । एवं राशिचक्रसङ्केतं प्रदर्श्य अ-क-ड-म-चक्रसङ्केतमाह—राशिचक्रे लिखेद् वर्णानिति । अत्र रेखापातक्रमं स्फुटमाह रुद्रजामलतृतीयपटले—

रेखाद्वयं पूर्व्वपरे मध्ये रेखाद्वयं लिखेत् ।
चतुष्कोणे चतूरेखाकडमं चक्रमण्डलम् ।
भ्रामयित्वा महावृत्तं निर्म्माय वर्णमालिखेत् ॥ इति ।

1. 'अ-' A. B. अत्र अकारादीति A-B-पुस्तकयोः पाठः प्रामादिकः । अन्यथा अकारादीत्यनेनैव स्वराणामपि लाभात् स्वरानित्यस्य पौनरुक्तं प्रसज्यते । 2. '-न्यसीमान्तं' A. '-पि सीमान्तं' B.

[ एतच्चक्रकरणकमन्त्रशोधनपरिपाटी ]

जन्तुः स्व[1]नामतो मन्त्री यावन्मन्त्राद्यमक्षरम् ।
सिद्धसाध्यसुसिद्धारिक्रमेणैव पुनः पुनः ॥ ६६ ॥

[ शोधितमन्त्रस्य फलविशेषप्रसवितृत्वम् ]

सिद्धः सिद्धिप्रदो नित्यं साध्यो जप[2]हुतादिभिः ॥
सुसिद्धः प्राप्तिमात्रेण साधकं भक्षयेदरिः । ६७ ।

---

वर्णान् विशेषयति---क्लीबहीनान् स्वरान्, ककारादिक्षकारान्तान् व्यञ्जनवर्णांश्चेति । स्वरेषु ऋ ॠ ऌ ॡ एते चत्वारो वर्णाः क्लीवाः ।

ऋ ॠ वर्णद्वयं ऌ ॡ तद्धि क्लीवं प्रचक्षते ।

इति तन्त्रसारात् । तान् वर्जयित्वा स्वरान् लिखेदित्यर्थः । तच्च लेखनं दक्षावर्त्तेनेत्याह—दक्षावर्त्तक्रमेण त्विति । एतेन पुनरावृत्त्या यावच्छेषं मेषतो वृषान्तमेकैकशो वर्णानां स्थापनमुक्तं भवति, अत एव तन्त्रसारेऽक-ड-म-चक्रमुपक्रम्याभिहितेन—

एकैकक्रमतो लेख्यान् मेषादिषु वृषान्तगान् ।
गणयेत् क्रमशो भद्रे नामादिवर्णपूर्व्वकान् ॥

इति वचनेन दक्षावर्त्तेनैकैकवर्णस्थापनमाह । अथ गणनाक्रममाह—मेषादित इति । मेषादितो मीनान्तमित्यनेन वामावर्त्तेन गणनम्, अपिशब्देन मीनादितो मेषान्तमित्यर्थस्य लाभाद्दक्षावर्त्तेनापि गणनमुपदिष्टम् ।

६६ । एतच्चक्रकरणकमन्त्रशोधनपरिपाटीमाह—जन्तुरिति । जन्तुः साधकस्य स्वनामतो नामप्रथमाक्षरत इत्यर्थः, मन्त्रप्रथमाक्षरं यावत् सिद्ध-साध्य-सुसिद्धारीन् दक्षावर्त्तेन वामावर्त्तेन च पुनः पुनर्गणयेदित्यर्थः । एवं कृतायां गणनायां यावन्ति गृहाणि सिद्धादिसंज्ञितानि स्युस्तानि विशिष्याह रुद्रजामले तृतीयपटले—

नवैकपञ्चमे सिद्धः साध्यः षड्दशयुग्मके ।
सुसिद्धस्त्रिसप्तके रुद्रे वेदाष्टद्वादशे रिपुः ॥ इति

तथाच प्रथम-पञ्चम-नवमाः सिद्धाः । द्वितीय-षष्ठ-दशमाः साध्याः । तृतीय-सप्तमैकादशाः सुसिद्धाः । चतुर्थाष्टमद्वादशा अरय इति पर्य्यवस्यति ।

---

1. '-राशि-' A. B. 2. '-व्र-' A.

अ-क-ड-म-चक्रम्




[ अकडमचक्रोपसंहारः, कुलाकुलचक्रविचारप्रतिज्ञा च ]

उक्तमकडमं चक्रं कुलाकुलं विचार्य्यते ॥ ६८ ॥

[ कुलाकुलचक्रम् ]

[ तत्र रेखापातो वर्णन्यासश्च ]

पूर्व्वापरायताः षट्करेखास्तु विलिखेत् [1]क्रमात् ।
पञ्चभूतात्मका वर्णाः पञ्च पञ्च विभागतः ॥ ६९ ॥

६९ । एवमकडमचक्रं निरूप्य कुलाकुलचक्रं निरूपयति—पूर्व्वेति । पूर्व्वापरायत-

1. 'ततः' C.

पञ्च ह्रस्वाः पञ्च दीर्घा बिन्द्वन्ताः [1]सन्धिसम्भवाः।
[2]पञ्चशः कादयः ष-क्ष-ल-स-हान्ताः समीरिताः ॥ १०० ॥

---

षड्रेखापातेन पञ्च गृहाणि सम्पद्यन्ते। पञ्चभूतात्मका इति। वर्णानां पञ्चभूतात्मकत्वञ्च—

कारणात् पञ्चभूतानामुद्भूता मातृका यतः।
ततो भूतात्मका वर्णाः पञ्च पञ्च विभागतः ॥

इति शारदातिलकद्वितीयपटलवचनादवगन्तव्यम्। तेषु च गृहेषु अकारादिवर्णान् पञ्चशो विभज्य सन्निवेशयेदित्यर्थः।

१००। तानेव वर्णानाह—पञ्च ह्रस्वा इत्यादि। ततश्च वायव्यगृहे अ आ, आग्नेयगृहे इ ई, भौमगृहे उ ऊ, वारुणगृहे ऋ ॠ, आकाशगृहे ऌ ॡ इति द्वौ द्वौ वर्णौ प्रतिगृहं निवेशनीयावित्यापतति। अत्र "सन्धिसम्भवानां पृथगुपादानान्न पारिभाषिकह्रस्वदीर्घग्रह" इति राघवभट्टः। बिन्द्वन्ताः सन्धिसम्भवा इत्यत्र बिन्द्वन्ता इति सन्धिसम्भवा इत्यस्य विशेषणम्। बिन्दुरनुस्वारोऽन्तो येषां सन्धिसम्भववर्णानां ए ऐ ओ औ इत्याख्यानां ते बिन्द्वन्ताः। वर्णानामेतेषां सन्धिसम्भवत्वं प्रदर्शितं राघवभट्टेन—"एषां यथा सन्धिसम्भवत्वं तथोक्तमाचार्य्यैः—

अकारेकारयोर्योगादेकारो वर्ण इष्यते।
तस्यैवैकारयोगेण स्यादैकाराक्षरं तदा ॥
उकारयोगे तस्यैव स्यादोकाराह्वयः स्वरः।
तस्यैवौकारयोगेण स्यादौकाराह्वयः स्वरः।
सन्ध्यक्षराः स्युश्चत्वारो मन्त्राः सर्व्वार्थसाधकाः ॥ इति।

विसर्गस्य षोडशस्वरान्तर्गतत्वेऽप्यत्र तस्यागणने हेतुमाह—राघवभट्टः—"मूलाधारात् सञ्जातविवर्त्तोत्पन्नप्रयत्नप्राणपवनप्रेरितः स्थानान्तरमप्राप्य कण्ठादेव निःसरन् प्रकृत्यात्मकः सर्गोऽत्र भूतेषु न गणितः" इति। तथा कादिमतेऽपि—

"मायाशक्त्यभिधः सर्गः सर्व्वभूतात्मकः प्रभुः।
तस्मात्तस्यात्र विन्यासो नैकदेशे शिवात्मनि" ॥ इति।

सर्गो विसर्गः। एवं स्वरवर्णन्यासमुक्त्वा व्यञ्जनानां न्यासमाह—पञ्चश इति। कादयः

---

1. 'सिद्धि-' ? A, C. 2. C-पुस्तके पञ्चदशे'ति प्रामादिकः पाठः।

[ तेषां वर्णानां संज्ञा ]

**वायु-तेजो-मही-वारि-[1]नभांसि च क्रमेण तु ॥ १०१ ॥**

[ एतच्चक्रकरणकमन्त्रशोधनपरिपाटी ]

**साधकस्याक्षरं पूर्वं मन्त्रस्यापि तथाक्षरम् ।**
**[2]यद्येकभूतदैवत्यं जानीयात् स्वकुलं हि तत् ॥ १०२ ॥**

---

पञ्चश इत्यर्थः। पञ्चश इति वीप्सार्थे शस्प्रत्ययः। कादयः पञ्च पञ्च वर्णा इत्यर्थः। एतेन क-च-ट-त-पाद्याः पञ्च वर्गा य-र-ल-व-शाश्चेति लभ्यते। ते कीदृशाः कादय इत्याह—ष-क्ष-ल-स-हान्ता इति।

अत्र पञ्च ह्रस्वाः पञ्च दीर्घाः तथा बिन्द्वन्ताः सन्धिसम्भवाः तथा पञ्चशः कादयः तथा षक्षेत्यादिपञ्च पञ्च-तया निर्देशात् प्रत्येकपञ्चकानां क्रमेण वाय्वादित्वमिति सूचितम्। ततश्च

अ आ ए क च ट त प य षा दश वायव्याः।
इ ई ऐ ख छ ठ थ फ र क्षा दश तैजसाः।
उ ऊ ओ ग ज ड द ब ल ला दश पार्थिवाः।
ऋ ॠ औ घ झ ढ ध भ व सा दश वारुणाः।
ऌ ॡ अं ङ ञ ण न म श हा दश नाभसाः।

इत्यनया रीत्या वर्णानां वाय्वादित्वमित्यवगन्तव्यम्। यत्तु पिङ्गलामते—

चत्वारिंशत्तथा पञ्च वर्णसंख्या प्रकीर्त्तिता।
गणस्तु नवभिर्ज्ञेयः पार्थिवादिषु पञ्चसु॥

इति वचनेन नवनवानां वर्णानां वाय्वादिगणत्वमुक्तम्, तत्र "अत्र ह्रस्वैरेव दीर्घाणां ग्रहान्नवभिरित्युक्ति"रिति समाहितं राघवभट्टेन। अतस्तत्र दशभिरितितात्पर्य्यक एव नवभिरिति व्यवहार इति न कश्चिद्विरोधः।

१०२। अनेन मन्त्रशोधनस्य प्रकारमाह—साधकस्येत्यादिना। इदमवधेयम्—अत्र कुलाकुलशब्देन स्वकुलं परकुलञ्चाभिधीयेते, तत्प्रतिपादकत्वादेवास्य कुलाकुल-चक्रमिति संज्ञा। तत् किं स्वकुलमित्याकाङ्क्षायामाह—साधकस्येति। साधकनाम्नो मन्त्रस्य च पूर्वं प्रथमाक्षरं यदि एकभूतदैवत्यं स्यात् अनयोर्यदि वाय्वादीनामेकमेव भूतं

---

1. '-नभसश्च' A. B. 2. 'यदी'त्यादि पादद्वयं A-पुस्तके नास्ति।

[ वर्णानां परस्परशत्रुत्वमित्रत्वादिव्यवस्था ]

[1]पार्थिवे वारुणे मैत्रमाग्नेयस्यापि मारुतम् ।
पार्थिवानामक्षराणां शत्रुत्वे मारुतं स्थितम् ॥ १०३ ॥
आग्नेयस्य जलं शत्रु[2]र्जलस्य मारुतं रिपुः ।
सर्व्वेषामेव वर्णानामविरोधि तु नाभसम्[3] ॥ १०४ ॥

देवता भवेत् तत् स्वकुलं जानीयादित्यर्थः । एकभूतदैवत्यमिति एकं भूतं दैवत्यं देवता अस्येति विग्रहः । तथाच साधकनाम्नः प्रथमाक्षरं यद्भूतदेवताकं मन्त्राद्यक्षरमपि यदि तद्भूतदेवताकवर्णान्तर्गतं भवेत् तत् स्वकुलं विपर्य्यये तु परकुलमिति । अत एव

मन्त्रसाधकयोराद्यो वर्णः स्यात पार्थिवो यदि ।
तत् कुलं तस्य तत प्रोक्तमेवमन्येषु लक्षयेत् ॥

इति राघवभट्टधृतपिङ्गलामतवचने अन्येषु लक्षयेदित्यनेन अन्येषामपि मन्त्रसाधकनामादिवर्णानामेकदेवताकत्वे स्वकुलत्वमुपपादितम् ।

१०३-१०४ । इदानीं विभिन्नभूतदेवताकवर्णानामरिमित्रादिव्यवस्थामाह—पार्थिव इत्यादिना मारुतं रिपुरित्यन्तेन । एतेन नाभसवर्णवर्ज्जं वाय्वादिचतुष्टयदेवताकवर्णानां परस्परं शत्रुत्वं मित्रत्वमौदासीन्यञ्च व्यवस्थापितानि । व्यक्तमाह राघवभट्टधृततन्त्रान्तरे—

वर्णांशकं वदिष्यामि चतुर्मात्रव्यवस्थितम् ।
स्वकुलं मित्रमध्यस्थे अमित्रञ्च चतुर्थकम् ॥
वायव्याग्नेयवारुण्यपार्थिवञ्च प्रकीर्त्तितम् ।
उत्तरोत्तरसंसिद्धिसमताव्याधिमृत्यवः ॥
प्राप्नुवन्ति समासाद्य मन्त्रिणोऽत्र निबोधनात् ।
मित्रे सिद्धिः समाख्याता उदासीने न किञ्चन ॥
मृत्युर्व्याधिरमित्रे च स्वकुले सिद्धिरुत्तमा ।
नामादिवर्णाः साध्यस्य साधकस्य यथाक्रमम् ।
ऊर्द्ध्वाधःस्थं समालेख्या अंशकञ्च निरूपयेत् ॥ इति ।

कुत्र कस्य मित्रत्वं शत्रुत्वमौदासीन्यं स्वकुलत्वं वा तदपि विशिष्य प्रदर्शितं तत्रैव—

1 'पार्थिवे' इत्यादि पादद्वयं A-पुस्तके नास्ति । 2. '-रम्भस्तेजस ईरितः' ? C 3. '-नां नाभसं मित्रमीरितम्' B.

[ फलम् ]

**परस्परविरुद्धानां वर्णानां यत्र संस्थितिः ।**
**स मन्त्रः साधकं हन्ति सर्व्वथा न प्रसीदति । १०५ ॥**

---

वायव्ये तैजसं मित्रमुदासीनन्तु वारुणम् ।
शत्रुश्च पार्थिवं विद्यात् स्वकुलं वायवं पुनः ॥
तैजसे वारुणं शत्रुरुदासीनन्तु पार्थिवम् ।
वायव्यं मित्रमाख्यातं स्वकुलं तैजसं पुनः ॥
वारुणे पार्थिवं मित्रमुदासीनन्तु वायवम् ।
तैजसं तु रिपुं विद्यात् स्वकुलं वारुणं पुनः ॥
पार्थिवे वारुणं मित्रं तैजसं शत्रुरीरितम् ।
उदासीनं वायवन्तु स्वकुलं पार्थिवं पुनः ॥

नन्वत्र पार्थिवानामक्षराणां शत्रुत्वे मारुतं स्थितमित्यनेन पार्थिवमारुतवर्णयोः परस्परशत्रुत्वाभिधानाद् उदासीनं वायवन्तु इति प्रागुक्ततन्त्रान्तरवचनविरोधः। उच्यते—मारुतं पार्थिवानाञ्च शत्रुरित्यादि-तन्त्रसारधृतरुद्रजामलतृतीयपटलवचने पार्थिवानाञ्चेति चकाराद् आग्नेयं पार्थिवानां रिपुरिति श्रीकृष्णानन्दव्याख्यानाद् वायव्यतैजसानामुभयेषामपि वर्णानां पार्थिवैः सह शत्रुत्वमिति स्थितम् । तत्र च तेजो यथा पार्थिवान् समूलं हन्ति न तथा मरुदिति तेजस एव शत्रुत्वप्राधान्येनाम तथा व्यपदेशः । अस्यैवार्थस्य प्रतिपादनाय तन्त्रान्तरे तैजसस्य शत्रुत्वं वायवस्य औदासीन्यमुक्तम् । रुद्रजामल-श्रीतत्त्वचिन्तामण्यादिषु औदासीन्यानभिधानाद् वायव्य-वर्णानामपि तैजसवत् शत्रुपक्षनिक्षेप इति संक्षेपः ।

एवं चतुर्णां स्वरूपमुक्त्वा नाभसवर्णानां व्यवस्थामाह—सर्व्वेषामिति । नाभसं नभोदेवताकवर्णजातं सर्व्वेषामविरोधि मित्रमित्यर्थः । रुद्रजामलतृतीयपटले—

नाभसं सर्व्वमित्रं स्याद्विरुद्धं नैव शीलयेत् ।

इत्यनेन मित्रत्वस्य व्यक्तमभिधानात् ।

१०५ । एवं वर्णव्यवस्थामुक्त्वा फलमाह—परस्परेति । परस्परविरुद्धानां पार्थिव-मारुतादिरूपाणां प्रागुक्तानां वर्णानां यत्र मन्त्रे मन्त्रप्रथमाक्षरे संस्थितिः । परस्पर-

कुलाकुल-चक्रम्

| वायुः | तेजः | मही | वारि | नभः |
|---|---|---|---|---|
| अ आ | इ ई | उ ऊ | ऋ ॠ | ऌ ॡ |
| ए | ऐ | ओ | औ | अं |
| क | ख | ग | घ | ङ |
| च | छ | ज | झ | ञ |
| ट | ठ | ड | ढ | ण |
| त | थ | द | ध | न |
| प | फ | ब | भ | म |
| य | र | ल | व | श |
| ष | क्ष | ळ | स | ह |

[ वर्गचक्रम् ]

**इदानीं वर्गचक्रस्य विधानमभिधीयते ।**
**मन्त्रग्रामविशुद्ध्यर्थं नामाद्यक्षरपूर्व्वकम् ॥ १०६ ॥**

विरुद्धत्वञ्चैतत् साधकनामप्रथमाक्षरमपेक्ष्येति बोध्यम् । स मन्त्रः साधकं हन्तीत्यादि । अस्यैव वचनस्य सर्व्वथा न प्रसीदतीत्यत्र किं वा नास्य प्रसीदतीति राघवभट्टधृतः पाठः समीचीनः । यतो न हि वर्णानां परस्परविरोधेऽपि सर्वत्र हन्तृत्वम्—

उत्तरोत्तरसंसिद्धिसमताव्याधिमृत्यवः ।

तथा 'उदासीने न किञ्चन' 'मृत्युर्व्याधिरमित्रे च' इत्यादिप्रागुक्तपिङ्गलामत-वचनेन अनिष्टानां फलान्तराणामप्यभिधानात् । तस्माद् राघवभट्टवचनवदत्रापि सर्व्वथा न प्रसीदतीति फलान्तरम्, न प्रसीदति वेत्यर्थः ।

१०६-१०७ । एवं कुलाकुलं निरूप्य वर्गचक्रमाह—इदानीमिति । नामाद्यक्षर-

[ कोष्ठनिर्म्माणं तत्र वर्णन्यासश्च ]

अष्टौ कोष्ठान् समालिख्य वर्गानष्टौ क्रमाल्लिखेत् ॥ १०७ ॥

[ वर्गाणां संज्ञाः ]

पक्षिमार्जारपञ्चास्यश्वानः सर्पाखुदन्तिनः ।
मेषः क्रमादकारादि-[1]वसुवर्गाश्रिता इमे ॥ १०८ ॥

[ एतच्चक्रकरणकमन्त्रशोधनफलम् ]

साध्यसाधकयोः प्रीतिर्ज्ञातव्या जातितः सदा १०६ ॥

---

मारभ्य मन्त्रग्रामविशुद्ध्यर्थं वर्गचक्रस्य विधानमभिधीयत इत्यर्थः। तत्क्रममाह—अष्टाविति। ऊर्द्ध्वस्थांश्चतुरोऽधःस्थांश्च चतुरः कोष्ठान् समालिख्य तत्र क्रमादकाराद्य- वर्गान् लिखेदित्यर्थः।

१०८। तेषाञ्च संज्ञामाह—पक्षीति। पक्षि-मार्जार-सिंह-श्वान ऊर्द्ध्वतनचतुष्काणां सर्प-मूषिक-हस्ति-मेषाश्चाधस्तनचतुष्काणां संज्ञाः। एते च पक्ष्यादयः क्रमेणा- काराद्यष्टवर्गमाश्रित्य स्थिता इत्यर्थः। तथाहि,—प्रथमः पक्षी अकारादिविसर्गान्त- षोडशस्वरमयप्रथमकोष्ठाश्रयः, अतः स्वराणामेतेषां पक्षीति संज्ञा। द्वितीयो मार्जारः कवर्गाश्रयः। तृतीयः सिंहश्चवर्गाश्रयः। चतुर्थः श्वा टवर्गाश्रयः। पञ्चमः सर्प- स्तवर्गाश्रयः। षष्ठो मूषिकः पवर्गाश्रयः। सप्तमो हस्ती य-र-ल-वाश्रयः। अष्टमो मेषः श-ष-स-ह-ल-क्षाश्रयः। तेनैतेषामपि तत्तत्संज्ञकत्वमिति स्थितम्।

१०६। फलमाह—साध्येति। साध्यसाधकनामाद्यक्षरयोः साजात्ये प्रीतिर्वैजात्ये न प्रीतिर्नाप्रीतिर्वा, शाश्वतिकवैरे वैरमित्यवधेयम्। शाश्वतिकवैरन्तु पक्षिसर्पस्य, मार्जारमूषिकस्य, सिंहहस्तिनः, श्व-मेषस्य च प्रसिद्धम्।

---

1. '-स्व-स्ववर्णा-' A, B.

वर्गचक्रम्

| | | | |
|---|---|---|---|
| पक्षी<br>अ आ इ ई उ ऊ<br>ऋ ॠ ऌ ॡ ए ऐ<br>ओ औ अं अः | मार्जारः<br>क ख ग घ ङ | सिंहः<br>च छ ज झ ञ | श्वा<br>ट ठ ड ढ ण |
| सर्पः<br>त थ द ध न | मूषिकः<br>प फ ब भ म | हस्ती<br>य र ल व | मेषः<br>श ष स ह ळ क्ष |

[ प्रागुक्तमन्त्रदोषपरिहारक्रमः ]

**एषु दोषेषु सर्व्वत्र मायां काममथापि वा ।**
**त्विप्त्वा चादौ [1]श्रियं दद्यात्तत्तद्दोषविमुक्तये[2] ॥ ११० ॥**

११०। एवं चक्रपरिपाटीमभिधाय तत्र तत्र श्रुतानामकथहादितत्तच्चक्रविचार-परिप्राप्ततत्तन्मन्त्रगतवैरित्वादिदोषाणां प्रतिकारशैलीमाह--एष्विति । एषु प्रागुक्ता-कथहादिचक्रविचारपरिप्राप्तमन्त्रगतवैरित्वादिदोषेषु । सर्व्वत्रेत्यनेन यः कोऽपि मन्त्रः प्रागुक्तदोषदुष्टोऽपि वक्ष्यमाणरीत्या कृतेन प्रतीकारेण दोषपरिहीणो भवतीति सूच्यते । अत एव तन्त्रसारधृतमुण्डमालातन्त्रे—

छिन्नादिदोषदुष्टा ये मन्त्रास्तन्त्रे निरूपिताः ।
ते सर्व्वे सिद्धिमायान्ति मातृकार्णप्रभावतः ॥

इत्यादिना सर्व्वेषामपि दोषदुष्टानां मन्त्राणामनया रीत्या निर्द्दोषत्वमुपपादितम् ।

1. 'मनु'' B. 2. '-दूषणविमुक्तये' B. A-पुस्तके तु 'भूषणे'ति प्रामादिकः पाठः ।

तारसंपुटितो वापि दुष्टमन्त्रोऽपि सिध्यति ।

[ प्रकारान्तरम् ]

[1]यस्य यत्र भवेद् भक्तिः स [2]मन्त्रोऽस्य प्रसिध्यति ॥ १११ ॥

[ प्रकारान्तरम् ]

अनुलोमविलोमस्थक्लृप्तया वर्णमालया ।
प्रत्येकवर्णयुङ्मन्त्रा जप्ताः स्युः सर्वसिद्धिदाः ॥
अरिमन्त्रा [3]अपि नृणामन्ये मन्त्राश्च किं पुनः ॥ ११२ ॥

[ स्थानस्थत्वादिना मन्त्राणां फलभेदाः ]

स्थानस्था वरदा मन्त्रा ध्यानस्थाश्च [4]फलप्रदाः ।
[5]स्थानध्यानविनिर्मुक्ताः सुसिद्धा अपि वैरिणः ॥ ११३ ॥

[ षड्विधस्थाननिरूपणम् ]

प्रसङ्गेनैव [6]तत् स्थानं कथयामि विशेषतः । ११४ ॥
सकलं निष्कलं सूक्ष्मं तथा सकलनिष्कलम् ।
कलाभिन्नं कलातीतं षोढा [7]स्थानं शिवोऽब्रवीत् ॥ ११५ ॥

[ षड्विधस्थानस्वरूपम् ]

सकलं ब्रह्मरन्ध्रस्थं तदधो विद्धि निष्कलम् ।
[8]मानसं सूक्ष्मनामानं हृत्स्थं सकलनिष्कलम् ॥ ११६ ॥

---

१११। प्रकारान्तरमाह—तारेति। तारः प्रणवः तेन संपुटितः आदावन्ते च प्रणवेन योजित इत्यर्थः। प्रकारान्तरमाह—यस्येति। भक्तिः परमानुरक्तिः।

११२। प्रकारान्तरमाह—अन्विति। प्रत्येकवर्णयुङ्मन्त्रा मन्त्रघटकप्रत्येकवर्णा[illegible] अनुलोमेन विलोमेन च मातृकावर्णैः पुटीकृत्य। अकारादिक्षकारान्तवर्णैः क्षकारा[illegible]कारान्तवर्णैश्च प्रत्येकेन मन्त्रघटकवर्णान् पुटीकृत्य जपाद्दुष्टमन्त्राणामपि सर्व्वसिद्धि-विधायकत्वमित्यर्थः।

---

1. 'यस्येत्या'दि पादद्वयं C-पुस्तके नास्ति। 2. 'मन्त्रस्तस्य सिध्यति' B. 3. 'नृणामन्ये अपि' A-B. 4. 'वर-' A-B. अत्र 'फलप्रदा' इति C-पुस्तकसम्मतः पाठो मूले निवेशितः समानानुपूर्व्वीककौलावलीनिर्णय-सप्तदशोल्लासवचने राघवभट्टधृतमालिनीविजये च तथैव पाठ-दर्शनात्। 5. 'ध्यानस्थान-' C, 6. 'यत्' A. 7. 'मन्त्रं' C. 8. 'मनःस्थं' C.

बिन्दुस्थितं कलाभिन्नं कलातीतं तदूर्द्ध्वतः ।
कला कुण्डलिनी सैव [1]नादशक्तिः शिवोदिता ॥ ११७ ॥
[2]एतत्स्थाने स्थिता मन्त्राः स्थानस्थाः परिकीर्त्तिताः ।

[ मन्त्रविशेषे सिद्धादिशोधनानपेक्षित्वम् ]

मन्त्रकूटविभागानां [3]विधानमभिधीयते ॥ ११८ ॥
[4]सपिण्डाक्षरमन्त्राणां सिद्धादींन्नैव शोधयेत् ॥ ११९ ॥
एकाक्षरे तथा कूटे मालामन्त्रे [5]त्रिबीजके ।
स्वप्नलब्धे स्त्रिया दत्ते सिद्धादीन् [6]न विचारयेत् ॥ १२० ॥
वैष्णवेषु च तन्त्रेषु केचिदिच्छन्ति तान्त्रिकाः ॥ १२१ ॥
काली-तारामनौ मन्त्री तथा छिन्नामनावपि ।
सुन्दरीमन्त्रवर्य्ये[7] तु सिद्धादींन्नैव शोधयेत्[8] ॥ १२२ ॥

[ दीक्षायां मासविवेकः ]

एवं विचार्य्य मतिमान् मासादीन् परिशोधयेत् ।
चैत्रे दुःखाय दीक्षा स्याद् वैशाखे रत्नसञ्चयः ॥ १२३ ॥

---

११६-११७ । सकलमित्यादि । ब्रह्मरन्ध्रस्थं सहस्रारस्थितम् । तदध इति अधोमुखप्रणवोर्द्ध्वनादस्थम् । मनःस्थम् आज्ञाचक्रस्थितम् । हृत्स्थं द्वादशारस्थितम् । बिन्दुस्थितं प्रथमनादोर्द्ध्वबिन्दुस्थितम् । तदूर्द्ध्वत इति बिन्दूपरिनादस्थमिति B-पुस्तकपादटीका ।

११९ । सपिण्डाक्षरमन्त्राणां संयुक्ताक्षरमन्त्राणाम् ।

१२३ । चैत्र इत्यादि । तदुक्तं राघवभट्टधृततन्त्रान्तरे—

असिद्धिर्भूमिसम्पत्तिर्मरणं बन्धुनाशनम् ।
आयुर्वृद्धिः प्रजानाशः सम्पत्ती रत्नसञ्चयः ॥

---

1. 'नादः' ? C. 2. 'एषु' ? A-B. 3. 'मन्त्र इत्यभि-' ? A-B. 4. 'सबिन्दु-' C, 5. '-ऽधि-' A-B. 6 'नैव शोधयेत्' C. 7. '-वर्गे' B. 8. '-न्न विचारयेत्' A.

शुभप्राप्तिः स्थाननाशो मोहार्थश्च वशीकृतिः ।
चैत्रादीनां फलं ज्ञेयं मलमासं च वर्जयेत् ॥ इति ।

अत्र—मन्त्रारम्भस्तु चैत्रे स्यात् समस्तपुरुषार्थदः ।

इत्यादिगौतमीयतन्त्रपञ्चमपटलवचनेन दीक्षायां चैत्रस्य प्रशस्तिरभिहिता सा तु विष्णुविषया, गौतमीयतन्त्रस्य वैष्णवोपासनापरत्वात् । अत एव तन्त्रसारकारैश्चैत्र इति गोपालविषयं गौतमीयत्वात् । 'मधुमासे भवेद्दीक्षा दुःखाय मरणाय च' इति योगिनीहृदयाच्चेत्युक्तम् । अतः शाक्ती दीक्षा चैत्रे न विधेयेति प्रतिपादनाय 'चैत्रे दुःखाय दीक्षा स्या'दित्युक्तं पूर्णानन्देन, ग्रन्थस्यास्य शक्त्युपासनाप्रतिपादकत्वात् । राघवभट्टेनापि—

वैशाखपूर्व्वजे मासे मन्त्रारम्भः सुदुःसहः ।
वैशाखे धनदायी च ज्यैष्ठे मृत्युप्रदो भवेत् ॥
आषाढे पुत्रलाभाय श्रावणे शुभदो मतः ।
भाद्रे चैव ज्ञानहानिस्तथा सद्भिः प्रकीर्त्तिता ।
आश्विने सर्व्वसिद्धिश्च कार्त्तिको ज्ञानसिद्धिदः ॥
शुभकृन्मार्गशीर्षः स्यात् पौषो दुःखप्रदायकः ।
माघे मेधाविवृद्धिश्च फाल्गुने सर्व्ववश्यता ॥

इत्यादिभिः श्रीतत्त्वचिन्तामण्युक्तो दीक्षाकालक्रम एव प्रतिपादितः । परन्तु श्रीतत्त्वचिन्तामणि-तन्त्रान्तरादिषु आषाढस्य बन्धुनाशकत्वरूपानिष्टफलदातृत्वमुक्तम् । अत्र राघवभट्टधृतवचने तु आषाढे पुत्रलाभायेत्यनेन तस्येष्टफलदायकत्वमभिहितमिति विशेषः । राघवभट्टधृतसिद्धान्तशेखरे तु प्रागुक्तानां प्रशस्तानामपि मासानामुत्तमाधममध्यमत्वमुपपादितम् । यथा—

शरत्काले च वैशाखे दीक्षा श्रेष्ठफलप्रदा ।
फाल्गुने मार्गशीर्षे च ज्यैष्ठे दीक्षा च मध्यमा ॥
आषाढः श्रावणो माघः कनिष्ठाः सद्भिरादृताः ।
निन्दितश्चैत्रमासस्तु पौषो भाद्रपदस्तथा ॥ इति ।

तथाच मूले ज्यैष्ठादीनामुत्तमानन्तर्गतत्वादेव निषेध इति राघवभट्टानामाशयादवगम्यते ।

तथा, आषाढपूर्व्वमासे च आषाढे मार्गशीर्षके ।
दीक्षां न कारयेद्धीमानन्यमासे तु कारयेत् ॥

इति राघवभट्टधृतवचनेऽपि मार्गशीर्षस्य निषेध उत्तमानन्तर्गतत्वादेव ।

मरणं भवति ज्यैष्ठेऽप्याषाढे[1] बन्धुनाशनम् ।
समृद्धिः श्रावणे [2]नूनं भवेद् भाद्रपदे क्षयः ॥ १२४ ॥
प्रजानामाश्विने मासि [3]सर्व्वकामफलप्रदा ।
ज्ञानं स्यात् कार्त्तिके [4]मासि मार्गशीर्षे धनं महत् ॥ १२५ ॥
पौषे ज्ञानक्षयो माघे भवेन्मेधाविवर्द्धनम् ।
फाल्गुने सर्व्वसिद्धिः स्यान्मलमासं विवर्ज्जयेत् ॥ १२६ ॥

[ विषुवादिषु दीक्षायाः प्राशस्त्यम् ]

विषुवेऽप्ययनद्वन्द्वे संक्रान्त्यां मदनोत्सवे ।
दीक्षा कार्य्या प्रयत्नेन पवित्रे गुरुपर्व्वणि ॥ १२७ ॥

---

राघवभट्टधृतकालोत्तरे—

शरद्वसन्तयोर्योगे दीक्षाकर्म्मविधिः स्मृतः ।
तयोरसम्भवे वर्षा विनान्यत्र प्रशस्यते ॥

इत्यत्र वर्षा विनेत्यभिधानाद् आषाढश्रावणयोरप्राशस्त्ये लब्धे प्रागुक्तसिद्धान्तशेखर-वचनेन च तयोः कनिष्ठत्वे निर्णीते, आषाढे बन्धुनाशः स्यादिति मूलोक्त्या आषाढस्य सर्व्वथा परिहेयत्वम्, समृद्धिः श्रावणे नूनमिति मूलोक्त्या श्रावणस्य विहितत्वेऽपि तस्याप्राशस्त्यमिति पूर्व्वपूर्व्वग्रन्थपर्य्यालोचनयावगम्यते ।

१२७ । दीक्षायां प्रशस्तान् दिनविशेषानाह—विषुव इति । विषुवे विषुवद्वन्द्वे जल-विषुवमहाविषुवसंक्रान्त्योः, अयनद्वन्द्वे दक्षिणायनोत्तरायणसंक्रान्त्योः, संक्रान्त्यां साधारण्याम्, मदनोत्सवे कामत्रयोदश्याम्, कामचतुर्द्दश्यामिति केचित् । गुरुपर्व्वणीति वक्ष्यमाणे षष्ठीभाद्रपद इत्यादौ ।

अत्र संक्रान्त्यामित्यनेनैव विषुवायनयोरपि लाभे तयोः पृथगुपादानं तत्र तत्र फल-विशेषसूचनार्थम् । अत एव गन्धर्व्वतन्त्रे षडविंशपटले—

विषुवायनयोर्द्वन्द्वे आषाढे मदनोत्सवे ।
ग्रहणेऽर्कस्य चेन्दोर्व्वा दिनं तत्फलदं भवेत् ॥

इत्यत्र संक्रान्तिषु विषुवायनयोरेवोपादानं चन्द्रसूर्य्यग्रहणसमानकालीनदीक्षाजन्यफल-समफलजनकत्वसूचनायैव । तथा—

---

1. 'आषाढे' A 2. 'मासि' C. 3. 'दीक्षा सर्व्व-' C. 4. 'सौख्यं' A-B.

[ देवपर्व्वसु दीक्षायाः प्रशस्तिः ]

षष्ठी भाद्रपदे मासि इषे कृष्णा[1] चतुर्द्दशी ।
कार्त्तिके नवमी शुक्ला मार्गे शुक्ला[2] तृतीयिका ॥ १२८ ॥
पौषे तु[3] नवमी शुक्ला माघे वरचतुर्थिका ।
फाल्गुने नवमी शुक्ला चैत्रे कामत्रयोदशी ॥ १२९ ॥

---

ग्रहनक्षत्रयोगेषु विषुवेषूत्सवेषु च ।
अयनेषु च सर्व्वेषु योगः सर्व्वार्थसिद्धिदः ।

इति राघवभट्टधृतकालोत्तरवचने विषुवयोरयनयोश्च प्रत्येकं द्वित्वेऽपि तत्र तत्र बहुवचनोपादानं फलातिशयोपधायकत्वसूचनार्थमेव ।

मदनोत्सव इति कामचतुर्द्दश्याम् । गुरुपर्व्वणीति—वक्ष्यमाणदेवपर्व्वणीत्यर्थः ।

१२८-१२९ । दीक्षायां प्रशस्तानि देवपर्व्वाण्याह—षष्ठीत्यादि । चैत्रे कामत्रयोदशीति । अत्र समानानुपूर्व्वीके तन्त्रसारधृतरत्नावलीवचने त्रयोदशीत्यत्र चतुर्द्दशीति पाठो दृश्यते । तत्र श्रीमत्कृष्णानन्देन त्रयोदशीति केचिदित्युक्तम् । बृहन्नीलतन्त्रे तृतीयपटलेऽपि चैत्रे कामत्रयोदशीत्येव पाठः । ततश्चतुर्द्दशीत्रयोदश्योरुभयोरपि तन्त्रसारबृहन्नीलतन्त्रयोर्यथासंख्यं प्रशस्ततयाभिधानादत्र चैत्रे कामत्रयोदशीत्यनेन त्रयोदश्या लाभः । संक्रान्त्यां मदनोत्सवे इति प्रागुक्तवचनेन च चतुर्द्दश्याः प्राप्तिः । प्रागुक्तवचने मदनोत्सव इत्यनेन विशेषतोऽनिर्द्देशेऽपि अत्र कामत्रयोदशीति निर्द्देशात् तत्र मदनोत्सवशब्देन मदनचतुर्द्दशीति गम्यते । तदितरत्र मदनोत्सवासम्भवादिति ध्येयम् । तन्त्रसारे—

चैत्रे त्रयोदशी शुक्ला वैशाखैकादशी सिता ।
ज्यैष्ठे चतुर्द्दशी कृष्णा आषाढे नागपञ्चमी ॥
श्रावणैकादशी भाद्रे रोहिणीसहिताऽष्टमी ।
आश्विने च महापुण्या महाष्टम्यप्यभीष्टदा ॥
कार्त्तिके नवमी शुक्ला मार्गशीर्षे तथा सिता ।
षष्ठी चतुर्द्दशी पौषे माघेऽप्येकादशी सिता ।
फाल्गुने च सिता षष्ठी चेति कालविनिर्णयः ॥ इति ।

---

1. '-ष्ण-' C. 2. '-क्ल-' C. 3. 'च' C.

वैशाखे चाक्षया [1]शस्ता ज्यैष्ठे दशहरा [2]तथा ।
आषाढे पञ्चमी [3]शुक्ला श्रावणे कृष्णपञ्चमी ॥ १३० ॥
एतानि देवपर्व्वाणि तीर्थकोटिफलं लभेत् ।

[ सूर्य्योपराग-रविसंक्रमयोर्दीक्षायाः प्राशस्त्यम्, लग्नादिविचारनैरपेक्ष्यञ्च ]

निन्दितेष्वपि [4]मासेषु दीक्षोक्ता ग्रहणे शुभा ॥ १३१ ॥
सूर्य्यग्रहणकालस्य समानो नास्ति भूतले ।
तत्र यद् यत् कृतं कर्म्म तदनन्तफलं लभेत् ॥ १३२ ॥

---

१३१ । चन्द्रसूर्य्योपरागे दीक्षायाः प्राशस्त्यमाह—निन्दितेष्वपीति । निन्दितेष्वपीत्यपि-शब्देन वैशाखादिषु प्रशस्तेषु मासेषु दीक्षा शुभा भवत्येव । चैत्रादिषु निन्दितेष्वपि फलमिष्टमुत्पादयतीत्यवगन्तव्यम् । ग्रहणे शुभेति—सूर्य्यग्रहणे चन्द्रग्रहणे च ।

अयने विषुवे चैव ग्रहणे चन्द्रसूर्य्ययोः ।

इति तन्त्रसारधृतयोगिनीहृदयात् ।

१३२ । सूर्य्यग्रहणकालस्येति । ननु

न कुर्य्याच्छाक्तिकीं दीक्षामुपरागे विभावसोः ।
न कुर्य्याद् वैष्णवीं तान्तु यदि चन्द्रमसो ग्रहः ॥

इति तन्त्रसारधृतरुद्रजामलवचनेन सूर्य्योपरागे शाक्तदीक्षानिषेधादत्र सूर्य्यग्रहण-कालस्येत्यादि कथमुपपद्यते ? उच्यते—प्रागुक्तरुद्रजामलवचनं श्रीविद्येतरविषयम्

विषुवायनयोर्द्वन्द्वे आषाढे मदनोत्सवे ।
ग्रहणेऽर्कस्य चेन्दोर्व्वा दिनं तत्फलदं भवेत् ॥

इति श्रीविद्याप्रतिपादकगन्धर्व्वतन्त्रपञ्चविंशपटलवचनात् ।

श्रीपराकालिबीजानि लोपादौर्गश्च यो मनुः ।
सूर्य्यस्य ग्रहणे लब्धो नृणां मुक्तिफलप्रदः ॥

इति तन्त्रसारपरिगृहीत-रत्नावलीधृतजामलवचनात्

सूर्य्यग्रहणकाले तु नान्यदन्वेषितं भवेत् ।

इति श्रीविद्याप्रतिपादकयोगिनीहृदयाच्च । तस्मान्मूले विशिष्य सूर्य्योपरागस्योल्लेखस्तु प्राशस्त्यविशेषप्रतिपादनायेति ध्येयम् ।

---

1. 'चैव' A-B, 2. 'स्मृता' C. 3. 'कृष्णा ?' C. 4. 'कालेषु-' A-B.

रविसंक्रमणे चैव सूर्य्यस्य ग्रहणे तथा ।
तत्र लग्नादिकं किञ्चिन्न विचार्य्यं कथञ्चन ॥ १३३ ॥

[ महाष्टम्यां कालशुद्ध्यादिनैरपेक्ष्यम् ]

महाष्टम्यां विशेषेण धर्म्मकामार्थसिद्धये ।
नात्र कालविशुद्ध्यादि न च नक्षत्रशोधनम् ॥ १३४ ॥

[ श्रीगुरौ करुणया दीक्षयितुकामे, काश्यादौ च कालाकालविचारनैरपेक्ष्यम् ]

श्रीगुरोः करुणाकारे[1] तथा काश्यां प्रयागके ।
पुण्यतीर्थे[2] तथा क्षेत्रे देवीपीठचतुष्टये ।
तथा श्रीपर्व्वते मन्त्री कालाकालं न शोधयेत् ॥ १३५ ॥

---

१३४। महाष्टम्यामिति। महाष्टमीमाह—कालिकापुराणे एकोनषष्ट्यध्याये

आश्विने शुक्लपक्षस्य भवेद् या अष्टमी तिथिः ।
महाष्टमीति सा प्रोक्ता देव्याः प्रीतिकरी परा ॥ इति ।

विशेषमाह तन्त्रसारधृतविष्णुजामले च—

देवीबोधं समारभ्य यावत् स्यान्नवमी तिथिः ।
कृता तासु बुधैर्दीक्षा सर्व्वाभीष्टफलप्रदा ॥
शुक्लपक्षे विशेषेण तत्रापि तिथिरष्टमी ।
तत्रापि शारदी दुर्गा यत्र देवी गृहे गृहे ॥
तत्र दीक्षा प्रकर्त्तव्या मासर्क्षादीन् न शोधयेत् ।
तथा—बोधने चैव दुर्गायाः कालाकालं न शोधयेत् ॥
अशोकाख्याष्टमी यत्र रामाख्या नवमी तथा ॥

इति। एतेन बोधनवमीतो दुर्गानवमीं यावत् तिथिवारकालाकालादिविचारनैरपेक्ष्येण दीक्षायाः प्राशस्त्यमभिहितम्। तत्रापि महाष्टम्यां दीक्षायाः फलविशेषश्रवणान्मूले तस्या एवोल्लेखः।

१३५। श्रीगुरोरिति। करुणाकारे यदा गुरुः कृपया शिष्यमाहूय मन्त्रं दित्सति तदेत्यर्थः। तदुक्तं तन्त्रसारधृतसमयातन्त्रे—

---

1. '-ले-' A. B. 2. '-र्थकुरु-' C.

[ दीक्षायां वारनियमः ]

रविवारे भवेद् [1]वित्तं सोमे शान्तिप्रदा भवेत्।
आयुरङ्गारके हन्ति तत्र दीक्षां विवर्ज्जयेत्॥ १३६॥

---

शिष्यानाहूय गुरुणा कृपया दीयते यदि।
तत्र लग्नादिकं किञ्चिन्न विचार्य्यं कदाचन॥
सर्व्वे वारा ग्रहाः सर्व्वे नक्षत्राणि च राशयः।
यस्मिन्नहनि सन्तुष्टो गुरुः सर्व्वे शुभावहाः॥ इति।

पुण्य इत्यादि। तदुक्तं गन्धर्व्वतन्त्रे पञ्चविंशपटले—

पुण्यक्षेत्राणि कथ्यन्ते शृणु प्राधान्यतो मम।
पुण्यक्षेत्रं नदीतीरं गुहा पर्व्वतमस्तकम॥
तीर्थप्रदेशाः सिन्धूनां सङ्गमः पावनं वनम।
उद्यानानि विविक्तानि विल्वमूलं तटं गिरेः॥
तुलसीकाननं गोष्ठं वृषशून्यं शिवालयम्।
अश्वत्थामलकीमूलं गोशाला जलमध्यतः॥
देवतायतनं कूलं समुद्रस्य निजालयम।
साधने च प्रशस्तानि स्थानान्येतानि मन्त्रिणाम्॥ इति।

तन्त्रसारे च--

अथ वक्ष्यामि दीक्षायाः स्थानं तन्त्रानुसारतः।
गोशालायां गुरोर्गेहे देवागारे शिवालये।
पुण्यक्षेत्रे तथोद्याने नदीतीरे च मन्त्रवित्॥
धात्रीविल्वसमीपे च पर्व्वताग्रे गुहासु च।
गङ्गायास्तु तटे वापि कोटिकोटिगुणं भवेत्॥ इति।

देवीति। देवीपीठचतुष्टयन्तु—कामगिरिपीठम्, जालन्धरपीठम्, पूर्णगिरिपीठम्, उड्डीयानपीठञ्चेति। एतत् पञ्चदशप्रकाशे पीठन्यासनिरूपणावसरे ग्रन्थकारः स्वयमेव वक्ष्यतीति नात्र प्रपञ्चयते। स्थानेष्वेतेषु दीक्षाग्रहणे कालाकालविचारो नास्तीत्यर्थः। तदुक्तं राघवभट्टेन—

पुण्यतीर्थे कुरुक्षेत्रे देवीपीठचतुष्टये।
प्रयागे श्रीगिरौ काश्यां कालाकालं न शोधयेत्॥ इति।

१३६—१३७। दीक्षायां विहितान्निषिद्धांश्च वारान् नियमयति—रवीति। अत्र

---

1. 'दुःखं' A-C.

बुधे सौन्दर्य्यमाप्नोति ज्ञानं [1]तु स्याद् बृहस्पतौ ।
शुक्रे सौभाग्यमाप्नोति यशोहानिः शनैश्चरे ॥ १३७ ॥

[ दीक्षायां तिथिनियमः ]

चतुर्थी नवमी चैव चतुर्द्दश्यष्टमी तथा ।
पूर्णिमा पञ्चमी चैव द्वितीया सप्तमी तथा ॥ १३८ ॥
त्रयोदशी च दशमी प्रशस्ता सर्व्वसिद्धिदा ।

[ पक्षनियमः ]

शुक्लपक्षे शुभा दीक्षा कृष्णेऽप्या पञ्चमाद्दिनात् ॥ १३९ ॥

[ तत्रापि विशेषः ]

मुक्तिकामैः कृष्णपक्षे [2]भूतिकामैः सिते सदा ।
कृष्णाष्टम्यां चतुर्द्दश्यां दीक्षाकर्म्म शुभप्रदम् ॥ १४० ॥

[ नक्षत्रनियमः ]

अश्विन्यां सुखमाप्नोति भरण्यां मरणं ध्रुवम् ।
कृत्तिकायां भवेद्दुःखी रोहिण्यां वाक्पतिर्भवेत् ॥ १४१ ॥

---

दुःखमिति पादटिप्पनीधृतः पाठः प्रामादिकः, तन्त्रसारे 'रविवारे भवेद् वित्त'मिति पाठदर्शनात्, 'रवौ गुरौ सिते सोमे कर्त्तव्यं बुधवासरे' इति गन्धर्व्वतन्त्रषड्विंशपटलवचनेन, 'रवौ गुरौ सिते सोमे कर्त्तव्यं बुधशुक्रयोः' इति गौतमीयतन्त्रपञ्चमपटलवचनेन च रविवासरे दीक्षायाः प्राशस्त्याभिधानात् ।

१४० । मुक्तीति । तन्त्रसारकृता राघवभट्टेन च—

शुक्लपक्षेऽथ कृष्णे वा दीक्षा सर्व्वत्र शोभना ।

इति कालोत्तरवचनमुपजीव्य यदुभयोरेव पक्षयोः प्राशस्त्यमभिहितं तत्र विशेषमाह—मुक्तीति । ततश्चोक्तकामनाभेदेन दीक्षायां पक्षव्यवस्थेत्यवधेयम् ।

१४१—१४५ । दीक्षायां शुभाशुभानि नक्षत्राणि निर्द्दिशति—अश्विन्यामिति । नीलतन्त्रे षष्ठपटले—

---

1. 'स्यात्तु' B. C. 2 'भूमि-' B-C.

मृगशीर्षे [1]सुखप्राप्तिरार्द्रायां बन्धुनाशनम् ।
पुनर्वसौ भवेद्दुःखी पुष्यायां धनवान् भवेत् ॥ १४२ ॥
अश्लेषायां भवेद्रोगी मघायां मोक्षमाप्नुयात् ।
फल्गुनीद्वितये चैव यशोवृद्धिर्भवेत् किल ॥ १४३ ॥
हस्तायां धननाशः स्याच्चित्रा-स्वात्योः सुखी भवेत् ।
विशाखायां सुखं चानुराधायां बन्धुनाशनम् ॥ १४४ ॥
ज्येष्ठायां सुतवृद्धिः स्यान्मूलायां कीर्त्तिवर्द्धनम् ।
पूर्व्वाषाढोत्तराषाढे [2]भवेतां कीर्त्तिदायिके ॥ १४५ ॥

---

रोहिणी श्रवणार्द्रा च धनिष्ठा चोत्तरत्रयम् ।
पुष्या शतभिषा चैव दीक्षानक्षत्रमुच्यते ॥ इति

राघवभट्टधृतकारणे—

पौष्णं रोहिण्यथादित्यं श्रवणं चाश्विनी तथा ।
सावित्रं त्वाष्ट्रवायव्यमैन्द्रं नैर्ऋतमेव च ॥
तिष्यं त्रिरुत्तरार्द्रा च सौम्यं शिष्यत्रिजन्मभम् ।
नक्षत्राणि प्रशस्तानि दीक्षाकर्म्मणि सुव्रते ॥ इति

अत्र पौष्णं रेवती, आदित्यं पुनर्व्वसुः, सावित्रं हस्तः, सौम्यं मृग इति राघवभट्टव्याख्यानम् । त्वाष्ट्रं चित्रा, पवनः स्वाती ।

राघवभट्टस्तु वक्ष्यमाणरत्नावलीवचनेन परस्परसंयोगे तिथिनक्षत्रयोर्दुष्टत्वमाह । यथा—

प्रतिपत् पूर्व्वाषाढा च पञ्चमी कृत्तिका तथा ।
पूर्व्वा भाद्रपदा षष्ठी दशमी रोहिणी तथा ॥
द्वादशी सार्पनक्षत्रमर्य्यम्णा च त्रयोदशी ।
नक्षत्रलुप्ता इत्येते देवानामपि नाशनाः ॥

इत्यन्यद्वारा द्विसंयोगात्तिथिनक्षत्रदुष्टत्वं ज्योतिःशास्त्रादवसेयमित्याह ।
एवञ्च—

पूर्व्वाषाढोत्तराषाढे भवेतां कीर्त्तिदायिके ।

---

1, 'सुखावाप्ति-' C. 2. 'भवतः' A.

श्रवणायां भवेद्दुःखी धनिष्ठायां दरिद्रता ।
[1]बुद्धिः शतभिषायां स्यात् पूर्व्वभाद्रे सुखी भवेत् ॥ १४६ ॥
सौख्यं [2]चोत्तरभाद्रे च रेवत्यां कीर्त्तिवर्द्धनम् । १४७ ॥

[ लग्न-चन्द्र-तारा-नियमः ]

वृषे सिंहे च कन्यायां धनुर्मीनाख्यलग्नके[3] ।
चन्द्रतारानुकूले च कुर्य्याद्दीक्षाप्रवर्त्तनम् ॥ १४८ ॥
तृतीयैकादशषष्ठदशमस्थश्च चन्द्रमाः ।
जन्मचन्द्रः शुभः प्रोक्तो जन्मनक्षत्रवर्जितः ॥ १४९ ॥
शुक्लपक्षे द्वितीयस्तु [4]पञ्चमो नवमस्तथा ॥ १५० ॥
गोचरे ये ग्रहाः शुद्धास्तद्युक्तोऽपि शुभः शशी ।
शुभमध्यस्थितो [5]वापि चन्द्रमाः शुभदो भवेत् ॥ १५१ ॥
तृतीये सप्तमे चैव षोडशाष्टादशे तथा ।
ऊनविंशे[6] चैकविंशे त्रयोविंशे तथैव च ।
पञ्चविंशतिनक्षत्रे[7] शुभकर्म्म[8] विवर्ज्जयेत् ॥ १५२ ॥

---

इत्यनेन पूर्व्वाषाढायाः प्राशस्त्येऽपि—

प्रतिपदि कृता दीक्षा दुःखाय मरणाय च ।

इति तन्त्रसारधृतवचने प्रतिपदोऽनिष्टफलकत्वात् तत्संयोगे प्रशस्ताया अपि पूर्व्वाषाढाया दुष्टत्वम् । एवं पञ्चम्याः प्राशस्त्येऽपि अप्रशस्तायाः कृत्तिकायाः संयोगात्तस्या अप्राशस्त्यम् । यत्रोभयोरपि तिथिनक्षत्रयोः प्राशस्त्यं तत्रापि प्रागुक्तरीत्या तयोः संयोगोऽनिष्टं फलं प्रसूते—यथा दशमीरोहिण्योः स्वतः प्राशस्त्येऽपि परस्परसंयोगे तयोरुभयोरेवानिष्टफलानुबन्धित्वम् । एवमन्यत्रापि ।

---

1. 'बृद्धिः' A-B, 2. 'स्याच्चोत्तरभाद्रे-' A-B. 3. '-दिलग्नके' C. 4. 'नवमः पञ्चम-' 5. 'राशिः ?' A-B. 6. '-शैकविंशे च' C. 7. '-त्रे' A-C. 8. 'कर्म्मणि बर्ज्ज-' C.

[ प्रागुक्तमासादिशुद्धेर्मन्त्रदीक्षामात्रपरत्वम् ]

यन्मासतिथिवारादि-शोधनं प्रोक्तमेव हि ।
मन्त्रदीक्षापरं तत्तु विज्ञेयं साधकोत्तमैः ॥ १५३ ॥

[ विद्यादीक्षायान्तु तिथिवारादिशोधनापेक्षा नास्ति ]

विद्यादीक्षापरं नैव तिथि[1]वारविशोधनम् ।
यदैवेच्छा तदा दीक्षा गुरोराज्ञानुसारतः[2] ॥ १५४ ॥

[ अत्र प्रामाणिकागमनिर्णयः ]

योगिनीहृदयस्येति मतमालक्ष्य[3] कीर्त्तितम् ॥ १५५ ॥

[ मन्त्रपदव्युत्पत्तिः ]

मननात्त्राणनाच्चैवमद्वयस्यावबोधनात् ।
मन्त्र इत्युच्यते सम्यक् शिवाधिष्ठानतोऽपि च ॥ १५६ ॥
गुप्तोपदेशतो मन्त्रो मननात्त्राणनादपि ।
तेन मन्त्र इति प्रोक्तो देशिकैस्तन्त्रवेदिभिः[4] ॥ १५७ ॥

---

१५४ । राघवभट्टधृततत्त्वसागरसंहितायामपि—

तिथिं विनाऽपि दीक्षायां विशिष्टावसरं शृणु ।
दुर्लभे सद्गुरूणान्तु सकृत् सङ्ग उपस्थिते ॥
तदनुज्ञा यदा लब्धा स दीक्षावसरो महान् ।
ग्रामे वा यदि वाऽरण्ये क्षेत्रे वा दिवसे निशि ।
आगच्छति गुरुर्दैवाद् यदा दीक्षा तदा भवेत् ॥ इति ।

तथा—यदैवेच्छा तदा दीक्षा गुरोराज्ञानुसारतः ।
न तिथिर्न व्रतं होमो न स्नानं न जपक्रिया ।
दीक्षायाः कारणं किन्तु स्वेच्छावाप्ते तु सद्गुरौ ॥ इति ।

---

1. '-मासादि-' C. 2. '-रूपतः' C, 3. '-मालोक्य' B. '-मेतदुदाहृतम्' C.
4. '-र्मन्त्रवेदिभिः' A-B.

[ दशविधो मन्त्रसंस्कारः ]

मन्त्रस्य दश संस्काराः कथ्यन्ते तन्त्रवर्त्मना ।
जननं जीवनं पश्चात्ताडनं बोधनं [1]तथा ॥ १५८ ॥
अथाभिषेको विमलीकरणाप्यायने [2]पुनः ।
तर्पणं दीपनं गुप्तिर्दशैता मन्त्रसंस्क्रियाः ॥ १५९ ॥

[ तत्र जननाख्यः प्रथमसंस्कारः ]

कुङ्कुमेन विलिप्तायामथवा रोचनादिना ।
गोमयेन विलिप्तायां [3]कठिन्या कमलं लिखेत् ॥ १६० ॥

---

१५८। कुलार्णवे पञ्चदशोल्लासे—

कथ्यन्ते दश संस्कारा मन्त्रदोषहराः प्रिये ।

इत्यनेन वक्ष्यमाणमन्त्रसंस्कारस्य मन्त्रदोषनिवारकत्वात्,

शाणोल्लीढानि शस्त्राणि यथा स्युर्निशितानि वै ।
मन्त्राश्च स्फर्त्तिमायान्ति संस्कारैर्दशभिस्तथा ॥

इत्यनेन विशेषतो मन्त्रस्फूर्त्तिविधायकत्वाच्च मन्त्रस्य संस्कारानभिधातुं प्रतिजानीते—मन्त्रस्येति। ततश्च वक्ष्यमाणरीत्या कृतः संस्कारैश्छिन्नादिदोषदुष्टा अपि मन्त्राः शुभफलं प्रसुवते ; ते दोषास्तु छिन्नो रुद्धः शक्तिहीन इत्यादिना शारदायां द्वितीयपटले विशिष्याभिहिताः ।

१६०-१६२। कुङ्कुमेनेति । तदुक्तं तन्त्रसारधृतगौतमीये—

स्वर्णादिपात्रे संलिख्य मातृकायन्त्रमुत्तमम् ।
काश्मीरचन्दनेनापि भस्मना वाथ सुव्रते ॥
काश्मीरं शक्तिसंस्कारे चन्दनं वैष्णवे मनौ ।
शैवे भस्म समाख्यातं मातृकायन्त्रलेखने ॥ इति ।

अत्र मातृकायन्त्रेत्यभिधानात्,

मन्त्राणां मातृकायन्त्रादुद्धारो जननं स्मृतम् ।

इति तन्त्रसारोक्तेश्च प्रकृते कमलपदेन मातृकायन्त्रघटकं कमलमित्यवगन्तव्यम् । मातृकायन्त्रमाह तन्त्रसारे—

---

1. 'ततः' C, 2. 'तथा' C. 3. 'करिण्या' C.

द्विरष्टकेशरे वर्गं पूर्व्वतो युग्ममालिखेत् ।
कादिवर्गं सप्तपत्रे ल-क्षमष्टमपत्रके ॥ १६१ ॥
तदक्षरात्तु मन्त्राणामुद्धारो जननं स्मृतम् ॥ १६२ ॥

---

व्योमेन्द्वौरसनार्णकर्णिकमचां द्वन्द्वैः स्फुरत्केशरं
वर्गोल्लासिवसुच्छदं वसुमतीगेहेन संवेष्टितम् ।
आशास्वस्त्रिषु लान्तलाङ्गलियुजा क्षौणीपुरेणावृतं
यन्त्रं वर्णतनोः परं निगदितं सौभाग्यसम्पत्करम् ॥ इति ।

तथा तन्त्रसारधृतगौतमीये—

कादिमान्तान् पञ्च वर्गान् दिक्षु पूर्व्वादितो न्यसेत् ।
यादिवान्तान् शादिहान्ताल ल-क्षमीशे प्रविन्यसेत् ।
चतुरस्रं चतुर्द्वारं दिक्षु वं ठं विदिक्षु च ॥ इति ।

तथाचायं यन्त्रलेखनक्रमः । प्रथमं पद्मस्य कर्णिकामाह—व्योमेन्द्वौरसनार्णकर्णिकमिति । व्योम हकारः, इन्दुः सकारः, तत औकारः, रसनार्णो विसर्गः, व्योम इन्दुः औः रसनार्णश्च कर्णिकायां यस्येति विग्रहः । एतेन ह्सौः इति कर्णिकायां लेखनीयमित्यर्थः । केशरमाह—अचां स्वराणां द्वन्द्वैः स्फुरन्तः केशरा यस्य तत् । एतेन पूर्व्वादितोऽष्टसु केशरेषु द्विशः षोडशस्वरानीशानान्तान् लिखेदित्यर्थः । ततो दलान्याह—वर्गोल्लासिवसुच्छदं वर्गैरुल्लसन्तीति वर्गोल्लासिनः, वर्गोल्लासिनो वर्गविशिष्टाः वसवः अष्टौ छदा यस्य तत् । तथाच अष्टपत्राणि लिखित्वा पूर्व्वपत्रे कवर्गम्, आग्नेये चवर्गम्, दक्षिणे टवर्गम्, नैरृते तवर्गम्, पश्चिमे पवर्गम, वायव्ये य-र-ल-व-रूपं वर्णचतुष्टयम्, उत्तरे श-ष-स-ह-रूपं वर्णचतुष्टयं ईशाने ल-क्ष-वर्णद्वयं लिखेदित्यर्थः । आशासु दिक्षु अस्त्रिषु कोणेषु च यथाक्रमं लान्तो वकारः, लाङ्गली ठकारः तद्युक्तेन वसुमतीगेहेन भूपुरेण संवेष्टितम् । क्षौणीपुरेण द्वारचतुष्टयेनेति आगमतत्त्वविलासः । प्राचीनहस्तलिखिततन्त्रसारे तु क्षौणीपुरेणानुस्वारेणेति व्याख्यानं दृश्यते । तन्मते वकारठकारयोरनुस्वारयोगार्थं क्षौणीपुरेणेति पदमिति प्रतिभाति । तथाच चतुर्द्दिग्द्वारेषु वम, कोणेषु च ठमिति लिखेत् । इति मातृकायन्त्रक्रमः ।

प्रकृते तु कठिन्या कमलं लिखेदिति कमलमात्रलेखनाभिधानं मातृकायन्त्रान्तर्गतपद्मादेव वर्णोद्धारसूचनार्थम् । अत्र कमले तन्त्रसारोक्तक्रमेणैव वर्णस्थापनमाह—

[ जीवनाख्यो द्वितीयः ]

प्रणवान्तरितान् कृत्वा मन्त्रवर्णाञ् जपेत् सुधीः ।
एतज्जीवनमित्याहुः शतावृत्त्या च तान्त्रिकाः ॥ १६३ ॥

[ ताडनाख्यस्तृतीयः ]

भूर्जे मन्त्राक्षरं कृत्वा वायुबीजेन ताडयेत् ।
एकैकं शतवारन्तु मन्त्रश्च चन्दनाम्भसा ॥ १६४ ॥

[ बोधनाख्यश्चतुर्थः ]

मन्त्रं भूर्ज्जे समालिख्य करवीरप्रसूनकैः ।
तन्मन्त्राक्षरसंख्यातैर्हन्याद्रेफेण बोधनम् ॥ १६५ ॥

---

द्विरष्टेत्यादिना । द्विरष्टकेशरे वर्णमिति द्विरिति वारार्थे सुच । ततश्च पूर्व्वादिकेशरेषु द्वौ द्वौ कृत्वा युग्मं वर्णमालिखेदित्यर्थः । तदक्षरादिति, मन्त्राणां मन्त्रघटकवर्णानां तदक्षरादुद्धारो जननाख्यः संस्कार इत्यर्थः । तथाच राघवभट्टः "शुभे पीठादौ कुङ्कुमगोरोचनादिना मातृकाब्जं विलिख्य देयमन्त्रस्यैकैकमक्षरं मातृकाब्जत उद्धरणीयमि"ति ।

१६३ । प्रणवेति । प्रणवान्तरितान् प्रणवेन व्यवहितान् मन्त्रघटकवर्णान् जपेदित्यर्थः । यथा—यदा ह्रीं इति मन्त्रस्तदा ह ओं र ओं ईम् इति प्रणवान्तरणक्रमः । जपेदिति शतावृत्त्येत्यर्थः । तदुक्तं राघवभट्टेन---"प्रणवसहितांस्तु मन्त्रजवर्णान् प्रजपेच्छतावृत्त्यै तज्जीवनमुक्तमि"ति ।

१६४ । भूर्ज इति । वायुबीजेन यम इत्यनेन । ताडनस्य वाक्यन्तु—अमुकमन्त्रस्य अमुकाक्षरं यं ताडयामि इति आगमतत्त्वविलासः । ताडनं शतधा दशधा वा । तदुक्तं तन्त्रसारधृततन्त्रान्तरे—

ताडनं तारयेद्व वर्णानखिलांश्चन्दनाम्भसा ।
शतं वा दशधा वापि बोधयेत्तु मनं ततः ॥ इति ।

विश्वसारे—

दशधा शृणु देवेशि ताडनं परिकीर्त्तितम् ॥ इति ।

१६५ । मन्त्रमिति । भूर्जपत्रे देयमन्त्रं संलिख्य तन्मन्त्रघटकवर्णसमसंख्याकरक्त-करवीरपुष्पै रम् इति वह्निबीजेन हन्यात् । तदुक्तं राघवभट्टेन—"एतस्मिन् लिखितमन्त्र-

[ अभिषेकाख्यः पञ्चमः ]

मालतीकलिकाभिस्तु कुशमूलेन वा सुधीः।
भूर्ज्जे मन्त्रं समालिख्य मन्त्री मन्त्रार्णसंख्यया।
अश्वत्थपल्लवैर्मन्त्रमभिषिञ्चेद् विशुद्धये ॥ १६६ ॥

[ विमलीकरणाख्यः षष्ठः ]

सहजागन्तुमायाख्यं[1] ज्योतिर्मन्त्रेण निर्दहेत्।
मलत्रयं ततो मन्त्री मन्त्रोऽसौ [2]विमलो भवेत् ॥ १६७ ॥

---

वर्णसंख्याकरक्तकरवीरैस्तद्बोधनमुक्तं यद्धन्याद्वह्निबीजेने"ति। अत्र तन्मन्त्राक्षर-संख्यातैरित्यभिधानादेकेन पुष्पेणैकस्य मन्त्रवर्णस्य बोधनमिति सूचितम्। बोधन-वाक्यन्तु—अमुकमन्त्रस्यामुकाक्षरं हन्मि इत्यागमतत्त्वविलासः।

१६६। मालतीति। मालतीकलिकाभिः कुशमूलेन वा भूर्जपत्रे मन्त्रं लिखित्वा मन्त्रघटकवर्णसमसंख्यातैरश्वत्थपल्लवैस्तन्मन्त्रमभिषिञ्चेत्ततः स मन्त्रः शुद्धो भवतीत्यर्थः। तदुक्तं राघवभट्टधृतपिङ्गलामते—

मालतीकलिकाभिस्तु न्यस्यार्णं कर्णिकोपरि।
अश्वत्थपल्लवैः शुद्धैस्तन्मन्त्राक्षरसम्मितैः।
अभिषेकं प्रकुर्व्वीत स्वतन्त्रे विहितं यथा ॥

शारदातिलके द्वितीयपटले तु—

स्वतन्त्रोक्तविधानेन मन्त्री मन्त्रार्णसंख्यया।
अश्वत्थपल्लवैर्मन्त्रमभिषिञ्चेद् विशुद्धये ॥

इत्यत्र यत् स्वतन्त्रोक्तविधानेनेत्युक्तं तद् व्याख्यातं राघवभट्टेन "स्वतन्त्रोक्तविधानेन शैवमन्त्रे शिवतन्त्रानुसारात्, शक्तिमन्त्रे शक्तितन्त्रानुसारात्, विष्णुमन्त्रे वैष्णव-तन्त्रानुसारादि"ति। राघवभट्टे नाष्टोत्तरशतसंख्यातोऽभिषेक उक्तः निजतन्त्रेरित-मार्गादभिषिञ्चेत् पिप्पलप्रवालेन भूर्जे विलिखितमन्त्रं शतमष्टौ चाभिषेकोऽयमिति। अभिषेकवाक्यन्तु—अमुकमन्त्रस्यामुकाक्षरमभिषिञ्चामि नम इति राघवभट्टः। आगमतत्त्वविलासे तु अभिषिञ्चामीत्यन्तमेव। तत्र प्रत्येकं शतधा दशधा वाभिषेक उक्तः।

१६७। सहजेति। मन्त्री मन्त्ररहस्यज्ञः सहजागन्तुमायाख्यं सहजम् आगन्तुकं

---

1. '-याभि-' ? C. 1. 'निर्म्मलो' C.

तारं शिवाग्नितारान्तो बिन्दुर्ज्योतिर्मनुर्मतः ।

[ आप्यायनाख्यः सप्तमः ]

कुशोदकेन जप्तेन प्रत्यर्णं प्रोक्षणं मनोः ॥ १६८ ॥
अष्टोत्तरशतमिदं लिखित्वा भूर्जपत्रके ।
तेन मन्त्रेण विधिवदेतदाप्यायनं मतम् ॥ १६९ ॥

---

मायिकञ्च मन्त्रमलत्रयं ज्योतिर्मन्त्रेण निर्दहेदिति सम्बन्धः । तदुक्तं राघवभट्टधृत-पिङ्गलामते—

सहजागन्तुमायाख्यं ज्योतिर्मन्त्रेण निर्दहेत् ।
मन्त्रे मलत्रयं मन्त्री ततोऽसौ निर्मलो भवेत् ॥ इति ।

तन्त्रसारे तु—

सञ्चिन्त्य मनसा मन्त्रं सुषुम्णामूलमध्यतः ।
ज्योतिर्मन्त्रेण विधिवद्दहेन्मलत्रयं यतिः ॥

इति विमलीकरणस्वरूपं निरूप्य, मलत्रयमिति—मायिकं कार्म्मणमाणव्यञ्चेति । प्रपञ्चसारे—

मायिकं नाम योषोत्थं पौरुषं कार्म्मणं मलम् ।
आणव्यं तद्द्वयं प्रोक्तं निषिद्धं तन्मलत्रयम् ॥ इत्याह ।

"मन्त्रीत्यनेन मूलाधारात् कुण्डलिनीमुत्थाप्य तद्द्वारा दोषदाह" इति राघवभट्टः । अत एव तन्त्रसारकृतापि सुषुम्णामूलमध्यत इत्युक्तम् ।

ज्योतिर्मन्त्रेण निर्दहेदित्युक्तम्, तं ज्योतिर्मन्त्रमाह—तारमिति । तारं प्रणवः, शिवो हकारः, अग्नी रेफः, तारान्त औकारः बिन्दुरनुस्वारः तेन ह्रौं इति ज्योतिर्मन्त्रः । शारदायामपि—तारं व्योमाग्निमनुयुग दण्डी ज्योतिर्मनुर्मत इति । आगमतत्त्वविलासकृता तु ज्योतिर्मन्त्रोत्पन्नवह्निशिखया पञ्चविंशतिकृत्वो निर्दहनम्, अमुकमन्त्रस्यामुकं मलं निर्दहामीति तद्वाक्यञ्चाभिहितम् ।

१६८-१६९ । कुशेति । इदं मन्त्रं भूर्जपत्रके लिखित्वा जप्तेनाष्टोत्तरशतजप्तेन कुशोदकेन मनोर्देयमन्त्रस्य प्रत्यर्णं प्रतिवर्णं तेन देयमन्त्रेण अष्टोत्तरशतं प्रोक्षणम् एतदाप्यायनमिति सम्बन्धः । केचित्तु पूर्वं ज्योतिर्मन्त्राभिधानात् तेन ज्योतिर्मन्त्रेणेत्यर्थं

[ तर्पणाख्योऽष्टमः ]

मन्त्रेण वारिणा मन्त्रे तर्पणं तर्पणं मतम् ॥ १७० ॥

[ दीपनाख्यो नवमः ]

तारमायारमाबीजं मन्त्रस्यादौ नियोज्य च ।
सप्तधा प्रजपेन्मन्त्रमिति दीपनमीरितम् ॥ १७१ ॥

---

कल्पयन्ति । अत्र मीमांसितं राघवभट्टेन—"केचन तेन तन्मन्त्रेणेति ज्योतिर्मन्त्रेणेति व्याचक्षते, तदसद् ग्रन्थान्तरविरोधात्, तदुक्तम—आप्यायनं स्वजप्तैः प्रत्यर्णं कुशपयोभिः स्यात् । इति । तथाच स्वजप्तैरित्यस्य स्वं मन्त्रं तेन जप्तैः कुशपयोभिरित्यर्थः। प्रकृते तु तेन जप्तेन तेनैवाभ्युक्षणमिति ध्येयम् । अत एव राघवभट्टेन तेनेत्युभयत्र सम्बध्यते इत्युक्त्या स्वमतसमर्थनानुकूलं पिङ्गलामतप्रमाणमुपदर्शितम् । यथा—

अष्टोत्तरशतालब्धं विशुद्धं कुशवारिणा ।
आप्यायितो भवेन्मन्त्रः प्रत्यर्णं प्रोक्षितो यदि ॥ इति ।

अत्र प्रोक्षणं सप्तधेत्युक्तं राघवभट्टेन । आप्यायनस्य वाक्यन्तु अमुकमन्त्रस्यामुक-वर्णमाप्याययामि इत्युक्तमागमतत्त्वविलासे ।

१७० । मन्त्रेणेति । मन्त्रे लिखितमन्त्रोपरि मन्त्रेण देयमन्त्रेण वारिणा यत् तर्पणं तदेव तर्पणं तर्पणाख्यः संस्कार इत्यर्थः । इदमप्यष्टोत्तरं शतमिति राघवभट्टः । तन्त्रसारे—

मधुना शक्तिमन्त्रे तु वैष्णवे चेन्दुमज्जलैः ।
शैवे घृतेन दुग्धेन तर्पणं सम्यगीरितम् ॥

इन्दुमज्जलैः कर्पूरजलैरिति ।

१७१ । तारेति । तारः प्रणवः, माया ह्रीं, रमाबीजं श्रीं । बीजमित्यस्य प्रत्येक-मभिसम्बन्धः । मन्त्रस्येति देयमन्त्रस्येत्यर्थः । अत्र तन्त्रसारे शारदायाञ्च तारमाया-रमायोगे मनोर्दीपनमुच्यते इति सामान्यतोऽभिहितम् । तन्त्रसारधृतविश्वसारे च—

तारमायारमाबीजपुटितेन जपेन्मनुम् ।
शतमष्टोत्तरञ्चैव दीपयेत् साधकोत्तमः ॥

इत्यनेन तारमायाबीजपुटितस्य देयमन्त्रस्याष्टोत्तरशतजपो दीपनमित्याह । प्रकृते तु

[ गोपनाख्यो दशमः ]

जप्यमानस्य मन्त्रस्य गोपनं [1]त्वप्रकाशनम् ॥ १७२ ॥

[ दशसंस्कारोपसंहारः ]

संस्कारा दश संप्रोक्ताः सर्व्वतन्त्रेषु गोपिताः ।
यान् कृत्वा मन्त्रदानेन मन्त्री वाञ्छितमाप्नुयात् ॥ १७३ ॥

इति श्रीपूर्णानन्दपरमहंसविरचिते श्रीतत्त्वचिन्तामणौ
द्वितीयः प्रकाशः ॥ २ ॥

---

मन्त्रस्यादावेव तारमायारमाबीजनियोगः सप्तधा जपश्चेति प्रागुक्तविश्वसार-शारदा-वचनविरोधः। तदेवं मीमांस्यते—तारमायेत्यादिमूलवचने नियोज्य चेति चकारस्य आदावित्यनेनाभिसम्बन्धान्मन्त्रस्यादौ च नियोज्येत्यर्थे अन्ते च तारादिबीजानां नियोगोऽवगम्यते, ततश्च मन्त्रस्यादावन्ते च तारमायारमाबीजानां नियोगो ग्रन्थकृतोऽप्यभिमत इति न विश्वसारादिवचनविरोधः। अष्टोत्तरशतजपसप्तधाजपयोर्व्यवस्था तु शक्ताशक्तभेदेनेति निष्कर्षः।

---

1. 'न' A-B. तन्त्रसारेऽपि 'त्वप्रकाशन'मित्येव पाठः। 'न प्रकाशन'मिति पाठे छुप्सुपेति समासः।

## तृतीयः प्रकाशः

[ दीक्षाप्रकरणम् ]

[ तत्र विहितस्थानानि, दीपस्थाननिरूपणप्रयोजनम्, कूर्म्मचक्रम्,
वास्तुयागस्तदङ्गचतुःषष्टिपदवास्तुमण्डलं वलिमन्त्राश्च ]

[ दीक्षायां प्रशस्तस्थानानि ]

अथ वक्ष्यामि दीक्षायाः स्थानं तन्त्रानुसारतः ॥ १ ॥
गोशालायां गुरोर्गेहे देवागारे च कानने ।
पुण्यक्षेत्रे तथोद्याने नदीतीरे च मन्त्रवित् ॥ २ ॥
धात्रीविल्वसमीपे च पर्व्वताग्रे गुहासु च ।
गङ्गायां[1] तत्तटे वाऽपि कोटिकोटिगुणं भवेत् ॥ ३ ॥

[ दीपस्थाने जपादिविधिः ]

दीपस्थानं समाश्रित्य जपयागादिकं चरेत् ।

[ कूर्म्मचक्रनिरूपणप्रतिज्ञा ]

[2]अत एव कूर्म्मचक्रं वक्ष्यामि सिद्धिकारणम् ॥ ४ ॥

---

४। गोशालायामित्यादिना दीक्षायां यानि प्रशस्तस्थानानि निरूपितानि तेष्वपि दीपस्थानमेवाश्रित्य जपयागादिकं विधेयमित्यर्थस्य ज्ञापनाय दीक्षास्थाननिरूपणात् परमेव दीपस्थानं निरूपयति— दीपस्थानमित्यादिना । वक्ष्यमाणकूर्म्मस्य मुखस्थानमेव दीपस्थानमित्यग्रे वक्ष्यते । तद्दीपस्थानं कूर्म्मचक्रज्ञानाधीनमिति कूर्म्मचक्रं वक्तुं प्रतिजानीते—अत इति ।

---

1, '-यास्तु तटे' A-B. 2. 'अतः परं' C.

[ तत्र रेखापातक्रमो वर्णन्यासश्च ]

आदौ च वर्त्तुलं कृत्वा नव कोष्ठानि कारयेत् ।
नवभागं मध्यकोष्ठं[1] तथैव पूर्व्वतो लिखेत् ॥ ५ ॥

कवर्गादिसप्तवर्गं [2]ल-क्षावीशे तदन्तरम् ।
मध्येषु वसुकोष्ठेषु स्वरांश्च [3]युग्मशो लिखेत् ॥ ६ ॥

---

५। तत्रायं कूर्म्मचक्रनिर्म्माणक्रमः—प्रथमं कूर्म्माकृति वर्त्तुलं तन्मध्ये चतुरस्रम् तन्मध्ये द्वे पूर्व्वायते, द्वे चोत्तरायते, एवं वर्त्तुलमध्ये नव कोष्ठानि सम्पद्यन्ते । एतेषां नवकोष्ठानां मध्यकोष्ठसंज्ञा तद्बहिःस्थानान्तु बहिःकोष्ठत्वम इति प्रतिपादयितु माह—नवभागमिति । तत्र चक्रे वर्णन्यासमाह—तथैवेति । अन्तर्नवकोष्ठवद् बहिःकोष्ठे व्यञ्जनानां स्थापनं विधेयमिति सूचनार्थैतत् ।

६। कवर्गादीति। तथाच बहिः पूर्व्वकोष्ठे—कवर्गम्, आग्नेयकोष्ठे—चवर्गम् दक्षिणकोष्ठे—टवर्गम्, नैर्ऋतकोष्ठे—तवर्गम्, पश्चिमकोष्ठे—पवर्गम्, वायव्यकोष्ठे यादिचतुष्कम्, उत्तरकोष्ठे—शादिचतुष्कम्, ईशानकोष्ठे—ल-क्षवर्णद्वयमिति बहिःकोष्ठ पूरणक्रमः । एतदेव स्फुटमाह राघवभट्टधृतवचनम—

पूर्व्वकोष्ठे कवर्गस्य पञ्चकं मध्यतः क्रमात् ।
मध्यतोऽन्यत्र चाग्नेये चवर्गं चैवमेव हि ॥ इति ।

अन्तःकोष्ठप्रक्रियामाह—मध्येष्विति । तथाच पूर्व्वदिङ्मध्यकोष्ठतः प्रादक्षिण्येन प्रति कोष्ठं द्वौ द्वाविति क्रमेण षोडश स्वरान् लिखेदित्यर्थः । तदाह राघवभट्टः—

मध्यकोष्ठपुरोभागे अकारद्वयमालिखेत् ।
आग्नेय्यामिद्वयं विद्याद् याम्ये तूद्वयमालिखेत्॥ इत्यादिना ।

तन्त्रसारेऽपि—

चतुरस्रां भुवं भित्त्वा कोष्ठानां नवकं लिखेत् ।
पूर्व्वकोष्ठादि विलिखेत् सप्तवर्गाननुक्रमात् ।
ल-क्षमीशे मध्यकोष्ठे स्वरान् युग्मक्रमाल्लिखेत् ॥

---

1. '-ष्ठे' A. 2. 'ल-क्ष्मी-' A-B, 3. 'मुखतो' A, 'युग्मतो' B.

मध्यकोष्ठे क्षेत्रनाम चक्रं कूर्म्माख्यमुत्तमम् ।

[ मुखादिनिर्णयः ]

यस्मिन् कोष्ठे क्षेत्रनामपूर्व्ववर्णं मुखं स्मृतम् ॥ ७ ॥

---

इत्यनेनेयमेव वर्णस्थापनापरिपाटी निरूपिता । रुद्रजामलोत्तरखण्डतृतीयपटले तु—

मुण्डे स्वरा दक्षपादे कवर्गं वामपादके ।
चवर्गं कीर्त्तितं पश्चादधःपादे टवर्गकम् ॥ ७३ ॥

इत्यादिना ।

लाङ्गुले शक्रबीजञ्च तकारं लिङ्गमध्यके ।
लिखित्वा गणयेन्मन्त्री चक्रं कलिमलापहम् ॥ ७४ ॥

इत्यन्तेन कूर्म्मचक्रे वर्णानां न्यासोऽन्यथा निरूपितः ।

७ । मध्यकोष्ठ इति । प्रागुक्ताष्टकोष्ठान्तर्वर्त्ति यन्नवमं कोष्ठं तत्र क्षेत्रनाम लिखेदित्यर्थः । क्षेत्रन्तु यत्रोपविश्य साधको जपति तदेव । तत्र प्रशस्तक्षेत्राणि गोशालायां गुरोर्गेहे इत्यादिना प्रकाशप्रारम्भ एवाभिहितानि ।

शारदायां द्वितीयपटलेऽपि—

पुण्यक्षेत्रं नदीतीरं गुहा पर्व्वतमस्तकम् ।
तीर्थप्रदेशाः सिन्धूनां सङ्गमाः पावनं महत् ॥
उद्यानानि विविक्तानि विल्वमूलं तटं गिरेः ।
साधनेषु प्रशस्तानि स्थानान्येतानि मन्त्रिणाम् ॥ इति ।

एवमन्यत्रापि ।

अथ मुखस्यैव दीपस्थानत्वात् कूर्म्मस्य किं मुखं यज्ज्ञानाधीनं दीपस्थानज्ञानमित्याशङ्क्य मुखं निरूपयति—यस्मिन्निति । प्रागुक्तानां कूर्म्मान्तःकोष्ठानां मध्ये यस्मिन् कोष्ठे क्षेत्रनामपूर्व्ववर्णं साधनयोग्यस्थाननामप्रथमाक्षरं तन्मुखं स्मृतमित्यर्थः । तदुक्तं शारदायां द्वितीयपटले—

दिक्षु पूर्व्वादितो यत्र क्षेत्राख्याद्यक्षरं स्थितम् ।
मुखं तत्तस्य जानीयात् * * * इति ॥

एवञ्च कूर्म्मस्य मुखं साधनक्षेत्रप्रथमाक्षरानुसारेण निर्द्देश्यमिति स्थितम् ।

[1]मुखस्य पार्श्वयोः [2]पाणियुगं पार्श्वद्वयं [3]भवेत् ।
कुक्षिस्थानं पादयुगं[4] [5]तदन्ते पुच्छमीरितम् ॥ ८ ॥

[ कूर्म्मस्य तत्तदङ्गमाश्रित्य जपादौ फलभेदाः ]

मुखे कार्य्याणि सिध्यन्ति करे क्लेशमवाप्नुयात् ।
उदरे दुःखमधिकं पादयोर्हानिरुच्यते ।
पुच्छे तु धनहानिः स्याद्दीपस्थानं मुखं स्मृतम् ॥ ९ ॥

[ दीपस्थानेतरत्र दीक्षादौ दोषः ]

दीपस्थानं विना यो हि दीक्षाहोमादिकञ्चरेत् ।
तदेव निष्फलं विद्यादभिचाराय [6]कल्पते ॥ १० ॥

---

८-९। एवं मुखं निर्दिश्य कूर्म्मस्य हस्तादिकं निरूपयति—मुखस्येत्यादिना। मुखोभयपार्श्वस्थं कोष्ठद्वयं हस्तयुगलम्, उभयपार्श्वस्थं कोष्ठद्वयं कुक्षिस्थानम, तदध उभयतः कोष्ठद्वयं पादयुगलम्, तदधः कोष्ठं पुच्छमित्यर्थः। मुखादिभेदेन जपयागादीनामिष्टानिष्टफलजनकत्वमाह—मुख इत्यादिना।

१०। दीपस्थानमिति। अत्र राघवभट्टेन दीपशब्दार्थोऽन्यत्रोक्त इत्यभिधाय—

दीपोऽद्य [?] संप्रवक्ष्यामि यदुक्तं ब्रह्मजामले।
प्रासादग्रामगेहाद्या ज्ञेया येन शुभाशुभाः ॥
ककारादिक्षकारान्ता वर्णाः स्युर्द्दीपसंज्ञकाः।
स्वराः षोडश पीठाख्या ज्ञातव्या मन्त्रिणां वरैः ॥ इति।

तथा—पीठसंज्ञा स्वराणाञ्च दीपाः स्युर्व्यञ्जनानि हि।
स्थानं दीपाक्षरं यस्मिन् कोष्ठे तिष्ठति तद् भवेत्।
दीपस्थानं तदेतत् स्यात् कूर्म्मचक्रे न संशयः ॥

इति चोक्तम्। एतेन दिक्कोष्ठानि व्यञ्जनवर्णमयानि दीपस्थानानि। अन्तःस्थानि स्वरमयाण्यष्टकोष्ठानि तु पीठसंज्ञकानीत्यवगम्यते। एवञ्चानेन स्वराणां पीठरूपतया तेषां वर्जनमुक्तम्, प्रकृतेऽपि श्रीमत्पूर्णानन्देन 'उदरे दुःखमधिकम्' इति वदता उदरस्थानां स्वरवर्णानां वर्जनीयत्वमभिहितमिति न कश्चिद् विरोधः।

---

1. 'मुखस्ये'त्यतो 'मुखं स्मृत'मित्यन्तोंऽशः A-पुस्तके नास्ति। 2. 'चापि युग्मं' C. 3. 'ततः' B. 4. '-द्मं' C. 5. 'ततो॒ऽ-' C. 6. '-ल्प्य-' C.

दीक्षायां वास्तुयागस्य कर्त्तव्यता ]

अथ वक्ष्यामि दीक्षाङ्गं वास्तुयागपुरःसरम् ।
कृतेन येन विधिवद्दीक्षायाः फलमाप्नुयात् ॥ ११ ॥

[ वास्त्वङ्गाधिष्ठितत्रिपञ्चाशद्देवताकवलिनिर्णयः ]

राक्षसं वास्तुनामानं हत्वाधिष्ठाय तत्तनुम् ।
स्थिताः सुरास्त्रिपञ्चाशत्तेभ्यः पूर्व्वं वलिं हरेत् ॥ १२ ॥

---

लक्षणाचार्य्यैस्तु शारदायां द्वितीयपटले—

मुखं तत्तस्य जानीयाद्धस्तावुभयतः स्थितौ ।
कोष्ठे कुक्षी उभे पादौ द्वे शिष्टं पुच्छमीरितम् ॥

इत्यनेन क्षेत्रनामाद्यक्षरानुसारेण मुखादिनिर्णयमुपदिश्य

क्रमेणानेन विभजेन्मध्यस्थमपि भागतः ।

इत्यनेन मध्येष्वष्टसु कोष्ठेषु स्थितानां स्वरवर्णानामपि प्रागुक्तरीत्या मुखादिकल्पनमभिहितमिति प्रतीयते ।

अत्र साधक-क्षेत्रनामाद्यक्षरयोर्वैरमित्रत्वभावनादि विस्तरतोऽभिहितं राघवभट्टेन । प्रकृतेऽनभिधानात्तन्न प्रदर्श्यते ।

११ । एवं दीपस्थानं निरूप्य वास्तुयागं निरूपयितुमुपक्रमते—अथेति । दीक्षाङ्गमिति । वास्तुयागस्य दीक्षाङ्गत्वमाह राघवभट्टधृतमयमते—

शुभकर्म्मणि दीक्षायां मण्डपकरणे गृहादिविधिषु तथा ।
विहितो वास्तुवलिः स्याद् रक्षोविघ्नोपशान्तिसम्पद्भ्यः ॥

इति । वास्तुयागपुरःसरम इत्यस्य वास्तुयागः पुरःसरो यस्य दीक्षाङ्गस्य दीक्षाङ्गसमुदायस्येत्यर्थः । ततश्च दीक्षाङ्गपदेन मण्डपाधिवासनकुण्डमण्डलादीनां परिग्रहः ।

१२ । राक्षसमिति । वास्तुदेवतोत्पत्तिमाह राघवभट्टः—

कश्यपस्य गृहिणी तु सिंहिका राहुवास्तुतनयावजीजनत् ।
पूर्व्वजो हरिनिकृत्तकन्धरो दैवतैरवरजो निपातितः ॥

तन्त्रराजे त्रिंशपटले—

चतुरस्राकृतिः कश्चिदसुरः सर्व्वनाशकृत् ।
पुा तस्य वधायैव सर्व्वे देवाः समुद्यमम् ॥

कृत्वा निहन्तुमुद्युक्तास्तैरवध्योऽभवद् वरात् ।
आवयोस्तन्निरासाय मामेत्याकथयत्तदा ॥
कथयास्माकमधुना तद्वास्तुपुरुषस्य तु ।
दर्पशान्तिं न चेत्तेन विश्वमासीदुपद्रुतम् ॥
इत्युक्ते तैर्मया प्रोक्तं निधनं तस्य दुःशकम ।
खात्वा तमवनौ तस्य शरीरे स्थापयेत्तथा ॥
नित्यशश्च त्रिपञ्चाशन्निस्पन्दाक्रमणाय वै ।
नियोज्य तेषां ये पूजाविमुखास्तैः कृतानि तु ॥
सुकृतानि समादद्युर्दुष्कृतानि च कुर्व्वते ।
तस्मात्तेषामर्च्चनन्तु प्रत्यहं कुर्व्वतां सदा ॥
शुभान्येवाशु जायन्ते नैवाशुभकथापि च ।

इति । राघवभट्टधृतमहाकपिलपञ्चरात्रे च--

पूर्व्वमासीन्महानुग्रः सर्व्वभूतभयङ्करः ।
स देवैर्निहतो भूमौ स वास्तुपुरुषः स्मृतः ॥
यावद् भूमिः स्थिरा लोके तावद् वास्त्वसुरः स्थितः ।
संहारे तु लयं याति देवैः सर्व्वग्रहादिभिः ॥
विस्तारोऽप्यासमन्ताच्च शतकोटिस्तु यो जनः ।
संस्थितोऽसौ धरां व्याप्य प्रोत्तानः कृष्णवर्णकः ॥
जानू कूर्परकौ वास्तोर्वह्निवायुप्रकोष्ठगौ ।
पितृपादपुटश्चायमीशमूर्द्धा हृदञ्जलिः ।
ऊर्द्ध्वकेशः सुपीनश्च वर्त्तुलाक्षोऽसुराकृतिः ॥ इति ।

अत्र वास्तोरूर्द्ध्वमुखतोक्ता । अधोमुखतापि दृश्यते, तदाह राघवभट्टः—

वास्त्वीशनामा ह्यसुरोऽतिकायो देवैः पुरा दत्तवरोऽभिपूज्यः ।
शेते स भूम्यां प्रविसार्य्य पादौ हस्तौ तथाधोवदनः सदैव ॥ इति ।

एवं स्थितेऽप्यूर्द्ध्वाधोवदनत्वरूपविरोधे तत्परीहार उपपादितो राघवभट्टधृतसोमशम्भुना—

आकुञ्चितकरं वास्तुमुत्तानमसुराकृतिम् ।
स्मरेत् पूजासु कुड्यादिनिविशे त्वधराननम् ।

[ वलिकर्म्मणि वास्तुमण्डलम् ]

वलिमण्डलमेतेषां वक्ष्यामि विघ्ननाशनम् ॥ १३ ॥

[ मण्डलस्यास्य चतुरस्रत्वं हस्तप्रमाणत्वञ्च ]

चतुरस्रां भुवं [1]कुर्य्यान्मन्त्री हस्तप्रमाणतः ।

[ हस्तप्रमाणम् ]

चतुर्विंशत्यङ्गुलाढ्यं[2] हस्तं [3]तन्त्रविदो विदुः ॥ १४ ॥

[ मानाङ्गुलप्रमाणम् ]

कर्त्तुर्दक्षिणहस्तस्य मध्यमाङ्गुलिपर्व्वणः ।
मध्यस्य [4]दैर्घ्यमानेन मानाङ्गुलमुदीरितम्[5] ॥ १५ ॥

[ तस्यैव क्रमान्तरम् ]

कर्म्मकर्त्तुर्निजाङ्गुष्ठतिर्य्यङ्मानेन मध्यमम् ।
प्रमाणाङ्गुलमेतत्तु सर्व्वकर्म्मणि चापरे ॥ १६ ॥

---

इत्यनेन । एवञ्च गृहादिकरण एव वास्तोरधोमुखत्वं प्रकृते तु तस्योर्द्ध्वमुखत्वमेव । स्थिता इति । त्रिपञ्चाशत् सुराः तत्तनुमधिष्ठाय स्थिताः । हत्वापि तत्तनुं परिहाय न गता इत्यर्थः । उपपादितमेतद्राघवभट्टधृतमहाकपिलपञ्चरात्रे—

सर्व्वान् देवांस्तु कार्य्येषु पूजयेद्वास्तुसंस्थितान् ।
तेनासौ वर्त्तते नो चेदुत्तिष्ठेन्माधवाज्ञया ॥ इति ।

एवञ्च प्रागुक्तरीत्या वास्तुनामानं राक्षसं हत्वा तत्तनुम् अधिष्ठाय त्रिपञ्चाशत् सुरा वक्ष्यमाणलक्षणाः स्थितास्तेभ्यः पूर्व्वं दीक्षाया इति शेषः बलिं हरेद् वक्ष्यमाणक्रमेणेति शेषः ।

१३ । अथेदानीं वास्तुवलिमण्डलं वक्तुमुपक्रमते—वलीत्यादिना ।

१४ । तदाह—चतुरस्रामिति । हस्तप्रमाणतश्चतुरस्रां भुवं कुर्य्यादित्यर्थः । किं हस्तप्रमाणमित्यत आह—चतुर्व्विंशेति ।

१६ । हस्तपरिमाणज्ञानमङ्गुलपरिमाणज्ञानसापेक्षमित्यतोऽङ्गुलपरिमाणभेदानाह—कर्म्मकर्त्तुरित्यादिना ।

---

1. 'कृत्वा म-' C. 2. '-लं वा' A. 3. 'म-' C. 4. 'दीर्घ-' C. 5. 'मिती'रितम् C.

[ तस्यैव क्रमान्तरम् ]

जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः ।
प्रथमं तत् प्रमाणानां त्रसरेणुः प्रचक्ष्यते ॥ १७ ॥
त्रसरेणुस्तु विज्ञेयो ह्यष्टौ ते परमाणवः ।
त्रसरेणव एते स्युरष्टौ रेणुस्तु स स्मृतः ॥ १८ ॥
ते रेणवस्तथा [2]ह्यष्टौ बालाग्रं तत् [3]स्मृतं बुधैः ।
[4]बालाग्रैरष्टभिर्लिख्या यूका लिख्याष्टकं स्मृतम् ॥ १९ ॥

---

१७। अथ किं स्वरूपं मानाङ्गुलस्य येन हस्तप्रमाणं निश्चीयेतेत्यत आह— जालेत्यादि। तथाच—अष्टौ परमाणवस्त्रसरेणुरष्टौ त्रसरेणवो रेणुरष्टौ रेणवो बालाग्रमष्टौ बालाग्राणि लिख्याष्टौ लिख्या यूका अष्टौ यूका यवोऽष्टौ यवा अङ्गुलमित्यङ्गुलपरिमाणमित्यर्थः ।

अत्र परमाणोरेव प्रथमपरिमाणत्वस्य सर्व्ववादिसिद्धत्वेऽपि 'प्रथमं तत्प्रमाणाना'-मित्यादिना त्रसरेणोर्यत् प्रथमपरिमाणत्वाभिधानं तदिन्द्रियग्राह्यप्रथमपरिमाणपरमित्यवधेयम ।

हयशीर्षपञ्चरात्रे सप्तमपटले तु—

परमाण्वष्टकेनैव रथरेणुः प्रकीर्त्तितः ।
रथरेण्वष्टकेनैव त्रसरेणुः प्रकीर्त्यते ॥ २ ॥
तैरष्टभिस्तु बालाग्रं लिख्या तैरष्टभिः स्मृता ।
ताभिर्यूकाष्टभिः ख्याता ताश्चाष्टौ यवमध्यकम् ।
यवाष्टकैरङ्गुलं स्याच्चतुर्विंशाङ्गुलः करः ॥ इत्यादि । [ २—४ ]

एतन्मते चतुःषष्ट्या परमाणुभिरेकस्त्रसरेणुर्भवति । एवमन्यत्रान्यथापि परिमाणनिरूपणप्रकारभेदा दृश्यन्ते ।

---

1. 'सं-' C. 2. 'चाष्टौ' C. 3. 'बुधैः स्मृतम' C. 4. 'बालाग्राण्यष्टलिख्या तु' C.

अष्टौ यूका यवं प्राहुरङ्गुलन्तु यवाष्टकम् ।
मानाङ्गुलप्रमाणन्तु प्रोक्तमित्यपरं बुधैः ॥ २० ॥

[ अस्यैव प्रकारान्तरम् ]

तिर्य्यग्यवोदराण्यष्टावृज्वग्रा व्रीहयस्त्रयः ।
मानाङ्गुलप्रमाणन्तु केचिदिच्छन्ति तान्त्रिकाः ॥ २१ ॥

[ प्रागुक्तहस्तमानस्य विषयः ]

स्रुक्स्रुवे मण्डले कुण्डे हस्तमानं समीरितम् ॥ २२ ॥

[ वास्तुमण्डलपदविभागपरिपाटी ]

अथ तद् विभजेन्मन्त्री चतुःषष्टिपदं यथा ॥ २३ ॥

---

२२। स्रुक्-स्रुव इत्यादि। हयशीर्षे सप्तमपटलेऽपि एवंक्रमेण हस्तपरिमाणं निरूप्य—

एतैर्हस्तैस्तु कुर्व्वीत प्रासादं यागमण्डपम् ।
प्रतिमां पिण्डिकां वाऽपि कुण्डं मण्डलमेव च ॥
तोरणञ्च ध्वजञ्चैव गुणाढ्यं पात्रमेव च ।
मानहीनं न कर्त्तव्यं फलप्राप्त्यर्थिभिः सदा ॥

इत्यभिहितम्। राघवभट्टधृतमहाकपिलपञ्चरात्रे तु—

गृहप्रासादकूपानां मण्डपस्य जलस्य च ।
वास्तुमण्डलकं कार्य्यमष्टहस्तन्तु नापरम् ॥

इत्यनेन मण्डलस्याष्टहस्तपरिमाणत्वमाह। प्रकृते तु हस्तप्रमाणत इत्यभिधानाद्दीक्षाङ्गवास्तुयागे वास्तुमण्डलस्यैकहस्तप्रमाणत्वमिति स्थितम्।

२३। एवं हस्तपरिमाणं निरूप्य वास्तुमण्डलपदविभागपरिपाटीं प्रदर्शयति—अथेति। तन्मण्डलं चतुःषष्टिपदं यथा स्यात्तथा विभजेदिति सम्बन्धः।

ननु हयशीर्षपञ्चरात्रस्यादिकाण्डेऽष्टमपटले—

चतुःषष्टिन्तु प्रासादे एकाशीतिं गृहे सदा ।

वास्तुयागतत्त्वधृतदेवीपुराणे—

प्रासादे च चतुःषष्टिरेकाशीतिपदं गृहे ।

तथा राघवभट्टधृतसोमशम्भौ—

कुर्य्यात् कोष्ठचतुःषष्टिं प्रासादे वास्तुमण्डलम् ।
गृहेऽपि वर्त्तयेद्वास्तुं किन्त्वेकाशीतिकोष्ठकैः ॥

इत्यादिवचनैश्चतुःषष्टिपदवास्तुमण्डलस्य प्रासादमात्रपरत्वाभिधानादिह दीक्षा मण्डपनिर्म्माणाङ्गभूतवास्तुमण्डलस्य चतुःषष्टिपदत्वं कथमुपपद्यते ? उच्यते— राघवभट्टधृतमहाकपिलपञ्चरात्रे—

एकाशीतिपदं कृत्वा वास्तुञ्चैव गृहादिषु ।
चतुःषष्टिपदो वास्तुः प्रासादे ब्रह्मणा स्मृतः ॥

इत्यभिधाय,

मण्डपान् प्रवरान् वक्ष्ये प्रासादस्यानुरूपतः ।

इत्युक्तम् । एवञ्च प्रासादे वास्तुमण्डलस्य चतुःषष्टिपदतया तदानुरूप्येण मण्डपे मण्डलस्यास्य चतुःषष्टिपदत्वं युक्तमित्यतः सुष्ठूक्तं 'चतुःषष्टिपदं यथे'ति । अथ चतुःषष्टिपदविभागस्य क्रमं स्फुटमाह हयशीर्षपञ्चरात्रे आदिकाण्डेऽष्टमपटले—

चतुरस्रीकृते क्षेत्रे ह्यष्टधोभयभाजिते ।
कोणरेखां ततो दत्त्वा सुरभागांस्तु कल्पयेत् ॥ इति ।

एवञ्च भूमिं प्रथमं चतुरस्रां विधाय तामुभयतोऽष्टधा विभजेत् । तत्र च विभजने नव पूर्व्वायता नव चोत्तरायता रेखाः कर्त्तव्याः । एवं कृते चतुःषष्टिः पदानि सम्पद्यन्ते । मूले चतुःषष्टिपदं यथेत्यनेनायमेव पदविभागक्रमो दर्शितः । आसाञ्च पूर्व्वोत्तरायतानां रेखाणां संज्ञाः प्रदर्शिता विश्वकर्म्मणा । तत्र पूर्व्वायतानामुत्तरादिक्रमेण—

श्रिया यशोमती कान्ता सुप्रियाऽपि परा शिवा ।
सुशोभा सघना ज्ञेया तथेभा नवमी स्मृता ॥ [ विश्व० ५।२२।२३ ]

इत्येताः संज्ञाः । उत्तरायतानां पश्चिमादिक्रमेण संज्ञास्तु—

धन्या धरा विशाला च स्थिरा रूपा गदा निशा ।
विभवा प्रभवा चान्या सौम्यासौम्याश्रिताः शिराः ॥ इत्येताः ।

[ विश्व—५।२३।२४ ]

तथाच वास्तुराक्षसस्य चतुरस्राकृतेरेताः पूर्व्वोत्तरायता रेखाः शिरास्ताश्च मण्डल स्वरूपवास्तुशरीरेऽवश्यमेव स्थापनीया इत्युक्तं भवति ।

ईशानाद्राक्षसं यावद् यावदग्नेः प्रभञ्जनम् ।
कर्णसूत्रद्वयं दद्यात्ततो ब्रह्माणमर्च्चयेत् ॥ २४ ॥
मध्यकोष्ठचतुष्के तु पूर्व्वादिदिक्चतुष्टये ।
चतुश्चतुःप्रकोष्ठेषु[1] यजेदर्य्यमणन्तथा ॥ २५ ॥
विवस्वन्तं ततो मित्रं महीधरमतः परम् ।
कोणार्द्धद्वन्द्वकोष्ठेषु[2] [3]वह्न्यादि[4]पदतः [5]पुनः ॥ २६ ॥
उपर्य्यधःक्रमेणैव पूजये[6]न्मन्त्रवित्तमः ।
सावित्रं[7] सवितारञ्च शक्रमिन्द्रजयं [8]पुनः ॥ २७ ॥
रुद्रं रुद्रजयं विद्वानापश्चाप्यापवत्सकम् ।
[9]कर्णसूत्रादुभयतः कोष्ठद्वन्द्वेषु साधकः ॥ २८ ॥
शर्व्वं गुहन्त्व[10]र्य्यमणं [11]जम्भकं [12]पिलिपिञ्जकम् ।
चरकीञ्च विदारीञ्च पूतनामर्च्चयेत्ततः ॥ २९ ॥

---

२४-२९ । ईशानादिति । प्रागुक्तचतुःषष्टिपदमण्डले ईशानान्निर्ऋ त्यन्तमग्नेर्वाय्वन्तञ्च कर्णसूत्रद्वयं दद्यादेकैकश इति शेषः । कर्णशब्दः कोणवाचितया शिल्पशास्त्रे प्रसिद्धः ।

एवं कर्णसूत्रपातं निरूप्य मण्डलमध्यतः क्रमेण ब्रह्मादीनामर्च्चनमुपदिशति—तत इति । मध्यकोष्ठचतुष्के ब्रह्माणमर्च्चयेत् । ततो दिग्देवस्थानमाह—पूर्व्वादीति । तथाच मध्यस्थब्रह्मकोष्ठचतुष्कस्य पूर्व्वकोष्ठचतुष्के—अर्य्यमणम्, दक्षिणकोष्ठचतुष्के—विवस्वन्तम्, पश्चिमकोष्ठचतुष्के—मित्रम्, उत्तरकोष्ठचतुष्के—महीधरं पूजयेदित्यर्थः ।

कोणार्द्धेति । वह्न्यादिपदतः कोणार्द्धद्वन्द्वकोष्ठेषु उपर्य्यधःक्रमेणैव सावित्रादीन् पूजयेत् । एवञ्च ब्रह्मपदचतुष्काद्बहिः प्रथमकोणकोष्ठचतुष्केषु पूर्व्वकृतकोणरेखा-विभाजितेषु उपर्य्यधःक्रमेण सावित्रादीनां पूजनमनेन विधीयते । तथाच अग्नि-कोणार्द्धद्वन्द्वस्य ऊर्द्ध्वार्द्धे सावित्रमधोऽर्द्धे सवितारम्, एवं नैर्ऋ तकोष्ठार्द्धयोरूर्द्ध्वे

---

1. 'तु' B. 2. 'तु' B. 3. 'वस्वा-' B. 4. '-परितः' C. 5. 'तथा' C. 6. '-ञ्च सदा नरः' C. 7. '-त्रीं' B. 8. 'तथा' C. 9. 'तत्कर्णसूत्रो-' C. 10. '-ञ्चा-' C. 11. 'जम्भनं' C. 12. 'पिलिपिच्छकम् ?' C.

पूर्व्वादिदिक्चतुष्केषु[1] सार्द्धाद्यन्तपदेष्विमान् ।
अष्टावष्टौ विभागेन क्रमादीशावधिं[2] सुधीः ॥ ३० ॥
यजेदीशानपर्जन्यौ जयन्तं शक्रभास्करौ ।
सत्यो वृषान्तरीक्षौ तत्तदग्निपूषणावथ ॥ ३१ ॥
वितथाश्रमसंज्ञश्च गृहरक्षकसंज्ञकः ।
गन्धर्व्वो भृङ्गराजश्च मृगश्च निर्ऋतिस्तथा ॥ ३२ ॥
दौवारिकाख्यः सुग्रीवो वरुणः पुष्पदन्तकः ।
असुरः शोषरोगौ च वायुनागाख्यमुख्यकाः ॥ ३३ ॥
सोमभल्लाटका[3]वर्गलाख्योऽदित्यदितीति च ॥ ३४ ॥

---

इन्द्रम्, अध इन्द्रजयम्, वायव्यकोष्ठार्द्धयोरूर्द्ध्वं रुद्रम्, अधो रुद्रजयम्, एवमीशानकोष्ठार्द्धयोरूर्द्ध्वं आपम् अध आपवत्सं पूजयेदित्यर्थः ।

अथ तदूर्द्ध्वस्थकोणकोष्ठचतुष्कप्रक्रियामाह— कर्णेति । एतदपि पूर्वोक्तरीत्या कोणरेखाविभाजितेष्वष्टसु कोष्ठेषु विधेयम् । एवञ्च आग्नेये—ऊर्द्ध्वं शर्व्वम्, तदधो गुहम् । नैर्ऋते—ऊर्द्ध्वं अर्य्यमणमधो जम्भकम् । वायव्ये— ऊर्द्ध्वं पिलिपिञ्जमधश्चरकीम् । ऐशाने—ऊर्द्ध्वं विदारीमधः पूतनामर्च्चयेदिति पर्य्यवस्यति ।

अत्र विशेषानभिधानेऽपि पूर्वं वह्न्यादिपदत इत्यभिधानात् शर्व्वादीनां पूजनमपि वह्न्यादिक्रमेणैव कर्त्तव्यम् ।

३०-३४ । अथ पूर्व्वादिदिक्कोष्ठप्रक्रियामाह—पूर्व्वादीति । सार्द्धाद्यन्तपदेषु—आदि च अन्तश्च आद्यन्ते अर्द्धे च ते आद्यन्ते चेति अर्द्धाद्यन्ते ताभ्यां सह वर्त्तमानानि यानि पदानि तेषु इति समासः । एवञ्च प्रागुक्तकोणरेखाविभाजिताद्यन्तकोणार्धपदेषु पदान्तरेषु च पूर्व्वादिक्रमेणेशानपर्य्यन्तं प्रतिदिशमष्टाविति क्रमेण वक्ष्यमाणान् ईशानादिदेवानर्च्चयेदित्यर्थः ।

तथाच पूर्व्वस्यामीशानकोणार्द्धे ईशम्, ततः पर्जन्यम्, ततो जयन्तम्, ततः शक्रम्, ततो भास्करम्, ततः सत्यम्, ततोऽग्निकोणपूर्व्वार्द्धेऽन्तरीक्षम् इत्येतान् पूजयेत् । तदुक्तं शारदायां तृतीयपटले—

क्रमादीशानपर्जन्यजयन्ताः शक्रभास्करौ ।
सत्यो वृषान्तरीक्षौ च दिशि प्राच्यामवस्थिताः ॥ इति ।

---

1. 'तु' B. 2. '-धिः' A. C. 3. '-वर्गदितिश्चादितिरेव च' A.

[ रजोभिर्मण्डलपदानामापूरणं वलिदानोपक्रमश्च ]

उक्तानामपि देवानां पदान्यापूर्य्य पञ्चभिः।
रजोभिस्तेष्वथो तेभ्यो दद्यादेभिर्व्वलीनथ ॥ ३५ ॥

---

एवं दक्षिणस्याम् अग्निकोणार्द्धे—अग्निं ततश्च क्रमेण पूषणं वितथम अथमं ( यमं ) गृहरक्षकं गन्धर्व्वं भृङ्गराजं मृगञ्च पूजयेत्। तदुक्तं तत्रैव—

अग्निः पूषा च वितथो यमश्च गृहरक्षकः।
गन्धर्व्वो भृङ्गराजश्च मृगो दक्षिणदिग्गताः॥

एवं प्रतीच्याम—नैऋर्तकोणार्धतो वायुकोणार्धं यावत् क्रमेण निऋर्तिः, दौवारिकः, सुग्रीवः, वरुणः, पुष्पदन्तः, असुरः, शोषः ( शेषः ), रोगः ( रागः ) इत्यते पूजनीयाः। तदुक्तं तत्रैव—

निऋर्तिर्दौवारिकश्च सुग्रीववरुणौ ततः।
पुष्पदन्तासुरौ शेषरोगौ प्रत्यगदिशि स्थिताः॥ इति।

एवमुत्तरस्याम्—वायुकोणार्द्धत ईशानकोणार्धं यावत् क्रमेण—वायुः, नागः, मुख्यः, सोमः, भल्लाटः, अर्गलः, दितिः, अदितिश्चेत्येते पूजनीयाः। तदुक्तं तत्रैव—

वायुर्नागश्च मुख्यश्च सोमो भल्लाट एव च।
अर्गलाख्यो दित्यदिती कुबेरस्य दिशि स्थिताः॥ इति।

अयं चतुःषष्टिमण्डलदेवतास्थापनक्रमो दर्शितः।

हयशीर्षपञ्चरात्रे तु ब्रह्मस्थानादूर्द्ध्वं कोणकोष्ठद्वये ईशानादिक्रमेणापापवत्सादीनां पूजनमभिधाय पूर्व्वादिक्रमेणैशानीं यावन्मण्डलाद् बहिः स्कन्दादीनां चरक्यन्तानां पूजनमभिहितम।

अत्र विशेषानभिधानेऽपि पूर्व्वस्यां जयन्तसत्ययोर्दक्षिणस्यां वितथगन्धर्व्वयोः प्रतीच्यां सुग्रीवासुरयोरुत्तरस्याञ्च मुख्यार्गलयोरुर्द्ध्वाधो द्विपदस्थत्वमवगन्तव्यम्। स्फुटमभिहितमेतद्धयशीर्षपञ्चरात्रेऽष्टमपटले—"द्विपदस्थो जयो ज्ञेयः" तथा "द्विपदः सत्य उच्यते" इत्यादिभिः।

३५। उक्तानामिति। पञ्चभी रजोभिरित्यनेन—

पीतं हरिद्राचूर्णं स्यात् सितं तण्डलसम्भवम्।
कुसुम्भचर्णमरुणं कृष्णं दग्धपुलाकजम।
विल्वादिपत्रजं श्याममित्युक्तं वर्णपञ्चकम्॥ १२३—१२४॥

इति शारदातिलकतृतीयपटलोक्तरूपैः पञ्चविधरजोभिः पदानामापूरणमुपदिष्टम्। तत्रापि मण्डलपदस्थदेवानां यो यद्वर्णस्तत्तद्देवताधिष्ठितानां तत्तत्पदानामापूरणमपि तेन तेनैव वर्णेन विधेयम्। मण्डलपदस्थानां देवानां वर्णानाह—राघवभट्टधृत-तन्त्रान्तरे—

मरीचिः श्वेतवर्णः स्याद् विवस्वानुक्तवर्णकः।
शातकुम्भसमो मित्रः कृष्णवर्णस्तु भूधरः।
सविता नीलवर्णाभः सावित्रो धूमविग्रहः।
इन्द्रश्चारुणवर्णाभः शुक्लश्चेन्द्रजयस्तथा।
रुद्रः प्रवालसदृशः पीतो रुद्रजयस्तथा।
आपो गोक्षीरधवल आपवत्सो जपाद्युतिः।
ईशानः क्षीरधवलः पर्जन्योऽञ्जनसन्निभः।
जयन्तोऽञ्जनसङ्काशो महेन्द्रश्चामलद्युतिः।
आदित्यो रक्तवर्णः स्यात् सत्यकश्चित्रवर्णकः।
वृषो बन्धूकपुष्पाभः कुन्दाभश्चान्तरीक्षकः॥
उद्यद्दिनकराभोऽग्निः पूषा रक्ताब्जसन्निभः।
वितथश्चेन्द्रचापाभो विद्युद्वर्णो गृहक्षतः॥
यमश्चाञ्जनसङ्काशो गन्धर्व्वः पद्मरागवत्।
भृङ्गराजस्तु भृङ्गाभो मृगो जीमूतसन्निभः॥
निर्ऋतिः पावकाभश्च पीतो दौवारिकः स्मृतः।
सुग्रीवो नीलकण्ठाभश्चन्द्राभः पुष्पदन्तकः॥
वरुणः स्फटिकाभाङ्गो भृङ्गाभश्चासुरो मतः।
शेषश्चोत्पलसङ्काशः पापयक्ष्मेन्द्रनीलवत्॥
वायुः कृष्णाभवर्णः स्यान्नागः शङ्खेन्दुसन्निभः।
मुख्यो मौक्तिकसङ्काशो भल्लाटः श्वेतपद्मवत्॥
सोमः स्फटिकसङ्काशोऽर्गलो रक्तोत्पलद्युतिः।
दितिः कुन्देन्दुधवला कपिला चादितिः स्मृता॥
चरकी शङ्खसदृशी विदारी पावकद्युतिः।
पूतना हिमसङ्काशा मेघाभा पिलपिच्छिका।

तथा— सितो रक्तश्च पीतश्च कृष्णः स्कन्दादिका ग्रहाः॥ इति।

[ तत्र ब्रह्मणो बलिमन्त्रः ]

पायसौदनलाजैश्च युक्तं धूप[1]प्रसूनकैः ।
अक्षतं तिलसंयुक्तं माषभक्तादिमण्डितम् ।
गृहाणेमं बलिं ब्रह्मन् वास्तुदोषं प्रणाशय (१) ॥ ३६ ॥

[ अर्य्यम्णः ]

गन्धादिशर्करापूपं पायसोपरि संस्थितम् ।
अर्य्यमन् वै गृहाणेमं सर्व्वदोषं प्रणाशय (२) ॥ ३७ ॥

[ विवस्वतः ]

चन्दनाद्यर्च्चितं नाथ कर्पूरागुरुमण्डितम् ।
विवस्वन् वै गृहाणेमं सर्व्वदोषं प्रणाशय (३) ॥ ३८ ॥

[ मित्रस्य ]

सगुडं पायसं नाथ पुष्पादि[2]सुसमन्वितम् ।
गृहाणेमं बलिं [3]हृद्यं मित्र शान्तिं प्रयच्छ मे (४) ॥ ३९ ॥

---

अत्र तन्त्रान्तरवचने व्युत्क्रमेण निर्द्देशेऽपि पददेवतानां वर्णभेदा एभ्यो ज्ञातव्याः । तन्त्रान्तरे ब्रह्मणो वर्णो न निरूपितः, स तु—

सर्व्वमध्ये यजेत् सम्यग् ब्रह्माणं कमलोद्भवम ।
हेमाभञ्च चतुर्वक्त्रं वेदाध्ययनशीलिनम् ॥ १५ ॥

इति तन्त्रराजत्रिंशपटलवचनादवगन्तव्यः ।

हयशीर्षपञ्चरात्रादौ बहिरारभ्य क्रमेण ब्रह्मान्तानां देवानां पूजनमभिहितम् । अत्र तु प्रथममेव मध्यचतुष्कस्थस्य ब्रह्मणस्ततः क्रमेण तत्तद्बहिर्देवानां पूजनमुपदिष्टमिति विशेषः । तन्त्रराजशारदातिलकादावप्येवमेव ।

---

1. '-पैः' C. 2. '-क्षीरसंयुतम्' B. 3. 'मित्र नित्यं' B.

[ महीधरस्य ]

माषौदनं समांसञ्च गन्धादिक्षीरसंयुतम् ।
गृहाणेमं महीभृत् त्वं सर्व्वदोषं प्रणाशय (५) ॥ ४० ॥

[ बाह्यदेवतानां बलिः ]

एवमन्तर्बलीन्[1] दत्त्वा[2]चान्येषामीशतो हरेत् ।
दक्षावर्त्तक्रमेणैव बलिः सामान्यभाषितः ॥ ४१ ॥
सर्व्वेषां खलु वास्तूनां विशेषः पदनिर्णयः ॥ ४२ ॥

[ तत्रापस्य ]

क्षीरखण्डसमायुक्तं पुष्पादिभिः सुशोभितम् ।
गृहाणेमं बलिं ह्यद्य[3]माप शान्तिं प्रयच्छ मे (६) ॥ ४३ ॥

[ आपवत्सस्य ]

दधीदं गुडसंमिश्रं गन्धादिस्रक्[4]-सुमण्डितम् ।
गृहाणेमं बलिं वत्स विघ्नमत्र प्रणाशय (७) ॥ ४४ ॥

---

४२। एवमन्तर्देवतापञ्चकानां पूजनक्रमेणैव बलिर्विधेयः। आपादीनां बहिर्देवानां प्रागुक्तरीत्या केषाञ्चिदग्न्यादिक्रमेण, केषाञ्चन वा ईशादीनाम ईशानादिक्रमेणैव पूजनं विहितम्। बलिस्तु सर्व्वेषामेव ईशानादिक्रमेण प्रादक्षिण्येन कर्त्तव्य इत्येवाह अन्येषामीशतो हरेदित्यादिना। राघवभट्टेनापि महीधरान्तानाम् ईशानादिक्रमेण पूजनं बलिञ्चाभिधाय, "एवमन्तर्बलिं दत्त्वा अन्येषां सर्व्वेषां यद्यप्यर्च्चा आग्नेयादिक्रमेण तथापीशानादिक्रमेण बलिं दद्याद् वचनानुरोधात्। वचनं यथा—

ईशादिदक्षिणावर्त्तो बलिः सामान्यभाषितः।
सर्व्वेषां खलु वास्तूनां विशेषः पदनिर्णयः॥ इति"

अनेन बाह्यदेवतानामीशानादिक्रमेणैव बलिरभिहितः।

---

1. '-लिं' B. 2. 'अन्येषा-' B. 3. '-द्यं पाप' C. 4. 'भिः सुसंयुतम्' B. 5. 'दिक्षु' C.

[ सावित्रस्य ]

पुष्पादिकुशपानीयं कर्पूरा[1]गुरुवासितम् ।
सावित्र वै गृहाणेमं शान्तिमत्र प्रयच्छ मे (८) ॥ ४५ ॥

[ सवितुः ]

पिष्टकं सगुडं नाथ रक्तगन्धादिशोभितम् ।
गृहाणेमं वलिं सूर्य्य विघ्नमत्र प्रणाशय (९) ॥ ४६ ॥

[ इन्द्रस्य ]

सितमन्नं तथा पुष्पं कुङ्कुमादिसमन्वितम् ।
गृहाणेमं वलिं हव्यं शक्रदेव नमोऽस्तु ते (१०) ॥ ४७ ॥

[ इन्द्रजयस्य ]

ओदनं घृतसंयुक्तं वस्त्रगन्धादिमण्डितम् ।
गृहाणेमं वलिं हव्यमिन्द्रजय नमोऽस्तु ते (११) ॥ ४८ ॥

[ रुद्रस्य ]

पक्वापक्वमिदं मांसं वस्त्रपुष्पादिसंयुतम् ।
गृहाणेमं वलिं हव्यं रुद्रदेव [2]नमोऽस्तु ते (१२) ॥ ४९ ॥

[ रुद्रजयस्य ]

हृन्मांसं सघृतं पक्वं गन्धपुष्पादिवासितम्[3] ।
गृहाणेमं वलिं रुद्रजय[4] स्वस्ति [5]नमोऽस्तु ते (१३) ॥ ५० ॥

[ विदार्य्याः ]

रक्तपुष्पं समांसं वै रक्त[6]वस्त्रादिसंयुतम् ।
विदारि वै गृहाणेमं रक्षोविघ्नं विनाशय (१४) ॥ ५१ ॥

[ पूतनायाः ]

[7]पित्तरक्तास्थिसंयुक्तं रक्तगन्धादिमण्डितम् ।
गृहाणेमं पूतने त्वं रक्षोविघ्नं विनाशय (१५) ॥ ५२ ॥

1. '-दिह-' C. 2. 'नमाम्यहम्' A-C. 3. 'संयुतम्' C. 4. '-जयं' 5. 'प्रयच्छ मे' A-B. 6. 'पुष्पादिवासितम्' A-B. 7. 'पीतवस्त्रादि-' C.

[ शर्वस्य ]

सघृतं माषभक्तञ्च गन्धवस्त्राद्यलङ्कृतम् ।
वलिं गृहाण [1]शर्व्वेमं रक्षोविघ्नं विनाशय (१६) ॥ ५३ ॥

[ स्कन्दस्य ]

मांस[2]पुष्पादिसंयुक्तं माषभक्तोपरि स्थितम् ।
गृहाणेमं वलिं स्कन्द रक्षोविघ्नं विनाशय (१७) ॥ ५४ ॥

[ अर्य्यम्णः ]

समांसं पिष्टकैर्युक्तं पक्वमांसोदकान्वितम् ।
अर्य्यमन् वै गृहाणेमं रक्षोविघ्नं विनाशय (१८) ॥ ५५ ॥

[ जम्भकस्य ]

रक्तमांसौदनं [3]मत्स्य-गन्धधूपसमन्वितम् ।
[4]जम्भक त्वं गृहाणेमं रक्षोविघ्नं विनाशय (१९) ॥ ५६ ॥

[ पिलिपिञ्जस्य ]

[5]छागकर्णान्वितं मांसं [6]वस्त्रगन्धादिसंयुतम् ।
पिलिपिञ्ज[7] गृहाणेमं रक्षोविघ्नं प्रणाशय (२०) ॥ ५७ ॥

[ चरक्याः ]

घृतेन साधितं मांसं [8]वस्त्रगन्धादिसंयुतम् ।
चरकि वै गृहाणेमं रक्षोविघ्नं [9]प्रणाशय (२१) ॥ ५८ ॥

[ ईशानस्य ]

सघृतश्चाक्षतान्नञ्च[10] रक्तवस्त्राद्यलङ्कृतम् ।
गृहाणेमं वलिं [11]त्वीश वास्तुदोषापहारकम् (२२) ॥ ५९ ॥

---

1. 'सर्व्वेश' A-C. 2. '-पुष्पसमा-' B. मन्त्रोऽयं A-पुस्तके नास्ति । 3. 'वत्स' C. 4. 'कुम्भकर्ण' A. 5. मन्त्रोऽयं A-पुस्तके नास्ति । 6. 'रक्तपुष्पादि-' C. 7. '-ञ्छ' C. 8. 'रक्त-' A-C. 9. 'विना-' B. 10. '-क्षतश्चान्नं' A-B. 11. 'वीर' ?' A.

[ पर्जन्यस्य ]

[1]उत्पलं पायसैर्युक्तं [2]रक्तवस्त्रादिसंयुतम् ।
गृहाणेमं वलिं हृद्यं [3]देवराज नमोऽस्तु ते (२३) ॥ ६० ॥

[ जयन्तस्य ]

[4]पञ्चहस्तं सुपीतञ्च ध्वजं भक्तादिमण्डितम् ।
गृहाणेमं वलिं हृद्यं विष्णुसुत नमोऽस्तु ते (२४) ॥ ६१ ॥

[ इन्द्रस्य ]

[5]ओदनं घृतसंयुक्तं पञ्चरत्नादिमण्डितम् ।
गृहाणेमं वलिं हृद्यं [6]देवराज नमोऽस्तु ते (२५) ॥ ६२ ॥

[ सूर्य्यस्य ]

[7]रक्तपुष्पयुतं भक्तं रक्तगन्धादिभिर्युतम् ।
गृहाणेमं वलिं हृद्यं भास्कर त्वं नमोऽस्तु ते (२६) ॥ ६३ ॥

[ सत्यस्य ]

वितानं धूम्रवर्णाभं गन्धादिकसुशोभितम् ।
रक्तयुक्तं गृहाणेमं वलिं सत्य नमोऽस्तु ते (२७) ॥ ६४ ॥

[ वृषस्य ]

इदन्तु मांसभक्तं वै गन्धपुष्पादिपूजितम् ।
गृहाणेमं वृष वलिं वास्तुदोषं प्रणाशय (२८) ॥ ६५ ॥

[ अन्तरीक्षस्य ]

इदन्तु [8]शाकुलं मांसं नैवेद्यादिसुसंयुतम् ।
गृहाणेमं वलिं हृद्यं व्योम शान्तिं प्रयच्छ मे (२९) ॥ ६६ ॥

---

1. 'उत्पलैः पनसै-' A. 2. 'वस्त्रादिकसमन्वितम्' C. 3. 'भास्कर त्वं ?' A. 4. मन्त्रोऽयं A-पुस्तके नास्ति । 5. मन्त्रोऽयं A-पुस्तके नास्ति । 6. 'भास्कर त्वं' ? C. 7. मन्त्रोऽयं A-C-पुस्तकयोर्नास्ति । 8. 'शाद्वलं' A, साद्वलं C.

[ हुताशनस्य ]

सुवर्णं पिष्टकञ्चाथ [1]वस्त्रगन्धादिभिर्युतम् ।
घृतान्वितं गृहाणेमं सप्तजिह्व नमोऽस्तु ते (३०) ॥ ६७ ॥

[ पूष्णः ]

क्षीरं [2]लाजादिसंयुक्तं रक्तपुष्पादिमण्डितम् ।
गृहाणेमं वलिं हृद्यं पूषदेव नमोऽस्तु ते (३१) ॥ ६८ ॥

[ वितथस्य ]

दधिगन्धादिभिर्युक्तं पीतपुष्पैः समन्वितम् ।
वलिं वितथ गृह्णे मं विघ्नमत्र प्रणाशय (३२) ॥ ६९ ॥

[ यमराजस्य ]

आरक्तं मधुसंप्लुतं वस्त्रादिपरिमण्डितम् ।
गृहाणेमं वलिं हृद्यं [3]यमराज नमोऽस्तु ते (३३) ॥ ७० ॥

[ गृहरक्षस्य ]

[4]पक्वमांसौदनं [5]चर्व्यं पीतवस्त्रादिमण्डितम् ।
प्रीतिकरं गृहाणेमं गृहरक्ष[6] नमोऽस्तु ते (३४) ॥ ७१ ॥

[ गन्धर्व्वस्य ]

नानागन्धसमायुक्तं रक्तधूपादिभिर्युतम् ।
वलिं गृहाण गन्धर्व्व [7]सर्व्वदोषं प्रणाशय (३५) ॥ ७२ ॥

[ भृङ्गराजस्य ]

इमान्तु शाकुनीं जिह्वां माषभक्तोपरि स्थिताम् ।
गृहाणेमं वलिं भृङ्गराज शान्तिं प्रयच्छ मे (३६) ॥ ७३ ॥

---

1. 'रक्त-' A-B. 2. 'लाजसमा-' C. 3. 'रस- ?' A. 4. 'पक्व' A. 5. 'नवनीत-' A. 'नवपीत-' C. 6. '-भक्ष' A. 7. 'सर्व' A.

[ मृगस्य ]

[1]यवं घृततिलोपेतं गन्धपुष्पादिभिर्युतम्।
गृहाणेमं वलिं हृद्यं मृगदेव नमोऽस्तु ते (३७) ॥ ७४ ॥

[ निरृतेः ]

शर्करासंयुतं खण्डं रक्तगन्धादिमण्डितम्।
प्रीतो वलिं गृहाणेमं सर्व्वदोषं प्रणाशय (३८) ॥ ७५ ॥

[ दौवारिकस्य ]

चन्दनागुरुकाष्ठञ्च गन्धपुष्पादिभिर्युतम्।
गृहाणेमं वलिं हृद्यं [2]दौवारिक नमोऽस्तु ते (३९) ॥ ७६ ॥

[ सुग्रीवस्य ]

इदन्तु पायसं नाथ गन्धपुष्पादिमण्डितम्।
सुग्रीव वै गृहाणेमं वलिं शान्तिं प्रयच्छ मे (४०) ॥ ७७ ॥

[ वरुणस्य ]

यवाग्राणि[3] च गोदुग्धं भक्तोपरि सुशोभितम्[4]।
गृहाणेमं वलिं हृद्यं जलराज नमोऽस्तु ते (४१) ॥ ७८ ॥

[ पुष्पदन्तस्य ]

कुशान्तःस्थं[5] माषभक्तं घृतगन्धादिसंयुतम्।
पुष्पदन्त गृहाणेमं सर्व्वदोषं प्रणाशय (४२) ॥ ७९ ॥

[ असुरस्य ]

मधुना सहितं पिष्टं गन्धाद्यैरुपशोभितम्।
वलिं गृहाणासुरेन्द्र[6] सर्व्वदोषं प्रणाशय (४३) ॥ ८० ॥

---

1. 'एवं यव-' C. 2 'जलराज' ? B. 3. '-न्नानि' C. 4. '-भनम्' C. 5. '-स्तरं' C.
6. '-ण सर्व्वेन्द्र' ? B, '-ण सुरेन्द्र ? A.

[ शेषस्य ]

घृतमन्नसमायुक्तं कर्पूरादिसमन्वितम् ।
गृहाणेमं वलिं [1]शेष सर्व्वशान्तिं प्रयच्छ मे (४४) ॥ ८१ ॥

[ रोगस्य ]

यवजं तण्डुलं नाथ गन्धपुष्पादिशोभितम् ।
गृहाणेमं वलिं रोग सर्व्वदोषं [2]प्रणाशय (४५) ॥ ८२ ॥

[ वायोः ]

सघृतं मण्डकश्चेदमन्नाद्यैरुपशोभितम् ।
गृहाणेमं वलिं हृद्यं मृगवाह[3] नमोऽस्तु ते (४६) ॥ ८३ ॥

[ नागराजस्य ]

इदन्तु कृशरश्चान्नं[4] [5]गन्धपुष्पादिमण्डितम् ।
[6]नागराज गृहाणेमं विघ्नमत्र प्रणाशय (४७) ॥ ८४ ॥

[ मुख्यस्य ]

नारिकेलोदकं भक्तं पीतवस्त्रादि[7]संयुतम् ।
गृहाणेमं वलिं मुख्य वास्तुदोषं प्रणाशय (४८) ॥ ८५ ॥

[ सोमस्य ]

ओदनं मधुना मिश्रं नानापूजोपशोभितम् ।
गृहाणेमं वलिं सोम सर्व्वदोषं प्रणाशय (४९) ॥ ८६ ॥

[ भल्लाटस्य ]

ओदनं घृतसंमिश्रं गन्धपुष्पसमन्वितम् ।
गृहाणेमं वलिं हृद्यं भल्लाट त्वं नमोऽस्तु ते (५०) ॥ ८७ ॥

---

८३ । मृगवाहो वायुस्तस्य सम्बुद्धिः ।

---

1. 'शोष' A-C. 2. 'विनाशय' B. 3 '-राज' A-B. 4. '-रान्नं सद्' A. 5. '-दुग्धगन्धादि' C. 6. 'पातालेश A-C-B. 7. '-शोभितम्' C.

[ अर्गलस्य ]

माषान्नन्तु घृताभ्यक्तं गन्धपुष्पादिमण्डितम्।
गृहाणेमं वलिं हृद्यमर्गलाख्य नमोऽस्तु ते (५१) ॥ ८८ ॥

[ अदितेः ]

[1]पूलिकां मधुसंमिश्रां वस्त्रगन्धादि[2]संयुताम्।
गृहाणेमं वलिं हृद्यं देवमातर्नमोऽस्तु ते (५२) ॥ ८९ ॥

[ दितेः ]

क्षीरखण्डसमायुक्तं नाना[3]पूजोपशोभितम्।
दैत्यमातर्गृहाणेमं सर्व्वदोषं प्रणाशय (५३) ॥ ९० ॥

[ वलिदाने साधारणं क्रमान्तरम् ]

अथवा पायसान्नैस्तु[4] [5]सर्व्वेषां वलिमाहरेत्।
नामादौ प्रणवं दत्त्वा नमोऽन्तेन च मन्त्रवित् ॥ ९१ ॥

[ उपसंहारः ]

अयं वास्तुवलिः प्रोक्तः सर्व्वविघ्नविनाशकः ॥ ९२ ॥

---

८९। पूलिका पिष्टकविशेषः, 'पूली' इति वङ्गेषु यस्याः प्रसिद्धिः।

९१। अथवेति। एतत्तु कल्पान्तरम्। पूर्व्वं 'दद्यादेभिर्वलीनर्थे'त्यनेन प्रागुक्तवलिमन्त्रैर्वलिमन्त्रोक्तैरुपचारैश्च वलिरुपदिष्टः। तदलाभे तु पायसान्नैर्वलिः कर्त्तव्य इति। तदुक्तं गौतमीयतन्त्रे पञ्चमपटले—

पायसैर्मधुरैः सर्व्वान् संयजेन्मधुरान्वितान्।
तत्तद्द्रव्यैर्वा मतिमान् पूजयेद्दोषशान्तये ॥ इति।

अत्र कल्पे वलिमन्त्रं निरूपयति—नामादाविति। नाम्न आदौ प्रणवः अन्ते च नम इति। एवञ्च नमःशब्दयोगान्नाम्नश्चतुर्थ्यन्ततापि लभ्यते, तेन—"एषः पायसवलिः ओं ब्रह्मणे नमः" इति वलिक्रमः।

---

1. 'पोलिकामधुसंमिश्रं' A-B. 2. 'संयुतम्' B, 'मण्डितम्' A. ३. '-पुष्पो-' B. 4. '-न्नन्तु' A-C. 5. 'वलिदानं समाचरेत्' A-B.

[ तत्र तत्र वलेरननुष्ठाने दोषश्रवणात्तस्य कर्त्तव्यता ]

गृहादिकरणे यैस्तु नार्च्चितं वास्तुदैवतम् ।
तत्र शून्यं भवेत् सर्व्वं रक्षोविघ्नादिभिर्युतम् ।
तस्माद् वास्त्वर्च्चनं कार्य्यं सर्व्वसम्पदभीप्सुभिः ॥ ६३ ॥

इति श्रीपूर्णानन्दपरमहंसविरचिते श्रीतत्त्वचिन्तामणौ

तृतीयः प्रकाशः ॥ ३ ॥

---

६३। अत्रादिपदेन मण्डपादीनां परिग्रहः ।

# चतुर्थः प्रकाशः

[ मण्डपनिर्म्माणम्, तोरणध्वजपताकादिनिरूपणम्, अङ्कुरार्पणमङ्कुरपरीक्षा च ]

[ मण्डपयोग्यदिनस्थानादिनिरूपणम् ]

**अथ लग्ने [1]शुभे [2]स्थाने तुषाङ्गारविवर्जिते ।**
**निःशर्करे[3] शल्यहीने[4] तृणादिरहिते समे ॥ १ ॥**

---

१। पूर्व्वप्रकाशे वास्तुवलिप्रक्रियान्तमभिधाय प्रकाशेऽस्मिन् मण्डपनिर्माणक्रमे वाच्ये तदनुगुणं लग्नादिकं स्थानादिकञ्च निरूपयति—अथेति ।

अथ वास्तुदेवतावलिसमापनानन्तरम् । शुभे लग्न इति । अत्र लग्न इति वारादीनामुपलक्षणम् । तदुक्तं शारदायां तृतीयपटले—

नक्षत्रराशिवाराणामनुकूले शुभेऽहनि ।
ततो भूमितले शुद्धे तुषाङ्गारविवर्जिते ।
पुण्याहं वाचयित्वा तु मण्डपं रचयेच्छुभम् ॥ इति ।

राघवभट्टेनापि तद्व्याख्यानावसरे "ज्योतिःशास्त्रसमुक्तप्रकारेण नक्षत्रवारराशीनां मध्ये साध्यानुकूले नक्षत्रे साध्यानुकूलराशौ अनुकूलवारे शुभेऽहनि ज्योतिःशास्त्रसमुक्त-शुभतिथौ ततो मण्डपं रचयेत्" इत्यभिहितम् । तदुक्तं राजमार्त्तण्डे—

आदित्यद्वयरोहिणीमृगशिरो हस्तो धनिष्ठोत्तरा
पूषा विष्णुमघानुराधपवनैः शुद्धैः सुताराान्वितैः ।
सौम्यानां दिवसेषु पापरहिते योगे विरिक्ते तिथौ
विष्टित्यक्तदिने वदन्ति मुनयो वेश्मादिकार्य्यं शुभम् ॥ इति ।

सर्व्वमन्यज्ज्योतिःशास्त्रादवगन्तव्यम् ।

शुभे स्थान इति । अनेन दीक्षाङ्गमण्डपयोग्यभूमिपरीक्षायाः कर्त्तव्यतोपदिश्यते, परीक्षामन्तरेण भूमेः शुभत्वाशुभत्वनिर्णयासम्भवात् । तन्मण्डपनिर्म्माणोपयोगिस्थान-निरूपणाय किञ्चिदुच्यते हयशीर्षपञ्चरात्रे आदिकाण्डे पञ्चमपटले—

---

1. 'शुभ-' C. 2. 'भूमौ' A-B. 3. 'निःशार्करे' C. 4. '-शून्य-' A-B.

एवं ज्ञात्वा विशेषेण ततो भूमिं परीक्षयेत् ।
लक्षणैर्देशिकश्रेष्ठो यथा तदधुनोच्यते ॥
सुरभीणां रतिर्यत्र पुरुषैः सह सत्तम ।
राज्ञां पूर्व्वं गृहं यस्यामग्नीनां यज्वनां तथा ॥
काश्मीरचन्दनामोदा कर्पूरागुरुगन्धिनी ।
कमलोत्पलगन्धा च जातीचम्पकगन्धिनी ॥
पाटलामल्लिकागन्धा नागकेशरगन्धिनी ।
दधिक्षीराज्यगन्धा च मदिरासवगन्धिनी ॥
सुगन्धिर्व्रीहिगन्धा च शुभद्रव्यस्वना च या ।
सर्व्वेषां वर्णिनां भूमिः सर्व्वसाधारणा मता ॥ (१६—२४) इति ।

एवं वर्णनिर्व्विशेषेण प्रशस्तां भूमिं निरूप्य वर्जनीयभूमिरपि तत्रैव निरूपिता । यथा—

दुर्गन्धा दुःस्वना या च नानावर्णा च दुःपुरा ।
वृत्तार्द्धचन्द्रसदृशा विस्ताराद् द्विगुणायता ॥
विकर्णा कर्णहीना च वक्रा सूचीमुखी तथा ।
द्विकर्णा सूर्पसदृशी गोमुखी च त्रिकोणिका ।
षडस्रा शूलसदृशी दन्तिपृष्ठोपमा च या ।
सरीसृपसमा या च दिङ्मूढा शकटाकृतिः ।
एवंप्रकारा या भूमिर्वर्ज्या यत्नेन देशिकैः ॥ [२५—२८] इति ।

पूर्व्वं सुरभीणां रतिर्यत्रेत्यादिवचनैर्या प्रशस्ता भूमिरभिहिता, तस्या एव

सुपद्मा भद्रिका पूर्णा धूम्राऽऽवेगिन्यथापरा ।

इत्यनेन सुपद्मा, भद्रा, पूर्णा, धूम्रा चेति चातुर्विध्यमुद्दिश्य तासां लक्षणानि निरूपितानि तत्रैव षष्ठपटले—

तत्र सुपद्मामाह—

चन्दनागुरुकर्पूरगन्धा शुभस्वनाऽर्ज्जुनैः ।
तिलकैर्नारिकेलैश्च बर्हिःकाशैश्च शोभिता ।
पद्मेन्दीवरसंयुक्ता सा सुपद्मेति विश्रुता ॥

भद्रामाह—

नदीसमुद्रायतनतीर्थपर्य्यन्तशोभिता ।
पुष्पवृक्षसमाकीर्णा क्षीरिवृक्षोपशोभिता ॥

वनोद्यानलतागुल्मफुल्लस्तम्बसमावृता ।
यज्ञीयवृक्षसुक्षेत्रयुक्ता भद्रेति कीर्त्तिता ॥

पूर्णामाह—

बकुलाशोकबहुला तथा प्लक्षाम्रलोहितैः ।
माधवीवेष्टिता या च मुद्गनिष्पावकोद्रवैः ॥
शूकधान्यैश्च पुन्नागैर्गिरिपार्श्वगता च या ।
तोयञ्च स्वल्पकं यस्यां पूर्णा सा परिकीर्त्तिता ॥

धूम्रामाह—

विल्वार्कस्नुहिपीलूनां वनैर्या परितो वृता ।
सशर्करा च कठिना युक्ता कण्टकिभिर्द्रुमैः ॥
गृध्रगोमायुकाकानां श्येनानां याऽऽकुला कुलैः ।
धूम्रेति कीर्त्तिता सा तु तां यत्नात् परिवर्जयेत् [१—६] ॥ इति ।

एवञ्च प्रागुक्तासु चतसृषु भूमिषु सुपद्मा-भद्रा-पूर्णाख्यानां तिसृणामुपादेयत्वम्, अन्त्यायास्तु धूम्राया वर्जनीयत्वमित्युक्तं भवति । एतदर्थमेव धूम्राया आवेगिनीति विशेषणम् । आवेगिनी शर्करा-कण्टक-गृध्रादिकृतसम्भ्रमेत्यर्थः ।

एवं भूमिं निरूप्य तस्याः परीक्षणमाह तत्रैव षष्ठपटले—

ततो भूमिं परीक्षेत पूर्व्वोदक्प्लवनां शुभाम् ।
असङ्कटां तथाच्छन्दामल्पतोयां परिप्लुताम् ॥
संपूर्य्यमाणे खाते तु तथाधिकमृदं शुभाम् ॥
कुसुम्भसदृशं वर्णं यस्यां न ग्लानिमृच्छति ।
न निर्व्वाति तथा दीपं तोयं शीघ्रं न जीर्य्यति ॥

अत्र संपूर्य्यमाण इत्यादिना प्रतिपादितः क्रमो विशदीकृतो विश्वकर्मप्रकाशे प्रथमाध्याये—

निखनेद्धस्तमात्रन्तु पुनस्तेनैव पूरयेत् ।
पांशुनाधिकमध्योना श्रेष्ठा मध्याधमा स्मृता ॥ इति ।

मयमते चतुर्थाध्यायेऽपि—

पूरिते तन्मृदा खाते समता मध्यमा मता ।
उत्तमा भूमृदाधिक्या हीना हीनमृदा मही ॥ इति ।

कुसुम्भसदृशमित्यादिपरीक्षायाः क्रमस्तु विशदीकृतो हयशीर्षे सौरकाण्डे—

श्वभ्रे वा वर्णसदृशान् कुसुमान् सन्निवेशयेत् ।
प्रदोषे पूर्व्ववत् सूर उद्यमे तान् निरीक्षयेत् ।
अम्लानं यस्य वर्णस्य तस्यासौ शुभदा भवेत् ॥ इति ।

तदिदमत्रावधेयम्—

श्वेतारुणा पीतकृष्णा विप्रादीनां प्रशस्यते ।

इति हयशीर्षपञ्चरात्रीयषष्ठपटलद्वादशश्लोकेन श्वेता ब्राह्मणानाम्, रक्ता क्षत्रियाणाम्, पीता वैश्यानाम, कृष्णा शूद्राणां प्रशस्ताभूमिरिति निरूपितम्, एवञ्च श्वेतरक्तपीत-कृष्णकुसुमानि प्रदोषकाले श्वभ्रे सन्निवेश्य प्रातर्यद्वर्णकुसुमस्य म्लानिर्न दृश्यते, तद्वर्णस्य सा भूमिः प्रशस्तेति ।

'न निर्व्वाति तथा दीपमि'ति सामान्यतो यः परीक्षाक्रम उक्तस्तत्र विशेषमाह हयशीर्षे सौरकाण्डे—

श्वभ्रान्तःकुम्भवक्त्रेषु आमपात्रं निवेशयेत् ।
गन्धेन हविषाऽऽपूर्य्य पूर्व्ववद् वर्त्तिकल्पना ॥

पूर्व्वादिक्रमयोगेण ज्वलनं वीक्षयेत्ततः ।
यद्देशे भिद्यते पात्रं या च वर्त्तिर्विनश्यति ॥

तस्य सा शस्यते नैव शस्यते यस्य दीप्यते ।
सर्व्वा ज्वलति वै यत्र सर्व्वकामप्रदा तु सा ॥ इति ।

तथाच श्वभ्रमेकं विधाय तत्र चतुर्दिक्षु चतुरः कुम्भान् संस्थाप्य तन्मुखेष्वेकैक-मामपात्रं निधाय तत् पात्रं घृतेनापूर्य्य तत्र प्रत्येकं वर्त्तिं प्रज्वाल्य ज्वलनं वीक्षेत । प्राच्यां दीपशिखाया उज्ज्वलत्वे तत्र मण्डपादिनिर्माणं ब्राह्मणस्य प्रशस्तम्, दक्षिणा-दिषु दिक्षु तथात्वे यथाक्रमं क्षत्रियादेः, सर्व्वासां शिखानां समत्वे सर्व्वेषाम् । अत्र सर्व्वकामप्रदेति सर्व्वेषां कामप्रदेत्यर्थः । यत्र तु पात्रभेदो दीपशिखाविनाशो वा जायते सा भूमिस्तद्वर्णस्य न प्रशस्तेति फलितम् ।

तोयं शीघ्रं न जीर्य्यतीत्यस्य परीक्षाक्रमं स्फुटमाह तत्रैव—

प्रदोषे वारिणा गर्त्तं पूर्य्य सूर्य्योदये गुरुः ।
वीक्षेद् यत्नेन मतिमानुत्तमाधममध्यमाम् ॥
तोये तिष्ठति श्रेष्ठा स्यात् सपङ्का मध्यमा भवेत् ।
शुष्का विस्फुटिता हीना वर्ज्या यत्नेन वै मही ॥ इति

सुगममेतत् ।

पुण्याहं वाचयित्वा तु मण्डपं रचयेत् सुधीः ।

[ मण्डपपरिमाणनिरूपणार्थं हस्तस्वरूपम् ]

पद्महस्तेन विधिवत् पूर्व्वोक्तेन करेण वा ॥ २॥

[ तत्र पद्महस्तस्वरूपम् ]

मानहस्तो यदि भवेद् [1]वेदाङ्गुलसमन्वितः ।

स एव पद्महस्तः स्यादिति तन्त्रविदो विदुः ॥ ३ ॥

[ मण्डपस्य परिमाणभेदाः ]

हस्तषोडशको[2] वाऽपि मण्डपो[3]ऽर्ककरो[4]ऽपि वा ।

[ मण्डपस्वरूपम्, स्थम्भानां संख्यापरिमाणस्थानानि च ]

चतुरस्र-चतुर्द्वार[5]-वेदिकादिसमन्वितः[6] ॥ ४ ॥

---

२। हस्तषोडशको वाऽपीत्यादि-वक्ष्यमाणमण्डपपरिमाणनिरूपणाय हस्तपरिमाणमाह—पद्मे ति। पद्महस्तेन पूर्व्वोक्तेन चतुर्विंशत्यङ्गुलाढ्यमित्यादिना तृतीयप्रकाशेऽभिहितेन वा करेण मण्डपं रचयेदिति सम्बन्धः ।

३। तत्र किं पद्महस्तस्वरूपमित्याह—मानेति। कर्त्तुर्द्दक्षिणहस्तस्येत्यादिमानाङ्गुलपरिमाण-परिमितचतुर्व्विंशत्यङ्गुलात्मको मानहस्तः, स यदि चतुरङ्गुलसमन्वितो भवेत् तदा स पद्महस्त इति तन्त्रविदो विदुः। एतेन तान्त्रिकोपासनाङ्गमण्डपादिनिर्माणमुक्तलक्षणहस्तपरिमाणानुसारेणैव कर्त्तव्यमिति सूच्यते ।

४। मण्डपस्वरूपमाह—हस्तेति। मण्डपः षोडशहस्तो द्वादशहस्तो वा। एतेन मण्डपस्योत्तममधमञ्च परिमाणं प्रदर्शितम्। तत्र षोडशहस्तो मण्डप उत्तमपरिमाणः, द्वादशहस्तोऽधमपरिमाण इति। अत्रापिशब्देन चतुर्द्दशहस्तात्मको मध्यमपरिमाणोऽपि मण्डपः समुच्चीयते। अत एव राघवभट्टे न—

स्वल्पो द्वादशहस्तोऽयं द्विद्विवृद्ध्या ततः क्रमात् ।

इति प्रतिष्ठासारसंग्रहवचनमभिधाय, "एतेन चतुर्द्दशहस्तस्य मध्यमतोक्ता षोडशहस्तस्योत्तमता च"। इत्यनेन द्वादशचतुर्द्दशषोडशहस्तानां मण्डपानां प्रथमपरिमाणतो द्विद्विवृद्ध्या क्रमेणाधममध्यमोत्तमपरिमाणत्वमुपपादितम्। तथा तेनै'वान्यत्रापी'त्यभिधाय—

---

1. 'अङ्गुलञ्च समन्वितम्' ? A. 2. '-के' A. 3. '-पे' A. 4. '-रे' A. 5. '-रे' A-B. 6. '-ते' B-A.

**षोडशस्तम्भसंयुक्तश्चत्वारस्तेषु मध्यगाः ।**
**अष्टहस्त[1]समुच्छ्राया वेदिकापरितः स्थिताः ॥ ५ ॥**
**पञ्चहस्तप्रमाणास्त ऋजवो द्वादशाभितः ।**

[ स्तम्भनिखननक्रमः ]

**तत्पञ्चमांशं निखनेन्मेदिन्यां देशिकोत्तमः ॥ ६ ॥**

---

गृहस्येशानकोणे तु मण्डपं कारयेद् बुधः ।
द्वादशैरष्टषड्हस्तैः षोडशैर्व्वा समन्ततः ॥ इत्युक्तम् ।

अत्राष्टषड्हस्तैश्चतुर्द्दशहस्तैरित्यर्थः । एवञ्च प्रकृतेऽपि षोडशहस्त उत्तमपरिमाणः द्वादशहस्तोऽधमपरिमाणः । अपिशब्देन समुच्चीयमानश्चतुर्द्दशहस्तो मध्यमपरिमाण इति त्रिविधो मण्डपः श्रीमत्पूर्णानन्दपरमहंसानामप्यभिमत इत्यवधेयम् ।

यत्तु शारदायां तृतीयपटले—

पञ्चभिः सप्तभिर्हस्तैर्नवभिर्व्वा मितान्तरम् ।
षोडशस्तम्भसंयुक्तं चत्वारस्तेषु मध्यगाः ॥

इत्यादिमण्डपलक्षणमुक्तं तेनापि प्रागुक्तपरिमाणत्रयमेव सूचितमाचार्य्यैः । तथाहि तत्र पञ्चभिः सप्तभिरिति समुच्चयेन द्वादशसंख्या लभ्यते, एवं पञ्चभिर्नवभिरित्येतयोः समुच्चयेन चतुर्द्दशसंख्या लभ्यते । तथा सप्तभिर्नवभिरित्येतयोः समुच्चयेन षोडशसंख्यावगम्यते । ततश्च पञ्चभिः सप्तभिर्नवभिर्वा मितमन्तरं यस्येत्यर्थे श्रीमल्लक्ष्मणाचार्य्यमतेऽपि मण्डपानां प्रागुक्तरीत्याधममध्यमोत्तमपरिमाणत्वमुक्तं भवति । एतदभिप्रायेणैव राघवभट्टेन 'पञ्चभिः सप्तभिरिति समुच्चितम्' तथा 'पञ्चभिर्नवभिरित्यन्वेति' तथा 'सप्तभिर्नवभिरित्यन्वेती'ति चोक्तम् । वेदिकादीत्यादिपदेन ध्वजादीनां परिग्रहः । द्वारवेदिकादिलक्षणन्त्वग्रे वक्ष्यते ।

५ । षोडशेति । स मण्डपः षोडशस्तम्भसंयुक्तो भवतीत्यर्थः । तेषां स्तम्भानां स्थानविभागमाह—चत्वार इत्यादिना । तेषु षोडशस्तम्भेषु मध्ये चत्वारो मध्यगाः मण्डपमध्यप्रदेशगा वेदिकायाश्चतुष्कोणेषु स्थितास्ते चाष्टहस्तसमुच्छ्राया भवन्ति । अष्टहस्तमौन्नत्यं चतुर्णां वेदिकाकोणस्थस्तम्भानामित्यर्थः ।

६ । पञ्चेति । बहिर्द्वादशस्तम्भास्तु पञ्चहस्तप्रमाणा भवन्ति । ऋजव इति । ते षोडशस्तम्भा एव ऋजवः अवक्रा ग्राह्या इत्यर्थः । शारदायां तृतीयपटलेऽपि—

---

1. '-परिमिता' A-B.

[ बहिर्द्वादशस्तम्भस्थानं द्वारपरिमाणञ्च ]

**द्वारस्य पार्श्वयोर्द्वौ द्वौ कोणे चत्वार एव च।**
**हस्तद्वयप्रमाणेन द्वारं कुर्य्याद् विचक्षणः ॥ ७॥**

---

..................चत्वारस्तेषु मध्यगाः ।
अष्टहस्तसमुच्छ्रायाः संस्थाप्या द्वादशाभितः ।
पञ्चहस्तप्रमाणास्ते विच्छिद्रा ऋजवः शुभाः ॥ इति ।

अत्र मूले स्तम्भनिर्माणे विहितो वृक्षादिर्नोपदिष्ट इत्यन्यतः प्रदर्श्यते। तथाच राघवभट्टधृतपञ्चरात्रे—

सारदारुभवान् स्तम्भान् दृढान् कुर्य्यादृजून् समान्। इति ।

विशिष्याह राघवभट्टधृतक्रियासारे—

यज्ञीयवृक्षो वेणुर्वा क्रमुकः स्तम्भकर्म्मणि ।
अन्ये विशुद्धवृक्षा वा भवेयुर्नान्यभूरुहाः ॥ इति ।

स्तम्भे निषिद्धोऽपि वृक्ष उपदिष्टस्तत्रैव यथा—

गृहशल्यः स्वयं शुष्कः कुटिलश्च पुरातनः ।
असौम्यभूमिजनितः सन्त्याज्यः स्तम्भकर्म्मणि ॥ इति ।

तत्र स्तम्भानां बाह्याभ्यन्तरभेदेन यदष्टहस्तपञ्चहस्तपरिमाणत्वमुक्तं तदुत्तमपरिमाणमण्डपविषयं मध्यमाधमयोस्तु तदनुसारेण परिमाणं निर्णेयम्। एतदभिप्रायेणैव राघवभट्टेनापि "मध्यमाधमयोर्द्वादशस्तम्भप्रमाणं त्रैराशिकेनानेयम्" इत्युक्तम् ।

अत्र बहिरन्तश्च स्तम्भन्यास आग्नेयादिक्रमेणैव कर्त्तव्यः। तथाच राघवभट्टधृतं वचनम्—

वेदिकोणेषु विन्यस्येत् स्तम्भान् वेदस्वरूपकान् ।
आग्नेयादिक्रमेणैव..............इति ॥

तेन वेदिबहिर्द्वादशस्तम्भस्थापनमपि आग्नेयादिक्रमेणैवेति बोध्यम् ।

तत्पञ्चमांशमिति । तत्पञ्चमांशं तेषां प्रागुक्ततत्तत्परिमाणपरिमितानां स्तम्भानां पञ्चमांशमित्यर्थः । तथाच "स्तम्भोच्छ्रायं पञ्चधा विभज्य पञ्चमांशं मेदिन्यां निखनेदिति" राघवभट्टः ।

७। द्वादशाभित इत्युक्तम्, तस्यैव क्रमं दर्शयति—द्वारस्येति । प्रतिदिशं द्वौ द्वाविति

[ स्थलान्मण्डपभूमेरुच्छ्रायः ]

[1]स्थलादर्काङ्गुलोच्छ्रायं मण्डप[2]स्थलमीरितम् ।

[ मण्डपवेष्टनम् ]

नारिकेलदलैर्वंशैर्वेष्टयेद् द्वारपार्श्वतः ॥ ८ ॥

[ द्वारनिर्णयः ]

समसूत्रं चतुर्द्वारं चतुस्तोरणभूषितम् ।

[ दिग्भेदेन तोरणभेदाः ]

न्यग्रोधतोरणं पूर्व्वे याम्ये[3] चौदुम्बरं मतम् ॥ ९ ॥

पश्चिमेऽश्वत्थसंभूतमुत्तरे प्लक्षतोरणम् ।

[ प्रागुक्तन्यग्रोधादीनामभावे कर्त्तव्यम् ]

पूर्व्वे वा[4] प्लक्षसंभूतं न्यग्रोधश्चोत्तरे तथा ॥ १० ॥

[ तोरणस्तम्भानामुच्छ्रायपरिणाहौ ]

एतेषामेव वृक्षाणामभावे तु[5] शमीद्रुमः[6] ।

जम्बूखदिर[7]साराश्च शाला वा [8]तोरणे[9] स्मृताः ॥ ११ ॥

---

चतुर्दिक्षु अष्टौ स्तम्भा आग्नेयादिचतुष्कोणेषु चत्वार इति मिलित्वा द्वादश स्तम्भा भवन्तीत्यर्थः ।

हस्तद्वयेति । अत्र—

कनीयसि स्याद् द्विकरं चतुरङ्गुलवृद्धितः ।

मध्यमोत्तमयोर्द्वारम्·····················॥

इति राघवभट्टधृतपाञ्चरात्रप्रमाणानुसारेण द्वारस्य द्विहस्तत्वमधमपरिमाणमण्डपे, मध्यमोत्तमयोस्तु चतुश्चतुरङ्गुलवृद्ध्या परिमाणान्तरत्वमवगम्यते । तदत्र विशेषाभावेऽपि प्रागुक्तपाञ्चरात्रवचनैकवाक्यतया हस्तद्वयप्रमाणेनेत्यस्याधमपरिमाणमण्डपद्वारपरत्वं मध्यमोत्तमयोस्तु चतुश्चतुरङ्गुलवृद्ध्या द्वारपरिमाणनिर्णयः कर्त्तव्यः । इत्येव विचक्षणपदेन सूचितमिति प्रतिभाति ।

८ । स्थलादिति । स्थलान्मण्डपस्थलस्यौन्नत्यं द्वादशाङ्गुलमित्यर्थः ।

९-११ । समसूत्रमित्यादि मण्डपं कुर्य्यादिति सम्बन्धः । तत्र दिग्भेदेन तोरण-

---

1. 'स्थाना-' C. 2. 'स्थान-' B. 3. '-म्य औ-' B. 'म्ये त' A. 4. 'प्लक्षसमुद्भूतं' B. 5. '-वात्तु' A-B. 6. '-मैः' B. 7. '-वाला' A. 8. '-श्च' A-B. 9. '-णाः' B.

व्यवस्थामाह—न्यग्रोधेत्यादि। न्यग्रोधो वटवृक्षः। प्लक्षः पर्कटीवृक्षः। स्पष्टमन्यत्।
कल्पान्तरमाह—पूर्व्वे वेति। कल्पद्वयमेवैतत् प्रदर्शितं वैदिकसर्व्वस्वधृतसोमशम्भुना—

प्लक्षमौडुम्बराश्वत्थवटं वै तोरणं न्यसेत्।
पूर्व्वादितो विधातव्यो यद्वाद्यन्तविपर्ययः॥ इति।

अत्राद्यन्तविपर्य्यय इत्यनेन पूर्व्वे वटतोरणमुत्तरे प्लक्षतोरणमिति श्रीतत्त्वचिन्तामण्युक्तः प्रथमः कल्पो दर्शितः। अन्यच्च वैदिकसर्व्वस्वधृतं वचनम्—

न्यसेन्नग्रोधमैन्द्र्यान्तु याम्यामौडुम्बरं तथा।
वारुण्यां पिप्पलञ्चैव कौवेर्य्यां प्लक्षकं न्यसेत्॥ इति।

शारदायां तृतीयपटले—

द्वारे द्वारे तोरणाः स्युः क्रमात् क्षीरिमहीरुहाम्।

इत्येक एव कल्पोऽभिहितः। तत्र क्षीरिमहीरुहामित्यस्य व्याख्याने राघवभट्टेन क्षीरिमहीरुहामिति वटोडुम्बराश्वत्थप्लक्षाणाम्

न्यग्रोधोदुम्बराश्वत्थप्लक्षाः क्षीरिमहीरुहाः।

इति परिभाषणादित्युक्तम्।

एतेषामिति। एतेषां प्रागुक्तन्यग्रोधादीनामभावे शमीद्रुम एव सर्व्वत्र तोरणे विनियोज्य इत्यर्थः। अत्र सर्व्वेषामिति बहुवचननिर्द्देशेन प्रागुक्तानां चतुर्णामेवालाभे शमीद्रुमविनियोगव्यवस्था सूचिता। एकस्यापि लाभे तेनैव सर्व्वे तोरणाः कर्त्तव्या इति बोध्यम्। अत एव राघवभट्टधृतसोमशम्भुना—

अलाभादेकमेवैषां सर्व्वाशासु निवेशयेत्।

इत्युक्तम्। अत्र सोमशम्भुवचने एकमेवेति सावधारणनिर्द्देशेन द्वयोस्त्रयाणां वा लाभेऽपि तेषां विनियोगमकृत्वा एकतमेनैव सर्व्वे तोरणा निष्पादनीया इति सूचितम्।

राघवभट्टधृतसिद्धान्तशेखरे—

एकमेषामलाभे स्यात्तदभावे शमीद्रुमः।
जम्बूखदिरसाराश्च तालो वा तोरणे स्मृताः।

इत्यनेन शमीद्रुमस्याप्यलाभे क्रमेण जम्बूखदिरादीनां तोरणे विनियोग उक्तः।

तोरणलक्षणं विशिष्याह हयशीर्षपञ्चरात्रे आदिकाण्डे—

अश्वत्थोडुम्बरश्चैव न्यग्रोधः प्लक्ष एव च।
तोरणार्थे च कथिताः पूर्व्वादिषु यथाक्रमम्॥
एकहस्तं न्यसेद्‌ भूमौ चतुर्हस्तं तथोच्छ्रयेत्।
तिर्य्यक्फलकमानं स्यात् स्तम्भानामर्द्धमानतः।

[ तोरणस्तम्भानामुच्छ्रायपरिणाहौ ]

**स्तम्भोच्छ्रायः स्मृतस्तेषां सप्तहस्तैः पृथक् पृथक् ।**
**दशाङ्गुलप्रमाणेन ततूपरीणाह ईरितः ॥ १२ ॥**

---

द्विहस्तान्तरमन्योऽन्यं तोरणं संप्रकल्पयेत् ।
शुक्लवस्त्रयुगाच्छन्नान् दर्भपिञ्जलसंयुतान् ॥
पुष्पमालापरिक्षिप्तांस्तोरणान् परिकल्पयेत् ।
वृत्तं वा चतुरस्रं वा द्विषट्काष्टाङ्गुलन्तु वा ॥
षट्-चतुर्द्व्यङ्गुलं कार्य्यं तोरणं निर्व्रणं समम् ।
तोरणस्तम्भमूलेषु कलसान् मङ्गलाङ्कुरान् ॥
प्रदद्यादुपरिष्टात्तु दद्याच्चक्रं सुदर्शनम् ।
कलसं वर्द्धमानं वा वसुभागेन कल्पयेत् ॥
स्योना पृथीति मन्त्रेण स्थाप्याः पूज्याश्च तोरणाः ॥ इति ।

अत्र हयशीर्षवचने 'दद्याच्चक्रं सुदर्शन'मिति वैष्णवमण्डपपरम् । तत एषां तोरणानां नामान्यपि निर्द्दिष्टानि—

सुशोभनं भवेत् पूर्व्वे सुभद्रं दक्षिणे तथा ।
सुकर्म्मा पश्चिमे भागे सुहोत्रन्तु तथोत्तरे ॥ इति ।

अत्र सुशोभन-सुभद्र-सुकर्म्म-सुहोत्राख्या देवताः पूर्व्वादितोरणचतुष्करूपेण यज्ञ-विघ्ननिवारणार्थमवस्थिता इति तत्तद्देवताधिष्ठितत्वात् तोरणानामपि तत्तन्नाम्ना व्यपदेशः । तदुक्तं राघवभट्टधृतमहाकपिलपञ्चरात्रे—

देवास्तोरणरूपेण संस्थिता यज्ञमण्डपे ।
विघ्नविध्वंसनार्थाय रक्षार्थं त्वध्वरस्य च ॥ इति ।

अत एव देवानाममीषां तोरणेषु पूजनमुपदिष्टं तत्रैव—

सुशोभनं तं पूर्व्वस्यामृग्वेदादिष्वमन्त्रितम् ।
इषे त्वेति च मन्त्रेण सुभद्राख्यन्तु दक्षिणे ॥
सुकर्म्माख्यन्तु वारुण्यां सामवेदादिकेन तु ।
शन्नो देवीति मन्त्रेण सुहोत्रं तूत्तरे न्यसेत् ॥ इति ।

१२ । तोरणस्तम्भानामुच्छ्रायं निर्द्दिशति—स्तम्भेति । सप्तहस्तैरित्युत्तमपरिमाण-मण्डपतोरणविषयम्, पृथक्पृथगित्यनेन मध्यमाधमपरिमाणमण्डपयोस्तोरणस्तम्भानां

[ तोरणस्तम्भशिरसि फलकन्यासस्तत्र शूलारोपणञ्च ]

**तिर्य्यक्फलकमानं स्याद्दैर्घ्ये[1] सार्द्धकरद्वयम्।**
**शूलान्याकल्पयेन्मध्ये तोरणे हस्तमानतः॥ १३॥**

---

क्रमेण षट्-पञ्चहस्तरूपभिन्नपरिमाणता सूचिता। स्फुटमाह वास्तुशास्त्रे—

पञ्चहस्तप्रमाणास्ते विस्तारेण द्विहस्तकाः।
षड्ढस्ता मध्यमाः प्रोक्ताः सप्तहस्तास्तथोत्तमाः॥ इति।

अत्र विस्तारेण द्विहस्तका इति तिर्य्यक्फलकमानमुक्तम्। एवञ्च षोडशहस्तात्मकोत्तमपरिमाणमण्डपे सप्तहस्तप्रमाणाः, चतुर्द्दशहस्तात्मकमध्यमपरिमाणमण्डपे षड्ढस्तप्रमाणाः, द्वादशहस्तात्मकाधमपरिमाणमण्डपे तु तोरणस्तम्भाः पञ्चहस्तप्रमाणा भवन्तीति बोध्यम्।

स्तम्भानां व्यासमाह—दशेति। परीणाहो विस्तारः।

वृत्तं वा चतुरस्रं वा द्विषट्काष्टाङ्गुलन्तु वा।

इत्यादिप्रागुल्लिखितहयशीर्षवचनेन स्तम्भानां वृत्तत्वं चतुरस्रत्वं वेति कल्पद्वयं द्वादशाङ्गुलादिविस्तारपरिमाणभेदाश्च दृश्यन्ते।

१३। तिर्य्यगिति। तोरणस्तम्भयोरुपरि देहलीरूपं यत् तिर्य्यक्फलकं तस्य परिमाणं दैर्घ्ये दीर्घतायां सार्द्धकरद्वयं स्यादित्यर्थः। एतच्च परिमाणं 'स्तम्भोच्छ्रायः स्मृतस्तेषां सप्तहस्तैरि'त्युक्तोत्तमपरिमाणतोरणफलकविषयम्। मध्यमाधमपरिमाणतोरणफलकपरिमाणन्तु क्रमेण षट्षडङ्गुलन्यूनतया कल्पनीयम्। एतदर्थप्रतिपादनायैव—

तिर्य्यक्फलकमानं स्यात् स्तम्भानामर्द्धमानतः।

इति शारदातिलकतृतीयपटलवचनव्याख्याने राघवभट्टेन "इदं तिर्य्यक्फलकमानमुत्तमस्यैव। अन्ययोः षट्षडङ्गुलन्यूनता ज्ञेया।" इत्युक्तम्। एवञ्च उत्तमपरिमाणतोरणे सार्द्धकरद्वयम्, मध्यमपरिमाणे ततः षडङ्गुलन्यूनम्, अधमपरिमाणेऽङ्गुले ततोऽपि चतुरङ्गुलन्यूनतया करद्वयमात्रं फलकं कल्पनीयमिति पर्य्यवस्यति।

यत्तु हयशीर्षपञ्चरात्रे आदिकाण्डे चतुर्विंशपटले—पञ्चहस्तपरिमाणतोरणस्तम्भं प्रकृत्य—

---

1. '-दैर्घ्यं' A. C.

**सरलं[1] मध्यशृङ्गं स्यात् किञ्चिद्वक्रञ्च पक्षयोः ।**
**उभयं तत्समाख्यातं द्व्यङ्गुलं रोपयेत्तदा ॥ १४ ॥**

---

एकहस्तं न्यसेद् भूमौ चतुर्हस्तं तथोच्छ्रयेत् ।
तिर्य्यक्फलकमानं स्यात् स्तम्भानामर्द्धमानतः ।

इति स्तम्भार्द्धपरिमाणत्वं फलकस्याभिहितं तन्निखननावशिष्टचतुर्हस्तार्द्धमानपरमित्यवधेयम् । ततश्च तत्रापि पञ्चहस्तस्तम्भकल्पे फलकस्य द्विहस्तत्वमेव पर्य्यवस्यतीति सर्व्वं निर्व्विवादम् ।

शूलानीति । मध्ये निरुक्तफलकमध्यप्रदेशे शूलानि आकल्पयेन्निवेशयेदित्यर्थः । अयं शूलारोपः प्रतितोरणमेकैकशः कर्त्तव्यः । तदुक्तं राघवभट्टेन शारदातिलकटीकायाम्— "शूलानीति बहुवचनं चतुःसंख्यापरम्, तोरण इत्येकवचनं जातौ, तेन प्रतितोरणमेकमेकं शूलं कार्य्यम्" इति । अत्र—

"तोरणं घटयित्वैव मूर्द्ध्नि शूलत्रयं न्यसेत् ॥"
"अग्रयोर्मध्यभागे च पट्टिकायां त्रिशूलकान् ॥"

इति राघवभट्टधृत-क्रियासार-मन्त्रमुक्तावलीवचनैकदेशाभ्यां प्रतितोरणफलकं शूलत्रयनिवेशनमित्यपि कल्पान्तरमस्ति । अत्र परिणाहः षड्भागः एतच्च मण्डपत्रये समानमिति राघवभट्टाः ।

१४ । शूलस्वरूपमाह—सरलमिति । शूलास्त्रिशृङ्गा भवन्ति, तत्र मध्यशृङ्गं सरलमवक्रं पक्षयोः मध्यशृङ्गपार्श्वयोः उभयं तच्छृङ्गं किञ्चिद् वक्रं स्यात् । तेषाञ्च शूलानां द्व्यङ्गुलं रोपयेत् तोरणफलक इति शेषः । तदुक्तं राघवभट्टेन मध्यकीलस्तीक्ष्णाग्र ऋजुस्तमभितो द्वौ तीक्ष्णाग्रौ वक्रौ मध्यकीलदेशगतवक्रभागाविति । राघवभट्टधृतपिङ्गलामतेऽपि—

शूलेन चिह्निताः कार्य्या द्वारदेशाः स्वमस्तके ।
ऋजु वै मध्यशृङ्गं स्यात् किञ्चिद्वक्रन्तु पक्षयोः ।
उभयं तत् समाख्यातं द्व्यङ्गुलं रोपयेत्तदा ॥ इति ।

अत्र यस्यां दिशि यद् यत्तोरणकाष्ठं विहितं शूलान्यपि तत्र तत्र तेन तेनैव कर्त्तव्यानीत्यवधेयम्, एवमेव राघवभट्टाः ।

---

1. 'शबलं' ? B.

[ अत्र वैष्णवानां विशेषः ]

वैष्णवेषु च तन्त्रेषु विशेषोऽत्र निगद्यते ॥ १५ ॥
मस्तके द्वादशांशेन शङ्ख-चक्र-गदाम्बुजम् ।
[1]प्रागादिक्रमयोगेण न्यसेत्तेषां स्वदारुजम् ॥ १६ ॥
गन्धपुष्पाम्बरोपेतान् कुम्भांस्तेषु विनिक्षिपेत् ।
ध्रुवं धरां वाक्पतिश्च विघ्नेशं तत्र पूजयेत् ।
मण्डपस्य च कोणस्थ[2]-कलसेषु क्रमादमी ॥ १७ ॥
गलितोदकसंपूर्णा[3] [4]वाम्रपल्लोपशोभितौ ।
स्वर्णादिकलसौ द्वौ द्वौ द्वारे द्वारे निवेशयेत् ॥ १८ ॥
अमृतो दुर्जयश्चैव सिद्धार्थो मङ्गलस्तथा ।
गन्धपुष्पादिभिर्मन्त्रैः[5] क्रमादेतान् प्रपूजयेत् ॥ १९ ॥
पूज्या द्वार[6]स्थकुम्भेषु शक्राद्यास्तन्मनूत्तमैः ।
दिक्षु ध्वजान् निबध्नीयाल्लोकपाल[7]समप्रभान् ॥ २० ॥

---

१५-१६ । एवं शूलन्यासे शैवागमप्रक्रियामभिधाय वैष्णवागमप्रक्रियामाह—वैष्णवेष्विति । अत्र प्रागुक्तशूलस्थाने पूर्व्वादिक्रमेण फलकानां मस्तके स्वदारुजं तोरण-दारुमयं शङ्ख-चक्र-गदाम्बुजं न्यसेदित्यर्थः । तथाच पूर्व्वतोरणे शङ्खम्, दक्षिणतोरणे चक्रम्, पश्चिमतोरणे गदाम्, उत्तरतोरणे च पद्मं न्यसेदिति । द्वादशांशेनेति तोरणस्तम्भ-द्वादशांशेनेत्यर्थः । अत्र वैष्णवानामयं विशेषः शारदायां नोक्तः । राघवभट्टेन तु—

वैष्णवे द्वादशांशेन शङ्खचक्रगदाम्बुजम् ।
प्रागादिक्रमयोगेण न्यसेत्तेषां स्वदारुजम् ॥

इति वास्तुशास्त्रीयवचनमुल्लिख्य "एषां स्वदारुजत्वोक्तेः शैवे एतत्स्थानीयानां शूलानां न्यासादेव स्वदारुजत्वं प्राप्तमित्यभिहितम् । तच्छैवे वैष्णवे च तोरणे दारुमयाण्येव शूलशङ्खादीनि कर्त्तव्यानीति निष्कर्षः ।

२०-२२ । ध्वजारोपणमाह—दिक्ष्वित्यादिना सुलक्षणानित्यन्तेन । पूर्व्वादिदिक्षु

---

1. 'प्रागित्यादिपादद्वयं' A-पुस्तके नास्ति । 2. '-णेषु' C. 3. 'कुम्भेषु च' A. 4. 'ताम्रपात्रो-' C. 5. '-न्त्री' C. 6. '-रस्य' B. 7. '-लैः' C.

पञ्चहस्ता ध्वजाः कार्य्या व्यायामेन द्विहस्तकाः ।
सप्तहस्ता ध्वजा वा स्युर्विस्तारा[1]द्वादशाङ्गुलाः ॥ २१ ॥
दण्डश्च [2]वंशजस्तेषां दशहस्तप्रमाणतः ।
दिग्गजान् विलिखेन्मन्त्री ध्वजमध्ये सुलक्षणान् ॥ २२ ॥

---

मण्डपतोरणयोर्मध्यभागे क्रमेण लोकपालसमप्रभान् अष्टौ ध्वजान् निबध्नीयादित्यर्थः । तदुक्तं वैदिकसर्व्वस्वधृतहयशीर्षे—

बाह्यदेशे तोरणस्य मण्डपाभ्यन्तरे तथा ।
अष्टौ ध्वजाः स्थापनीयाः पूर्व्वादिक्रमयोगतः ॥ इति ।

लोकपालसमप्रभानिति लोकपालानां वर्णानाह शारदायां चतुर्थपटले—

पीतो रक्तोऽसितो धूम्रः शुक्लो धूम्रः सितावुभौ ।
गौरोऽरुणः क्रमादेते वर्णतः परिकीर्त्तिताः ॥ इति ।

एते लोकपाला इत्यर्थः । अत्र वचने गौरोऽरुण इत्येताभ्यामनन्तस्य ब्रह्मणश्च वर्णौ निरूपितः, सोऽत्राप्राकरणिकः । अत्र तु इन्द्रादीनामीशानान्तानां वर्णाः सितावुभावित्यन्तेन निरूपणीयाः । तथाच पूर्व्वस्यां ध्वजः पीतः, आग्नेय्यां रक्तः, याम्यां कृष्णः, नैर्ॠत्यां धूम्रः, वारुण्यां शुक्लः, वायव्यां धूम्रः, कौवेर्य्यामैशान्याञ्च श्वेत इति फलितम् । हयशीर्षपञ्चरात्रे तु—

अरुणोऽग्निनिभश्चैव कृष्णः शुक्लोऽथ पीतकः ।
रक्तवर्णस्तथा श्वेतः सर्व्ववर्णस्तथैव च ॥

इति वचनेन दिक्पालेषु केषाञ्चित् पूर्व्वतोऽन्यादृशा वर्णा निरूपिताः । तदेवं स्थिते मतभेदे सत्सम्प्रदायानुसारेणैकतरः पक्ष आश्रयणीय इति हृदयम् ।

२१-२२ । ध्वजानां परिमाणमाह—पञ्चेति । व्यायामेन विस्तारेण । परिमाणान्तरमाह—सप्तेति । ध्वजदण्डपरिमाणमाह—दण्डश्चेति । दशहस्तपरिमितो वंशजो ध्वजदण्डः कर्त्तव्य इत्यर्थः । राघवभट्टेनापि—

द्विपञ्चहस्तैर्दण्डैस्ते वंशजैः संयुता मताः ।

इति वचनमेतदनुकूलमाहृतम् । तत्र द्विपञ्चहस्तैरिति दशहस्तैरित्यर्थः ।

---

1. '-रो ?'B. 2. 'विंशक-' ? A.

पूजाहोमादिकं सर्व्वं[1]यागाद्यं यत् कृतं बुधैः ॥ २३ ॥

रक्षणेन विना [2]यद्वत् [3]क्षेत्रं नश्यति [4]क्षेत्रिणाम् ।

ध्वजं विना देवगृहं तथा [5]नश्यति सर्व्वदा ॥ २४ ॥

ततः कार्य्याः पताका हि ध्वजेनैव समन्विताः ।

[6]सप्तहस्ताः पताकाः स्युः सप्तमांशेन विस्तृताः ॥ २५ ॥

---

दिग्गजानिति । दिग्गजानाहामरसिंहः—

ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ।
पुष्पदन्तः सार्व्वभौमः सुप्रतीकाश्च दिग्गजाः ॥ इति ।

तथाच पूर्व्वाद्यष्टध्वजेषु क्रमेणैरावतादीनष्टौ सुलक्षणान् दिग्गजान् लिखेदित्यर्थः । राघवभट्टेन तु—

मातङ्गवस्तहरिणसिंहमत्स्यैनवाजिनः ।
वृषभश्च यथान्यायं ध्वजमध्ये क्रमाल्लिखेत् ।
अथवा दिग्गजानष्टावैरावतपुरःसरान् ॥

इति क्रियासारवचनेन मातङ्गादीन् दिग्गजान् वा ध्वजमध्ये लिखेदिति कल्पद्वयमुपदर्शितम् ।

२३ । पूजेति । अत्र पूजाहोमादिकं यत् कृतं तत्रैव पूजादिस्थले दिक्षु ध्वजान् निबध्नीयादिति पूर्व्वेण सम्बन्धः ।

२४ । ध्वजारोपणस्याकरणे यो दोषस्तत्र दृष्टान्तमाह—रक्षणेनेति ।

२५ । पताकारोपणमाह—तत इति । ततो ध्वजारोपणानन्तरम् । ध्वजेनैव समन्विताः समनुगताः पताकाः कार्य्याः । एतेन ध्वजे यादृशो दण्डादीनां वर्णानाञ्च विधिः प्रदर्शितः पताकारोपणेऽपि स एव विधिरादरणीय इति सूचितम् । अत एव

---

1. 'जापाद्यं' B. C. 2. 'तत्तत' B. C. 3. 'क्षत्रं ?' A. C. 4. 'सर्व्वदा' A. 5. 'नश्येत' C. 6. इदमादिपादद्वयानन्तरं 'दश हस्ताः पताकाः स्युः सप्तमांशेन विस्तृताः । इति A-B-पुस्तकयोरधिकः पाठो दृश्यते ।

[ मण्डपशोभासम्पादनक्रमः ]

चूतपल्लवमालाढ्यं वितानैरुपशोभितम् ।
विचित्रवस्त्रसंयुक्तं[1] [2]चित्रकुम्भसमन्वितम् ॥ २६ ॥
कलसैर्घटिकाभिश्च दर्पणैश्चामरैस्तथा[3] ।
फलैर्नानाविधैर्भोज्यैरङ्कुरैर्धूपदीपकैः ।
भूषितं मण्डपं कुर्य्याद्रत्नपुष्पस[4]मुज्ज्वलम् ॥ २७ ॥

---

सप्तहस्ताः पताकाः स्युरित्यादिना पताकावस्त्रपरिमाणमात्रमभिहितम् । अत्र परिमाणेऽपि विशेषमाह हयशीर्षे आदिकाण्डे—

सप्तहस्तास्ततो दीर्घा विस्ताराद्द्वादशाङ्गुलाः ।
द्विपञ्चहस्तदण्डेषु पताकास्तु निवेशयेत् ॥ इति ।

पताकानां वर्णभेदान् विशिष्याह वैदिकसर्व्वस्वधृतकापिले—

अथातो लक्षणं वक्ष्ये पताकानां यथाविधि ।
पताकां पीतवर्णाभामैन्द्र्यां दिशि विनिक्षिपेत् ॥
आग्नेय्यां रक्तवर्णाभां कृष्णाभां याम्यगोचरे ।
नैर्ऋत्यां नीलवर्णाभां वारुण्यां वै सितान्तथा ॥
वायव्यां धूम्रवर्णाभां कौवेर्य्यां पीतवर्णिकाम् ।
पताकां सर्व्ववर्णाभामैशान्यां दिशि विन्यसेत् ।
आनन्त्यां श्वेतवर्णाभां ब्राह्म्यां रक्तञ्च विन्यसेत् ॥ इति ।

अत्र कपिलवचने दशानामेव वर्णनिर्णयाद्दशलोकपालदेवताका दश पताकाः स्थापनीया इति स्फुटं प्रतीयते । वैदिकसर्व्वस्वधृतभविष्यपुराणे तु तोरणफलकचतुष्टये एकहस्त-द्विहस्तान्यतरपरिमाणपताकाचतुष्टयस्थापनमप्याह । यथा—

एकहस्तप्रमाणास्तास्तोरणार्था द्विहस्तिकाः ।
नानावर्णविचित्रास्ता न्यसेद्वै प्रतितोरणे ॥ इति ।

अत्र तोरणपदेन तोरणैकदेशतिर्य्यक्काष्ठमुच्यत इति वैदिकसर्व्वस्वम् ।

---

1. 'छन्नं' C. 2. 'नानास्तम्भ-' C. 3. 'रवि' C. 4. '-मन्वितम्' A. B.

[ वेदीलक्षणम् ]

**तत्त्रिभागमिते क्षेत्रे मध्यभागे तु [1]वेदिकाम् ।**
**हस्तमात्रं तदुत्सेधं चतुरस्त्रं समं [2]तथा ॥ २८ ॥**
**इष्टकाभिर्मृदा वापि वेदी दर्पणसन्निभा ॥ २९ ॥**

२८। राघवभट्टधृतक्रियासारे—

वक्रपार्श्वच्छिन्नमध्या परुषा दृगशोभना ।
मानहीनाधिका या सा कर्त्तुः कर्म्मविनाशिनी ॥

इत्यनेन वक्रपार्श्वत्वादिदोषदुष्टवेदिकाया अनिष्टफलकत्वश्रवणादिष्टफलसाधनानुकूलवेदिकानिर्म्माणमाह—तदिति ।

तस्य मण्डपस्य त्रिभागस्तृतीयो भागस्तन्मिते क्षेत्रे मध्यभागे वेदिकां कुर्य्यादित्यर्थः । तृतीयो भागो दिक्संस्थोऽपि भवितुमर्हति तन्निरासायाह—मध्यभाग इति । एवञ्च मण्डपसूत्रं त्रिगुणीकृत्य पूर्व्वतः पश्चिमतो दक्षिणत उत्तरतश्चैकमेकमंशं परित्यज्य अवशिष्टे मध्यभागे वेदिका-निर्म्माणमनेनोपदिश्यते । तदुत्सेधं तस्या वेदिकाया उच्छ्रायं हस्तमात्रं चतुरस्त्रं चतुष्कोणं समञ्च कुर्य्यात्, न तु उत्सेधस्य तारतम्यं कर्त्तव्यमित्यर्थः ।

२९। इष्टकाभिरिति प्रथमः कल्पस्तदभावे मृदा वा दर्पणसन्निभा दन्तुरत्वादिदोषहीना वेदी कर्त्तव्येत्यर्थः ।

तदुक्तं राघवभट्टधृतक्रियासारे—

त्रिभागं मण्डपं कृत्वा मध्यभागस्तु वेदिका ।
हस्तमानं तदुत्सेधं चतुरस्त्रं समं यथा ॥
पक्काभिर्वाऽप्यपक्काभिरिष्टकाभिर्दृढं यथा ।
कर्त्तव्या वेदिका श्रेष्ठा तदभावे मृदाऽपि वा ।
अवक्रपार्श्वा सुस्निग्धा दर्पणोदरसन्निभा ॥ इति ।

तन्त्रराजे एकोनत्रिंशपटलेऽपि मण्डपलक्षणानन्तरं—

... ... ... तत्त्रैभागप्रमाणतः ।
विदध्यान्मध्यतो वेदीं करमात्रसमुन्नताम् ।
दर्पणोदरसङ्काशमध्याम् ............... ।

इति वेदिलक्षणमुक्तम् ।

1. 'कोष्ठकाः' C. 2. 'यथा' C.

[ अङ्कुरार्पणम् ]

प्रतिष्ठायाञ्च दीक्षायां स्थापने चोत्सवे तथा ।
संप्रोक्षणे च शान्त्यर्थं विवाहे मौञ्जिबन्धने ॥ ३० ॥
नववेश्मप्रवेशे च तथाभिषेककर्म्मणि ।
सर्व्वलक्षणकार्य्येषु विदध्यादङ्कुरार्पणम् ॥ ३१ ॥

[ अङ्कुरार्पणकालः ]

प्रतिष्ठादि[1]दिनात् पूर्व्वं नवमे सप्तमे दिने ।
पञ्चमे वा तृतीये वा सद्यो वा चाङ्कुरार्पणम् ॥ ३२ ॥

३०-३१ । अथ कर्म्मणः शुभाशुभपरीक्षार्थमङ्कुरार्पणे वक्तव्ये प्रथमं तस्य विषयमाह—प्रतिष्ठायामित्यादिना । प्रतिष्ठायां तडागादीनाम्, स्थापने देवादीनाम्, उत्सवे दैवतयात्रोत्सवे, संप्रोक्षणे अभिषेकादौ, शान्त्यर्थं शान्तिकयागादिषु, मौञ्जिबन्धने उपनयने, अभिषेकर्म्मणि राज्ञामभिषेके, सर्व्वलक्षणकार्य्येषु सर्व्वेषु शुभकर्म्मसु च अङ्कुरार्पणं विदध्याद् वक्ष्यमाणक्रमेणेति शेषः । शारदायां तृतीयपटलेऽपि—

दीक्षायामभिषेकेषु नववेश्मप्रवेशने ।
उत्सवेषु च सम्पत्तौ विदध्यादङ्कुरार्पणम् ॥ इति ।

३२ । प्रतिष्ठादीत्यादिपदेन प्रागुक्तानां दीक्षास्थापनोत्सवादीनां परिग्रहः । प्रकृते तु दीक्षाया एवाभिधास्यमानत्वात् निरुक्तदीक्षादिनतः पूर्व्वं नवमे सप्तमे पञ्चमे तृतीये वा दिवसे सद्यो वा अङ्कुरार्पणं कर्त्तव्यमित्यर्थः । एषु च कल्पपञ्चकेषु पूर्वपूर्वासम्भवे परः परः कल्पो ग्राह्यः । तत्र प्रथमकल्पे दीक्षादिनं दशमं यथा भवति तथाऽङ्कुरार्पणं कर्त्तव्यमित्येवाह—पूर्व्वमित्यनेन । शारदायां तृतीयपटलेऽपि—

प्रागेव दीक्षादिवसात् सप्तभिर्विधिवद्दिनैः ।

इत्यत्र दीक्षादिवसात् प्रागित्यनेन दीक्षादिवसस्याष्टमत्वमभिहितम् । तद्व्याख्यानेऽपि राघवभट्टेन—"एतेन दीक्षादिनमष्टमं यथा भवति तथा कर्त्तव्यमित्युक्तम् । ततश्च दीक्षादिनपूर्व्वदिनतो नवमे वा सप्तमे वेत्येवंक्रमेणाङ्कुरार्पणदिवसा निरूपणीयाः ।" इत्युक्तम् ।

1. '-दिनतः' A-B.

[ अङ्कुरार्पणे शालानिर्म्माणम् ]

मण्डपस्योत्तरे भागे शालां पूर्व्वापरायताम् ।
दशहस्तसुविस्तारां पञ्चहस्तसुविस्तृताम् ।
गूढां कुर्य्यात्ततस्तस्यां मण्डलं रचयेत् सुधीः ॥ ३३ ॥

[ मण्डलनिर्म्माणक्रमः ]

पञ्चहस्तप्रमाणानि पञ्च सूत्राणि पातयेत् ।
पूर्व्वापरायतान्येषामन्तरं द्वादशाङ्गुलम् ॥ ३४ ॥
दक्षिणोत्तरसूत्राणि तद्वदेकादशाऽर्पयेत् ।
पदानि तत्र जायन्ते चत्वारिंशत् प्रमार्जयेत् ॥ ३५ ॥

---

३३ । अङ्कुरार्पणकर्म्माङ्गभूतशालानिर्माणमाह—मण्डपस्येति । मण्डपस्य पूर्व्वमभिहितस्य उत्तरे भागे पूर्वापरायतां दशहस्तसुविस्तारां दैर्घ्येण दशहस्ताम्, पञ्चहस्तसुविस्तृताम् आयामेन पञ्चहस्तपरिमिताम्, गूढां कटादिभिरावृतां वातप्रवेशायोग्यामित्यर्थः, शालां कुर्य्यात् । राघवभट्टेन शारदातिलकतृतीयपटलटीकायाम्—

मण्डपस्योत्तरे भागे शालां पूर्व्वापरायताम् ।
गूढां कुर्य्यात्ततस्तस्यां मण्डपं रचयेत् सुधीः ॥

इति वचनमुल्लिख्य तद्व्याख्यानावसरे—"दीर्घचतुरस्ररूपां गूढां परितः कटादिपरिवृतां दक्षिणैकद्वारवतीं निवाताञ्च कुर्यादि"त्युक्तम् । तत्र मण्डलनिर्माणमाह—तत इति ।

३४—३५ । अङ्कुरमण्डलनिर्माणपरिपाटीमाह—पञ्चहस्तेत्यादिना सम्प्रदायविधानत इत्यन्तेन । पूर्व्वापरायतानि पञ्चहस्तप्रमाणानि द्वादशाङ्गुलान्तरितानि पञ्च सूत्राणि पातयेत् । एवं पूर्व्वापरायतसूत्रपातनानन्तरं दक्षिणोत्तरायतान्येकादश सूत्राणि पातयेत् । तद्वदिति द्वादशाङ्गुलान्तरितानीत्यर्थः । एवं द्वादशाङ्गुलान्तरितैकादशसूत्रपातेन पूर्व्वापरायताः पञ्च हस्ताः संगृहीताः स्युः । पदानीति । एवं पूर्व्वापरायतदक्षिणोत्तरायतसूत्रपातेन तत्र मण्डले चत्वारिंशत् पदानि भवन्ति । प्रमार्जयेदित्युत्तरत्राभिसम्बध्यते । एवञ्चायं क्रमः पर्य्यवस्यति,—प्रागुक्तशालाविस्तारमध्यभागे पञ्चहस्तप्रमाणं पूर्व्वपश्चिमायतमेकं सूत्रं दत्त्वा तद्दक्षिणोत्तरभागयोर्द्वादशाङ्गुलान्तरिते

[ तत्र पदविभागः ]

पङ्क्त्या वीथीश्चतस्रोऽन्तश्चतुष्कोभयपार्श्वयोः ।
वीथ्यौ द्वे च चतुःकोष्ठ[1]त्रयमेवावशिष्यते ॥ ३६ ॥

[ रजसां न्यासः ]

पदानि रञ्जयेत् [2]तानि श्वेतपीतारुणासितैः ॥ ३७ ॥
ईशानादिक्रमेणैव रजोभिः श्यामलेन च ।
[3]वीथीरापूरयेन्मन्त्री सम्प्रदायविधानतः ॥ ३८ ॥

---

द्वे द्वे सूत्रे पातयेत् ततस्तत्सूत्रव्यतिभेदीनि दक्षिणोत्तरायतान्येकादश सूत्राणि पातयेदिति । राघवभट्टधृतप्रयोगसारे तु—

प्रसार्य्यास्फोटयेत् सूत्रं यथा याम्योत्तरायतम् ।
पञ्चहस्तप्रमाणेन द्वे द्वे पार्श्वे च पातयेत् ॥
तद्वत् पूर्व्वोक्तमानेन द्वादशद्वादशाङ्गुले ।
प्राक् प्रत्यक् च समं पश्चात् सूत्राण्येकादश क्रमात् ।
पातयेत्तासु रेखासु पूर्व्वसूत्रान्तरान्तरम् ॥ इति ।

अत्र याम्योत्तरायताः पञ्च रेखाः, पूर्व्वपश्चिमायताश्चैकादशेति मूलोक्तक्रमाद्रेखापाते विशेषो दृश्यते । तदेवमत्र रेखापाते विशेषदर्शनात् स्वस्वसम्प्रदायानुसारेणैकतरं मतमाश्रयणीयमिति सिद्धान्तः । अत एव सम्प्रदायविधानत इति वक्ष्यति ।

३६ । तेषु पदेषु वीथ्यादिनिर्म्माणमाह—पङ्क्त्येति । पङ्क्त्या चतस्रो वीथीः प्रमार्जयेत् इति पूर्व्वेणान्वयः । अन्तरिति वक्ष्यमाणत्वादेता बहिर्वीथ्य इत्यवधेयम् । तथाच पूर्व्वे चतुःकोष्ठामेकां वीथीम्, दक्षिणेऽष्टकोष्ठामपराम्, पश्चिमे चतुःकोष्ठामन्याम्, उत्तरे चाष्टकोष्ठामितरां कुर्व्वीतेत्युक्तं भवति । अथान्तर्वीथिद्वयमाह—अन्तरिति । अन्तश्चतुष्काणां चतुष्कत्रयस्येत्यर्थः, उभयपार्श्वयोर्द्वे वीथ्यौ द्विद्विकोष्ठरूपे मार्जयेदित्यर्थः । एवं कृते फलितमाह—चतुःकोष्ठत्रयमेवावशिष्यत इति ।

३७-३८ । अथान्तश्चतुष्कत्रयस्य रजसाऽऽपूरणमाह—पदानीति । ईशानादिक्रमेणैव तानि पदानि अन्तःप्रतिचतुष्कस्थचतुश्चतुःपदानि क्रमेण श्वेतपीतारुणासितै रजोभिः

---

1. '-द्व-' B-C. 2. 'त्रीणि' A. 3. 'विधिवत् पूजये-' A-B.

आपूरयेदित्यर्थः। एवञ्च प्रतिचतुष्कम् ईशानकोष्ठं श्वेतम्, आग्नेयं पीतम्, नैरृतं रक्तम्, वायव्यञ्च कृष्णम् इत्युक्तं भवति।

शारदायां तृतीयपटले—

पदानि रञ्जयेत्तानि श्वेतपीतारुणासितैः।
रजोभिः श्यामलेनाथ वीथीरापूरयेत्ततः॥

इति वचनेन पदानां रजोभिः पूरणमात्रमभिहितम् न तु रजोन्यासस्य क्रमोऽभिहित इति। एतद्व्याख्याने राघवभट्टेन—

पीतारक्तसितासितं प्रतिपदं वह्न्यादिशर्व्वान्तकम्।

इति प्रपञ्चसारवचनैकदेशमुल्लिख्य वह्न्यादिक्रमेण पीतादिरजसां न्यासः प्रमाणीकृतः। एतन्मते आग्नेयपदं पीतम्, नैरृतपदं रक्तम्, वायव्यपदं श्वेतम्, ऐशानपदञ्च कृष्णमित्यवगम्यते।

न च, प्रसार्य्यास्फालयेत् सूत्रमित्यादिप्रागुक्तप्रयोगसारवचनप्राप्त-याम्योत्तरायत-पञ्चरेखापातकल्पे वह्न्यादिक्रमेण पीतादिवर्णानां न्यासः कल्प्यतां, श्रीतत्त्वचिन्तामणौ पूर्व्वापरायतपञ्चरेखापातकल्पे ईशानादिक्रमेण पीतादिरजसां न्यासस्य विशिष्याभिधानात्तत्रैव ईशानादिक्रमोऽस्त्विति वाच्यम्, पीतारक्तसितासितमित्यादिप्रागुक्त-प्रपञ्चसारवचनैकदेशस्य याम्योदीच्यसमायतं प्रणिगदन्त्यन्येऽपि तन्मन्त्रिणः। इति परपादपर्य्यालोचनया रेखापातस्य द्विविधेऽपि कल्पे श्रीमदाचार्य्यपादैर्वह्न्यादिक्रमेणैव रजोन्यासाभिधानात्। तस्मात् प्रागुक्तश्रीतत्त्वचिन्तामणि-प्रपञ्चसारवचनपर्य्यालोचनया सम्प्रदायानुसारेणोभयविधेऽपि मण्डले ईशानादिक्रमतो वा वह्न्यादिक्रमतो वा पीतादि-रजसां न्यासः कर्त्तव्य इत्युभयसम्प्रदायज्ञापनार्थमेव मूले 'सम्प्रदायविधानत' इत्युक्त-मिति सर्व्वमवदातम्।

श्यामलेन चेति। श्यामलवर्णेन वीथीः बहिश्चतुर्दिक्संस्था अन्तश्च पूर्व्वापर-संस्था द्विद्विपदा आपूरयेदित्यर्थः।

हयशीर्षपञ्चरात्रे तु—

पञ्चहस्तप्रमाणानि दश सूत्राणि पातयेत्।
नवधा भेदिते चैव एकाशीतिपदं भवेत्॥
वीथ्यौ मध्ये द्वे च षट्कं मार्जयेत् कोणपार्श्वयोः।
शोभार्थं रचयेन्मध्ये पद्मं नवभिरेव च॥

[ तत्राङ्कुरार्पणपात्राणि ]

पात्राणि त्रिविधान्याहुरङ्कुरार्पणकर्म्मणि ।
पालिकाः पञ्चमुख्यश्च शरावाश्च[1] चतुःक्रमात् ।
प्रोक्ताः स्युः सर्व्वतन्त्रज्ञैर्हरिब्रह्मशिवात्मकाः[2] ॥ ३९ ॥

[ तत्र पालिका ]

पालिकावक्त्रविस्तारः षोडशाङ्गुल उच्यते ।
भवेत् [3]कण्ठबिलश्चास्यास्तदष्टा[4]ङ्गुलविस्तृतम् ॥ ४० ॥

---

पदानि रञ्जयेत् पश्चाच् श्वेतपीतारुणासितैः ।
रजोभिः श्यामलेनाथ वीथीरापूरयेत्ततः ॥

इत्यनेनैकाशीतिपदात्मकमण्डलमभिहितम् । एवञ्चायमप्यपरः सम्प्रदाय इत्यवधेयम् ।

३९ । अथाङ्कुरपात्राण्युपदिशति—पात्राणीति । पालिकाः पञ्चमुख्यः शरावाश्चेति त्रिविधानि पात्राणि अङ्कुरार्पणकर्म्मणि विहितान्याहुरिति सम्बन्धः । तत्र पालिकादीनामर्थाः प्रदर्शिता राघवभट्टेन—"स्थूलान्युच्चानि शरावाण्येव पालिकाशब्देनोच्यन्ते । पालिका एव किञ्चिन्नीचाः पञ्चमुखयुक्ताः पञ्चमुख्य उच्यन्ते । शरावाः प्रसिद्धाः" इति । एतत्समानानुपूर्व्वीकशारदातिलकवचनव्याख्याने—'सर्व्वतन्त्रज्ञैरित्यनेन पञ्चदेवतादीक्षादिकर्म्मसु पात्रभेदो नास्तीति' राघवभट्टाः । चतुःक्रमादित्यनेन मध्यचतुष्कत्रये प्रतिचतुष्कं चत्वारि चत्वारि पालिकादीनि स्थापनीयानीत्युक्तम् । स्थापनञ्चेदं पश्चिमादिक्रमेणेति स्वयमेव वक्ष्यति । हरिब्रह्मशिवात्मका इति पालिका हरिरूपाः, पञ्चमुख्यो ब्रह्मरूपाः, शरावाश्च शिवरूपा इत्यर्थः, एतेनैतेषु पात्रेषु क्रमेण हरिब्रह्मशिवाः पूजनीया इत्युक्तम् ।

तदुक्तं वैदिकसर्व्वस्वधृतकापिले—

वैष्णवी पालिका ज्ञेया ब्राह्मी तु घटिकोच्यते ।
शाङ्करन्तु शरावं स्यात् त्रयमेतत् त्रिदैवतम् ॥ इति

४०-४१ । इदानीं क्रमप्राप्तं पालिकालक्षणमाह—पालिकेति । पालिका शराव-

---

1. '-वश्च' C. 2. '-त्मिकाः' C. 3. 'कर्ण-' A. 4. '-ष्टाङ्गुल-' C.

पादपोठस्य विस्तारः[1] षडङ्गुल[2] उदीरितः ।
चतुरङ्गुल उत्सेधस्तत्सन्धिश्चाङ्गुलं भवेत् ।
तत्सन्धिश्च [3]भवेद् द्वौ वा पादपोठार्द्धमेव च ॥ ४१ ॥

[ पञ्चमुखी ]

भवेत् पञ्चमुखी चैव घटिका सर्व्वकामदा ।
चतुरङ्गुलविस्ताराण्याहुर्वक्त्राणि पञ्च वै॥ ४२ ॥
चत्वारि च[4] चतुर्दिक्षु ऊर्द्ध्वमेकं[5] यथाविधि ।
घटिकाऽऽयाम[6]विस्तारो द्वादशाङ्गुल उच्यते ॥ ४३ ॥
आचार्य्याः कथयन्त्येके षोडशाङ्गुलमेव वा ॥ ४४ ॥

---

विशेषः, तस्य मुखस्य विस्तारः षोडशाङ्गुलः । कण्ठस्थविलस्य विस्तारोऽष्टाङ्गुलः । पादपीठस्य अधःप्रदेशस्य विस्तारः षडङ्गुल इति । उत्सेधश्चतुरङ्गुलः । तत्सन्धिरिति । तस्य पादपीठस्य सन्धिः शरावपादपीठयोः संयोगस्थलमित्यर्थः । इदं सन्धिपरिमाणं द्व्यङ्गुलं वा त्र्यङ्गुलं वापि भवितुमर्हति इत्येवाह—तत्सन्धिश्चेत्यादिना । अत्र पादपीठस्योत्सेधार्द्धेन द्व्यङ्गुलम्, विस्तारार्द्धेन त्र्यङ्गुलं वेत्यवधेयम् ।

४२—४४ । पञ्चमुखीलक्षणमाह—भवेदिति । अस्याः पञ्चमुख्याः पञ्च मुखानि तानि च सर्व्वाण्येव चतुश्चतुरङ्गुलविस्ताराणि । तेषाञ्च मुखानां स्थानमाह—चत्वारीति । चतुर्दिक्षु चत्वारि मध्ये चैकमिति पञ्च । अस्या घटिकेति नामान्तरम् । घटिकैव पञ्चमुखयुक्ता पञ्चमुखीत्यर्थः । अत एव घटिकायामविस्तार इत्यादिना पञ्चमुख्या एवायामविस्तारौ प्रतिपादितौ । घटिकाया आयामो दैर्घ्यम् औन्नत्यमित्यर्थः, विस्तारो व्यासश्च द्वादशाङ्गुलपरिमाणः । न च विस्तार इत्येकवचनाद् आयामस्य विस्तार इति षष्ठीसमास इति वाच्यं वचनान्तरेणौन्नत्यस्याप्रतिपादनात्,

आयामविस्तराभ्यान्तु घटिका द्वादशाङ्गुला ।

इति हयशीर्षपञ्चरात्रीयसङ्कर्षकाण्डवचनसंवादाच्च आयामविस्तारयोरुभयोरेव द्वादशाङ्गुलपरिमाणत्वप्रतिपादनात् । तस्मादायामेन सहितो विस्तार इत्येवार्थः

---

1. '-रं-' A-B. 2. '-मु' A-B. 3. 'भवेन्नो' ? B. 4. '-रिंशच्च' ? A-B. 5. '-वं' A-B. 6. '-नाम-' C.

[ शरावः ]

**द्वादशाङ्गुलविस्तारं शरावस्य मुखं स्मृतम् ।**
**चतुरङ्गुलविस्तारमधस्तान्मूलमुच्यते ॥ ४५ ॥**

[ पालिकादीनां परिमाणे विशेषः ]

**यथासम्भवमानं वा[1] केनापीत्यभिधीयते ॥ ४६ ॥**

---

सम्यक् । आचार्य्या इति केचिदाचार्य्या घटिकाया विस्ताराऽऽयामौ षोडशाङ्गुलाविति वदन्तीत्यर्थः ।

४५ । क्रमप्राप्तं शरावस्वरूपमाह—द्वादशेति । शरावस्य मुखं द्वादशाङ्गुलपरिमाणं मूलं चतुरङ्गुलमिति ।

एषामुच्छ्राय उपदिष्टः शारदायां तृतीयपटले—

पात्राणि त्रिविधान्याहुरङ्कुरार्पणकर्म्मणि ।
पालिकाः पञ्चमुख्यश्च शरावाश्च चतुःक्रमात् ॥
प्रोक्ताः स्युः सर्व्वतन्त्रज्ञैर्हरि-ब्रह्म-शिवात्मकाः ।
एषामुच्छ्राय उज्ञेयः षोडश-द्वादशाष्टभिः ॥ इति ।

एवञ्च पालिकाया उच्छ्रायः षोडशाङ्गुलः, पञ्चमुख्या द्वादशाङ्गुलः शरावस्याष्टाङ्गुल इति ।

४६ । यथासम्भवमिति । प्रागुक्तानां पालिकादीनां प्रागुक्ततत्तत्परिमाणसम्पादनासम्भवे यथासम्भवं परिमाणं कर्त्तव्यमित्यर्थः । तदुक्तं राघवभट्टधृतसिद्धान्तशेखरे—

यथासम्भवमानं वा पालिकादि समाचरेत् ॥ इति ।

हयशीर्षपञ्चरात्रे सङ्कर्षकाण्डेऽङ्कुरपात्राण्येवमभिहितानि । यथा—

पात्रं त्रिविधमुद्दिष्टं मङ्गलाङ्कुरकर्म्मणि ।
शरावो घटिका पाली तेषां लक्षणमुच्यते ॥
द्वादशाङ्गुलविस्तारं शरावस्य मुखं भवेत् ।
षोडशाङ्गुलकस्यापि मूलं स्याच्चतुरङ्गुलम् ॥
पञ्चवक्त्रा घटी ज्ञेया सर्व्वकामफलप्रदा ।
ऊर्द्ध्वमेकं भवेद्वक्त्रं शेषान् दिक्षु प्रकल्पयेत् ॥

---

1. 'नामानि' C.

[ पालिकादीनामुपादानानि ]

**सुवर्ण[1]रूप्यताम्रैर्वा मृदा वा रचयेत् सुधीः ।**

[ पात्रन्यासक्रमः ]

**त्रिगुणीकृत[2]सूत्रेण शुभान्यावेष्टयेत् त्रिधा ॥ ४७ ॥**

**प्रक्षाल्य देशिकस्तेषु पदेष्वाहितशालिषु ।**

**सगन्धदर्भकूर्च्चेषु पश्चिमादि निवेशयेत् ॥ ४८ ॥**

---

चतुरङ्गुलमात्राणि मुखानि परिकल्पयेत् ।
आयामविस्तराभ्यान्तु घटिका द्वादशाङ्गुला ॥
षोडशाङ्गुलमात्रा वा घटिकाऽऽयामविस्तरा ।
पालिकाविस्तराः प्रोक्ताः षोडशाङ्गुलसम्मिताः ॥
स्मृतं वक्त्रं तथा चास्या अर्द्धमात्रं सुसंवृतम् ।
षडङ्गुलमधोभागे तावदेव तु विस्तृतम् ॥
तन्मानं पादपीठन्तु चतुरङ्गुलमुच्छ्रितम् ।
तत्सन्धिश्चाङ्गुलो ज्ञेय उत्साहस्त्र्यङ्गुला भवेत् ॥

अत्र 'चतुरङ्गुलमुच्छ्रितं' 'तत्सन्धिश्चाङ्गुलो ज्ञेयः' इत्युक्त्या चतुरङ्गुलोच्छ्रितस्य पादपीठस्यैकाङ्गुलसन्धौ कृते पादपीठस्योच्छ्रायस्त्र्यङ्गुल इति हृदयम् ।

सुवर्णेति । सुवर्णेनेति प्रथमः कल्पः, तदसम्भवे रौप्येण वा ताम्रेण वा मृत्तिकया वा पात्राणि रचयेद् इति क्रमेणोत्तरोत्तरोपादानानामपकर्ष इति प्रतिपादितम् । सुधीरित्यनेन च पूर्व्वपूर्व्वसम्भवे क्वचिदप्युत्तरोत्तरोपादानानामादानं न कर्त्तव्यमिति सूचितम् । तथाच राघवभट्टधृतवचनम्—

सम्भवे कनकरूप्यताम्रता मार्त्तिकान्यभिनवान्यथवा स्युः । इति ।

४७-४८ । त्रिगुणीकृतेति । तानि च शुभानि कृष्णवर्ण-व्रणादिरहितानीत्यर्थः । पात्राणि प्रक्षाल्य त्रिगुणीकृतसूत्रेण त्रिधा वेष्टयेत् । न चादौ वेष्टनं पश्चात् प्रक्षालनमिति वाच्यम्, राघवभट्टेन "पूर्व्वं प्रक्षालनं पश्चात्तन्तुवेष्टनमि"त्यनेन तन्तुवेष्टनात् पूर्व्वमेव प्रक्षालनाभिधानात् । ततश्च आहितशालिषु धान्ययुक्तेषु पदेषु प्रागुक्ताङ्कुरमण्डलान्तर्व्वर्त्तिद्वादशपदेषु गन्ध-दर्भकूर्च्चयुक्तेषु पश्चिमादिक्रमेण पात्राणि निवेशयेदित्यर्थः ; दर्भकूर्च्चलक्षणन्तु—'सप्तविंशतिदर्भाणां वेण्या ग्रन्थिविभूषित'मित्यादिना स्वयमेव पञ्चमप्रकाशे वक्ष्यते ।

---

1. '-ताम्ररूप्यै-' A-B. 2. '-कृत्य' A-C.

करीषवालुकामृद्भिस्तानि पात्राणि पूरयेत् ।
प्रोक्तेषु तेषु पात्रेषु हरिब्रह्मशिवान् यजेत् ॥ ४६ ॥

---

एतदुक्तं भवति—प्रागुक्तद्वादशपदेषु प्रथमं धान्यानि गन्धदर्भकूर्च्चानि च निधाय पश्चिमचतुष्के एकैकशः पालिकाचतुष्कम्, मध्यमकोष्ठचतुष्के पञ्चमुखीचतुष्कम्, पूर्व्व-कोष्ठचतुष्के शरावचतुष्कं निवेशयेदिति ।

अत्र प्रतिचतुष्कं पालिकादीनां न्यास आग्नेयादिक्रमेण । तदुक्तं प्राणतोषणीधृत-प्रयोगसारे—

एवं कृत्वा साधकस्तु तत्र पात्राणि विन्यसेत् ।
वह्न्यादीशानपर्य्यन्तं चतुष्केषु पृथक् पृथक् ॥ इति ।

४६ । तेषां पात्राणामापूरणमाह—करीषेति । करीषं शुष्कगोमयं, वालुकामृदः प्रसिद्धाः । अनेन प्रतिपात्रं प्रथमं करीषं तदुपरि वालुका, तदुपरि च मृद् इत्यनया रीत्या पूरणमुपदिश्यते । तदुक्तं हयशीर्षपञ्चरात्रे आदिकाण्डे—

करीषवालुकामृद्भिः पूरयेदुत्तरोत्तरम् । इति ।

राघवभट्टधृतप्रयोगसारेऽपि—

मृद्वालुकाकरीषैश्चोर्द्ध्वतः पात्राणि पूरयेत् । इति ।

राघवभट्टेनापि एतैरुत्तरोत्तरं सर्व्वाण्यपि पात्राणि पूरयेदित्युक्तम् । एतदपि पात्रस्थापन-वदाग्नेयादिक्रमेणैव कर्त्तव्यम् । प्रोक्तेष्विति—पश्चिमपात्रचतुष्के हरिम्, मध्यमचतुष्के ब्रह्माणम्, पूर्व्वचतुष्के च शिवं यजेदित्यर्थः ।

अत्र मृत्तिकाहरणे विशेषमाह राघवभट्टधृतसिद्धान्तशेखरे—

गन्धादिभिश्च कुद्दालं पूजयित्वा दिनान्तरे ।
गीतनृत्यसमायुक्तं गजवाजिसमन्वितम् ॥
गुर्व्वादयो रथारूढा गजारूढास्तथाऽपरे ।
गत्वा तीरं तडागस्य नद्याः पुष्पवनस्य वा ॥
तत्र शुद्धं भुवो भागं दर्भैः संमृज्य चास्त्रतः ।
अभ्युक्ष्य चार्घ्यतोयेन तत्तन्मन्त्रमनुस्मरन् ॥
हृदा भूमिं समावाह्य गन्धपुष्पैः समर्च्चयेत् ।
कुद्दालीमस्त्रमन्त्रेण खात्वा भूमिमथो मृदम् ॥

[ प्रागुक्तकर्म्मणां दिवैव कर्त्तव्यत्वम् ]

एतत् कर्म्म दिवाकाले कुर्य्याद्रात्रौ न बुद्धिमान् ॥ ५० ॥

[ बीजारोपणस्य रात्रिकर्त्तव्यत्वम् ]

बीजारोपणकार्य्यन्तु[1] निशायां तन्त्रवित्तमैः ।
बीजानामधिपो यस्मान्नित्यं कुमुदबान्धवः ॥ ५१ ॥

[ बीजनिर्व्वपणम् ]

जलबीजेन बीजानि दुग्धैः प्रक्षाल्य मन्त्रवित् ।
मूलमन्त्राभिजप्तानि पञ्चघोषपुरःसरम् ॥ ५२ ॥
आशी[2]र्वाग्भिर्द्विजातीनां मङ्गलाचारपूर्व्वकम् ।
निर्व्वपेत्तेषु पात्रेषु प्राङ्मुखो वाप्युदङ्मुखः ॥ ५३ ॥

---

गृहीत्वा वामदेवेन पूरयेत् कांस्यपात्रके ।
हृदा मृदश्च संमृज्य वस्त्रेणाच्छाद्य धारयेत् ॥
पुरं वा नगरं वापि सर्व्वमङ्गलनिस्वनैः ।
गुरुं प्रदक्षिणं कृत्वा मण्डपं त्वानयेत्ततः ॥ इति ।

५० । एतदिति । एतदङ्कुरार्पणाङ्गमण्डलादि-हरिहरशिवपूजान्तं कर्म्म दिवैव कुर्यान्न रात्रावित्यर्थः ।

५१ । बीजारोपणकर्म्मणो निशायां कर्त्तव्यत्वमाह—बीजेति । अत्र कारणमाह—बीजानामिति । एवञ्च चन्द्रस्यैव निशाया अधीश्वरत्वेन तदधिपतिकानां बीजानां तत्रैव वपनं शुभाय कल्पत इत्याशयः ।

५२—५३ । बीजवपनमाह—जलेति । जलबीजेन वमिति वरुणबीजेन । प्रक्षाल्येति वक्ष्यमाणानि बीजानीति शेषः । मूलमन्त्रैः देयतत्तद्देवता-तत्तन्मन्त्रैरभिजप्तानि । जपश्चाष्टोत्तरशतमष्टोत्तरसहस्रं वा ।

संख्यानुक्तौ शतं साष्टं सहस्रं वा जपादिषु ।

इति राघवभट्टधृतमहाकपिलपञ्चरात्रवचनात् । पञ्चघोषपुरःसरमिति । पञ्चघोषास्तु

---

1. '-ञ्च' C. 2. '-भिश्च द्वि-' B.

[ वपनीयानि बीजानि ]

शालीश्यामाढकीमुद्गनिष्पावतिलसर्षपाः ।
कुलत्थ-कङ्गु-माषाश्च बीजान्यङ्कुरकर्म्मणि ॥ ५४ ॥

[ तेषु स्कन्दादिदशदेवतापूजा ]

स्कन्दं कङ्गौ च निष्पावे वायुमग्निं कुलत्थके ।
आढक्यां निर्ऋतिं सोमं मुद्‌गे वैवस्वतं तिले ॥ ५५ ॥
प्रजापतिं शालिबीजे [1]चानन्तं सर्षपेऽर्च्चयेत् ।
श्यामायामर्च्चयेदिन्द्रं माषे तु वरुणं यजेत् ॥ ५६ ॥
सोमं संपूजयेन्नित्यमधिवासदिनावधि ॥ ५७ ॥

---

पटह-कांस्य-मृदङ्ग-मुखवाद्य-शङ्खा इति राघवभट्टः । मङ्गलेति, मङ्गलाचारास्तु हुलहुल-ध्वनिप्रभृतयः । निर्व्वपेदिति । प्राङ्मुख उदङ्मुखो वा तेषु पात्रेषु पालिकादिषु बीजानि निर्व्वपेदित्यर्थः । तदुक्तं राघवभट्टधृतसिद्धान्तशेखरे—

बीजमुख्येन मूलेन प्राङ्मुखो वाप्युदङ्मुखः ।
वापयेत् सर्व्वबीजानि पालिकादिष्वनुक्रमात् ।
बीजानामधिपः सोमस्तस्माद्गात्रौ तु निर्वपेत् ॥ इति ।

५४ । शालीति । शालयः हैमन्तिकधान्यानि, श्यामाकः शामा इति वङ्गेषु प्रसिद्धं धान्यम् । आढकी अडहर इति वङ्गेषु प्रसिद्धो द्विदलविशेषः । निष्पावा राजमाषाः । कङ्गुः काउनी, काअन् इति च यस्य वङ्गेषु प्रसिद्धिः ।

५५—५६ । एतेषु दशसु बीजेषु स्कन्दादीनां वरुणान्तानां दशदेवतानां क्रमेण पूजनमुपदिशति—स्कन्दमित्यादिना वरुणं यजेदित्यन्तेन ।

५७ । सोममिति । नित्यमिति अङ्कुरार्पणदिवसात् प्रभृत्यधिवासदिनपर्य्यन्तं सोममर्च्चयेदित्यर्थः ।

तदुक्तं राघवभट्टधृतसिद्धान्तशेखरे—

सोमं संपूजयेन्नित्यमधिवासदिनावधि ।
अधिवासदिने प्राप्ते सोममुद्वासयेद्‌ गुरुः ॥ इति ।

---

1. '-श्चान-' C.

[ बलिविधानम् ]

हरिद्राद्भिः समभ्युदय वस्त्रैराच्छाद्य देशिकः ।
बलिं त्रिविधपात्राणां दिक्षु पूर्व्वादितः क्षिपेत् ।
प्रणवाद्यैर्नमोऽन्तैश्च रात्रौ रात्रीशनामभिः ॥ ५८ ॥

[ सप्तानां रात्रीणामधिपतयः ]

भूतानि पितरो यक्षा नागा ब्रह्मा शिवो हरिः ।
सप्तानामपि रात्रीणां देवताः समुदाहृताः ॥ ५९ ॥

---

५८। हरिद्राद्भिरिति। हरिद्राद्भिः हरिद्राचूर्णमिश्रितजलैः समभ्युक्ष्य बीजानीति शेषः। तदुक्तं राघवभट्टधृतप्रयोगसारे—

त्रियम्बकाय शर्व्वाय शङ्कराय शिवाय च ।
सर्व्वलोकप्रधानाय शाश्वताय नमो नमः ॥
विकीर्य्यानेन मन्त्रेण हरिद्राचूर्णमिश्रितम् ।
तोयं प्रवर्षयेत्तेषु सिञ्चेत्तोयैर्दिनं प्रति ॥

अत्र दिनं प्रतीति प्रतिदिनमित्यर्थः। वस्त्रैरिति। नूतनवस्त्रैराच्छाद्य। अत्र वस्त्रैरिति बहुवचनेन वस्त्राणां त्रिसंख्याकत्वं सूचितम्। तथाच प्रत्येकचतुष्टयमेकैकेनाच्छाद्य इत्यर्थः। एतदेव देशिक इत्यनेन सूचितम्। बलिमिति। त्रिविधपात्राणां प्रागुक्तपालिकापञ्चमुखीशरावाणाम्, बलिं वक्ष्यमाणभूतादीनामित्यर्थः। पूर्व्वादित इति पात्रन्यासस्य पश्चिमादित्वेऽपि बलिं पूर्व्वादिक्रमेणैव कुर्य्यादित्यर्थः। प्रणवाद्यैरिति। प्रणवाद्यैर्नमोऽन्तैश्च मन्त्रै रात्रीशानां भूतानि पितरावित्यादिवक्ष्यमाणलक्षणानां नामभिर्बलिं क्षिपेदिति सम्बन्धः। ततश्च 'एष बलिः ॐ भूतेभ्यो नमः' इत्यादयो बलिक्रमाः।

५९। रात्रीशनामभिरित्युक्तम्, के ते रात्रीशा इत्याकाङ्क्षायामाह—भूतानीति। एवञ्च भूतानि प्रथमाया रात्रेर्देवताः, पितरो द्वितीयाया रात्रेरित्येवंक्रमेण सप्त देवताः सप्तरात्रेश्वरा इति। तासां बलिरपि प्रथमाया रात्रेः सप्तमीं रात्रिं यावत् क्रमेण विधेय इत्यर्थः।

[ बलिद्रव्यभेदाः ]

भूतेभ्यः [1]स्युर्लाजतिलहरिद्रादधिशक्तवः ।
[2]सान्नाः पितृभ्यः सतिलास्तण्डुलाः परिकीर्त्तिताः ॥ ६० ॥
करम्भलाजा यक्षेभ्यो नारिकेलोदकान्विताः ।
शक्तुः पिष्टश्च नागेभ्यो ब्रह्मणे पङ्कजाक्षतम् ॥ ६१ ॥
[3]सापूपमन्नं शर्व्वाय विष्णवे स्याद् गुडौदनम् ॥ ६२ ॥

[ तत्र विशेषः ]

नवरात्रविधौ मन्त्री दुग्धान्नं कृशरं पुनः ॥ ६३ ॥
प्रदद्याद् विष्णवे [4]चैवं सर्व्वेभ्यः पायसैश्च वा ।

[ दिक्पालबलिः ]

ततश्च लोकपालेभ्यः पायसान्नैर्बलिं हरेत् ॥ ६४ ॥

---

६०—६१। अथ देवताभेदेन बलिद्रव्यभेदानाह—भूतेभ्य इत्यादिना। करम्भेति 'करम्भो दधिशक्तव' इत्यमरः। तेन मिश्रिता लाजाः। सापूपमिति पिष्टकसहितम् 'पूपोऽपूपः पिष्टकः स्यादि'त्यमरः।

६३—६४। पूर्व्वं नवमे सप्तमेऽपि वा [४।३२] इत्यनेन नवरात्रद्यात्मको यः कल्प उक्तस्तत्र बलेर्विशेषमाह—नवरात्रविधाविति। तत्र सप्तमीं रात्रिं यावत् प्रागुक्तक्रमेण बलिं विधाय अष्टम्यां रात्रौ विष्णवे दुग्धान्नम्, नवम्यां रात्रौ च विष्णव एव कृशरं प्रदद्यादिति। तदुक्तं राघवभट्टेन—"यदा नवरात्रेषु बलिदानं तदा रात्रिद्वये बलिद्रव्यं देवता चोक्ताचार्य्यैः—वैष्णवश्च दौग्धान्नं कृशरश्च वैष्णवेयं यदि नवरात्रक्रमेण बलिरुक्त" इति। सर्व्वेभ्य इति। प्रागुक्तबलिद्रव्याणामलाभे भूतादिभ्यः सर्व्वेभ्य एव पायसैः एवं पूर्व्वोक्तक्रमेण बलिं प्रदद्यादित्यर्थः।

ततश्चेति। ततो भूतादिबलिदानानन्तरं पायसान्नैर्लोकपालेभ्यो बलिं हरेत् इति। अयं बलिः पूर्व्वादिक्रमेणैव। तत्रानन्तस्य बलिर्निरृतिवरुणयोर्मध्ये, ब्रह्मणस्त्विशानन्द्रयोर्मध्ये इति विशेषः।

---

1. '-श्च ला-' A. 2. 'ततः' B. 3. 'सपूप-' A-B. 4. 'चैनं' A. 'तैलं' B.

[ अङ्कुरपरीक्षा ]

अथाङ्कुरं परीक्षेत यजमानः शुभाशुभम् ॥ ६५ ॥

[ तत्र शुभान्यङ्कुराणि ]

सम्यगूर्द्ध्वं प्ररूढानि कोमलानि [1]सितानि च।
अङ्कुराणि शुभान्याहुरिति मन्त्रविदो [2]जनाः॥ ६६ ॥

[ अशुभान्यङ्कुराणि ]

धूम्रवर्णान्यपूर्णानि तथा तिर्य्यग्गतानि च।
श्यामलानि च कुब्जानि वर्ज्जयेदशुभानि च॥ ६७॥

---

६६। अथाङ्कुरपरीक्षायां शुभान्यङ्कुराण्याह—सम्यगिति। सितानि शुभ्राणि। मितानीति पाठे मितानि समपरिमाणाग्राणीत्यर्थः।

६७। अशुभान्यङ्कुराण्याह—धूम्रेत्यादिना। अपूर्णानि विरलसन्निवेशानि। तिर्य्यग्गतानि वक्राणि। कुब्जानि मध्यतो भग्नुराणि। अत्र शुभाशुभाङ्कुरपरीक्षामाह राघवभट्टधृतसिद्धान्तशेखरे—

यजमानाभिवृद्ध्यर्थमङ्कुराणि परीक्षयेत्।
सम्यगूर्द्ध्वं प्ररूढानि कोमलानि सितानि च॥
धूम्रवर्णान्यपूर्णानि तथा तिर्य्यग्गतानि च।
श्यामलानि च कुब्जानि वर्जयेदशुभानि तु॥
अवृष्टिं कुरुते कृष्णं धूम्राभं कलहं तथा।
अपूर्णं जननाशञ्च दुर्भिक्षं श्यामलाङ्कुरम्।
तिर्य्यग् गते भवेद् व्याधिः कुब्जे शत्रुभयं तथा॥ इति।

---

1. 'मितानि' A-B. 2. 'विदुः' A-B.

[ अशुभाङ्कुरोद्गमे शान्तिः ]

तद्दोषशमनार्थञ्च शान्तिहोमं समाचरेत् ।
गुरुर्मूलेन जुहुयाच्छतं वापि सहस्रकम् ॥ ६८ ॥

इति श्रीपूर्णानन्दपरमहंसविरचिते श्रीतत्त्वचिन्तामणौ
चतुर्थः प्रकाशः ।

---

६८। अशुभाङ्कुरोद्गमे प्रतीकारमाह—तद्दोषेति। मूलेनेति देयमन्त्रेणेत्यर्थः। शतं वापीति। दोषस्यालपत्वे शतं प्राचुर्य्ये सहस्रमित्यर्थः। सिद्धान्तशेखरेऽपि—

अशुभे चाङ्कुरे जाते शान्तिहोमं समाचरेत् ।
मूलमन्त्रेण जुहुयाद् गुरुर्मूर्त्तिधरैः सह ।
अघोरास्त्रेण चास्त्रेण शतं वाथ सहस्रकम् ॥ इति ।

# पञ्चमः प्रकाशः

[ दीक्षाङ्गाधिवासनविधिर्दीक्षाविधिश्च ]

[ अधिवासस्य दीक्षापूर्व्वदिनकर्त्तव्यत्वम् ]

अथ दीक्षादिनात् पूर्व्वमधिवासं चरेद् गुरुः ।

[ गणेशादिपञ्चदेवतापूजनम् ]

गणेशं सवितारञ्च शङ्करं शङ्करप्रियाम् ॥ १ ॥
पूजयेत् [1]कमलानाथं षोडशैरुपचारकैः ।

[ तत्र पञ्चायतनदीक्षायां शिवस्य पूजाक्रमः ]

यदा तु शङ्करं मध्य ऐशान्यां श्रीपतिं यजेत् ॥ २ ॥
आग्नेय्यां [2]च तथा हंसं नैरृत्यां [3]पार्व्वतीसुतम् ।
वायव्याञ्च समापूज्या भवानी भक्तवत्सला[4] ॥ ३ ॥

---

१। एवं चतुर्थेऽङ्कुरार्पणान्तं कर्म्माभिधाय पञ्चमे दीक्षाक्रमं विवक्षुः प्रथमं तदङ्गमधिवासमाह—अथेति। तत्र च गणेशादिदेवतापञ्चकमादौ पूजयेत्।

२-३। पञ्चायतनदीक्षायां प्रागुक्तानां पूजने विशेषमाह—यदा त्विति। अत्र उपास्यत्वेन मुख्यं देवं मध्ये यजेदितरांस्तु चतुरः कोणचतुष्टये। एवञ्च शङ्करोपासकः मुख्यतया यदा शङ्करं मध्ये यजेत्तदा ऐशान्यां श्रीपतिम्, आग्नेय्यां सूर्य्यम्, नैरृत्यां गणेशम्, वायव्याञ्च अम्बिकां यजेदिति। एवं वक्ष्यमाणविष्णुसूर्य्याम्बिकाहेरम्बपूजनेऽपि ईशानादिक्रमेण पूजनं परं परं वक्ष्यते।

अत्र चतुर्दिक्षु कलसचतुष्टयं मध्ये च कलसमेकं संस्थाप्य तेषु पूजनमनुष्ठेयम्। एकदेवताकदीक्षास्थले तु एकमेव कलसमारोप्य तत्र देवतां पूजयेत्। अत एव प्रपञ्चसारे—

---

1. 'परया भक्त्या' A-B. 2. 'गणनाथञ्च' A-B. 3. 'तपनं तथा' A-B.
4. '-मम्बिकाञ्चैव यजेन्मन्त्री समाहितः' A-B.

[ विष्णोः ]

[1]यदा तु मध्ये गोविन्दमैशान्यां शङ्करं यजेत् ।
आग्नेय्यां गणनाथञ्च नैर्ऋत्यां [2]तपनं तथा ।
वायव्या[3]मम्बिकाञ्चैव यजेन्मन्त्री समाहितः ॥ ४ ॥

[ सूर्य्यस्य ]

[4]सहस्रांशुं यदा मध्य ऐशान्यां [5]पार्व्वतीप्रियम्[6] ।
आग्नेय्या[7]मेकदन्तञ्च नैर्ऋत्या[8]मच्युतं यजेत् ।
[9]वायव्यां पूजयेद्देवीं भोगमोक्षैकभूमिकाम् ॥ ५ ॥

---

प्रोक्तेनैवं कलसविधिनैकेन वाऽनेककुम्भैः ।

इत्यनेनाचार्य्यैरेकानेककुम्भस्थापनं व्यवस्थापितम् ॥

तन्त्रसारधृतगणेशविमर्षिणीवचने एकत्रैव सर्व्वेषां संग्रहो दृश्यते । यथा—

शम्भौ मध्यगते हरीन-हरभू-देव्यो हरौ शङ्करे-
भास्येनागसुता रवौ हरगणेशाऽजाऽम्बिकाः स्थापिताः ।
देव्यां विष्णुहरैकदन्तरवयो लम्बोदरेऽजेश्वरे-
नार्य्याः शङ्करभागतोऽतिसुखदा व्यस्तास्तु ते हानिदाः ॥ इति ।

अत्र ऐशान्यां श्रीपतिं यजेदित्यादिना ईशानादिक्रमेणैव सर्व्वासामङ्गदेवतानां पूजनमभिहितम् । तन्त्रसारधृतरामार्च्चनचन्द्रिका-गौतमीययोस्तु—

यदा तु मध्ये गोविन्दमाग्नेय्यां गणनायकम् ।
नैर्ऋत्यां हंसमभ्यर्च्य वायव्यामर्च्चयेच्छिवाम् ।
ऐशान्यां शङ्करञ्चैव भोगमोक्षफलाप्तये ॥

इत्यादिना आग्नेयादिक्रमेणाङ्गदेवतानां पूजनमुक्तम्, एवं स्थिते प्रस्थानद्वये स्वस्वसम्प्रदायानुगत्यैकतरदाश्रयणीयम् । अत एव "वस्तुतो वैकल्पिकमिति साम्प्रदायिका" इति तन्त्रसारकृतः ।

---

1. 'सहस्रांशुं यदा मध्ये' A-B. 2. 'अच्युतं यजेत्' A-B. 3. '-व्यां पूजयेद्देवीं भोगमोक्षैकभूमिकाम्' A-B. 4. 'भवानीन्तु' A-B. 5. 'माधवं यजेत्' B. 6. -सुतम्' A. 7. '-य्यां पार्व्वतीनाथं' B. 8. '-त्यां गणनायकम्' B. 9. 'प्रद्योतनन्तु वायव्यामाचार्य्यस्तत्र पूजयेत्' B.

[ भवान्याः ]

भवानीन्तु[1] यदा मध्य ऐशान्यां माधवं यजेत् ।
आग्नेय्यां पार्व्वतीनाथं नैर्ऋत्यां गणनायकम् ।
प्रद्योतनन्तु वायव्यामाचार्य्यस्तत्र पूजयेत् ॥ ६ ॥

[ गणेशस्य ]

हेरम्बन्तु यदा मध्य ऐशान्यामच्युतं यजेत् ।
आग्नेय्यां पञ्चवक्त्रञ्च नैर्ऋत्यां जगदम्बिकाम् ।
वायव्यां द्युमणिञ्चैव यजेन्मन्त्री समाहितः ॥ ७ ॥

[ एषां निरुक्तस्थानादन्यत्र पूजने दोषः ]

स्वस्थानवर्जिता देवाः शोकमोहभयप्रदाः ।
मन्त्ररत्नावलेश्चैतत्[2] प्रसङ्गान्मतमीरितम् ॥ ८ ॥

---

८। मन्त्रेति। प्रसङ्गादिति। प्रागुक्तपूजनक्रमः पञ्चायतनदीक्षायामेव विहितः, परन्तु—

श्यामायां भैरवीताराच्छिन्नमस्तासु भैरवि ।
मञ्जुघोषे तथा रौद्रे पञ्चाङ्गं नेष्यते बुधैः ॥

इति तन्त्रसारधृतरुद्रजामलवचनेनात्र पञ्चायतनदीक्षाया अनुपयोगात् प्रसङ्गादित्युक्तम्। एवञ्चात्रानुपयोगित्वेऽपि अन्यत्रान्यत्रोपयोगित्वाद्द दीक्षास्वरूपनिरूपणे पञ्चायतनदीक्षायां यो विशेषस्तस्याप्यभिधानमुचितमेवेति ग्रन्थकृतामाशयः।

समाहितेन मनसा ध्यायन्मन्त्रस्य देवताम् ।
प्राणप्रतिष्ठां कुर्व्वीत तन्त्रमन्त्रविचक्षणः ॥

इति शारदातिलकचतुर्थपटलवचनव्याख्याने राघवभट्टेन "मन्त्रस्य देवतामित्येकमन्त्रदीक्षायाम्, पञ्चायतनदीक्षापक्षे पञ्च कलसान् संस्थाप्य तत्तत्कलसे तत्तद्देवतामावाहयेद्" इत्युक्तम्। एवञ्चैकदेवतादीक्षाविषये पञ्चाङ्गप्रक्रियाया उपयोगो नास्तीति राघवभट्टमतेनापि प्रसङ्गादिति साधु संगच्छते।

---

1. '-ञ्च' C. 2. '-व' A.

[ एषु गौणमुख्यभेदेनार्चनक्रमभेदः ]

[1]मुख्ये पुष्पाञ्जलिं दत्त्वा गणेशाद्यर्च्चनं [2]चरेत् ।
गणेश एव मुख्यश्चेत्तत्र सूर्य्य[3]-क्रमाद् भवेत् ॥ ९ ॥

[ एतेषामपूजने दोषः ]

अनभ्यर्च्य नरो याति नरकं नात्र संशयः ॥ १० ॥

[ दिक्पालवलिः ]

अथ दिक्पालदेवेभ्यो वलिं दद्याद् गुरूत्तमः ॥ ११ ॥

---

९ । मुख्य इति । मुख्ये उपास्यतया प्रधाने पुष्पाञ्जलिं दत्त्वा तत्तत्कल्पविहित गणेशादीनामर्च्चनं कुर्य्यादित्यर्थः । अत्र मुख्यदेवतायै प्रथमं पुष्पाञ्जलिं दत्त्वा गणेशादीनां पूजनं निर्व्वर्त्त्य मुख्यदेवतापूजनं कुर्य्यादिति केचित् । अपरे तु अत्र पुष्पाञ्जलिशब्देन पूजासमाप्तौ देयं पुष्पाञ्जलिमाचक्षते । तथाच प्रधानदेवताया पूजनं समाप्य तस्यै पुष्पाञ्जलिं दत्त्वा गणेशादीनामर्च्चनं चरेदिति वदन्ति । तदेवं स्थिते वचनस्योभयथा व्याख्याने स्वस्वसम्प्रदायानुसारेणैकतरः पक्षः समाश्रयणीय इति बोध्यम् । अत एव राघवभट्टेन—"एतच्च स्वस्वगुरुसम्प्रदायानुसारेण ज्ञेयम्" इत्युक्तम् ।

तन्त्रसारकृता तु—"अङ्गदेवतापूजाकालस्तु पीठदेवतापूजानन्तरम्, तथाच सनत्कुमारतन्त्रे—

पीठस्यार्च्चनमङ्गदेवयजनं प्राणप्रतिष्ठा तत
आह्वानं निजमुद्रिकाविरचनं ध्यानं प्रभोः पूजनम् ।"

इत्यनेन प्रधानदेवतापीठपूजानन्तरं गणेशादीनामर्च्चनमभिहितम् । मुख्ये पुष्पाञ्जलिं दत्त्वा इत्यादिवचनानान्तु स्थापितप्रतिमायन्त्रादिपरत्वमुपपादितम् "यत्तूक्तम्—

मुख्ये पुष्पाञ्जलिं दत्त्वा अङ्गदेवान् समर्च्चयेत् ।

तत्तु स्थापितप्रतिमायन्त्रादिपरमित्यन्तेन ग्रन्थेन ।

११ । अथेति । पूजादिकं समाप्य । दिक्पालवलिक्रमस्तु नवमपटले वक्ष्यते ।

---

1. 'अथ' B. 2. 'भवेत्' A-C. 3. '-र्य्यः' ? B.

[ अथ शिष्ये गुरोः कृत्यम् ]

[1]अथ शिष्यं समानीय सुस्नातं समलङ्कृतम् ।
तद्गात्रे मातृकान्यासं तथा ऋष्यादिकं न्यसेत् ॥ १२ ॥
[2]देयमन्त्रं तस्य मूर्ध्नि जपेदष्टोत्तरं शतम् ।
शङ्खतोयेन तन्मन्त्रैस्ततः संप्रोक्षयेच्छिशुम् ॥ १३ ॥

[ शिष्यकृत्यम् ]

ततः पुष्पादिकं दत्त्वा बालकः प्रणमेद् गुरुम् ॥ १४ ॥

[ ततः शिष्यं प्रति गुरोः कृत्यम् ]

आशीर्व्वादं गुरु[3]र्दत्त्वा ब्राह्मणैः सह साधकैः ।
दर्भशय्यां परिष्कृत्य शिष्यं तत्र निवेशयेत् ।
स्वापमन्त्रेण मन्त्रज्ञः शिशोः शिखां प्रबन्धयेत् ॥ १५ ॥

[ शिष्यस्य शयनकाले श्रीगुरुदत्तस्वप्नमानवमन्त्रपाठः ]

तन्मन्त्रं स्वापसमये पठेद् वारत्रयं शिशुः ।
श्रीगुरोः पादुकां ध्यात्वा उपवासी जितेन्द्रियः ॥ १६ ॥

---

१२। अनन्तरकरणीयमाह—अथ शिष्यमिति। एतच्च सर्व्वमात्मसमर्पणान्तं कर्म्म समाप्य कर्त्तव्यमित्यवधेयम्। ऋष्यादिकमिति। एतत्कल्पोक्त ऋष्यादिन्यासस्तु पूजाक्रमे वक्ष्यते।

१५। स्वापमन्त्रेणेति वक्ष्यमाणस्वप्नमानवमन्त्रेण। अत्र शिखाबन्धनं स्वप्नमानवमन्त्रेणाभिहितम्। गन्धर्व्वतन्त्रे षड्विंशपटले तु—

मूलेनैव शिखां बद्ध्वा ततः शय्यागतं शिशुम्।
स्वप्नमानवमाश्रित्य स्वापयेत् पूर्व्वमस्तकम्॥

इत्यनेन मूलमन्त्रेण शिखाबन्धनम्, स्वप्नमानवमन्त्रेण स्वापनमुपदिश्यते। एवं स्थिते क्रमभेदे स्वस्वगुरुसम्प्रदायानुसारेणैकतरः क्रमः समाश्रयणीय इत्यवधेयम्।

---

1. 'ततः' B-C. 2. '-त्र-' C. 3. '-रुः कुर्य्यात्' C.

[ स्वप्नमानवमन्त्रः ]

तारो हिलिद्वयं शूलपाणये द्विठ ईरितः ।
स्वप्नमानवमन्त्रोऽयं शम्भुना परिकीर्त्तितः ॥ १७ ॥

[ प्रार्थनामन्त्रः ]

नमोऽजाय त्रिनेत्राय पिङ्गलाय महात्मने ।
वामाय विश्वरूपाय[1] स्वप्नाधिपतये नमः ॥ १८ ॥
स्वप्ने कथय मे तथ्यं सर्व्वकार्य्येष्वशेषतः ।
क्रियासिद्धिं विधास्यामि त्वत्प्रसादान्महेश्वर ॥ १९ ॥

[ शिष्यस्य प्रार्थनापूर्व्वकं शयनम् ]

इति मन्त्रेण सच्छिष्यो देवं प्रार्थ्य स्वपेच्च वा ।

[ प्रातः शिष्यं प्रति स्वप्नदर्शनप्रश्नः ]

स्वप्ने शुभाशुभं दृष्टं पृच्छेत् प्रातः शिशुं गुरुः ॥ २० ॥

[ स्वप्ने वक्ष्यमाणानां दर्शनं सिद्धिकरम् ]

कन्यां [2]छत्रं रथं दीपं प्रासादं काननं नदीम् ।
कुञ्जरं वृषभं माल्यं समुद्रं फणिनं द्रुमम् ॥ २१ ॥
पर्व्वतं तुरगं मेध्यमाममांसं सुरालयम् ।
एवमादीनि सर्व्वाणि दृष्ट्वा सिद्धिमवाप्नुयात् ॥ २२ ॥

---

१७। स्वप्नमानवमन्त्रमाह—तार इत्यादि। तारः प्रणवः द्विठः स्वाहा। एव ॐ हिलि हिलि शूलपाणये स्वाहा इति स्वप्नमानवमन्त्रः। इमं मन्त्रं स्वापका वारत्रयं पठेत् इत्याह पूर्व्ववचने वारत्रयमित्यनेन।

१८—२०। एतन्मन्त्रपाठानन्तरप्रार्थनामन्त्रमाह—नम इति। गन्धर्व्वतन्त्रे ष विंशपटलेऽपि इतः प्रभृति सिद्धिमवाप्नुयादित्यन्तानि वचनानि तुल्यान्येव दृश्यन्ते

२२। अत्र कन्यां छत्रं रथमित्यादिना सिद्धिमाप्नुयादित्यन्तेन स्वप्ने शुभसू

---

1. '-क् पतये' A. 2. 'पुत्रं' A.

[ अशुभस्वप्नदर्शने तच्छान्त्यर्थं होमः ]

**शुभाशुभं गुरुर्ज्ञात्वा जुहुयादशुभे शतम् ।**
**अस्त्रेणेति क्रमात् प्रोक्तो विधिः शिष्या[1]धिवासने ॥ २३ ॥**

---

कानामेव निर्देशः कृतः । शुभाशुभं गुरुर्ज्ञात्वेति वक्ष्यमाणग्रन्थेनाशुभानामप्यपेक्षितत्वात् तानि प्रदर्श्यन्ते, यथाह गन्धर्वतन्त्रे षड्विंशपटले—

चाण्डालं गर्द्दभं काकं रुजाऽशून्यममङ्गलम् ।
तैलाभ्यक्तं नरं नग्नं शुष्कवृक्षं सकण्टकम् ।
प्रासादमतलं दृष्ट्वा नरो रोगमवाप्नुयात् ॥ इति ।

राघवभट्टधृतमहाकपिलपञ्चरात्रेऽपि कन्यां छत्रं रथमित्यादिमूलसंवादिशुभ-शकुनान्यभिधाय—

चाण्डालं करभं कारुं गर्त्तं शून्यममङ्गलम् ।
तैलाभ्यक्तं नरं नग्नं शुष्कवृक्षं सकण्टकम् ।
प्रासादमतलं दृष्ट्वा नरो रोगमवाप्नुयात् ॥

इत्यनेनाशुभान्यपि प्रदर्शितानि ।

२३ । अस्त्रेणेति । फट् स्वाहेति मन्त्रेण शतं जुहुयादित्यर्थः । एतदधिवासनं मन्त्र-ग्रहणपूर्व्वरात्रौ कर्त्तव्यम् । राघवभट्टधृतपिङ्गलामते तु सद्योऽधिवासनमप्यभिहितम् । यथा—

सद्योऽधिवासमथवा प्रकुर्व्वीत यथाविधि ।

राघवभट्टधृतमन्त्रतन्त्रप्रकाशेऽपि—

दिनद्वयेनैव कुर्य्याद्दीक्षाकर्म्म विचक्षणः ।
सद्योऽधिवासनं वा स्यादेकस्मिन् दिवसे यदि ॥ इति ।

अधिवासशब्दार्थमाह राघवभट्टधृतमहाकपिलपञ्चरात्रे—

वसतेरधिपूर्व्वस्य भावे घञ्प्रत्यये कृते ।
अधिवास इति ह्येष प्रयोगः सिद्धिमेति च ॥
गुर्व्वादिसहितो वासो रात्रौ नियमपूर्व्वकः ।
सोऽस्यार्थो हि निपातानामनेकार्थतया मतः ॥ इति ।

---

1. 'भिवादने' C.

[ दीक्षादिनकृत्यम् ]

अथ दीक्षादिने मन्त्री स्नात्वा तन्त्रानुसारतः ।
जलशङ्ख[1]करो मन्त्री यागस्थानं समाश्रयेत्[2] ॥ २४ ॥
क्षालयेद्धस्तपादौ[3] च आचामेद् विधिपूर्व्वकम् ।

[ सामान्यार्घ्यस्थापनम् ]

पूर्व्वद्वारे तोरणस्य समीपेऽर्घ्यं प्रकल्पयेत् ॥ २५ ॥

---

२४। अथेति अधिवासानन्तरम्। स्नात्वा तन्त्रानुसारत इति। तान्त्रिकस्नानन्तु ग्रन्थकारः स्वयमेव पञ्चदशप्रकाशे वक्ष्यति। जलशङ्खकर इति अर्घ्यस्थापनार्थम्।

२५। क्षालयेदिति। एतदाचमनाङ्गहस्तपादप्रक्षालनम्। तदुक्तम्—

प्रक्षाल्य पाणी पादौ च गोकर्णाकृतिहस्ततः ।
माषमज्जनमात्रन्तु त्रिः पिबेदम्बु वीक्षितम् ॥

इत्यादि। आचामेद् विधिपूर्व्वकमिति। अत्र विधिपूर्व्वकमित्यनेन श्रीविद्योक्तविधिनाचमनमुपदिश्यते। तदुक्तं हरतत्त्वदीधितिधृतभैरवतन्त्रे—

बालाबीजैस्त्रिभिः पीत्वा द्वाभ्यामोष्ठौ प्रमार्जयेत् ।
दुर्गाद्वाभ्यां द्विरुन्मृज्य मायया क्षालयेत् करम् ॥
श्रीमायावाकपरा-काम-त्रिपुटायोनिवर्त्तुलैः ।
कामकलाङ्कुशाभ्याञ्च मुखनासाक्षिकर्णकान् ॥
नाभ्युरस्कं भुजौ स्पृष्ट्वाप्यधिकारी जपादिषु ॥ इति ।

अत्र बालाबीजैरिति ऐँ क्लीं सौँः। दुर्गाद्वाभ्यामिति दूँ दूँ। माययेति ह्रीँ। श्रीबीजं श्रीँ। वाग्बीजं ऐँ। पराबीजं ह्रीँ। कामबीजं क्लीं। त्रिपुटेति श्रीँ ह्रीँ क्लीँ। योनिः एँ। वर्त्तुलं बिन्दुः। वर्त्तुलैरित्यनेन पूर्व्वोक्तानि बीजानि विशेषितानि। कामकला ईँ। अङ्कुशः क्रोँ इति।

तथाचायं प्रयोगः—ऐँ ह्रीँ सौँः इति बीजत्रयेण त्रिर्जलं पीत्वा दूँ दूँ इत्योष्ठौ प्रमार्ज्य ह्रीँ इति करौ प्रक्षालयेत्। श्रीँ इति मुखे, ह्रीँ इति दक्षिणनसि, ऐँ इति वामनसि, ह्रीँ इति दक्षिणचक्षुषि, क्लीं इति वामचक्षुषि, श्रीँ इति दक्षकर्णे, ह्रीँ इति वामकर्णे, क्लीँ इति नाभौ, एँ इति वक्षसि, ईँ इति दक्षिणभुजे, क्रोँ इति वामभुजे इति हरतत्त्वदीधितिः।

---

1. 'धरो मौनी' C. 2. 'चरेत्' A. 'दिशेत्' B. 3. '-येत् कर-' C.

[ सामान्यार्घ्यक्रमः ]

अस्त्रेण पात्रं प्रक्षाल्य हृन्मन्त्रेण प्रपूरयेत् ।
निक्षिपेत्तीर्थमावाह्य गन्धादीन् प्रणवेन तु ॥ २६ ॥
दर्शयेद्धेनुमुद्रां वै सामान्यार्घ्यमिदं स्मृतम् ।

[ द्वारपूजायाः कर्त्तव्यता ]

[1]स्वकल्पोक्तविधानेन द्वारपूजां समाचरेत् ॥ २७ ॥

[ गुरोर्यागमण्डपप्रवेशः ]

किञ्चित् स्पृशन् वामशाखां देहलीं लङ्घयेद् गुरुः ।
अङ्गं सङ्कोचयन्नन्तः प्रविशेद्दक्षिणाङ्घ्रिणा ॥ २८ ॥

[ पूजा ]

नैर्ऋत्यां दिशि वास्त्वीशान् ब्रह्माणञ्च [2]प्रपूजयेत् ।

[ मण्डपप्रोक्षणम् ]

पञ्चगव्यार्घ्यतोयाभ्यां प्रोक्षयेद् यागमण्डपम् ॥ २९ ॥

[ पञ्चगव्यपरिमाणम् ]

[3]मूत्रं प्रस्थं गोमयं स्यात् क्षीरतोऽप्यर्द्धमेव वा ।

---

२६ । अस्त्रेण 'फट्' इत्यनेन । हृन्मन्त्रेण 'नमः' इत्यनेन ।

२७-२८ । द्वारपूजा मूलदेवतापूजाक्रमे वक्ष्यते । किञ्चिदिति । मण्डपद्वारस्य वामशाखां किञ्चित् स्पृशन् ।

ततो दक्षिणशाखायां विघ्नं क्षेत्रेशमन्ततः ।

इति शारदातिलकपञ्चमपटलवचनेन दक्षिणशाखायां सामान्यतो विघ्नेशक्षेत्र-

---

1. 'स्वकल्पोक्ते'त्यादिपादद्वयात् परं 'स्वासनस्थापनान्तं हि कृत्वा साधकसत्तमः ।' इति B-पुस्तकपादटीकायामधिकः पाठो दृश्यते । 2. 'समर्चयेत्' C. 3. 'मूत्रं प्रस्थ'मित्यादि-पादषट्कं C-पुस्तके नास्ति । अत्र मूत्रं प्रस्थं गोमयं स्यात्...क्षीरं प्रस्थं स्याद्दधि क्षीरतोऽर्द्धम् । आज्यं दध्नोऽप्यर्द्धमानं प्रमाणं स्वैः स्वैर्मन्त्रैर्योजयेत् पञ्चगव्यम् ॥ इति C-पुस्तके पाठो दृश्यते स तु पौनरुक्त्यभिया मूले न निवेशितः ।

आज्यं दध्नोऽप्यर्द्धमानं प्रमाणं तत् प्रकीर्त्तितम् ।
[1]स्वैः स्वैर्मन्त्रैश्च मन्त्रज्ञो योजयेत् पञ्चगव्यकम् ॥ ३० ॥

---

पालपूजनाभिधानात् तत्स्पर्शपरिहाराय वामशाखास्पर्शपूर्व्वकगमनमुपदिश्यते। देहलीलङ्घनमपि तथैव—

देहल्यामर्च्चयेदस्त्रं प्रतिद्वारमितिक्रमात् ।

इति शारदावचनात् । अत एव राघवभट्टेनापि किञ्चित् स्पृशन्नित्यादिशारदावचनव्याख्याने अतः स्पृशन्नित्यादित्रयं दृष्टार्थं देहल्यामपि देवस्य पूजितत्वादित्युक्तम्। अङ्गमिति । वामाङ्गं सङ्कोचयन्नित्यर्थः । अङ्गसङ्कोचनन्तु निःसरतां विघ्नानामवकाशदानार्थम् ।

उत्सारितानां विघ्नानां दद्द्वर्त्म तु वामतः ।

तथा—निर्गच्छतां विघ्नकृतामथैषां वामाङ्गसङ्कोचनचेष्टितेन ।
प्रदाय मार्गम् ··· ··· ··· ··· ॥

इत्यादिराघवभट्टधृतवचनेन तथाभिधानात् । दक्षिणाङ्घ्रिणेति । दक्षिणपादं पुरस्कृत्य यागमण्डपं प्रविशेदित्यर्थः । तन्त्रसारादावप्येवमेव । यत्तु हरतत्त्वदीधितिकृता—

किञ्चित् स्पृशन् वामशाखां वामपादपुरःसरम् ।
स्मरन् देव्याः पदाम्भोजं मण्डपं प्रविशेत् सुधीः ॥

इति तन्त्रान्तरवचनम्,

वामपादं पुरस्कृत्य प्रविशेद् यागमण्डपम् ।

इति शिवार्च्चनचन्द्रिकाधृतत्रिपुरार्णववचनम्,

दक्षपादं पुरस्कृत्य प्रविशेद्देवमन्दिरम् ।
शाक्तस्तु वामपादम् ··· ··· ···॥

इति मेरुतन्त्रपञ्चमप्रकाशवचनञ्च स्वमतसमर्थनानुकूलमुल्लिख्य पुंदेवतामन्दिरप्रवेशे दक्षपादपुरःसरत्वं शक्तिमन्दिरप्रवेशे वामपादपुरःसरत्वञ्चोपपाद्य, "यत्तु तन्त्रसारकारेण दक्षपादपुरःसरं वामशाखां स्पृशन् दक्षिणाङ्गं सङ्कोचयन् मण्डपान्तः

---

1. 'स्वैः स्वै'रित्यादिपादद्वयात् परं A-B-पुस्तकयोः 'अथातस्तन्मनुं वक्ष्ये पञ्चगव्यविशुद्धये। गायत्र्या शोधयेन्मूत्रं गवामन्यं वदाम्यहम्' ॥ इत्यधिकः पाठो दृश्यते, परन्तु 'गवामन्यं वदाम्यहमि'त्युक्त्वापि मन्त्राणामनभिधानादयमंशो न मूले निवेशितः ।

[ प्रस्थस्वरूपम् ]

चतुःपलः स्यात् कुडवस्तच्चतुः[1]प्रस्थ उच्यते ।

[ मण्डपशोधनम् ]

चतुःपथान्तां[2] तच्छुद्धिं विदध्याद्वीक्षणादिभिः ॥ ३१ ॥
वीक्षणं मूलमन्त्रेण शरेण प्रोक्षणं मतम् ।
तेनैव ताडनं दर्भैर्वर्म्मणाभ्युक्षणं मतम् ॥ ३२ ॥

---

प्रविश्येति सामान्येनोक्तं तदेतद्वचनमनालोच्यैवे"त्यादिना तन्त्रसारकारशिरसि दण्डं पातयितुमुद्युक्तम्, तदपि गन्धर्व्वतन्त्रवचनमनालोच्यैवेति प्रतीमः ।

अङ्गं सङ्कोचयन्नन्तः प्रविशेद्दक्षिणाङ्घ्रिणा ।
यागमन्दिरगांस्तत्र विघ्नानुत्सारयेत्ततः ॥

इति गन्धर्व्वतन्त्रसप्तमपटलवचनेन शक्तिविषये दक्षिणपादपुरःसरमण्डपान्तःप्रवेशस्याप्यभिधानात् । न च तर्हि प्रागुक्ततन्त्रान्तरादिवचनानां विरोध इति वाच्यम्, गन्धर्व्वतन्त्रस्य श्रीविद्यामात्रप्रतिपादकतया श्रीविद्येतरशक्तिविषये तन्त्रान्तरादिवचनानां चरितार्थत्वात् । एवञ्च श्रीविद्येतरशक्तिमण्डपप्रवेशो वामपादपुरःसरः, श्रीविद्यायान्तु दक्षपादपुरःसर एव मण्डपप्रवेशो विहित इति स्थितम् । अत एव तत्रभवता पूर्णानन्देन प्रविशेद्दक्षिणाङ्घ्रिणेत्युक्तम् । यत्तु तन्त्रसारकारेण दक्षपादपुरःसरमित्युक्तं तत् प्रागुक्तगन्धर्व्वतन्त्रवचनस्याविशेषेण शक्तिमात्रपरत्वमभिप्रेत्य स्त्रीपुरुषदेवतासाधारण्येन । न तु तेन स्त्रीदेवतामण्डपे वामपादपुरःसरः प्रवेशः क्वापि प्रतिषिद्धः । शक्तिमण्डपप्रवेशे क्वचिद्व वामपादपुरःसरत्वस्य क्वचन वा दक्षपादपुरःसरत्वस्य दर्शनाद्व दक्षपादस्य स्त्रीपुरुषदेवतासाधारण्यात् तन्त्रसारस्य च स्त्रीपुरुषसाधारणदेवताप्रतिपादकत्वात् तत्र दक्षपादपुरःसरत्वं सामान्येनाभिहितमिति संक्षेपः ।

३१ । मण्डपशोधनमाह—चतुःपथान्तामिति । अत्र चतुःपथशब्देन चतुर्दिक्षु मण्डपाद्व बहिस्तोरणस्तम्भपर्य्यन्तो हस्तमात्रपरिमितः प्रदेश उच्यते । तथाच वीक्षणादिभिर्वक्ष्यमाणैश्चतुःपथान्तां तच्छुद्धिं मण्डपशुद्धिं कुर्य्यादित्यर्थः ।

३२ । वीक्षणमिति । मूलमन्त्रेण देयमन्त्रेण । शरेण अस्त्रमन्त्रेण फट् इत्यनेनेत्यर्थः । वर्म्मणा कवचेन हुँ इत्यनेन ।

---

1. 'स्तैश्चतुः' A-B. 2. 'चतुः पदान्तां' A-B.

चन्दनागुरुकर्पूरैर्धूपयेदन्तरं सुधीः ।
विकिरान् विकिरेत्तत्र सप्तजप्ताञ्छराणुना ॥ ३३ ॥

[ विकिरलक्षणम् ]

लाज-चन्दन-सिद्धार्थभस्म[1]दूर्व्वाक्षताः कुशाः ।
विकिरा इति निर्द्दिष्टाः सर्व्वविघ्नौघनाशनाः ॥ ३४ ॥

[ मार्जनम् ]

अस्त्रजप्तेन दर्भाणां मुष्टिना मार्जयेच्च तान् ।

[ गुरुपूजादि ]

गुरुपूजादिकं [2]कार्य्यं सम्प्रदायविधानतः ॥ ३५ ॥

[ पुण्याहवाचनादि ]

पुण्याहं वाचयित्वा तु ब्राह्मणान् परितोष्य च ।

[ चक्रराजनिर्म्माणम् ]

सिन्दूररजसा वापि [3]कुङ्कुमेनाथवा ततः ॥ ३६ ॥
वेदिकायां लिखेन्मन्त्री चक्रराजं मनोहरम् ॥ ३७ ॥
षट्कोणं विलिखेदादौ त्रिकोणं मध्यदेशतः ।
वृत्तं वसुदलञ्चैव द्वादशारं वसुद्वयम् ॥ ३८ ॥

---

३३ । शराणुना फट् इत्यस्त्रमन्त्रेण सप्तधा जप्तानित्यर्थः ।

३६ । दीक्षायां पूजार्थं चक्रे व्याख्येये प्रथमं चक्रनिर्माणोपकरणद्रव्यमाह—सिन्दूरेति । वेदिकायामिति मण्डपान्तर्वेदिकोपरि ।

३८ । चक्रराजनिर्म्माणमाह—षडिति प्रथमं षट्कोणं तदन्तस्त्रिकोणम्, षट्कोणाद्द बहिर्वृत्तम् ततोऽष्टदलपद्मम्, ततो वृत्तं द्वादशदलपद्मञ्च, ततो वृत्तं षोडशदल-

---

1. '-तिल-' C. 2. 'कुर्य्यात्' C. 3. 'रजोभिः कुङ्कुमस्य वा' C.

द्विर्दशारं समालिख्य ततोऽष्टदलमालिखेत् ।
चतुरस्रं लिखेद्बाह्ये चतुर्द्वारसमन्वितम् ॥ ३९ ॥

[ तत्र प्रकारान्तरम् ]

अथवा नवकोणन्तु चतुरस्रयुतं लिखेत् ॥ ४० ॥

[ पूजाद्रव्यस्थापनम् ]

बद्धपद्मासनो मन्त्री देवतापूजने रतः ।
स्थापयेद्दक्षिणे भागे पूजाद्रव्यं मनोहरम् ॥ ४१ ॥
सुवासिताम्बुसंपूर्णं सव्ये कुम्भं सुशोभनम् ।
प्रक्षालनाय करयोः पात्रं पश्चान्निवेशयेत् ॥ ४२ ॥
घृतप्रज्वालितान् दीपान् स्थापयेत् परितः [1]शुभान् ।
दर्पणं चामरं छत्रं तालवृन्तं मनोहरम् ।
मङ्गलाङ्कुरपात्राणि स्थापयेद्दिक्षु देशिकः ॥ ४३ ॥

---

पद्मञ्च, तद्बहिर्वृत्तं विंशतिदलपद्मञ्च, तद्बहिर्वृत्तमष्टदलपद्मञ्च, तद्बहिश्चतुर्द्वारसमन्वितं चतुरस्रमिति । अत्र वृत्तात् परं दलनिर्माणनियमनात् प्रतिदलमूले सीमासम्पादनार्थमेकैकं वृत्तं कर्त्तव्यमित्यवधेयम् ।

४० । प्रागुक्तचक्रकरणाशक्तौ क्रमान्तरमाह—अथवेति । कल्पेऽस्मिन् प्रथमं नवकोणं ततश्चतुरस्रं तदपि द्वारसहितमेव कार्य्यं चतुरस्रस्य भूगृहरूपतया तस्य सद्वारकत्वौचित्यात् प्रागुक्तचक्रराजे तथा दर्शनाच्च ।

४१-४३ । बद्धपद्मासन इति । पद्मासनमाह राघवभट्टधृततन्त्रान्तरे—

सव्यं पादमुपादाय दक्षिणोपरि विन्यसेत् ।
तथैव दक्षिणं सव्यस्योपरिष्टान्निधापयेत् ॥
विष्टभ्य कट्योः पार्ष्णी तु नासाग्रन्यस्तलोचनः ।
पद्मासनं भवेदेतत् सर्व्वेषामपि पूजितम् ॥

---

1. 'सुधीः' A-B.

[ शिष्यस्यानयनमुपवेशनञ्च ]

ततः शिष्यं समानीय दक्षिणे सन्निवेशयेत्[1] ।
नानालङ्कारसंश्लिष्टं[2] धौतवस्त्रयुगान्वितम् ॥ ४४ ॥

[ तिल-काञ्चनोत्सर्गः ]

तत आचमनं कृत्वा शिष्योऽपि विजितेन्द्रियः ।
आजन्मकृतपापार्थमुत्सृजेत्तिलकाञ्चनम् ॥ ४५ ॥

[ स्वस्तिवाचनादिपूर्व्वकगुरुवरणम् ]

उपविश्य गुरोर्व्वामे सङ्कल्प्य स्वस्तिपूर्व्वकम् ।
गुरुञ्च वरयेद् विद्वान् विधिवद् भक्तिसंयुतः ॥ ४६ ॥

[ गुरोरर्च्चनम् ]

[3]गोभूहिरण्यवस्त्राद्यैः कुण्डलादिभिरुज्ज्वलैः ।
अन्यैराभरणैश्चैव तथा वित्तमवञ्चयन् ॥ ४७ ॥
गुरुं संपूजयेद् भक्त्या कृताञ्जलिपुरःसरम्[4] ।
गुरुं प्रदक्षिणीकृत्य स्वात्मानञ्च समर्पयेत् ॥ ४८ ॥

[ गुरोः पुरतः प्रार्थनम् ]

अथातो भगवन् परमात्मस्वरूप[5] परमकारुणिक गुरो सकल-पुरुषार्थसाधनविद्यादीक्षाभिषेकपूर्व्वकं मां प्रसाधय ।

---

इति । पूजाद्रव्यं पुष्पादिकम् । अर्घ्यपात्राचमनीयादिकन्तु वामत एव स्थापनीयम् । दीपदर्पणचामरादिकन्तु यथेच्छं दिक्षु स्थापयेदित्यर्थः । मङ्गलाङ्कुरपात्राणि प्रागङ्कुरार्पणे विनियुक्तानि ।

४६ । उपविश्येति । प्रथमं गुरोर्द्दक्षिणे उपविश्य तिलकाञ्चनमुत्सृज्य तत उत्थाय वामे समुपविश्य स्वस्तिवाचनादिकं कुर्य्यादित्यर्थः ।

---

1. '-घेश्य च' A-B. 2. '-संयुक्तं' C. 3. 'गोभिर्हि-' C. 4. '-रः' B-C. 5. '-रूपिन्' A-B.

इत्युक्त्वा सुचिरं तिष्ठेद् [1]विनयी दक्षिणे गुरोः ।

[ गायत्रीजपस्तत्संख्या च ]

सहस्रं प्रजपेच्छिष्यो गायत्रीं देवनाम वा ॥ ४६ ॥

[ भूतशुद्ध्याद्यनुष्ठानम् ]

भूतशुद्ध्यादिकं कृत्वा कल्पोक्तन्यासमाचरेत् ।

[ मन्त्रसंस्कारः ]

[2]अथवा पूर्व्वमार्गेण संस्कुर्य्यान्मन्त्रमुत्तमम् ॥ ५० ॥

[ पीठन्यासः ]

पीठन्यासं ततः कुर्य्यात् स्वदेहे साधकोत्तमः ॥ ५१ ॥

धर्म्मं ज्ञानञ्च वैराग्यमैश्वर्य्यञ्च क्रमेण तु ।

प्रादक्षिण्येन [3]चांसोरुयुगयोरथ विन्यसेत् ॥ ५२ ॥

---

४६। गायत्रीं देवनाम वेत्यधिकारिभेदेन। द्विजो गायत्रीं जपेत् स्त्रीशूद्रादयस्तु तत्रानधिकारादुपास्यदेवनाम जपेयुरित्यर्थः। अथवा देवनाम वेत्यनेन द्विजो गायत्रीं जपेत् तत्रासामर्थ्ये स्वोपास्यदेवनाम जपेदित्युक्तम्।

५०। कल्पेति। अत्र भूतशुद्धि-त्रिपुराकल्पोक्तन्यासादिकन्तु पूजाक्रमे वक्ष्यते। अथवेति। अथ पूर्व्वमार्गेण द्वितीयप्रकाशोक्तक्रमेण मन्त्रं संस्कुर्य्यात् देयमन्त्रस्य जनन-जीवनादिरूपसंस्कारं विदधीतेत्यर्थः।

यत्र दीक्षापूर्व्वदिने मन्त्रसंस्कारो न विहितस्तत्रैवायं मन्त्रसंस्कारविधिः। न तु पूर्व्वं कृतेऽपि मन्त्रसंस्कारे पुनर्मन्त्रसंस्कारापेक्षा। अत एव B-पुस्तकपादटिप्पन्यां—"यदि दीक्षादिनात् प्राङ्मन्त्रसंस्कारो न कृतस्तदास्मिन् समये कुर्य्यादिति वाशब्द" इत्युक्तम्।

५१-५२। पीठन्यासमिति। अनेन स्वकल्पोक्तपीठन्यासं विधाय वक्ष्यमाणान् धर्म्मादीन् न्यसेत् इत्यवधेयम्। स्फुटमुक्तं राघवभट्टेन—

---

1. 'विनयाद्-' A-B. 2. 'अथवेत्या'दि पादद्वयं C-पुस्तके नास्ति। 3. 'तान्यस्य मुखयो-'? B. A-पुस्तके तु 'तां गुरुमुखयो'रिति प्रामादिकः पाठः।

मुखपार्श्वनाभिपार्श्वेष्वधर्म्मादीन् क्रमेण तु ।
धर्म्मादयः स्मृताः पादाः पीठगात्राणि चापरे ॥ ५३ ॥
अनन्तं हृदयाम्भोजे पद्मं सूर्य्येन्दुपावकान् ।
[1]एषां स्वस्वकला [2]न्यस्य [3]स्वमन्त्राद्यक्षरपूर्व्विकाः ॥ ५४ ॥
सत्त्वादींस्त्रिगुणान् न्यस्य तथैवात्र गुरूत्तमः ।
आत्मान्तरात्म-परमज्ञानात्मनः[4] प्रविन्यसेत् ॥ ५५ ॥

[ देहमयपीठे इष्टदेवताचिन्तनम् ]

पीठमन्त्रं [5]प्रविन्यस्य चिन्तयेदिष्टदेवताम् ।

[ मुद्राप्रदर्शनमर्घ्यादिस्थापनञ्च ]

मुद्रां प्रदर्श्य विधिवदर्घ्यस्थापनमारभेत् ॥ ५६ ॥

---

कल्पयेदात्मनो देहे पीठं धर्म्मादिभिः क्रमात् ।

इति शारदातिलकचतुर्थपटलवचनव्याख्याने "मण्डूकाय नमः इत्याधारे, कालाग्निरुद्राय नमः इति स्वाधिष्ठाने, कूर्म्माय नमः इति नाभौ, ततो हृदि आधारशक्त्यादिन्यासं कृत्वा पश्चाद्धर्म्मादिन्यास" इत्यनेन ग्रन्थेन । प्रादक्षिण्येनेति । तथाच दक्षस्कन्धे धर्म्मम्, वामस्कन्धे ज्ञानम्, वामोरौ वैराग्यम्, दक्षोरौ अवैराग्यं न्यसेदित्यर्थः । मुखेति । तथाच मुखे अधर्म्मम्, वामपार्श्वे अज्ञानम्, नाभौ अवैराग्यम्, दक्षपार्श्वे अनैश्वर्य्यं न्यसेत् । धर्म्मादय इति । धर्म्मादयश्चत्वारः पीठस्य पादाः अपरेऽधर्म्मादयश्चत्वारः पीठगात्राणि इति सम्बन्धः ।

५६ । पीठमन्त्रमिति । पीठमन्त्रं प्रविन्यस्य स्वदेह इति शेषः । देहे पीठकल्पनमेतन्मानसयागार्थम् । एतदभिप्रायेणैव शारदायां चतुर्थपटले पीठन्यासनिरूपणानन्तरम्—

एवं देहमये पीठे चिन्तयेदिष्टदेवताम् ।

इत्युक्तम् ।

---

1. 'एषु' इति शारदायां पाठः । 2. 'न्यसेत्' ? C. 3. 'नामाद्यक्षरपूर्व्वत' इति शारदायां पाठः । 4. '-त्मानः प्रकीर्त्तिताः' C. 5. '-विनि-' C.

सामान्यार्घ्यं स्ववामे तु विशेषार्घ्यं स्वसंमुखे ।
अर्घ्यस्योत्तरतः [1]कार्य्यं पाद्यमाचमनं[2] मधु ॥ ५७ ॥

[ देव्या अष्टाङ्गार्घ्यम् ]

कुशाग्राण्यक्षतश्चैव [3]यवव्रीहितिलानपि ।
आज्यसिद्धार्थपुष्पैश्च देव्यर्घ्यमपरं [4]तथा ॥ ५८ ॥

[ सर्व्वदेवसाधारणमष्टाङ्गार्घ्यम् ]

पुष्पगन्धाक्षतयवकुशाग्रतिलसर्षपैः ।
सदूर्व्वैः सर्व्वदेवानामेतदर्घ्यमुदीरितम् ॥ ५९ ॥

[ पाद्यम् ]

उशीरं चन्दनश्चैव पयः पाद्ये परं तथा ।
पाद्यं श्यामाकदूर्व्वाब्जविष्णुक्रान्ताभिरीरितम् ॥ ६० ॥

[ आचमनीयम् ]

जातीकर्पूरकक्कोल-[5]मन्दुमूलतमालकान् ।
चूर्णयित्वा क्षिपेदाचमनीये त्वपरं यथा ॥ ६१ ॥
जातीलवङ्गकक्कोलजलैराचमनीयकम् ॥ ६२ ॥

[ मधुपर्कः ]

माक्षिकं शर्करासर्पिर्दधिक्षीराक्षतं तथा ।
[6]अथवा माक्षिकं सर्पिर्जलं[7] दधियुतं मधु ।
मधुपर्कं कल्पयित्वा प्रदद्याद् विधिपूर्व्वकम् ॥ ६३ ॥

---

५७। सामान्यार्घ्यमिति। एतद्द्वारपूजायामुक्तमेव ।

५८। कुशाग्राणीति। अर्घ्यस्थापने विशेषस्त्वष्टादशपटले स्वयमेव वक्ष्यते ।

---

1. 'पूर्व्वं' C. 2. '-नीयकम्' C. 3. 'घृत-' ?' A. 4. 'यथा' C 5. अत्र 'मन्द्वि'ति पाठः पुस्तकत्रये दृष्टोऽपि प्रामादिक इति प्रतिभाति। फेत्कारिणीतन्त्रे तृतीयपटले 'जातीकर्पूर-कक्कोलबहुमूलं तमालक'मिति पाठो दृश्यते। 6. 'अथवे'त्यादि पादद्वयं A-पुस्तके नास्ति। 7. '-र्द्ध्ना युक्तं गुरूत्तमः' B.

[1]सर्व्वतः क्षौद्रमधिकं मधु सर्पिः सिता समम्।
जलन्तु सर्व्वतः स्वल्पं मधुपर्क उदाहृतः ॥ ६४ ॥

[ पुनराचमनीयम् ]

पुनराचमनीयन्तु केवलेन जलेन च।

[ उपचारदाने पात्रनियमः ]

एकस्मि[2]न्नथवा पात्रे पाद्यादीनि प्रकल्पयेत् ॥ ६५ ॥

[ गन्धः ]

[3]घृष्टो मलयजो गन्धः शवलश्च नमेरुणा।
अगुरुप्रभृतिश्चापि तथा मृगमदेन तु ॥ ६६ ॥

६५। एकस्मिन्निति। अत्र पूर्व्वं पात्रभेदस्यानुक्तेरथवेति कल्पान्तरबोधकपदं कथमुपपन्नमिति चेदुच्यते, सम्मोहनतन्त्रे पञ्चमपटले—

अर्घ्यपाद्यप्रदानार्थं मधुपर्कार्थमप्यथ।
तथैवाचमनार्थञ्च न्यसेत् पात्रचतुष्टयम् ॥

इत्यनेन प्रत्येकमेकैकपात्रविधानमुक्तं तदशक्तौ एकस्मिन्नेव पात्रे सर्व्वे उपचाराः कल्पनीयाः, तथाच राघवभट्टधृतवचनम्—

एकस्मिन्नथवा पात्रे पाद्यार्घ्यादीनि कल्पयेत्। इति।

श्रीमत्पूर्णानन्देनापि प्रागुक्तसम्मोहनतन्त्रोक्तक्रमं मनसिकृत्य तमपेक्ष्यैव अथवेत्युक्तम्। एवञ्च शक्तौ विभिन्नान्युपचारपात्राणि कल्पनीयानि। अशक्तावेकस्मिन्नेव सर्व्वे उपचारा देयाः। यत्तु—

सम्भवे त्रीणि पात्राणि चान्यथा द्वे सकृच्चरेत्।
पाद्यादिषु महेशानि नैकपात्रं कदाचन ॥

इति श्यामार्च्चनचन्द्रिकाधृतस्वतन्त्रतन्त्रवचनेनैकपात्रनिषेधः ससजातीयपात्रपरः—

पाद्यपात्रमर्घ्यपात्रं तथाचमनपूर्व्वकम्।
ताम्रं शङ्खं कांस्यपात्रं क्रमेण विनिवेदयेत् ॥

इति महानीलतन्त्रदशमपटलवचनेन पाद्यादौ पात्रभेदाभ्युपगमात्।

1. 'सर्व्वत' इत्यादिपादचतुष्टयं A-पुस्तके नास्ति। 2. '-न्नथ पात्रे च' A. 3. 'घृष्ट' इत्यादिपादाष्टकं A-पुस्तके नास्ति'।

कुङ्कुमागुरुकस्तूरी-चन्द्रभागैः समाहृतः ।
त्रिपुराप्रीतिदो गन्धस्तथा न चान्यवस्तुना ॥ ६७ ॥

[ स्वदेहे पीठपूजा ]

न्यासक्रमेण [1]देहेषु धर्म्मादीन् पूजयेत्ततः ।
पुष्पाद्यैः पीठमन्वन्तं तस्मिंश्च परदेवताम् ॥ ६८ ॥

[ पञ्चपुष्पाञ्जलिदानम् ]

पञ्चकृत्वः[2] पुनर्दद्यात् पुष्पाञ्जलिमनन्यधीः ।
उत्तमाङ्गहृदाधारपादसर्व्वाङ्गके[3] क्रमात् ॥ ६९ ॥

[ मण्डलपूजा मण्डले पीठपूजा च ]

पूर्व्वोक्तमण्डलं मन्त्री गन्धाद्यैः परिपूजयेत् ॥ ७० ॥
कूर्च्चमक्षतसंयुक्तं दर्भानास्तीर्य्य तत्र वै ।
पीठपूजां तत्र कुर्य्यात् स्वकल्पोक्तक्रमेण तु ॥ ७१ ॥

[ कूर्चलक्षणम् ]

सप्तविंशतिदर्भाणां [4]वेण्या ग्रन्थिविभूषितम् ।
वेष्टयेत् सर्व्वयज्ञेषु तत् [5]कूर्च्चं परिकीर्त्तितम् ॥ ७२ ॥

[ यन्त्रे देवतापूजाक्रमः तत्र मध्ये त्रिपुरार्च्चनम् ]

यन्त्रमध्ये यजेदादौ त्रिपुरां[6] कुलभूषणाम्[7] ।

[ षट्कोणे पूजनस्य क्रमः ]

षट्कोणे च षडङ्गानि

[ तदन्तस्त्रिकोणे ]

त्रिकोणे पूजयेत्ततः ॥ ७३ ॥

---

७३—७४। अथेदानीं प्रागुक्तचक्रराजे देवतापूजामवतारयति यन्त्रेति। यन्त्र-

---

1. 'देवेशि' A-B. 2. '-गन्धं' ? A. 3. '-क-' A. 4. 'वेद्या' ? A-B. 5. 'कुर्य्यात् ?' A-B. 6. '-रा' ? C. 7. '-देवताम्' C.

रतिं सम्मुखकोणे च प्रीतिमुत्तरकोणके ।
मनोभवां दत्तकोणे

[ षट्कोणाद् बहिरष्टदले—]

मातृरष्टदले ततः ॥ ७४ ॥

ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही च तथेन्द्राणी चामुण्डा तदनन्तरम् ।
महालक्ष्मीः क्रमादेताः पूजयेत् साधकोत्तमः ॥ ७५ ॥

[ तद्बहिर्द्वादशदले—]

द्वादशारे [1]तथा वामां ज्येष्ठां रौद्रीं तथैव च ।
अम्बिकेच्छे तथा ज्ञानां क्रियाञ्च [2]कुब्जिकामथ ॥ ७६ ॥
विचित्राञ्च ततो मन्त्री विषघ्निकाञ्च भूचरीम् ।
आनन्दाञ्च क्रमेणैव

[ तद्बहिः षोडशदले—]

कलापत्रे यजेदथ ॥ ७७ ॥

नित्या निरञ्जना क्लिन्ना क्लेदिनी [3]मदनातुरा ।
मदद्रावा द्राविणी च रुचिरा [4]रागवत्यथ ॥ ७८ ॥

---

मध्य इति त्रिकोणमध्ये मूलदेवतां त्रिपुरामादौ पूजयेत् । ततस्त्रिपुरापूजानन्तरं षट्कोणे क्रमेण मूलदेवताषडङ्गानि पूजयेत् । ततः षट्कोणाभ्यन्तरीणत्रिकोणे क्रमेण रतिं प्रीतिं मनोभवाञ्च पूजयेत् । तत्र च त्रिकोणस्य सम्मुखकोणे रतिमुत्तरकोणे प्रीतिं दत्तकोणे च मनोभवामित्याह सम्मुखेत्यादिना ।

मातृरिति । वृत्तोर्द्ध्वाष्टदले पूर्व्वादिक्रमेण वक्ष्यमाणा मातॄः पूजयेदित्यर्थः ।

७५ । मातरष्टौ निर्द्दिशति—ब्राह्मीत्यादिना ।

७६—७६ । एवमष्टदलप्रक्रियामभिधाय द्वादशदले पूर्व्वादिक्रमेण पूज्या देवता निर्द्दिशति—द्वादशार इत्यादिना आनन्दाञ्च क्रमेणैवेत्यन्तेन ।

---

1. 'ततो' C. 2. 'कालिका' A. 3. 'च मदातुरा' C. 4. 'नागवत्यपि' A-B.

कामेश्वरी तथा कामदीपनी [1]वामकेश्वरी ।
ललिता क्षोभणी [2]क्षुद्रा स्व[3]च्छन्दललिता क्रमात् ॥ ७९ ॥

[ तद्बहिर्विंशतिदले— ]

ततो विंशतिपत्रेषु पूर्व्वादिक्रमतो यजेत् ।
मायावती महाक्षी च [4]ततः सर्व्ववशङ्करी ॥ ८० ॥
[5]झङ्कारी त्वीशभावा च कमला कमलेश्वरी ।
[6]नीलग्रीवा विशालाक्षी भेरुण्डा [7]डामरेश्वरी ॥ ८१ ॥
समया समयेशानी नित्यानन्दा महोदरी[8] ।
[9]सर्व्वसौभाग्य[10]दाऽऽनन्दा चन्द्रिका चन्द्रशेखरा ॥ ८२ ॥
सर्व्वेश्वरी च संपूज्याः

[ तद्बहिरष्टदले- ]

पीठानि वसुपत्रके ।

[ पीठाष्टकम् ]

कामरूपञ्च मलयं कोलगिरिं कुलान्तकम् ॥ ८३ ॥
[11]चौहारञ्च ततो मन्त्री जालन्धरमतः परम् ।
उड्डीयानं देविकोट्टं पीठाष्टकमिदं [12]स्मृतम् ॥ ८४ ॥

---

अथ षोडशारे नित्यादीनां षोडशानां पूजनमाह—कलापत्रे इत्यादिना क्रमादित्यन्तेन । कलापत्रे षोडशपत्रेषु ।

८०—८४ । अथ षोडशदलाद् बहिर्विंशतिदलेषु पूर्व्वादिक्रमेण मायावत्यादीनां विंशतिदेवतानां पूजनमुपदिशति—मायावतीत्यादिना सर्व्वेश्वरी च संपूज्या इत्यन्तेन ।

पीठानीति । विंशतिदलाद् बहिरष्टदले पूर्व्वादिक्रमेण कामरूपादिपीठाष्टकं पूजयेत् । पीठाष्टकं निरूपयति—कामरूपञ्चेत्यादिना ।

---

1. 'नाद-' A. 'काम-' B. 2. 'मुद्रा-' C. 3. '-पुच्छ' A. 4. 'तथा' A. 5. C. 'छवजङ्करी-शलाभा च ?' B. 6. 'मीन-' C. 7. 'कमले-' A. 8. '-दया' A-B. 9. 'सर्व्वे'त्यादि पादचतुष्टयं' C-पुस्तके नास्ति । 10. 'नन्दा च' B. 11. 'चौरद्वारं' A. 12. 'क्रमात' A. B.

[ विंशतिदलाद् बहिर्भूगृहे— ]

[1]भूगृहे त्रिपुरेशानीं पूजयेत् साधकोत्तमः ॥ ८५ ॥

[ यन्त्रान्तरं तत्रार्चनव्यवस्था च ]

शेषमण्डल[2]पक्षे तु षडङ्गमग्नितो यजेत् ।
रत्यादिकं त्रिकोणेषु[3] मध्ये सर्व्वं प्रपूजयेत् ।
[4]पीठाष्टकं भूमिगृहे त्रिपुरेशीञ्च मध्यमे ॥ ८६ ॥

[ स्थापनीयकलसलक्षणम् ]

सौवर्णं राजतं ताम्रं मृत्तिकार्चितञ्च यत् ।
कलसं क्षालयेन्मन्त्री [5]शरमन्त्रपुरःसरम् ।
चन्दनागुरुकर्पूर[6]धूपेन धूपितं शुभम् ॥ ८७ ॥

---

८५ । अष्टदलाद् बहिर्भूगृहे त्रिपुरेश्वरीपूजनमाह—भूगृह इति ।

८६ । पूर्व्वं 'षट्कोणं विलिखेदादौ' इत्यादिना यन्मण्डलमुक्तं तत्र पूजायाः क्रममभिधाय, 'अथवा नवकोणन्तु' इत्युक्तनवकोणात्मकमण्डले पूजायाः क्रममुपदिशति—शेषेत्यादिना । अग्नितः अग्निकोणादारभ्य मूलदेवताषडङ्गानि यजेदित्यर्थः । तदाभ्यन्तरत्रिकोणे स्वसम्मुखदक्षोत्तरकोणेषु क्रमेण रत्यादिकं रतिं प्रीतिं मनोभवाञ्च पूजयेत् । मध्ये सर्व्वमिति ब्राह्मयाद्यष्टमातृतः सर्व्वेश्वर्य्यन्तं प्रागुक्तम् । भूमिगृह इति षट्कोणाद् बहिर्भूमिगृहे, पीठाष्टकं प्रागुक्तम् । मध्यम इति त्रिकोणमध्ये त्रिपुरेशीं यजेदित्यर्थः ।

८७ । सौवर्णमिति । अत्र पूर्व्वपूर्व्वासम्भवे तदुत्तरोत्तरपरिग्रहः । शरमन्त्रपुरःसरं फट् इत्युच्चारणपूर्व्वकम् । अत्र शिवमन्त्रेति पाठः प्रामादिकः, शारदायां चतुर्थपटले—

हेमादिरचितं कुम्भमस्त्राद्भिः क्षालितान्तरम् ।

इत्यनेनास्त्रमन्त्रेणैव क्षालनाभिधानात् । शुभं शोभनाकृतिम् ।

---

1. भैरवीं त्रिपुरेशानीं' C. 2. 'पद्मे' A-B. 3. 'तु' C. 4. 'पीठान्तकं' C. 5. 'शिव-' C. 6. '-स्वधूपैः' C.

पञ्चदशाङ्गुल[1]व्यास उत्सेधः षोडशाङ्गुलः ।
कलसानां प्रमाणन्तु मुखमष्टाङ्गुलं भवेत् ॥ ८८ ॥

[ सूत्रवेष्टनम् ]

[2]कन्याकर्तितसूत्रेण [3]कलसं परिवेष्टयेत् ।
गुणत्रयात्मकेनैव वेष्टयेदभितः समम् ॥ ८९ ॥
वारत्रयं वेष्टयित्वा केनापीत्यभिधीयते ॥ ९० ॥

[ कलसस्थापनम् ]

अर्च्चितं गन्धपुष्पाद्यैः कूर्च्चान्वितसमन्वितम् ।
स्वर्णरत्नोदरं[4] मध्ये स्थापयेत्तार[5]मुच्चरन् ॥ ९१ ॥
साधारं[6]कलसं मन्त्री पीठबुद्ध्या ततः परम् ।
ऐक्यं सम्भावयेन्मन्त्री पीठकलसयोरपि ॥ ९२ ॥

[ नवरत्नप्रमाणम् ]

मुक्ता[7]वैदूर्य्यमाणिक्यगोमेदवज्रविद्रुमाः ।
पद्मरागं मरकतं नीलरत्नं नवेति च ॥ ९३ ॥

---

८७—९० । कन्या अजातोपयमा बालिका । गुणत्रयात्मकेनेति त्रिगुणीकृत्यैकधा वेष्टनम् । वारत्रयमिति कल्पे एकेनैव गुणेन वारत्रयं वेष्टयित्वा त्रिगुणीकरणम् ।

९१ । कूर्च्चान्वितेति । कूर्च्चमिदं पारिभाषिकं प्रागुक्तम् । स्वर्णरत्नोदरं साधारकलसं पीठबुद्ध्या मध्ये प्रागुक्तयन्त्रमध्ये स्थापयेदिति सम्बन्धः । स्वर्णरत्नोदरमिति अत्र रत्नशब्देन नवरत्नान्युच्यन्ते,

नवरत्नोदरं मन्त्री स्थापयेत्तारमुच्चरन् ।

इति शारदातिलकचतुर्थपटलसंवादात् ।

९२ । कलसे देवीपीठत्वसम्भावनमन्तरेण तत्र देव्याः स्थितेरयोगादित्यर्थः ।

---

1. '-लायाम' B. '-लव्यासे' C. 2. 'कर्णाकर्णित-' A. 3. 'त्रिगुणेन च वर्म्मणा' C. 4. '-दकं' B. C. 5. '-त्तमम्' ? C. 6 '-र-' A. 7. '-माणिक्यवैदूर्य्य-' C.

[ कलसापूरणम् ]

[1]क्षीरिवृक्षकषायेण पला[2]शत्वग्भवेन च ।
विशेषैरुदकैर्वापि कर्पूरगन्धवासितैः ॥ ६४ ॥
पूरयेत् कलसं मन्त्री मातृकां प्रतिलोमतः ।
जपन्मूलमनुं तद्वत् साधको देवताधिया ॥ ६५ ॥

[ कलसे श्रीचक्रनिक्षेपः ]

श्रीमत्त्रिपुरसुन्दर्य्याश्चक्रं तत्र विनिक्षिपेत् ॥ ६६ ॥

[ अत्र षोडशकामकलापूजा ]

[3]श्रद्धा प्रीती रतिश्चैव भूतिः कान्तिर्मनोभवा ।
विमला [4]मोदिनी घोरा मदनोत्पादिनी [5]मदा ॥ ६७ ॥

---

६४। क्षीरिवृक्षकषायेणेति। अत्र "अश्वत्थोडुम्बरप्लक्षवटत्वक्कषायेणेत्यर्थः। आयुर्वेदोक्तरीत्या चतुर्थांशावशेषः कषायो ग्राह्य" इति राघवभट्टः। इह पलाशत्वग्भवेन चेति चकारात् क्षीरिद्रुमचतुष्टयपलाशत्वग्भवकषायैः समुदितैः पूरणमिति प्रतीयते।

क्षीरद्रुमकषायेण पलाशत्वग्भवेन वा ।

इति शारदातिलकचतुर्थपटलवचने तु वाशब्देन क्षीरद्रुमकषायालाभे पालाशकषायेणापूरणमुपदिष्टम्। तन्त्रसारकृतापि क्षीरिद्रुमकषायेण पलाशत्वग्भवेन वा तीर्थोदकैर्वा गन्धपुष्पसुवासितजलैर्वेत्युक्तम्, एवञ्च प्रामाणिकशारदातिलकतन्त्रसारयोः कल्पान्तरबोधकवाशब्ददर्शनादत्र चकारो वार्थे इत्यवधेयम्। विशेषैरुदकैस्तीर्थोदकैः। तदुक्तं शारदायां चतुर्थपटले—

तीर्थोदकैर्वा कर्पूरगन्धपुष्पसुवासितैः ॥ इति ।

मातृकां प्रतिलोमत इति, विलोममातृकां जपन् तद्वदिति मूलमन्त्रञ्च जपन् इत्यर्थः।

६६-६८। श्रीमत्त्रिपुरसुन्दरीचक्रन्तु सप्तदशपटले वक्ष्यते। तत्र षोडशमदनकलापूजनमुपदिशति—श्रद्धेत्यादिना साधक इत्यन्तेन। षोडशस्वरसंयुक्ता एताः श्रद्धादयो

---

1. 'क्षीर-' C. 2. '-शाद्रुम' A. 3. 'भूत्वा' ? C. 4. 'मेदिनी' A-B. 5. 'सदा' ? A.

[1]मोहनी दीपनी चैव शोधनी चैव शाङ्करी ।
रञ्जनी चैव मदनकला एताः प्रपूजयेत् ।
षोडशस्वरसंयुक्ता गन्धपुष्पेण साधकः ॥ ९८ ॥
वह्निसूर्य्यविधूनान्तु तन्मन्त्रैः पूजयेत् कलाः ।
प्रणवस्य कलाः पञ्च पञ्चाशद्वर्णभेदतः ॥ ९९ ॥
कलात्मकं शङ्खतोयं कुम्भे किञ्चिद्विनिक्षिपेत् ॥ १०० ॥

[ कलसे पल्लवादिनिवेशनप्रक्रिया ]

तथाऽऽम्रपनसाश्वत्थवटो[2]दुम्बरपल्लवैः ।
किन्नाशपनसाश्वत्थचूतपल्लवकोमलैः ।
इन्द्रवल्लीसमाबद्धैः सुरद्रुमधिया गुरुः ॥ १०१ ॥
कुम्भवक्त्रं पिधायास्मिंश्चषकं सफलीकृतम् ।
संस्थापयेत् फलधिया [3]विधिवत् कल्पशाखिनाम् ॥ १०२ ॥
ततः शुद्धदुकूलाभ्यां कलसं वेष्टयेत् सुधीः ।
दध्यक्षतं गन्धपुष्पं सिन्दूरं बाह्यतः क्षिपेत् ॥ १०३ ॥

[ कोणकलसस्थापनम् ]

वेदिकायाश्चतुष्कोणे शालितण्डुलकोपरि ।
जलपल्लवसंयुक्तं चतुःकुम्भं विनिर्द्दिशेत् ॥ १०४ ॥

[ द्वितीयमण्डलकल्पे कलसस्थापने विशेषः ]

शेषमण्डलपक्षे तु नवकुम्भं सुशोभनम् ।
स्वर्णरत्नादिसंयुक्तं[4] नवयोनौ विनिक्षिपेत् ॥ १०५ ॥

---

मदनकलाः पूजयेदित्यर्थः । तथाच—अं श्रद्धायै नमः । आं प्रीत्यै नमः । इं रत्यै नमः इति पूजाक्रमः पर्य्यवस्यति ।

१०१—१०२ । तथेति । अत्र पल्लवैः कोमलैरिति पृथङ्निर्द्देशात् तथेत्यादिना किन्नाशेत्यादिना च कल्पद्वयमुक्तमित्यवधेयम् । इन्द्रवल्ली इन्द्रवारुणीलताविशेषः । चषकं कलससजातीयं शरावादि ।

---

1. 'मोहिनी' C. 2. '-दु-' C. 3. 'विकिरेत् फलशाखिनम्' A-B. 4. '-भिर्युक्तं' C.

[ चतुरस्रादिकुण्डेषु मेखलानामपि चतुरस्रत्वादित्वम् ]

कुण्डानां [1]यादृशं रूपं मेखलानाञ्च [2]तादृशम् ॥ १५ ॥

[ मेखलानिर्णयः ]

कण्ठमेकाङ्गुलं [3]त्यक्त्वा मेखला[4] रचयेत् सुधीः ।
एकहस्तस्य कुण्डस्य वर्द्धयेत् तत्क्रमेण तु ।
दशहस्तान्तमन्येषा[5]मर्द्धाङ्गुलं पृथक् पृथक् ॥ १६ ॥

[ मेखलानामुत्सेधः ]

प्रधानमेखलोत्सेधमुक्तमत्र नवाङ्गुलम् ।
तद्बाह्य[6]-मेखलोत्सेधं पञ्चाङ्गुलमिति स्मृतम् ।
तद्बाह्य[7]-मेखलोत्सेधमङ्गुलद्वितयं [8]भवेत् ॥ १७ ॥

[ विस्तारः ]

वेदाग्निपक्षविस्ताराः कर्तव्या मेखलाः शुभाः ॥ १८ ॥

---

१५ । कुण्डानामिति । एवञ्च चतुरस्रकुण्डे चतुरस्रा, मेखलास्त्र्यस्रकुण्डे त्र्यस्रा, वृत्तकुण्डे वृत्ताकारा इत्येवंक्रमेण तत्र तत्र मेखलापरिपाटी निरूपणीयेति ध्येयम् ।

१६ । मेखलास्थानमाह—कण्ठमिति । कण्ठस्तु परितः कुण्डमेखलयोरन्तर्वर्त्ती प्रदेशः । तथाच कण्ठत्वेन परिभाषितं कुण्डाद् बहिः परित एकैकाङ्गुलं प्रदेशं त्यक्त्वा मेखला विदधीतेत्यर्थः । इयमेकहस्तकुण्डे व्यवस्था, द्विहस्तादौ तु कण्ठस्यार्द्धार्द्धाङ्गुलवृद्धिः ।

१७ । पूर्वं कुण्डानां यादृशं रूपमित्यादिना मेखलानां कुण्डाकारत्वमुपपादितम् । इदानीं तासामुत्सेधमाह—प्रधानेति । मेखलास्तिस्रो भवन्ति, तत्र प्रथमाया औन्नत्यं नवाङ्गुलम्, द्वितीयायाः पञ्चाङ्गुलम्, तृतीयायाश्च द्व्यङ्गुलमिति फलितार्थः ।

१८ । मेखलानामुत्सेधमभिधाय विस्तारमाह—वेदाग्नीति । तथाच प्रथमा चतुरङ्गुलविस्तारा, द्वितीया त्र्यङ्गुलविस्तारा, तृतीया च द्व्यङ्गुलविस्तारेत्यर्थः ।

अत्रेदमवधेयम्—पञ्चदशाङ्गुलं खातमित्यादिना खातस्य पञ्चदशाङ्गुलत्वम्, प्रधान-

---

1. 'तादृशं' C. 2. 'यादृशम्' C. 3. 'कृत्वा' A-B. 4. 'मेखलां' A-B. 5. '-मर्का-' A. 6. '-बाह्ये' A-B. 7. '-बाह्ये' A-B. 8. 'ततः' A-B.

[ खातकरणे कल्पान्तरम् ]

कर्तव्यमथवा खातं द्वादशाङ्गुलसम्मितम्[1] ॥ १९ ॥

[ तत्र मेखलापरिमाणभेदाः ]

द्वादशाष्टचतुर्भिश्च प्रमाणाङ्गुलिभिः शुभाः ।
उच्छ्रिता मेखलाः सर्वाश्चतुरङ्गुलविस्तृताः ॥ २० ॥

[ कुण्डमेखलयोः क्रमान्तरम् ]

अथैकमेखला[2]पक्षे गजान्तकदिगङ्गुलम् ।
खनेत् षडङ्गुलोत्सेधा मेखला वेदविस्तृता ॥ २१ ॥

---

मेखलाया उत्सेधस्य नवाङ्गुलत्वञ्चोपदिष्टम्, एवञ्च तत्र पञ्चदशाङ्गुलकुण्डखात-नवाङ्गुल-मेखलोत्सेधयोर्मेलनेन परमार्थतः खातस्य चतुर्विंशत्यङ्गुलत्वमुपपन्नम् । तथाच—

कुण्डस्य विस्तरं यावत्तावत् खन्यादधः समम् ।

इति वैदिकसर्वस्वधृतहयशीर्षपञ्चरात्रीयसौरकाण्डवचनेन यत् खातस्य कुण्डविस्तार-समपरिमाणत्वमुक्तम्, तत् प्रधानमेखलापरिमाणसमभिव्याहारेणेति । व्यक्तमाह वैदिकसर्वस्वधृतसिद्धान्तशेखरे—

खातं कुण्डप्रमाणं स्यादूर्द्ध्वं मेखलया सह । इति ।

एवं परत्रापि ।

१९—२० । कुण्डखातमेखलयोः कल्पान्तरमाह—कर्त्तव्यमिति । तथा चात्र कल्पे कुण्डस्य खातं द्वादशाङ्गुलपरिमाणं प्रधानमेखलापि द्वादशाङ्गुलपरिमाणा, अनयोः खातपरिमाणमेखलापरिमाणयोर्मेलनेन एकहस्तविस्तारकुण्डसमपरिमाणत्वमुपपन्नं खातस्येति ध्येयम् । कल्पेऽस्मिन् प्रधाना मेखला द्वादशाङ्गुलोत्सेधा, द्वितीयाष्टाङ्गुलोत्-सेधा, तृतीया च चतुरङ्गुलोत्सेधा । विस्तारस्तु तिसृणामपि मेखलानां चतुरङ्गुल एव न तु पूर्ववद् विस्तारपरिमाणभेद इति फलितम् । व्यक्तमाह तत्रैव—

कर्तव्या प्रथमा रम्या चतुरङ्गुलमुच्छ्रिता ।
अष्टाङ्गुला द्वितीया च तृतीया द्वादशाङ्गुला ।
सर्वासामेव विस्तारं कुर्वीत चतुरङ्गुलम् ॥ इति ।

२१ । एकमेखलककुण्डे खननादिप्रक्रियामाह—अथेति । अत्र गजान्तकदिगङ्गुलम् अष्टादशाङ्गुलं खनेत् । मेखलाया उत्सेधः षडङ्गुलः विस्तारश्च चतुरङ्गुलः ।

---

1. '-सन्निभम्' A. 2. 'दक्षे' A-B.

[ कुण्डनिर्माणे कल्पान्तरम् ]

अथवा सर्वकुण्डं हि खनेद्धस्तैकमानतः ॥ २२ ॥

[1]एकहस्तस्य कुण्डस्य द्विहस्तादौ प्रचक्ष्यते

यावत् कुण्डस्य विस्तारः खननं तावदीरितम् ॥ २३ ॥

[ तत्र मेखला ]

मेखलाः पञ्च कार्या [2]हि षट्पञ्चाब्धित्रिपक्षकैः ।

[ तत्र विकल्पः ]

अथवा त्रितयी कार्या वेदाग्निनयनाङ्गुलैः ॥ २४ ॥

अथवा मेखलैका हि वेदाङ्गुलि[3]समन्विता ।

उत्तमा मध्यमा न्यूना क्रमेण परिकीर्त्तिताः ॥ २५ ॥

[ कुण्डपरिमाणभेदेन मेखलापरिमाणभेदाः ]

मुष्टिमात्रमिते कुण्डे द्व्येकार्द्धाङ्गुलसम्मिताः ।

अरत्निमात्रकुण्डे तु त्रि-द्व्येकाङ्गुलसं[4]युताः ॥ २६ ॥

---

२२—२३ । कल्पान्तरमाह—अथवेति । एकेति क्रमोऽयमेकहस्तकुण्डस्येत्यर्थः । द्विहस्तेति द्विहस्तादौ क्रमः प्रचक्ष्यते । अथ कः स इत्यत आह—यावदित्यादि ।

२४—२५ । अत्र मेखलायास्त्रिविधां परिपाटीमाह—मेखला इति । तत्र क्रमेण षट्-पञ्च-चतुस्त्रिद्व्यङ्गुलात्मिकाः पञ्च मेखला इत्येकः कल्पः । अथवेति क्रमेण चतुस्त्रिद्व्यङ्गुलास्तिस्र इत्यपरः । अथवेति चतुरङ्गुलपरिमाणैकेत्यन्यः । उत्तमेति । तत्र प्रथमः पञ्चमेखलापक्ष उत्तमः, द्वितीयस्त्रिमेखलापक्षो मध्यमः, तृतीय एकमेखलापक्षोऽधम इत्यर्थः ।

२६-२९ । अथ कुण्डपरिमाणभेदेन मेखलापरिमाणभेदान् दर्शयति—मुष्टीत्यादिना सर्वतो बुधैरित्यन्तेन । मुष्टिमात्रमित इति । अत्र प्रधानमेखला द्व्यङ्गुला, द्वितीया एकाङ्गुला, तृतीयाऽर्द्धाङ्गुला । एवं परत्रापि । अरत्निमात्र इति । त्रिद्व्येकाङ्गुलसम्मिताः

---

1. 'एके'त्यादिपादचतुष्टयं A-B. पुस्तकयोर्नास्ति । 2. 'द्वि' ? A. 3. '-ल-' C. 4. '-मिताः' C.

[1]एकहस्तमिते कुण्डे वेदाग्निनयनाङ्गुलाः ।
मेखला द्विकरे कुण्डे रस-वेदगुणाङ्गुलाः ॥ २७ ॥

चतुर्हस्ते त्वष्टतर्कवेदाङ्गुलसमन्विताः ।
[2]दशाष्टाङ्गाङ्गुलैर्ज्ञेया रसहस्ते तु मेखलाः ॥ २८ ॥

अष्टहस्तमिते कुण्डे रविदिग्दन्तिभिः क्रमात् ।
दशहस्ते शक्रभानुदशाङ्गुलसमन्विताः ।
उत्सेधायामतो ज्ञेया मेखलाः सर्वतो बुधैः ॥ २९ ॥

[ अथ योनिः ]

कुण्डस्य [3]पश्चिमे भागे योनिं मध्ये सुलक्षणाम् ।
अश्वत्थपत्ररूपां वा त्रिकोणां वा विचक्षणः ॥ ३० ॥

षट्चतुर्द्व्यङ्गुलायामविस्तारोन्नतिशालिनीम् ।
एकाङ्गुलन्तु योन्यग्रं कुर्यादीषदधोमुखम् ॥ ३१ ॥

मुष्टयरत्न्येकहस्तानां कुण्डानां योनिरीरिता ।

---

३।२।१ । एकेति वेदाग्निनयनाङ्गुलाः—४।३।२ । मेखलेति । रसवेदगुणाङ्गुलाः—६।४।३ । चतुरिति अष्टतर्कवेदाङ्गुलसमन्विताः—८।६।४ । रसहस्ते षड्ढस्ते । दशाष्टाङ्गाङ्गुलैः—१०।८।६ । अष्टेति । रविदिग्दन्तिभिः—१२।१०।८ । दशहस्त इति । शक्रभानुदशाङ्गुलसमन्विताः—१४।१२।१० इति । एतेन सर्वकुण्डस्य मध्यमपरिमाणे मेखलारचनमुपदर्शितमिति साम्प्रदायिकाः ।

३० । मेखलां निरूप्य योनिं निरूपयति—कुण्डस्येति । योनिरियं कुण्डस्य पश्चिममेखलोपरि कर्त्तव्या । तदुक्तं शारदायां तृतीयपटले—

होतुरग्रे योनिरासामुपर्यश्वत्थपत्रवत् । इति ।

आसां मेखलानाम् ।

३१ । षडिति । कल्पेऽस्मिन् योनेर्दैर्घ्यं षडङ्गुलम्, विस्तारश्चतुरङ्गुलः, उन्नतिर्द्व्यङ्गुलेत्यर्थः । कल्पान्तरन्तु वक्ष्यते ।

---

1. एकेत्यादि पादद्वयं A-C. पुस्तकयोर्नास्ति । 2. 'द्वादशाष्टा-' A. 3. दक्षिणे C.

[ द्विहस्तादिकुण्डेषु विशेषः ]

एकैकाङ्गुलतो योनिं कुण्डेष्वन्येषु वर्द्धयेत् ॥ ३२ ॥
यवद्वयक्रमेणैव योन्यग्रमपि वर्द्धयेत् ॥ ३३ ॥

[ योनिनिर्माणे क्रमान्तरम् ]

अथवान्यप्रकारेण योनिं कुर्याद्विचक्षणः ।
द्वादशाङ्गुलदीर्घान्तु तथाष्टाङ्गुलविस्तृताम् ॥ ३४ ॥
योनिं प्रकल्पयेन्मन्त्री तस्याग्रं द्व्यङ्गुलं भवेत् ।
[1]दशहस्तान्तकं[2] मानं पूर्ववद् वर्द्धयेत् क्रमात् ॥ ३५ ॥

[ नालम् ]

योन्याः पश्चिमतो नालं सरन्ध्रं चतुरङ्गुलम् ।
त्रिद्व्येकाङ्गुलविस्तारं क्रमान्मूलाग्रमिष्यते ॥ ३६ ॥

---

३४। द्वादशेति। विशेषानभिधानादत्राप्यौन्नत्यं द्व्यङ्गुलमिति बोध्यम्। स्फुटमाह राघवभट्टधृतसिद्धान्तशेखरे—

दीर्घार्कपर्वभिर्योनिर्विस्तारेणाष्टकाङ्गुला ।
उन्नतिर्द्व्यङ्गुलेनास्याः ................. ॥

इति। प्रयोगसारेऽपि—

त्रिभागां मध्यतो योनिमायामे द्वादशाङ्गुलाम् ।
द्वादशांशोच्छ्रितां कुर्यात् किञ्चित्कुम्भनिवेशिनीम् ॥ इति ।

द्वादशांशोच्छ्रितां द्व्यङ्गुलोन्नतामित्यर्थः ।

अत्र निरुक्तयोनौ छिद्रस्य कर्त्तव्यत्वमाह शारदायां तृतीयपटले—

स्थलादारभ्य नालं स्याद् योन्या मध्यं सरन्ध्रकम् । इति ।

३६। नालमाह—योन्या इति। मूलाग्रमिति मूलतोऽग्रं यावदित्यर्थः, क्रमात् त्रिद्व्येकाङ्गुलविस्तारमिष्यत इति सम्बन्धः। तथाच नालस्य मूलं त्र्यङ्गुलम्, मध्यं द्व्यङ्गुलमग्रमेकाङ्गुलमित्यर्थः।

तदुक्तं राघवभट्टधृतप्रयोगसारे—

योन्याः पश्चिमतो नालमायामे चतुरङ्गुलम् ।
त्रिद्व्येकाङ्गुलविस्तारं क्रमान्न्यूनाग्रमिष्यते ॥

नालस्य स्थानादिकं व्यक्तमाह वैदिकसर्वस्वटिप्पनीधृतगणेशविमर्षिण्याम्—

[ नाभिः ]

कुण्डान्तर्नाभिमब्जाभं कुण्डरूपं क्षिपेच्च वा ।
मुष्ट्यरत्न्येकहस्तानां नाभिरुत्सेधभावतः ॥ ३७ ॥
[1]द्वित्रिवेदाङ्गुलोपेतः कुण्डेष्वन्येषु वर्द्धयेत् ।
यवद्वयक्रमेणैव नाभिं पृथगुदारधीः ॥ ३८ ॥

[ योनिकुण्डे योनेरब्जकुण्डे च नाभेर्वर्जनीयत्वम् ]

योनिकुण्डे त्यजेद् योनिमब्जे नाभिं विवर्जयेत् ॥ ३९ ॥

[ नाभिनिर्माणपरिपाटी ]

नाभिस्थानं त्रिधा कृत्वा मध्यभागे च कर्णिकाम् ।
पत्राणि विलिखे[2]दष्टौ बहिरंशद्वये सुधीः ॥ ४० ॥

---

मेखलानां बहिःस्थानं स्थलमित्यभिधीयते ।
चतुरस्रं स्थलारब्धं नालं मध्ये सरन्ध्रकम् ॥
स्थूलमूलन्तु सूक्ष्माग्रं तन्नालं स्यान्मनोहरम् ।
बाह्यस्थमेखलाबाह्यस्थलादारभ्य कारयेत् ॥ इति ।

अत्र चतुरङ्गुलोत्सेधविस्तारां बाह्यमेखलासम्बन्दां वेदीं कृत्वा तदुपरि नालं स्थापयेदिति राघवभट्टः ।

द्वितीयमेखलोपरि परिधिस्थापनाय रन्ध्रनिर्माणमाह वैदिकसर्वस्वे—

योन्याः पश्चिमतो नालमायामेन षडङ्गुलम् ।
मेखलानालयोर्मध्ये परिधेः स्थापनाय च ।
रन्ध्रं कुर्यात्तदा विद्वान् द्वितीयमेखलोपरि ॥ इति ।

३७-३८। कुण्डान्तरिति । षट्चतुर्द्व्यङ्गुलोपेतो नाभिः कर्त्तव्य इत्यर्थः । मुष्टिपरिमाणे द्व्यङ्गुलः, अरत्निपरिमाणे त्र्यङ्गुलः, हस्तपरिमाणे चतुरङ्गुलो नाभेरुत्सेध इत्यर्थः । अन्येषु तु यवद्वयवृद्धिः ।

३९। योनिकुण्डे निरुक्तां योनिं पद्मकुण्डे च नाभिं न कुर्यादित्यर्थः ।

---

1. 'द्वित्रिवेदे'त्यादि पादचतुष्टयं C-पुस्तके नास्ति । 2. 'त्रि द्वि' A.

[ होमसंख्याभेदेन कुण्डभेदः ]

मुष्टिमात्रं शतार्द्धे तु [1]शते चारत्निमात्रकम् ।
हस्तमात्रं सहस्रे तु द्विहस्तमयुते तथा ॥ ४१ ॥

[ कुण्डाकारवृद्धिक्रमः ]

एकहस्तस्य कुण्डस्य कोणसूत्रप्रमाणतः ।
समन्ताद् वर्द्धयेत्तेन कुण्डं तत् स्याद्विहस्तकम् ॥ ४२ ॥
एवमेव विधानेन तत् सर्वं वर्द्धयेत् सुधीः ॥ ४३ ॥

[ तत्र क्रमान्तरम् ]

[2]अथ तोडलतन्त्रस्य मतमन्यत् प्रचक्ष्यते ॥ ४४ ॥
हस्तमात्रमिते कुण्डे समन्ताच्चतुरङ्गुलम् ।
वर्द्धयेत्तेन मानेन द्विहस्तश्च प्रचक्ष्यते ॥ ४५ ॥

[ लक्षादिहोमभेदे कुण्डपरिमाणगौरवम् ]

चतुर्हस्तं लक्षहोमे षड्ढस्तं दशलक्षके ।
अष्टहस्तं कोटिहोमे दशहस्तं तथैव च ॥ ४६ ॥

[ तत्र कल्पान्तरम् ]

अथवा कारयेदेकहस्ते लक्षं तथा क्रमात् ।
लक्षाणां दशकं यावत्तावद्धस्तेन वर्द्धयेत् ॥ ४७ ॥
दशहस्तात् परं कुण्डं नास्ति सर्वागमेष्वपि ॥ ४८ ॥

[ खातस्य यथोक्तपरिमाणवैषम्ये दोषः ]

खाताधिके भवेद्रोगी न्यूने याति धनक्षयम् ।
वक्रकुण्डे तु सन्तापो मरणं छिन्नमेखले ॥ ४९ ॥

[ कुण्डस्य स्वेष्टदेवतास्वरूपत्वम् ]

कुण्डस्य रूपं जानीयात् परमं प्रकृतेर्वपुः ॥ ५० ॥

---

1. 'शत' इत्यादि पादद्वयं A-पुस्तके नास्ति । 2. अथोत्तरतन्त्रस्य ? C.

प्राच्यां शिरो भवेद् बाहू दक्षिणोत्तरयोः क्रमात् ।
[1]उदरं कुण्डमित्युक्तं योनिः पादौ च पश्चिमे ॥ ५१ ॥

[ कुण्डस्य चतुरस्रत्वादिभेदेन फलभेदाः ]

चतुरस्रं शान्तिलक्ष्मी-[2]पुष्टिवृद्धेस्तु कारणम् ।
योनिकुण्डं वाक्प्रदं स्यादाकृष्टिकरणं भगम् ॥ ५२ ॥
[3]लक्ष्मीप्रदं वर्त्तुलञ्च चन्द्रार्द्धत्रितयं भवेत् ।
[4]पद्माख्यं सर्वसम्पत्तेः कारणं पुष्टिदं भवेत् ॥ ५३ ॥

[ वर्णभेदेन कुण्डभेदाः ]

चतुरस्रं ब्राह्मणानां राज्ञाञ्च वर्त्तुलं मतम् ।
वणिजामर्द्धचन्द्रञ्च[5] त्र्यस्रन्तु शूद्रजन्मनाम् ॥ ५४ ॥

[ चतुरस्रकुण्डं सर्ववर्णसाधारणमिति मतान्तरम् ]

आचार्याः कथयन्त्येके सर्वेषां चतुरस्रकम् ॥ ५५ ॥

[ निरुक्तमेखलादिराहित्ये दोषः ]

मेखलारहिते शोको ह्यधिके वित्तसंक्षयः ।
भार्याविनाशनं प्रोक्तं कुण्डं योन्या विना[6] कृतम् ।
अपत्यध्वंसनं प्रोक्तं कुण्डं यत् कण्ठवर्जितम् ॥ ५६ ॥

[ कुण्डकरणासम्भवे स्थण्डिले होमविधानम् ]

नित्यं नैमित्तिकं होमं स्थण्डिले वा[7] समाचरेत् ॥ ५७ ॥

---

५३। चन्द्रार्द्धत्रितयमर्द्धचन्द्रकुण्डं त्र्यस्रकुण्डञ्चेत्यर्थः ।

५७। नित्यमिति। स्थण्डिले वा समाचरेत् कुण्डकरणासम्भव इत्यर्थः। स्थण्डिललक्षणमाह शारदायां तृतीयपटले—

---

1. 'तदेवं' ? A-B. 2. '-ष्टैवृ-' A-B. 3. अत्र 'लक्ष्मीप्रद'मित्यादिपादद्वयात् परं 'छेदमारणयोः कुण्डं षडस्रं परिकीर्त्तितम्' इति अधिकः पाठः। 4. 'पद्माख्य'मित्यादिपादद्वयात् परं 'रोगकृत् कुण्डमष्टास्रं नवमं चतुरस्रवत्' इति B-पुस्तकेऽधिकः पाठो दृश्यते, अत्र प्रकृते कुण्डस्वरूपनिरूपणावसरे षडस्रादिकुण्डानामनुल्लेखात् A-C-पुस्तकयोरपरिगृहीतत्वाच्च नायं पाठो मूले निवेशितः। 5. 'न्तु' C. 6. 'निरा-' C. 7. 'च' A-C.

[ स्रुक्-स्रुवयोर्लक्षणम् ]

अथाऽतः संप्रवक्ष्यामि स्रुक्स्रुवस्य च लक्षणम् ॥ ५८॥

श्रीपर्णीशिंशपाक्षीरिशाखिष्वेकतमं गुरुः ।

गृहीत्वा विभजेद्धस्तमात्रं षट्त्रिंशता पुनः ॥ ५६ ॥

विंशत्यंशैर्भवेद्दण्डो वेदिस्तैरष्टभिर्भवेत् ।

एकांशेन मितः कण्ठः सप्तभागमितं मुखम् ॥ ६० ॥

वेदीत्र्यंशेन विस्तारः कण्ठस्य परिकीर्त्तितः ।

मुखं कण्ठसमानं स्यान्मुख[1]वर्त्म प्रकल्पयेत् ।

कनिष्ठाङ्गुलिमानेन सर्पिषो निर्गमाय च ॥ ६१ ॥

---

हस्तमात्रेण तत् कुर्याद् वालुकाभिः सुशोभनम् ।
अङ्गुलोत्सेधसंयुक्तं चतुरस्रं समन्ततः ॥ इति ।

५८। एवं कुण्डलक्षणमभिधाय क्रमेण स्रुक्स्रुवयोर्लक्षणं वक्तुं प्रतिजानीते—अथात इति ।

५६-६०। षट्त्रिंशतेति—

स्रुग् बाहुमात्रा विज्ञेया कदलीपुष्पसन्निभा ।

इति वैदिकसर्वस्वधृतागमवचनेन स्रुचः प्रमाणं बाहुमात्रमित्युपदिष्टम् । एवञ्च बाहुमात्रप्रमाणं निरुक्तखादिराद्यन्यतमकाष्ठं षट्त्रिंशता भागैर्विभज्य तस्य विंशत्या भागैर्दण्डम्, अष्टभिर्भागैर्वेदिकाम्, भागेनैकेन कण्ठम्, सप्तभिर्भागैर्मुखं विदधीतेति । एवं कृते षट्त्रिंशतोऽंशानामत्रान्तर्भुक्तिः स्यात् ।

६१। कण्ठादेर्विस्तारमाह—वेदीत्र्यंशेनेति । निरुक्तवेदीतृतीयांशेनेत्यर्थः । कण्ठसमानमिति वेदिकातृतीयांशैकांशरूपम् । मुखेति । होतव्यस्य हविषो निर्गमाय कनिष्ठाङ्गुलिमानेन मुखवर्त्म हविर्निर्गमनपथं प्रकल्पयेत् । निरुक्ते मुखे हविर्निर्गमार्थं तादृशं छिद्रं कर्त्तव्यम्, येन तत्र कनिष्ठाङ्गुलिप्रवेशो भवतीत्यर्थः । छिद्रमिदं तप्तलोहशलाकया कर्त्तव्यम्, तदुक्तं राघवभट्टधृतमन्त्रमुक्तावल्याम्—

कण्ठाधः कारयेन्मार्गं विद्वानाज्यस्य निर्गमे ।
वेधश्च मुखतः कुर्यात्तप्तलोहशलाकया ॥ इति ।

---

1. '-वप्रं' A-B.

वेदीमध्ये [1]विधातव्या भागेनैकेन कर्णिका।
विदधीत बहिस्तस्या एकांशेनाभितोऽवटम्॥ ६२॥
तस्य [2]खातं त्रिभिर्भागै[3]र्वृत्तमर्द्धांशतो बहिः।
अंशेनैकेन परितो दलानि परिकल्पयेत्।
मेखला मुखवेद्योः स्यात् परितोऽर्द्धांशमानतः॥ ६३॥
दण्डमूलाग्रयोः कुम्भौ गुणवेदाङ्गुलैः क्रमात्।
गण्डी युगयमांशैः स्याद्दण्डस्यानाह ईरितः।
षड्भिरंशैः पृष्ठभागो वेद्याः कूर्माकृतिर्भवेत्॥ ६४॥

---

६२-६३। वेद्यां मेखलादिप्रक्रियां दर्शयति—वेदीमध्य इति। निरुक्तवेद्या मध्यप्रदेशे एकांशेन कर्णिकां तद्बहिरेकांशेन अभितः अवटं गर्त्तम्, तद्बहिस्त्रिभिरंशैः खातं, तद्बहिरर्द्धांशेन वृत्तं, तद्बहिरेकांशेन परितो दलानि, निरुक्तमुखवेद्योः परितः अर्द्धांशमानतो मेखलां रचयेदित्यर्थः। एवञ्च कर्णिका १, अवटं १, खातं ३, वृत्तं $\frac{1}{2}$, दलानि १, मेखला $\frac{1}{2}$ इत्यापतति।

६४। दण्डेति। गुणवेदाङ्गुलैरिति। दण्डस्य मूले त्र्यङ्गुलपरिमितः कुम्भः अग्रे च चतुरङ्गुलः।

गण्डीति। गण्डी कङ्कणाकारं वेष्टनम्, तत्परिमाणमाह—युगयमांशैरिति। मूलाग्रयोरिति पूर्वोक्तमत्रानुकर्षणीयम्—

मूले चाग्रे च दण्डस्य गण्डी कङ्कणवद्भवेत्।

इति राघवभट्टधृतसोमशम्भुवचनसंवादात्। तथाच दण्डस्य मूल एका गण्डी चतुरंशा अग्रे चापरा तत्परिमाणा स्यादित्यर्थः। दण्डस्य विस्तारमाह—दण्डस्येति। षड्भिरंशैर्दण्डस्य आनाहो विस्तार ईरित इत्यर्थः। तदुक्तं राघवभट्टधृतमन्त्रमुक्तावल्याम्—षडङ्गुलपरीणाहो दण्डमध्य उदाहृतः। इति।

---

1. 'नि' C. 2. 'भागं' A. 3. 'वृत्तें'त्यादि 'ईरित' इत्यन्तोंशः A-पुस्तके नास्ति।

हंसस्य वा हस्तिनो वा पोत्रिणो वा मुखं लिखेत् ।
मुखस्य पृष्ठभागेऽस्याः[1] संप्रोक्तं लक्षणं स्रुचः ॥ ६५ ॥

[ स्रुवलक्षणम् ]

चतुर्विंशतिभिर्भागैः स्रुचश्च रचयेत् स्रुवम् ।
द्वाविंशत्या दण्डमानमंशैरेतस्य कीर्त्तितम् ॥ ६६ ॥
चतुर्भिरंशैरानाहः कर्षाज्यग्राहि तच्छिरः[2] ।
अंशद्वयेन निखनेत् पङ्के मृगपदाकृति ॥ ६७ ॥
दण्डमूलाग्रयोः कुम्भौ कार्यौ कङ्कणभूषणौ ।
पूर्ववच्च स्रुवस्यैव लक्षणं समुदाहृतम् ॥ ६८ ॥

[तयोरभावे व्यवस्था ]

स्रुक्स्रुवाणामभावे तु प्रकारान्तरमुच्यते ॥ ६९ ॥

---

६५। हंसस्येति। अस्याः स्रुचो मुखस्य पृष्ठभागे लिखेदिति सम्बन्धः। पोत्रिणो वराहस्य।

६६। एवं स्रुचो लक्षणमभिधाय स्रुवलक्षणमाह—चतुरिति। प्रागुक्तस्रुचः चतुर्विंशतिभागैः स्रुवं रचयेदित्यर्थः। द्वाविंशत्या अंशैर्दण्डमानमिति सम्बन्धः।

६७। आनाहो विस्तारः। कर्षेति अंशद्वयेन कर्षाज्यग्राहि कर्षपरिमिताज्यग्रहणयोग्यं तच्छिरः निखनेदिति सम्बन्धः। कर्षपरिमाणमाह राघवभट्टः—

माषो दशगुञ्जः स्यात् षोडशमाषो निगद्यते कर्षः।

इति। पङ्क इति। पङ्के मृगपदस्य मृगपदचिह्नस्य आकृतिरिव आकृतिर्यस्य तथाभूतं शिर इति सम्बन्धः। वैदिकसर्वस्वधृतागमे—

चतुष्कोणसमायुक्तो हस्तमात्रः स्रुवो भवेत्।
यथाल्पपङ्के गोष्पादं रुचिरं दृश्यते सदा ॥ इति।

६८। पूर्ववच्चेति। एतत्कुम्भ-गण्डीरचनापरिपाटी पूर्ववत् स्रुग्विहितकुम्भगण्डीक्रमेण कर्त्तव्येत्यर्थः।

---

1. 'स्यात्' A-B-C. 2. 'ता श्रुवः' C.

मध्यमाभ्यां पलाशस्य पत्राभ्यां हूयते हविः ।
अथवाऽश्वत्थपत्राभ्यां संक्षिप्ते होमकर्मणि ॥ ७० ॥

इति श्रीपूर्णानन्दपरमहंसविरचिते श्रीतत्त्वचिन्तामणौ
सप्तमः प्रकाशः ॥ ७ ॥

---

# अष्टमः प्रकाशः

[ होमविधानम् ]

[ होमविधिनिरूपणप्रतिज्ञा ]

अथ होमविधिं वक्ष्ये शक्तितन्त्रानुसारतः ।

[ कुण्डस्य वीक्षणाद्यष्टादश संस्काराः ]

आदौ कुण्डस्य संस्कारानष्टादश च कारयेत् ॥ १ ॥

मूलेन वीक्षणं कुर्याच्छरेण प्रोक्षणं मतम् ।

तेनैव ताडनं दर्भैर्वर्मणाभ्युक्षणं मतम् ॥ २ ॥

खननं मृत्तिकोद्धारम[1]स्त्रमन्त्रेण पूरणम् ।

हृदयेनास्त्रमन्त्रेण समीकरणमेव च ॥ ३ ॥

सेचनं कवचेनैव [2]हेतिमन्त्रेण कुट्टनम् ।

मार्जनं वर्ममन्त्रेण ततः कुर्याद्विलेपनम् ॥ ४ ॥

---

१। एवं सप्तमे कुण्डप्रकरणमभिधाय प्रकाशेऽस्मिन् होमविधानं निरूपयति—अथेति। तत्र च—

यागे कुण्डानि संस्कुर्यात् संस्कारैरेभिरीरितैः ।

इत्यादिशारदातिलकपञ्चमपटलवचनेन कुण्डसंस्काराणामवश्यकर्त्तव्यत्वश्रवणात् प्रथमं तानेवाह—आदाविति।

२। मूलेनेति। मूलेन देवमन्त्रेण। शरेणास्त्रमन्त्रेण। तेनैव शरेणैव।

३। खननमिति। मृत्तिकोद्धारः खातमृद उत्तोलनम्। पूरणं कुण्डेऽन्यमृदासेचनम्। अत्र अस्त्रमन्त्रेण खननं मृत्तिकोद्धारश्च, तथा हृदयेन नम इत्यनेन पूरणमस्त्रमन्त्रेण समीकरणं कुर्यादिति सम्बन्धः। व्यक्तमाह शारदायां पञ्चमपटले—

---

1. 'मूल-' C. 1.

सोमसूर्यानलानान्तु कलास्तेनैव कल्पयेत् ।
त्रिसूत्रीकरणश्चैव हृन्मन्त्रेण प्रपूजयेत् ॥ ५ ॥
वज्रीकरणमस्त्रेण हृन्मन्त्रेण कुशैः शुभैः ।
चतुष्पथ[1]भागरूपं नयनेनाक्षपाटनम् ॥ ६ ॥
[2]आवसथ्यं मध्यभागे प्राच्याञ्च[3] पश्चिमे तथा ।
आहवनीयं ततोऽ[4]न्वाहार्यं दक्षिणदेशतः ॥ ७ ॥
गार्हपत्यञ्च मन्त्रज्ञो भावयेद् भागमित्यथ ।
चतुष्टयं वा मूलेन वीक्षणञ्च [5]शरानुना ॥ ८ ॥

---

अस्त्रेण खननोद्धारौ हृन्मन्त्रेण प्रपूरणम् ।
समीकरणमस्त्रेण सेचनं वर्मणा मतम् ॥

४-५ । सेचनमिति । हेतिमन्त्रेणास्त्रमन्त्रेण । मार्जनं विलेपनम्, सोमसूर्यानल-कलाकल्पनम्, त्रिसूत्रीकरणञ्चेति चत्वारः संस्कारा वर्ममन्त्रेण कर्त्तव्या इति फलितार्थः । त्रिसूत्रीकरणं सूत्रत्रयवेष्टनम् ।

६ । वज्रीकरणमिति । अस्त्रेण वज्रीकरणं वज्रवद्दृढीकरणम् । हृन्मन्त्रेणेति शुभैः कुशैः चतुष्पथभागरूपं चतुर्दिक्षु मार्गचतुष्टयनिर्माणरूपं कर्म कुर्यादित्यर्थः । 'चतुष्पथं भागरूपम्' इति पाठे तु भागो विभाग एव रूपं स्वरूपं यस्य तादृशं चतुष्पथं कुर्यान्न त्वन्यादृशचतुष्पथमित्यर्थः । नयनेनेति वौषट् इत्यनेन अक्षपाटनम् इन्द्रियोद्घाटनम् ।

एवञ्च वीक्षणम् १ । प्रोक्षणम् २ । ताडनम् ३ । अभ्युक्षणम् ४ । खननम् ५ । मृत्तिकोद्धारः ६ । पूरणम् ७ । समीकरणम् ८ । सेचनम् ९ । कुट्टनम् १० । मार्जनम् ११ । विलेपनम् १२ । सोमसूर्याग्निकलाकल्पनम् १३ । त्रिसूत्रीकरणम् १४ । प्रपूजनम् १५ । वज्रीकरणम् १६ । चतुष्पथविभागः १७ । अक्षपाटनम् १८ । इत्यष्टादश संस्काराः कुण्डस्य ।

---

1. '-थं' C, 'पाद-' A. 2. 'अनुसख्यं ?' A-B. 3. 'सद्यन्तु' C. 4. 'हुत्वा' A-B. 5. 'शरागुणा' B.

प्रोक्षणं ताडनं दर्भैस्तेनोत्तानेन पाणिना ।
प्रोक्षणं कवचेनैव संस्काराश्च समीरिताः ॥ ९ ॥

[ स्थण्डिले होमः ]

अथवा स्थण्डिले होमं कुर्यात् साधकसत्तमः[1] ।
अङ्गुष्ठमध्यमोत्सेध[2]वालुकामयमण्डलम् ॥ १० ॥

चतुरस्रं हस्तमानं गोमयेन विलेपितम् ।
शोधनं कारयेत् स्थानं वीक्षणादिचतुष्टयैः[3] ॥ ११ ॥

[ प्रागग्ररेखात्रयम् ]

रेखात्रयं सुधीः कुर्यात् पश्चिमात् पूर्वदिग्गतम् ।
प्रादेशमात्रं विज्ञेयं मुकुन्देशेन्द्ररूपिणम्[4] ॥ १२ ॥

---

९। निरुक्ताष्टादशसंस्काराशक्तौ संस्कारचतुष्टयरूपं कल्पान्तरमाह—चतुष्टयमिति। चतुष्टयं वा संस्काराणामिति शेषः। तच्चतुष्टयं विशेषयति—मूलेनेति। तथाच मूलेन वीक्षणम् १। शरानुना प्रोक्षणम् २। तेनैव दर्भैस्ताडनम् ३। वर्म्ममन्त्रेण प्रोक्षणम् ४। प्रोक्षणम् अभ्युक्षणम्। तदुक्तं शारदायां पञ्चमपटले—

अथवा तानि संस्कुर्य्याच्चतुर्भिर्वीक्षणादिभिः।

इति। व्यक्तमाह तन्त्रसारे—

वीक्षणं मूलमन्त्रेण शरेण प्रोक्षणं मतम्।
तेनैव ताडनं दर्भैर्वर्मणाभ्युक्षणं मतम्॥ इति।

११। वीक्षणादिचतुष्टयैः चतुष्टयं वेत्यादिना पूर्वमुक्तैरित्यर्थः। एवञ्च कुण्डेऽष्टादशसंस्कारकरणं प्रथमः कल्पः, तदसम्भवे तत्र वीक्षणादयश्चत्वारः संस्काराः। स्थण्डिले तु वीक्षणादिसंस्कारचतुष्टयमात्रम्।

---

1. '-न्न साधाकोत्तमः' C. 2. '-र्धं' C. 3. '-ये' ? C. 4. 'रूपकम्' C.

[ उत्तराग्ररेखात्रयम् ]

हृदयेनैव मन्त्रेण दक्षिणादुत्तरावधि ।
रेखात्रयं तथा ब्रह्मवैवस्वतेन्दु[1]रूपकम्[2] ॥ १३ ॥
लेखनीं निक्षिपेत्तत्र तर्जन्यङ्गुष्ठयोगतः ।
रजस्तासां समुद्धृत्य प्रोक्षयेत् प्रणवेन तु ॥ १४ ॥

[ योगपीठविरचनापरिपाटी ]

योगपीठञ्च सिन्दूरकर्पूरकुङ्कुमेन वा ।
धान्यपिष्टेन वा मध्ये चूर्णेन[3] वा हरिद्रया ॥ १५ ॥
त्रिकोणञ्चैव षट्कोणं भूपुरं द्वारसंयुतम् ।
लिखित्वा बालया पुष्पं तन्मध्ये च विनिक्षिपेत् ॥ १६ ॥

---

१५-१६ । योगपीठनिर्माणपरिपाटीमाह—योगपीठञ्चेत्यादिना विनिक्षिपेदित्यन्तेन । अत्र त्रिकोणञ्चैव षट्कोणमेतावन्मात्राभिधानेऽपि प्रथमतस्त्रिकोणम् , तद्बाह्ये षट्कोणम् , तद्बहिर्वृत्तम् , ततोऽष्टदलकमलम् , ततश्चतुर्द्वारसंयुक्तं भूपुरं मूलोक्तं लेखनीयमित्येवं क्रमोऽवगन्तव्यः । अन्यथा 'अष्टमूर्त्तीस्तवष्टपत्रे' इति वक्ष्यमाणग्रन्थो नोपपद्यते तत्पूर्वं पत्रनिर्माणस्य लेशतोऽप्यनुल्लेखात् । तस्माद् यदत्र त्रिकोणञ्चैव षट्कोणमित्युक्तं तद् वह्नियन्त्रान्तर्गतयोगपीठनिर्णयाभिप्रायेण । परमार्थतस्तु निरुक्तषट्कोणात् परं वृत्तादीन्यपि कर्त्तव्यानि । व्यक्तमाह गन्धर्वतन्त्रे होमविधिप्रतिपादकैकत्रिंशपटले—

दक्षिणास्तिस्रो रेखा वै विलिख्य तदनन्तरम् ।
रेखाः स्युश्च वैवस्वतब्रह्मानन्तस्वरूपकाः ॥

इत्यनन्तरम्—

---

1. '-न्द्र-' C. 2. 'अतः परं 'प्राचीं पूर्वमुदक्संस्थं दक्षिणारम्भमालिखेत् । उदगग्रं पुरःसंस्थं पश्चिमारम्भमालिखेत् ॥ तिस्रस्तिस्रो लिखेदेवं प्रोक्षयेद् वाग्भवेन तु ॥ इति P-पुस्तकपादटीकायां पतितोद्धाररूपेण परिदृश्यमानः पाठो युक्तरूपोऽपि A-C-पुस्तकयोः B-पुस्तकस्य मूले चानुक्तत्वान्न परिगृहीतः । 3. 'चूर्णैनैव' A-B.

[ पीठदेवतापूजा ]

उपर्युपरिभेदेन तत्र पीठं समर्च्चयेत् ।
मण्डूकं पूजयेद्रुद्रमाधारकूर्मशूकरान्[1] ॥ १७ ॥
धर्मं ज्ञानञ्च वैराग्यमैश्वर्यं पीठदिक्षु च ।
[2]अ-पूर्वांस्तेषु कोणेषु पीठस्योपरि पूजयेत् ॥ १८ ॥

[ योगपीठार्च्चनम् ]

पुनस्तारेण मन्त्रज्ञो [3]योगपीठं यजेत्ततः ॥ १९ ॥
तारो माया च कामेशी कामेश्वरयुतेति च ।
योगपीठं ङेनमोऽन्तं पीठमन्त्रोऽयमीरितः ॥ २० ॥

[ कामेश्वरीध्यानम् ]

[4]मध्ये ऋतुमतीं देवीं मातरं विश्वमातरम् ।
कामेश्वरीं महाप्रौढां नीलेन्दीवरसन्निभाम् ॥ २१ ॥

---

त्रिकोणं मध्यतो देवि कृत्वा बाह्ये ततः परम् ।
षट्कोणं विधिना चैव कारयेदतिसुन्दरम् ।
अष्टपत्रञ्च तद्बाह्ये वृत्तेन कर्णिका शुभा ॥ इत्यादिना ।
बालया ऐँ क्लीँ सौः इति वक्ष्यमाणबालामन्त्रेण ।

१८ । अपूर्वानिति । पूर्वं धर्मं ज्ञानं वैराग्यमैश्वर्यमित्युपक्रान्तम् । अ-पूर्वा नित्यनेन च अकारः पूर्वो येषां तथाभूतान् धर्मादीन् तेषु कोणेषु पूजयेदित्यर्थस्य संग्रहात् कोणेष्वधर्माज्ञानावैराग्यानैश्वर्याणां पूजनमुपदिष्टमित्यवधेयम् ।

१९ । तारेण प्रणवेन ।

२० । तार इति । तारः प्रणवः । माया ह्रीँ । तथाच ॐ ह्रीँ कामेश्वरीकामेश्वरयुतयोगपीठाय नमः । इति पीठमन्त्र इत्यर्थः ।

---

1. अतः परं ‘पृथिवीकन्दनाले च पद्मकर्णिककेशरान्’ इति C-पुस्तकेऽधिकः पाठः । B-पुस्तकपादटीकायां ‘पृथिवीं सुधाम्बुधि’मित्यादयः केचन श्लोका दृश्यन्ते । 2. ‘स्व-’ ? A. 3. ‘योगविष्टरकं यजेत्’ A. 4. ‘मध्य’ इत्यादि पादद्वयं A-पुस्तके नास्ति ।

कामेश्वरेण संयुक्तां ध्यात्वा पाद्यादिभिर्यजेत् ।
शक्तिबीजेन[1] कामेशीं कामेशं साध्यमन्त्रतः ॥ २२ ॥

[ अग्निचयनम् ]

श्रोत्रियागारजं वापि सूर्य[2]कान्तोद्भवन्तु वा ।
अरणीसम्भवं वापि क्षिप्तं स्वर्णादिभाजने ॥ २३ ॥
ताम्रपात्रादिना मन्त्री पिहितन्तु समानयेत् ।
अथवाऽऽनीतमभितः स्थापयेत् कांस्यभाजने ॥ २४ ॥
तस्मात् समानयेत् किञ्चिद् वह्निबीजेन याजकः ॥ २५ ॥

[ अग्निसंस्कारः ]

मूलेन [3]वीक्षणं कार्यमस्त्रेण रक्षणं चरेत् ।
प्रोक्षयेत् कवचेनैव तथा[4]-वगुण्ठनं चरेत् ॥ २६ ॥

[ दिग्बन्धनादि ]

दशदिग्बन्धनं कृत्वा धेनुमुद्रां प्रदर्शयेत् ॥ २७ ॥
त्रिर्भ्राम्य कुण्डं परितो दक्षिणा[5]त्तारमुच्चरन् ।
कूर्चास्त्राभ्याञ्च नैर्ऋत्यां क्रव्यादांशं परित्यजेत् ॥ २८ ॥

[ अनन्तरकृत्यानि ]

पश्चात् प्रज्वालयेद्[6] वह्निं ज्ञानाग्निं संक्रमय्य च ।

---

२८। दक्षिणादिति। स्वदक्षिणभागादग्निमुद्धृत्य कुण्डं परितस्त्रिः परिभ्राम्य इत्यर्थः। कूर्चेति। तारमुच्चरन् इति तारशब्देन मूलमन्त्रो बोध्यः। कूर्चं हुँ, अस्त्रं फट्। ततश्च मूलमुच्चार्य हुँ फट् क्रव्यादेभ्यः स्वाहा इति क्रव्यादांशत्यागक्रमः। एवमेव तन्त्रसारकाराः।

---

1. '-मन्त्रेण' C. 2. '-कान्तादिजं ततः' A-B. 3. '-र-' A. 4. '-था आचमनं' A-B. 5. '-चार-' A. 6. '-दग्नि' B.-C.

दीपाद्दीपान्तरं न्यायात् स्फुरन्तं सर्वतोमुखम् ।
श्वासमार्गेण [1]मनुवित् कवचेन ततोऽर्च्चयेत् ॥ २६ ॥

भूमौ च जानुनी कृत्वा कूर्च्चबीजञ्च[2] वह्नितः[3] ।
चैतन्यं ङे[4] नमोऽन्तं स्यादनेनोत्थापयेच्छुचिम् ॥ ३० ॥

[ वह्निस्थापनम् ]

शिवबीजधिया तस्या योनौ वह्निं विनिक्षिपेत् ।
आत्मनोऽभिमुखं कृत्वा पूर्वोक्तमण्डलान्तरे ॥ ३१ ॥

[ प्रज्वालनम् ]

आदौ व्याहृतिभिः पश्चाद् वह्निमन्त्रश्च वर्त्तुलम्[5] ।
चित्पिङ्गल हनद्वन्द्वं दहद्वन्द्वं [6]पचद्विधा ।
सर्वज्ञाज्ञापय स्वाहा वह्निं प्रज्वालयेत् सुधीः ॥ ३२ ॥

[ ज्वालिनी मुद्रा ]

मणिबन्धौ समौ कृत्वा करौ तु[7] [8]प्रसृताङ्गुली ।
मध्यमे मिलिते कृत्वा तन्मध्येऽङ्गुष्ठकौ क्षिपेत् ।
इमाञ्च [9]ज्वालिनीं मुद्रां दर्शयेत् साधकोत्तमः ॥ ३३ ॥

---

३२। आदाविति। अत्र आदौ व्याहृतिभिः सार्द्धं वर्त्तुलमुच्चार्य पश्चाद् वह्निमन्त्रश्च, अत्र चकाराद् वह्निमन्त्रस्यादौ वर्त्तुलञ्चेति लभ्यते। तथाच ॐभूर्भुवः स्वः ॐ चित्पिङ्गल हन हन दह दह पच पच सर्वज्ञाज्ञापय स्वाहा इति वह्निप्रज्वालनमन्त्र इति पर्यवस्यति। वह्निप्रज्वालने विशेषमाह राघवभट्टधृतवायवीयसंहितायाम्—

जुहूपुश्च हुताग्निश्च पाणिशूर्पस्त्रुवादिभिः ।
न कुर्यादग्निधमनं न कुर्याद् व्यजनादिना ।
मुखेनैव धमेदग्निं मुखादेष ह्यजायत ॥ इति ।

---

1. 'मन्त्रवित्' A. 2. '-मन्त्रस्तु-' ? B. '-न्तु' C. 3. '-जः' C. 4. 'च' A-B. 5. '-लः' C. 6. अत्र A-पुस्तके 'पठेद्द्विधेति' B-पुस्तके 'पठन्' इति C.-पुस्तके 'पठ' इति पाठभेदा दृश्यन्ते। परन्तु तन्त्रसारादिषु 'चित्पिङ्गल हन हन दह दह पच पच' इति मन्त्रदर्शनात् प्रागुक्ताः सर्वेऽपि पाठाः प्रामादिका इति प्रतिभाति। 7. 'च' C. 8. 'प्रह्व-' A. 9. 'ज्व-' B.

[ अग्नेरुपस्थानम् ]

अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम्।
सुवर्णवर्णममलं समिद्धं [1]सर्वतो मुखम्॥ ३४॥

[ चैतन्ययोजनम् ]

उपस्थानं विधायेत्थं मनुना पावकं सुधीः।
कामबीजं[2] समुच्चार्य वह्निमूर्त्तिं समर्च्चयेत्॥ ३५॥
बालामन्त्रं समुच्चार्य [3]आं सोऽहमिति संलिखेत्।
वह्निचैतन्यमुच्चार्य ङेन्तं हृन्मनुसंयुतम्।
कामेश्वर्या गर्भदेशे वह्निमनेन[4] भावयेत्॥ ३६॥

[ समित्प्रक्षेपः ]

प्रादेशमात्रां समिधं मूलाग्रघृतसंयुताम्।
[5]तूष्णीं वह्नौ समुत्क्षिप्य

[ अग्नेर्जिह्वासु देवतादीनां न्यासः ]

जिह्वायां देवता[6]न्यसेत्॥ ३७॥
देवताः पितरश्चैव गन्धर्वा यक्षपन्नगाः।
पिशाचा राक्षसाश्चैव [7]न्यस्तव्या एषु साधकैः।
स्वलिङ्ग[8]गुदमूर्द्धास्य-नासानेत्राङ्गके[9] क्रमात्॥ ३८॥

---

३५—३६। कामबीजमिति। तथाच क्लीं वह्निमूर्त्तये नमः इति पूजनक्रमः। बालामन्त्रमिति। तथाच ऐँ क्लीँ सौः आं सोऽहं वह्निचैतन्याय नमः इति कामेश्वरीगर्भे वह्निं चिन्तयेद् इत्यर्थः।

३७—३८। तूष्णीमिति। समुत्क्षिप्य प्रादेशमात्रां समिधं तूष्णीमग्नौ हुत्वेत्यर्थः। जिह्वायाम् अग्नेर्हिरण्यादिसप्तजिह्वासु वक्ष्यमाणासु इत्यर्थः। देवता न्यसेत्। ता एव आह—

---

1. तन्त्रसारे B-पुस्तकपादटीकायाञ्च 'विश्वतोमुख'मिति पाठः। 2. '-राजं' C. 3. '-ततो' A. 4. '-न्त्रेण' A-B. 5. 'कुण्डमध्ये' C-B. 6. '-तां' B. 7. 'न्यस्ताः स्युरेषु' B. 8. '-ङ्गं ?' A. 9. '-केन च' C.

[ षडङ्गेषु देवतान्यासः ]

सहस्रार्च्चिः स्वस्तिपूर्ण उत्तिष्ठपुरुषस्तथा ।
घूमव्यापो सप्तजिह्वो[1] धनुर्द्धर इतीरितः ।
चतुर्थ्यन्ताः षडङ्गेषु योजयेत् क्रमशः सुधीः ॥ ३९ ॥

[ अग्नेरष्टाङ्गेषु देवतान्यासः ]

अष्टमूर्त्तीर्न्यसेत् पश्चात् प्रणवाद्येन वै क्रमात् ।
अग्निना सह सर्वत्र मनुविज्जातवेदसम् ॥ ४० ॥
सप्तजिह्वं हव्यवाहमश्वोदरमपि न्यसेत् ।
वैश्वानरञ्च कौमारतेजसं तदनन्तरम् ।
विश्वमुखं देवमुखमेषु स्थानेषु विन्यसेत् ॥ ४१ ॥
मूर्ध्नि दक्षांशके चैव तथा पार्श्वे कटौ तथा ।
वामपायौ तस्य देशे पार्श्वांशे क्रमतो न्यसेत् ॥ ४२ ॥

---

देवता इत्यादिना । एष्विति स्वलिङ्गगुदमूर्द्धादिषु सप्तस्वङ्गेष्वित्यर्थः । एताश्च देवता एषु न्यसेदित्यर्थः । एवञ्च आदौ सप्त जिह्वा लिङ्गादिषु सप्तस्वङ्गेषु न्यस्य तासु जिह्वास्वधिदेवता न्यसेदिति सम्प्रदायः ।

३९ । अग्नेरङ्गेषु देवतानां न्यासमाह—सहस्रार्चिरित्यादिना । सहस्रार्चिराद्या धनुर्धरान्ताश्चतुर्थ्यन्ताः षडङ्गदेवताः षट्स्वङ्गेषु योजयेदित्यर्थः । एवञ्च ॐ सहस्रार्चिषे हृदयाय नमः । ॐ स्वस्तिपूर्णाय शिरसे स्वाहा । ॐ उत्तिष्ठपुरुषाय शिखायै वषट् इत्येवं क्रमः पर्यवस्यति ।

४०—४१ । अष्टमूर्त्तीरिति । अग्नेर्मूर्द्धादिष्वष्टाङ्गेषु प्रणवाद्येन अग्निना सह चतुर्थ्यन्तेनेत्यर्थः । जातवेद-आद्याश्चतुर्थ्यन्ता अष्टमूर्त्तीर्विन्यसेदिति सम्बन्धः । अयञ्च न्यासः प्रादक्षिण्येन कर्त्तव्यः । तदुक्तं शारदायां पञ्चमपटले—

---

1. 'ह्वं' C.

[ स्वदेहे वह्नेर्जिह्वानां न्यासः ]

विन्यसेदात्मनो देहे मन्त्रैर्जिह्वा[1] हविर्भुजः ।
स्वलिङ्ग[2]गुदमूर्द्धास्यनासानेत्रेषु सर्वतः ॥ ४३ ॥

सादि-यान्ता [3]वह्निवायुवामकर्णसमन्विताः ।
बिन्दुनादकलायुक्ता जिह्वामन्त्राः प्रकीर्त्तिताः ॥ ४४ ॥

---

मूर्त्तीरष्टौ तनौ न्यस्येद्देशिको जातवेदसः ।
मूर्द्धांसपार्श्वकट्यन्धुकटिपार्श्वांसके पुनः ॥
प्रदक्षिणवशान्न्यस्येदुच्यन्ते ता यथाक्रमात् ।
जातवेदाः सप्तजिह्वो हव्यवाहनसंज्ञकः ॥
अश्वोदरजसंज्ञोऽन्यः पुनर्वैश्वानराह्वयः ।
कौमारतेजाः स्याद्विश्वमुखो देवमुखः स्मृतः ।
ताराग्नये पदाद्याः स्युर्नत्यन्ता वह्निमूर्त्तयः ॥

इति। नत्यन्ता नमोऽन्ताः ।

तथाच—ॐ अग्नये जातवेदसे नमः । इति मूर्ध्नि । ॐ अग्नये सप्तजिह्वाय नमः । इति दक्षांसे। इत्येवं प्रयोगक्रमः । न्यासोऽयं वह्नेरष्टाङ्गभूतेषु निरुक्तयन्त्राष्टदलेषु कर्त्तव्यः। 'अष्टदलेषु अग्नये जातवेदसे' इत्यादि-गन्धर्वतन्त्रैकविंशत्तमपटलोक्तेरिति ध्येयम् ।

४३—४४। विन्यसेदिति। लिङ्गगुदमूर्द्धादिषूक्तेषु सप्तस्वङ्गेषु मन्त्रैर्वक्ष्यमाणैः सप्त जिह्वा न्यसेदिति सम्बन्धः। मन्त्रमाह—सादीति। सादि-यान्ताः विलोमेन सकारादि यकारान्ताः सप्त वर्णाः, ते च प्रत्येकं वह्निना रकारेण तथा वायुवामकर्णेन यकारयुक्तदीर्घोकारेण समन्विताः, तथा बिन्दुना नादकलया चन्द्रार्द्धेन च युक्ता इत्यर्थः। एवञ्च सर्यूँ हिरण्यायै नमः इति लिङ्गे। षर्यूँ, कनकायै नमः इति पायौ। शर्यूँ रक्तायै नमः इति मूर्ध्नि। वर्यूँ कृष्णायै नमः इति वक्त्रे। इति प्रयोगक्रमः। अत्र विशेषानभिधानाद् वक्ष्यमाणसात्त्विकादिभेदभिन्नासु जिह्वास्वयमेव क्रम इति ध्येयम्।

---

1. '-ह्वां' A. 2. '-ङ्गं' A. 3. 'वायुवह्नि-' B.

[ जिह्वानां त्रैविध्यम् ]

जिह्वास्तास्त्रिविधाः प्रोक्ता गुणभेदेन कर्मसु ॥ ४५ ॥

[ तत्र सात्त्विककर्मविहिताः ]

हिरण्या [1]कपिला रक्ता कृष्णान्या सुप्रभा मता ।
बहुरूपातिरूपा च[2] [3]सात्त्विके यागकर्मणि ॥ ४६ ॥

[ राजसकर्मविहिताः ]

पद्मरागा सुवर्णा च तथा च [4]चन्द्रलोहिता ।
लोहिता च तथा श्वेता धूमिनी च करालिनी ।
रजोगुणसमुद्दिष्टा रसनाः काम्यकर्मसु ॥ ४७ ॥

[ तामसकर्मविहिताः ]

विश्वमूर्त्तिस्फुलिङ्गिन्यौ धूम्रवर्णा मनोजवा ।
लोहिन्या[5] कनकाख्या च काली [6]तामस्य ईरिताः ।

[ अन्त्यानां क्रूरकर्ममात्रपरत्वम् ]

एताः सप्त [7]प्रपूज्यन्ते क्रूरकर्म[8]सु मन्त्रिभिः ॥ ४८ ॥

[ जिह्वानां वर्णाः ]

स्वस्वनामसमाभाः स्युर्जिह्वाः कल्याणरेतसः ॥ ४९ ॥

[ परिस्तरणम् ]

एवं विन्यस्तदेहः सन् परिस्तरणमाचरेत् ।
अर्घ्योदकेन चाभ्युक्ष्य मध्यस्थमेखलोपरि ॥ ५० ॥

---

५०—५२। अर्घ्योदकेनेति। अभिषेचनं बालाबीजेन। तदुक्तं तन्त्रसारे—"ततो मेखलानामुपरि बालया विशुद्धैस्तोयैः परिषिच्ये"ति। मूलमाच्छादनमिति।

---

1. '-कंकला' C. 2. 'सात्त्विका' A, 3. 'सात्त्विक्यो' B. 4. 'भद्र-' B-C. 5. '-तान्या बलाकाख्या' C, 'लोहिता-' B. 6. 'शुद्धस्य' A. 7 'समूह्यन्ते' A, 'स्वस्वमन्त्रैः' C.

उत्तराग्रं पूर्वदेशे पूर्वाग्रं दक्षिणे ततः ।
उत्तराग्रं पश्चिमे तु प्रागग्रमुत्तरे क्रमात् ॥ ५१ ॥
मूलमाच्छादनं कृत्वा [1]त्रिवारन्तु परिस्तरेत् ।
[2]अस्योपरि [3]सिचेत् तोयैर्मूलमन्त्रेण साधकः ॥ ५२ ॥

[ परिधिस्थापनम् ]

निक्षिपेद्दिक्षु परिधीन् प्राचीवर्ज्जं गुरूत्तमः ।
प्रादक्षिण्येन [4]सम्पूज्यास्तेषु ब्रह्मादिमूर्त्तयः ॥ ५३ ॥

---

आ सम्यक् छादनं यस्य तत् । तथा च मूलमाच्छादितं कृत्वा अग्रेणेति शेषः । परिस्तरणमिदं गर्भशून्यदर्भैः कर्त्तव्यम् । तदुक्तं शारदायां पञ्चमपटले—

दर्भैरगर्भैर्मध्यस्थमेखलायां परिस्तरेत् । इति ।

तन्त्रसारेऽपि "मध्यमेखलायां गर्भशून्यैर्दर्भैरग्रेण मूलमाच्छादयन् त्रिस्त्रिः परिवेष्टयेदिति ।

५३। निक्षिपेदिति । परिधीन् परिवेष्टनानि । परिधिलक्षणमाह कात्यायनसंहितायां पञ्चदशखण्डे—

बाहुमात्राः परिधय ऋजवः सत्वचोऽव्रणाः ।
त्रयो भवन्ति शीर्णाग्रा एकेषान्तु चतुर्दिशम् ॥
प्रागग्रावभितः पश्चादुदगग्रमथापरम् ।
न्यसेत् परिधिमन्यञ्चेदुदगग्रः स पूर्वतः ॥ इति ।

वैदिकसर्वस्वधृतपञ्चरात्रे च—

ततः परिधयो देयाः सत्वचो ब्रह्मवृक्षजाः ।
बाहुमात्रप्रमाणेन विस्तारं द्वादशाङ्गुलम् ॥ इति ।

वैदिकसर्वस्वधृत आपस्तम्बः—त्रयः परिधयः पलाशकाश्मर्यखदिरोडुम्बरबिल्वरोहितकविकङ्कतानां ये वा यज्ञीया वृक्षा इत्यादि । एवञ्च दक्षिणोत्तरयोः पूर्वाग्रौ पश्चिमे उदगग्र इति त्रयः परिधयो भवन्ति । प्रागुक्तकात्यायनवचने 'न्यसेत् परिधिमन्यञ्चेदुदगग्रः स पूर्वत' इत्यनेन चतुर्थपरिधिन्यासरूपं यत् कल्पान्तरमुक्तं तदेव व्यावर्त्तयति मूले प्राचीवर्ज्जमित्यनेन । पूर्वतः परिधिर्न विधेय इत्यर्थः ।

---

1. 'त्रिधा वर्गं' A. 2. 'तस्यो-' C. 3. 'सञ्चेत्' C. 4. 'पद्मादा-' A.

[ अग्नेर्ध्यानम् ]

ध्यायेद् वह्निं हेमवर्णं शक्तिस्वस्तिकधारिणम् ।
वरदाभयशोभाढ्यं सुवर्णवरभूषणम् ॥ ५४ ॥
शुक्लाम्बरपरीधानं पद्मोपरि च संस्थितम् ।
त्रिनेत्रमुज्ज्वलं ध्याये[1]दूर्द्ध्वमौलिं जटादिभिः ॥ ५५ ॥

[ वह्न्यावाहनार्चनमन्त्रः ]

वैश्वानर ततो जातवेद पश्चादिहावह ।
लोहिताक्ष च सर्वान्ते कर्माण्यथ च साधय ॥ ५६ ॥
वह्निजायान्तमन्त्रेण वह्नेरावाहनं चरेत् ।
अनेनाग्निं समभ्यर्च्य

[ वह्निजिह्वासप्तकपूजनक्रमः ]

तन्मुखे [2]रसनां यजेत् ॥ ५७ ॥
ईशादारभ्य षट्कोणे मध्ये च साधकोत्तमः ।
पूर्वोक्तमन्त्रयोगेण षडङ्गावरणं यजेत् ॥ ५८ ॥
अष्टमूर्त्तीस्त्वष्टपत्रे भूबिम्बे दिगधीश्वरान् ।

---

५६—५८। वह्नेरावाहनस्य मन्त्रमाह—वैश्वानरेति। एवञ्च 'वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहे'ति मन्त्रः पर्यवस्यति। अनेनेति निरुक्तवैश्वानरेत्यादिमन्त्रेण। एवञ्च वह्नेरावाहनं पूजनञ्चेत्युभयमेवानेन मन्त्रेण विधेयमिति बोध्यम्। एवमग्नेरर्च्चनमभिधाय तन्मुखे जिह्वासप्तकपूजनमभिधत्ते—तन्मुख इत्यादिना। तथाच प्रागुक्तत्रिकोणबहिःषट्कोणे ईशानादिक्रमेण हिरण्याद्याः षट्, मध्ये च सप्तमीं पूर्वोक्तमन्त्रयोगेन सरयूँ हिरण्यायै नम इत्यादिमन्त्रेण यजेदित्यर्थः। षडङ्गावरणं यजेदिति ॐ सहस्रार्चिषे हृदयाय नम इति पूर्वोक्तक्रमेणेत्यर्थः।

---

1. 'दूर्वा-' ? B. 2. 'वसनं' ? A.

[ पुनरग्नेर्ध्यानादेः कर्त्तव्यता ]

पुनर्वैश्वानरं ध्यात्वा पूजयेत् साधकोत्तमः ॥ ५९ ॥

[ पात्रसंस्कारः ]

प्रोक्षयेदर्घ्यतोयेन पात्राणि शुद्धिहेतवे ।
संमुखानि ततः कृत्वा बालया चाभिमन्त्रयेत्[1] ।
प्रणीताप्रोक्षणीयुग्मे[2] [3]जलपुष्पे विनिक्षिपेत् ॥ ६० ॥
[4]स्रुवञ्चाधोमुखं कृत्वा त्रिः प्रताप्य च मन्त्रवित् ।
आदाय वामहस्तेन दूर्वया मार्जयेत् त्रिधा ॥ ६१ ॥
मूलादिवक्त्रपर्यन्तं दूर्वामग्नौ विनिक्षिपेत् ।
आत्मनो दक्षिणे भागे स्थापयेदास्तरे कुशे ॥ ६२ ॥

[ आज्यसंस्कारः ]

आज्यस्थालीं पुरः कृत्वा शरेण क्षालनं चरेत् ।
[5]पवित्रं तत्र संस्थाप्य कुर्यादीशमुखं सुधीः ॥ ६३ ॥

---

५९। अष्टमूर्त्तीरिति। अग्निना सह सर्वत्र मनुविज्ञातवेदसम् इत्यादिनोक्ता अष्टमूर्त्तीरित्यर्थः। अस्य ॐ अग्नये जातवेदसे नम इत्यादयः प्रयोगाः पूर्वमेवोपदर्शिताः। अत्र देवतान्तरपूजनमप्याह शारदायां पञ्चमपटले—

दलेषु पूजयेन्मूर्त्तीः शक्तिस्वस्तिकधारिणीः ।
दलाग्रे मातरः पूज्याः सासिताङ्गादिभैरवाः ।
लोकपालांस्ततो दिक्षु पूजयेदुक्तलक्षणान् ॥ इति ।

६१। स्रुवञ्चेति चकारात् स्रुचञ्च। अधोमुखमिति ऊर्द्ध्वमुखमादाय तमधोमुखं कृत्वा प्रताप्येत्यर्थः। मूलादीति। मूलादग्रं यावत् त्रिधा मार्जयेत्। शारदायां पञ्चमपटले तु—

पश्चादादाय पाणिभ्यां स्रुक्स्रुवौ तावधोमुखौ ।
त्रिः संप्रतापयेद् वह्नौ दर्भानादाय देशिकः ।
तदग्रमध्यमूलानि शोधयेत्तैर्यथाक्रमात् ॥

---

1. '-न्त्रितम्' B. 2. '-मुखे' A. 3. 'जलं पुष्पं' C. 4. 'स्रुव-' मित्यादिपादषट्कं C-पुस्तके नास्ति. 5. 'परितस्त-' ? A.

घृतं तत्रैव संस्थाप्य वीक्षणादिविशोधनम् ।
कृत्वा चाङ्गारकं वायौ घृतमध्ये विनिक्षिपेत् ॥ ६४ ॥
इदन्तापनमित्युक्तं दर्भं प्रज्वाल्य निक्षिपेत् ।
हृदयेन च मन्त्रेण [1]द्योतनं [2]समुदीरितम् ॥ ६५ ॥
[3]घृतादङ्गारदर्भांश्च गृहीत्वाग्नौ परिक्षिपेत् ।
अङ्गुष्ठानामिकाभ्यान्तु तत् पवित्रञ्च धारयेत् ॥ ६६ ॥
ततो व्यस्तक्रमेणैव तन्मध्येन घृतं क्षिपेत् ।
त्रिधा हृदयमन्त्रेण पवित्रं प्रोक्षयेत्ततः ।
तमग्नौ क्षेपयेदाज्यं बालया चाभिमन्त्रयेत्[4] ॥ ६७ ॥

[ धूपदीपार्पणम् ]

धूपं विस्तारयेत् सम्यक् कुण्डमण्डप[5]पूरितम् ।
मेखलासु च सर्वासु दीपमाला [6]नियोजयेत् ॥ ६८ ॥

[ होमपूर्वकृत्यम् ]

[7]सप्रादेशं दर्भयुग्मं ग्रन्थियुक्तं घृते क्षिपेत् ॥ ६९ ॥
[8]शुक्लकृष्णपक्षयुगं

[ आज्ये नाडीत्रयचिन्तनम् ]

ध्यात्वा वामे च नाडिकाम् ।
इडां दक्षे पिङ्गलाञ्च सुषुम्णां मध्यभागतः ॥ ७० ॥

---

इत्यादिना क्रमेणाग्रमध्यमूलानां मार्जनं विहितम् । तट्टीकाकृता राघवभट्टेन दर्भमूलै स्तन्मूलम्, दर्भमध्यैस्तन्मध्यम्, दर्भाग्रैस्तदग्रमित्यादिना दर्भमूलमध्याग्रैः क्रमेण स्रुक्स्रुवयोर्मूलमध्याग्रमार्जनमुपदिष्टमिति दृश्यते ।

---

1. 'शोधनं' B. 2. 'समुदाहृ-' C. 3. 'घृतादि'त्यादि 'चाभिमन्त्रये'दित्यन्तोंऽश A-C पुस्तकयोर्नास्ति । 4. 'इतः परं दर्भाङ्गारान् क्षिपेदग्नौ बालयाज्यं स मन्त्रयेत् इति A-B पुस्तकयोरधिकः पाठो दृश्यते । पुनरुक्ततया प्रतिभानान्नायं पाठो मूले निवेशितः । 5. '-ल-' C. 6. '-वियो-' C. 7. 'सग्रन्थिकं दर्भयुग्मं घृतमध्ये विनिक्षिपेत्' B. 8. 'शुक्लकृष्णयुगं ध्यात्वा वामे च चन्द्रनाडिकाम्' C.

[ अग्निनेत्रवक्त्रोद्घाटकहोमः ]

ध्यात्वा स्रुवेण दत्तात्तु भागादाज्यं हृदाणुना[1] ।
जुहुयादग्नये स्वाहेत्यग्नेर्दक्षिणलोचने ॥ ७१ ॥
वामतस्तद्वदादाय वामे वह्निविलोचने ।
जुहुयादथ सोमाय स्वाहेति हृदयाणुना[2] ॥ ७२ ॥
मध्यादाज्यं समादाय वह्नेर्भालविलोचने ।
जुहुयादग्नीषोमाभ्यां स्वाहेति हृदयाणुना[3] ॥ ७३ ॥
हृन्मन्त्रेण स्रुवेणाज्यं भागादादाय[4] दक्षिणात् ।
जुहुयादग्नये स्विष्टिकृते स्वाहेति तन्मुखे ॥ ७४ ॥
[5]हेतिं सम्पातये[6]द्भागे घृतस्याज्याहुतिक्रमात् ।
इत्यग्नेर्नेत्रवक्त्राणां[7] [8]कुर्यादुद्घाटनं गुरुः ॥ ७५ ॥

---

६९—७५ । सप्रादेशमिति । प्रादेशमात्रं सग्रन्थिदर्भयुग्मं घृते क्षिपेदिति सम्बन्धः । शुक्लेति प्रागुक्तघृतभागयोरेकं शुक्लपक्षत्वेनापरं कृष्णपक्षत्वेन ध्यात्वेत्यर्थः । वाम इति । वामे चन्द्रनाडिकाम् इडाम्, दक्षे पिङ्गलाम् अर्थात् सूर्यरूपाम्, मध्ये सुषुम्णामर्थात् चन्द्रसूर्याग्निरूपां ध्यात्वेति सम्बन्धः । हृदाणुनेति, नम इति हृन्मन्त्रेणेत्यर्थः । अत्र हृदाणुना दक्षिणाद् भागादाज्यमादाय अग्नये स्वाहेति जुहुयादिति सम्बन्धः । व्यक्तमुक्तं तन्त्रसारकृता "नमः इति मन्त्रेण स्रुवेण दक्षिणभागादाज्यमादाय अग्नेर्दक्षिणलोचने ॐ अग्नये स्वाहेति जुहुया"दिति । क्रमोऽयमुत्तरत्रापि । हेतिमिति हेतिराहुतिशेषः । तथाच यस्मात् भागादाज्यमादाय यो यो होमो विहितः, तस्मिन् भागे प्रागुक्ताज्याहुतिक्रमात् हेतिं प्रत्याहुतिं संपातयेदित्यर्थः । इत्यग्नेरिति । अनेनाग्नये स्वाहेत्याद्याहुतिचतुष्टयेन अग्नेर्नेत्राणां वक्त्रस्य च क्रमेणोद्घाटनं कुर्यादित्यर्थः ।

---

1. '-सना' A-B. 2. '-त्मना' C. 3. '-त्मना' C. 4. '-रभ्य' A-B. 5. 'हेति' 6. '-दये-' A-B. 7. '-भ्यां' A-B. 8. 'वर्जनं घट्टनं' ? A.

[ महाव्याहृतिहोमः ]

[1]महाव्याहृतिहोमश्च [2]ताराद्येन [3]चतुर्हुनेत् ॥ ७६ ॥
भूरग्नये पृथिव्यै च महते वह्निवल्लभा ।
भुवः[4]पदाद् वायवे च अन्तरीक्षाय शब्दतः ॥ ७७ ॥
दिव्याय महते[5] चैव वह्निजायावधिः स्मृतः ।
स्वरादित्यचन्द्रमसौ ङेन्तौ नक्षपदात्ततः ॥ ७८ ॥
त्रेभ्यः स्वाहापदान्ताच्च भूर्भुवःस्वःपदं पुनः ।
अग्न्यादित्यचन्द्रमसो ङेऽन्ता नक्षत्र इत्यपि ।
भ्यसन्तश्चैव दिग्भ्यश्च महते वह्निवल्लभा ॥ ७९ ॥

[ ब्रह्मार्चनम् ]

ब्रह्माणं दक्षिणेऽभ्यर्च्य विधिवत् साधकोत्तमः ॥ ८० ॥

---

७६—८० । अनन्तरकरणीयं महाव्याहृतिहोममाह--महेत्यादिना । ताराद्येन प्रणवाद्येन वक्ष्यमाणमन्त्रचतुष्टयेन चतुर्धा हुनेदिति सम्बन्धः । वक्ष्यमाणमन्त्रचतुष्टयात् पूर्वं प्रणवयोजनं कृत्वा तत्प्रणवयुक्तमन्त्रेण जुहुयादिति ज्ञेयम् । एवञ्च ॐ भूरग्नये पृथिव्यै महते च स्वाहा १ । ॐ भुवो वायवे अन्तरीक्षाय च दिव्याय महते च स्वाहा २ । ॐ स्वरादित्याय चन्द्रमसे नक्षत्रेभ्यः स्वाहा ३ । ॐ भूर्भुवः स्वरग्नये आदित्याय चन्द्रमसे नक्षत्रेभ्यो दिग्भ्यो महते च स्वाहा ४ । इति मन्त्रचतुष्टयं पर्यवस्यति । शाक्तानन्दतरङ्गिणीगन्धर्वतन्त्रादिषु मन्त्राणामेतेषामंशतः स्वरूपभेदो दृश्यते । अत्र तन्त्रसारकृता निरुक्तस्विष्टिकृद्धोमान्तरं सप्रणवव्याहृतिभिर्होममभिधाय तत्तत्कल्पोक्तहोमान्तरं ॐ भूरग्नय इत्यादिमन्त्रैर्होम उक्तः । गन्धर्वतन्त्रे एकत्रिंशपटले तु गर्भाधानादिसंस्कारतः पूर्वं महाव्याहृतिहोमो नाभिहितः । परन्तु कल्पोक्तहोमानन्तरं ॐ भूरग्नये इत्यादिभिर्होम उक्त इति क्रमभेदो दृश्यते ।

---

1. 'देव्या' A-B. 2. 'तारोच्चारेण होमयेत्' A. 3. 'त्रिधा हुनेत्' C. 4. अत्र 'पदद्वये चैवे'ति A-B-पुस्तकयोः प्रामादिकः पाठः । 5. C-पुस्तके 'मनुते' इति पाठः प्रामादिकः ।

[ अग्नेर्गर्भाधानादिसंस्काराः ]

गर्भाधानादिसंस्कारं वह्नेश्च कारयेत्ततः ।
इदमग्नेः[1] करोम्येतद् गर्भाधानमतः परम् ॥ ८१ ॥
प्रणवं पूर्वमुच्चार्य शेषे वह्निवधूं [2]वदेत् ।
हुत्वा सप्ताहुतीरेवं समिधः क्षेपणं तथा ॥ ८२ ॥
एवंक्रमात् पुंसवनं सीमन्तोन्नयनं ततः ।
जातकर्म समाप्याथ नालापनोदनाय च ॥ ८३ ॥
प्रादेशं पञ्चसमिधं मूलाग्रघृतसंयुतम् ।
ॐ कामेश्वर-कामे[3]श्वरीभ्यां स्वाहेति [4]च निर्वपेत् ॥८४॥
वह्नेश्च पितरौ मन्त्री [5]स्वाहया विनियोजयेत् ।
इष्टदेवस्य नाम्ना तु वह्नेर्नाम समाचरेत् ॥ ८५ ॥
उपनिष्क्रमणं पश्चादन्नप्राशनमीरितम् ।
चूडोपनयनं चैव समावर्त्तनमेव च ॥ ८६ ॥
विवाहश्च शुभे कार्ये क्रूरकार्येषु मारणम् ॥ ८७ ॥

---

८१। अथाग्नेर्गर्भाधानादिसंस्कारानाह—इदमित्यादिना। एवञ्च ॐ इदमग्नेर्गर्भाधानं करोमि स्वाहा इति प्रयोगः पर्यवस्यति। मन्त्रेणानेन प्रत्येकं सप्ताहुतीर्दद्यात्। तन्त्रसारे तु सुन्दरीपक्षे ॐ अग्नेर्गर्भाधानं कल्पयामि ऐँ नमः इत्येकैकाहुतिं दद्यादिति प्रयोगक्रम उक्तः।

८३। जातेति। नालापनोदनाय नाडीच्छेदाय। तदुक्तं राघवभट्टधृतवायवीयसंहितायाम्—

जातं ध्यात्वैवमाकारं जातकर्म समाचरेत्।
नालापनयनं कृत्वा ततः संशोध्य सूतकम् ॥ इति।

८७। विवाहश्चेति। शुभे कार्ये विवाहान्ताः संस्काराः, क्रूरकार्येषु तु मारणान्ता इत्यर्थः।

---

1. '-ग्ने' C, 2. 'लिखेत्' C. 3. '-शीभ्यां' C. 4. 'विनिर्वपेत्' C.
5. 'स्वाहेति' B. 'स्वदेहे' C.

[ जिह्वाङ्गदेवतादिहोमः ]

क्रमाज्जिह्वाङ्गमूर्त्तीनां मन्त्रैर्होमं पृथक् चरेत् ।
वह्नेः षडङ्गमन्त्रेण षडाहुतिं समाचरेत् ।
[1]न्यासक्रमेणाष्टमूर्त्तेर्होमं कुर्याद्विचक्षणः ॥ ८८ ॥
[2]अथाऽऽदाय स्रुवेणाज्यं चतुः स्रुचि पिधाय ताम् ।
स्रुवेणोत्तिष्ठन्नेवाग्नौ देशिको यतमानसः ।
जुहुया[3]दग्निमन्त्रेण वौषडन्तेन[4] सम्पदे ॥ ८९ ॥

[ गाणपत्यहोमः ]

महागणपतिमन्त्रेण हुनेत् पूर्वं दशाहुतीः[5] ।
जुहुयाच्च चतुर्वारं समस्ते[6]नैव तेन तु ॥ ९० ॥
तारादिषट्कबीजेन पूर्वपूर्वयुतेन च ।
[7]भिन्नेनैव समस्तेन तन्मन्त्रश्च निगद्यते ॥ ९१ ॥

---

८८। अग्निजिह्वाङ्गमूर्त्तीनां होममाह—क्रमादिति। जिह्वाङ्गमूर्त्तीनां प्रागुक्तानाम्। आहुतिमेकैकाम्। तदुक्तं शारदायां पञ्चमपटले—

मन्त्रैर्जिह्वाङ्गमूर्त्तीनां क्रमाद् वह्नेर्यथाविधि ।
प्रत्येकं जुहुयादेकामाहुतिं मन्त्रवित्तमः ॥

८९। अथेति। स्रुवेणाज्यमादाय चतुर्धा स्रुचि दत्त्वा तां स्रुचं स्रुवेण पिधाय यतमानसो देशिकः वौषडन्तेन वैश्वानरेत्याद्यग्निमन्त्रेण जुहुयादिति सम्बन्धः।

९०-९१। महेति। पूर्वमादौ वक्ष्यमाणमहागणपतिमन्त्रेण व्यस्तेन दशधा एकैकाहुतिं ततः समस्तेन तु तेनाहुतिचतुष्टयं जुहुयादित्यर्थः। तत्र व्यस्तेन होममुपदिशति—तारादीत्यादिना। पूर्वपूर्वयुतेन तारादिषट्कबीजेनेत्यस्यायमर्थः—प्रणवं श्रीमित्यादि मन्त्रोद्धारप्रतिपादकवक्ष्यमाणवचने प्रथमं प्रणवस्योक्तत्वात् प्रथमं ॐ स्वाहेति स्वाहान्तेन प्रणवेन होमः, ततश्च ॐ श्रीं स्वाहेति द्वितीयहोमे पूर्वोक्तप्रणवयुतेन श्रीबीजेन होमः, ततस्तृतीयहोमे ॐ श्रीं ह्रीं स्वाहेति अत्रापि प्रणवश्रीयुतेन मायाबीजेनेति। एवमुत्तरत्रापि।

---

1. 'न्यासक्रमेणाष्टमूर्त्तेस्तत्र होमं समाचरेत्' A-B. 2. 'अथाऽऽधाय' C. 'अथवानुक्रमेणाज्यं' A. 3. '-द्दवह्नि-' B-C. 4. '-च' A-B. 5. '-तिम्' A. 6. '-माप्ते-' A 7. 'मनु-' B.

[ महागणपतिमन्त्रः ]

प्रणवं श्रीं महामायां स्मरं ग्लौमात्म[1]कन्ततः ।
पश्चान्तकं बिन्दुयुतं ङेन्तं गणपतिं ततः ॥ ६२ ॥
वरान्ते वरदश्चैव सर्वान्ते जनमालिखेत् ।
मे वशमानय स्वाहा विंशत्य[2]न्तगजान्तकः ॥ ६३ ॥
सामान्यं सर्वदे[3]वीनां मुखमेतत् समीरितम् ॥ ६४ ॥

---

६२-६४। महागणपतिमन्त्रोद्धारक्रममाह—प्रणवमित्यादिना। तथाच ॐ श्रीँ ह्रीँ क्लीँ ग्लौँ गं गणपतये वरवरद सर्वजनं मे वशमानय स्वाहा इति। विंशत्यन्तगजान्तकः विंशतिसंख्यान्ते गजान्तकः अष्टसंख्या यस्य तथाभूतः अष्टविंशत्यक्षरो महागणपतिमन्त्र इत्यर्थः। व्यक्तमाह मन्त्रकोषे—

श्रीशक्तिस्मरभूविघ्नबीजानि प्रथमं वदेत् ।
ङेऽन्तं गणपतिं पश्चाद् वरान्ते वरदं पदम् ॥
उक्त्वा सर्वजनं मेऽन्ते वशमानय ठद्वयम् ।
अष्टविंशत्यक्षरोऽयं ताराद्यो मनुरीरितः ॥

ताराद्यः प्रणवाद्यः। मूलवचने 'ग्लौमान्तकन्तत' इति पाठे तु आन्तकमित्यस्य आ अन्ते यस्य तथाभूतं पश्चान्तकमित्यर्थे गाम् इति बीजं भवति। तत्पुस्तकपादटीकायामपि "ॐ श्रीँ ह्रीँ क्लीँ ग्लौँ गां गणपतये" इत्यादि मन्त्रोद्धारक्रमः प्रदर्शितः। परन्तु मन्त्रकोषतन्त्रसारगन्धर्वमहानिर्वाणादिषु गम् इत्याकारकबीजदर्शनात् आन्तकमिति पाठो न मूले निवेशितः। अत्रेदमवधेयम्,—पूर्वं 'महागणपतिमन्त्रेण हुनेत् पूर्वं दशाहुतीः' इत्यादिना यो दशधा होम उक्तस्तस्यायं क्रमः—ॐ स्वाहा १। ॐ श्रीं स्वाहा २। ॐ श्रीं ह्रीँ स्वाहा ३। ॐ श्रीं ह्रीँ क्लीँ स्वाहा ४। ॐ श्रीं ह्रीँ क्लीँ ग्लौं स्वाहा ५। ॐ श्रीं ह्रीं क्लीं ग्लौं गं स्वाहा ६। ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये स्वाहा ७। ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद स्वाहा ८। ॐ श्रीं ह्रीँ क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं स्वाहा ९। ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं मे वशमानय स्वाहा १०। इति। एवं दशाहुतीर्हुत्वा समस्तेनाहुतिचतुष्टयं दद्यादित्येवोक्तम्—चतुर्वारं समस्तेनैव तेन तु इत्यनेन।

---

1. 'त्मकं' A-B. 2. '-र्णाग-' C. 3. '-वा-' B.

[ वह्निमुखे मूलदेव्यर्चा ]

वह्निमुखे [1]यन्त्रराजं रश्मिवृन्दसमन्वितम् ।
विभाव्यावाहयेद्देवीं श्रीमत्त्रिपुरसुन्दरीम् ॥ ९५ ॥
अर्चयेद् वह्निरूपां तां धूपदीपादिना सुधीः ।

[ वह्निदेवतयोरैक्यसम्पादकहोमः ]

तन्मुखे मूलमन्त्रेण पञ्चविंशतिसंख्यया ।
आज्येन जुहुयान्मन्त्री [2]वक्त्रैकीकरणं त्विदम् ॥ ९६ ॥

[ नाडीसन्धानहोमः ]

वह्निदेवतयोरैक्यमात्मना सह भावयन् ।
मूलमन्त्रेण जुहुयादाज्येनैकादशाहुतीः ॥
नाडीसन्धानमुद्दिष्टमेतदागमवेदिभिः ॥ ९७ ॥

[ आवरणदेवताहोमः ]

तत आवृतिदेवार्थमेकैका[3]माहुतिं हुनेत् ।

[ मूलदेवताहोमक्रमः ]

सङ्कल्पञ्च ततः कृत्वा काम्यहोमं समाचरेत् ॥ ९८ ॥
स्वाहान्तं मूलमुच्चार्य देवतायै त्विदं [4]वदन् ।
जुहुयाज्ज्वलिते वह्नौ संख्याञ्च परितश्चरेत् ॥ ९९ ॥

[ तान्त्रिकहोमाधिकारिनिर्णयः ]

द्विजानामधिकारोऽस्ति होमकर्मणि तान्त्रिके ।

[ शूद्रे विशेषः ]

यदि कामी भवेच्चैव शूद्रोऽपि होमकर्मणि ॥ १०० ॥
वह्निजायां परित्यज्य हृदयान्तेन होमयेत् ।

[ निरुक्तक्रमस्य प्रामाणिकतन्त्रसंवादित्वम् ]

वाराहीतन्त्रराजस्य मतमेतदुदीरितम् ॥ १०१ ॥

---

९५ । वह्निमुख इति । यन्त्रराजं वक्ष्यमाणश्रीयन्त्रम् ।
९६ । वक्त्रैकीकरणं वह्निमुखेन मूलदेव्या अभेदकल्पनम् ।

---

1. 'मन्त्र-' C. 2. 'वज्रैक-' ? A-B. 3. 'हुतिर्हुनेत्' A-B. 4. 'वदेत्' A-B.

[ जिह्वाभेदेन होमे फलभेदाः ]

ईशपूर्वाग्निजिह्वायां हवनं सिद्धिदायकम् ।
रक्षःस्थायां शान्तिकार्ये प्रतीच्यां स्तम्भकर्मणि ।
उच्चाटे [1]वायुजिह्वायां मध्यस्थायान्तु मारणे ॥ १०२ ॥

[ कामनाभेदेन यज्ञीयपात्रभेदाः ]

हेमरूप्यशिलामृत्स्नापात्रं शान्त्यादिषु स्मृतम् ।
विल्वाक्षशीग्रुघटितं मारणोच्चाटनादिषु ॥ १०३ ॥

[ होमे विहितं मुद्रात्रयम् ]

तिस्रो मुद्राः स्मृता होमे मृगी हंसी च कस्तुरी ॥१०४॥
कस्तूरी करसंकोची हंसी [2]युक्तकनिष्ठिका ।
मृगी कनिष्ठातर्जन्यौ त्यक्त्वा मुद्रात्रयं स्मृतम् ॥ १०५ ॥

[ मुद्राणामासां विनियोगः ]

यज्ञे शान्तिककार्ये[3]च मृगी हंसी प्रकीर्त्तिता ॥ १०६ ॥
अभिचारेषु [4]सर्वेषु कस्तूरी परिकीर्त्तिता ।

[ षट्कर्मसु होमे विशेषः ]

नमः स्वाहा वषड् वौषड् हुं फडन्ताश्च जातयः ।
[5]शान्तौ वश्ये तथा स्तम्भे विद्वेषोच्चाटमारणे ॥१०७॥

---

१०३ । कामनाभेदेन यज्ञीयपात्रभेदानाह—हेमेति । शान्त्यादिष्विति । शान्तौ हेममयम्, वशीकरणे रौप्यमयम्, स्तम्भने शिलामयम्, विद्वेषणे मृन्मयं पात्रम् । मारणोच्चाटनादिषु विल्वाक्षशीग्रुघटितं पात्रं स्मृतमित्यर्थः । विल्वः प्रसिद्धः । अक्षः वयडा इति यस्य प्रसिद्धिः । शीग्रुः शोभाञ्जनः । एतदन्यतमकाष्ठनिर्मितं पात्रं मारणादिषु कर्त्तव्यमित्यर्थः ।

१०७ । नम इति । तथा च शान्तौ नमोऽन्ता मन्त्राः, वशीकरणे वषडन्ताः, स्तम्भने वौषडन्ता इत्येवंक्रमेण प्रयोगाः कर्त्तव्या इत्यर्थः ।

---

1. 'वाम-' A-B. 2. '-त्यक्त-' A-B. 3. '-षु' A-B. 4. कार्येषु C. 5. 'शान्त्यै' C.

[ कुमारीपूजा ]

अथ संपूजयेन्मन्त्री कुमारीश्च सुवासिनीम्।

[ श्रीविद्यापूजा ]

बालाबीजैर्यथान्यायं श्रीविद्यां पूजयेत्ततः ॥ १०८ ॥

[ महाव्याहृतिहोमः पूर्णाहुतिश्च ]

देव्या व्याहृतिहोमश्च कृत्वा पूर्णाहुतिं चरेत्।
घृतेन[1] स्रुचमापूर्य पुष्पमग्रे निधाय च ॥ १०९ ॥
सदर्भेण स्रुवेणैव उत्थायाऽऽच्छादनं चरेत्।
अञ्जलिना गृहीत्वा तु मूलान्ते नयनं पठन्।
यवरूपां हुनेद् धारां जयघोषपुरःसरैः ॥ ११० ॥

१०९-११०। देव्या इति महाव्याहृतिहोमः पूर्वमुक्तः। पूर्णाहुतिदानपरिपाटीमाह—पूर्णेत्यादिना। घृतेनेत्यादि। तथा च स्रुवेण स्रुचं घृतेनापूर्य स्रुचोऽग्रे पुष्पं दत्वा उत्थाय सदर्भेण स्रुवेणाच्छादितां तां घृतपूर्णस्रुचमञ्जलिना गृहीत्वा वौषडन्तेन मूलमन्त्रेण यवरूपां यवसदृशपरीणाहां धारामग्नौ दद्यादिति। अत्र तन्त्रसारकारैः—"इतः पूर्वमित्यादिमन्त्रेण मूलमन्त्रेण च पूर्णाहुतिं दत्त्वा" इत्यनेनात्मसमर्पणमन्त्रेण पूर्णाहुतिदानमभिहितम्, तत्प्रतिपादनानुकूलं प्रमाणन्तु नोपदर्शितम्। शाक्तानन्दतरङ्गिन्यामष्टादशोल्लासे—

अग्नेर्नामकरणं कृत्वा दद्यात् पूर्णाहुतिं प्रिये।
ब्रह्मार्पणेन मनुना दद्यात् पूर्णाहुतिं पुनः ॥

इत्यभिधानात् मूलेनेत्यादितन्त्रसारोक्तत्वाच्च मूलेन पूर्णाहुतिमेकां दत्त्वा पुनर्ब्रह्मार्पणेन मनुना पूर्णाहुतिं दद्यादिति प्रतीयतेऽन्यथा पुनःपदवैयर्थ्यं स्यात्। कौलावलीनिर्णये त्रयोदशोल्लासे तु—

स्रुचा पूर्णाहुतिं कृत्वा मूलमन्त्रेण देशिकः।
उद्वास्य देवतां कुम्भे साङ्गावरणपूर्विकाम् ॥

इत्यनेन केवलमूलमन्त्रेण पूर्णाहुतिदानमुक्तम्। प्रकृते तु 'यवरूपां हुनेद धारां' तथा 'हुनेदष्टाहुतिं क्रमा'दिति पृथक् क्रियाद्वयोपादानात् काम्यष्टाहुत्यात्मकपूर्णहोमानभि-

1. 'घृतेनापूर्य पुष्पञ्च आग्नेयञ्च निधाय च' A-B.

[ आत्मार्पणमन्त्रहोमः ]

आत्मार्पणेन मनुना हुनेदष्टाहुतिं क्रमात् ॥ १११ ॥

[ आत्मसमर्पणमन्त्रः ]

प्रणवं पूर्वमुच्चार्य मूलमन्त्रमतः परम् ।
इतः पूर्वमिति प्रोच्य प्राणबुद्धीति चोच्चरेत् ॥ ११२ ॥
देहधर्माधिका[1]रात्तु जाग्रत्-स्वप्नसुषुप्ति[2]च ।
अवस्थासु मनसेति वाचा च कर्मणेति च ॥ ११३ ॥
हस्ताभ्यामथ पद्भ्या[3]न्तु [4]उदरेण च संस्मरेत् ।
शिश्ना यत् स्मृतमित्येतद् यदुक्तं यत् कृतन्तथा ॥११४॥
सर्वमित्यपि तद् ब्रह्मार्पणमस्त्वग्निवल्लभाम् ।
प्रणवश्च मदीयं मां सकलं साध्यदेवताम् ।
ङेऽन्तां समर्पितं तारं [5]तत् सदात्माऽर्प[6]णे मनुः ॥ ११५ ॥

---

धानाच्च पूर्णाहुतिदानात् पृथगेवेदमात्मसमर्पणमन्त्रकरणकाष्टाहुतिप्रदानमिति प्रतीयते। एवञ्चात्र नानातन्त्रेषु मतभेदादर्शनात् स्वस्वगुरुसम्प्रदायानुसारेणैकतमः पक्षः समाश्रयणीय इति दिक् ।

११२-११५। आत्मसमर्पणमन्त्रस्वरूपं निरूपयति—प्रणवमित्यादिना आत्मार्पणे मनुरित्यन्तेन। एवञ्च प्रथमं प्रणवस्ततो मूलं ततश्च इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत् स्मृतं यदुक्तं यत् कृतं सर्वं तद् ब्रह्मार्पणमस्तु स्वाहा ॐ मदीयं मां सकलं अमुकदेवतायै समर्पितं ॐ तत् सदित्यात्मसमर्पणमन्त्रः पर्यवस्यति। अत्र गन्धर्वतन्त्रेऽष्टादशपटले विशेषः—

आत्मानञ्च क्रियाः सर्वा महामन्त्रेण पार्वति ।
ततो ब्रह्मस्वरूपिण्यै विशेषेण समर्पयेत् ।

---

1. ‘-रेति’ B. 2. ‘-षु’ A. 3. ‘-ञ्च’ C. 4. ‘तथोदरेण’ A-C. 5. ‘एत-’ A-B. 6. ‘-णो’ C.

[ अग्नेरभ्युक्षणमर्चनञ्च ]

अभ्युक्ष्य पूजयेद् वह्निं गन्धपुष्पादिना सुधीः ॥११६॥

[ पुनर्महाव्याहृतिहोमो जिह्वाहोमश्च ]

पुनर्व्याहृतिभिर्हुत्वा जिह्वादीनां विभावसोः ।
एकैकामाहुतिं हुत्वा तत्तन्मन्त्रेण देशिकः ॥ ११७ ॥

[ प्रार्थनापूर्वकमग्नेर्विसर्जनम् ]

भो भो वह्ने महाशक्ते सर्वकर्मप्रसाधक[1] ।
कर्मान्तरे च संप्राप्ते सन्निधिं कुरु [2]सादरम् ।
अनेनाग्निश्च [3]संप्रार्थ्य क्षमस्वेति विसर्जयेत् ॥११८॥
[4]अग्निमात्मनि संयोज्य दक्षिणान्तु प्रदापयेत् ।
नैमित्तिके च परिधीन् नित्ये नैव च संदहेत् ॥ ११९ ॥

इति श्रीपूर्णानन्दपरमहंसविरचिते श्रीतत्त्वचिन्तामणौ अष्टमः प्रकाशः ॥ ८ ॥

---

वारत्रयमितः पूर्वं प्राणबुद्धि ततः परम् ।
देहधर्माधिकारान्ते जाग्रत्स्वप्नसुषुप्तिषु ॥
मनसा च ततो वाचा कर्मणा च ततः परम् ।
हस्ताभ्याञ्च ततः पद्भ्यामुदरेण ततः परम् ॥
शिश्ना च यत् स्मृतं पश्चाद् यदुक्तं यत् कृतं भवेत् ।
मां मदीयं ततो देवि सकलञ्च ततः परम् ॥
तथैव त्वयि शब्दान्ते ब्रह्मण्यर्पितमस्त्विति ।
स्वाहान्तो मनुरित्युक्तो मन्त्रः स्वात्मसमर्पणे ॥ इति ।

११९ । अग्निमिति । संयोज्य संहारमुद्रयेति शेषः । तदुक्तं तन्त्रसारे—पूर्ववन्मेखलोपरि अद्भिः परिषिच्यात्मनि संहारमुद्रया पावकं योजयित्वेति । नैमित्तिक इति । नैमित्तिके कर्मणि परिधीन् पूर्वस्थापितान् दहेदग्नौ प्रक्षिप्येति शेषः । परन्तु नित्ये कर्मणि तान् न दहेदिति । तदुक्तं तन्त्रसारे—परिधीन् सपरिस्तरानग्नौ क्षिपेत् । विशेषस्तु नैमित्तिके कर्मणि एतान् दहेत् नित्ये कर्मणि न दहेदिति । तन्त्रसारधृतशारदायाञ्च—नैमित्तिके दहेन्मन्त्री नित्ये नैव दहेदिमान् । इति ।

---

1. '-प्रदायक' C. 2. 'साधनम्' A-B-C. 3. 'संपाद्य' A-B. 4. 'अनेनात्मनि' A-B.

# नवमः प्रकाशः

[ द्रव्यभेदेन होमे फलभेदाः, होमद्रव्यपरिमाणभेदाः, अरिमन्त्रत्यागविधिश्च ]

[ होमद्रव्यनिरूपणप्रतिज्ञा ]

अथ प्रसङ्गाद् वक्ष्यामि होमद्रव्यस्य लक्षणम् ॥ १ ॥

[ द्रव्यभेदेन होमे फलभेदाः ]

मालतीमल्लिकाजातीकुसुमैर्मधुमिश्रितैः ।
घृतसंपूर्णहवनाद् वागीशत्वं प्रजायते ।
[1]मूढस्यापि च मूकस्य शिलारूपस्य नान्यथा ॥ २ ॥

करवीरजवापुष्पैः साज्यैर्होमैर्जगद् वशम् ।
योषितः[2] सकला वश्या दासीभूता भवन्ति हि ॥ ३ ॥

[3]मध्वक्तै रक्तवर्णैस्तु करवीरैः सगुग्गुलैः ।
हुत्वा लक्षं वशीकुर्याद् विंशतिं धरणी[4]भुजाम् ॥४॥
मध्वक्तकरवीरैस्तु साङ्गं भूपं वशं नयेत् ॥ ५ ॥

सप्तरात्रन्तु[5] साज्येन जुहुयाच्छशिना बुधः ।
पाटलैर्यूथिकाकुन्दैः शतपत्रैश्च जातिभिः ॥ ६ ॥

---

२। पूर्वप्रकाशे होमप्रकरणं निरूप्य प्रकाशेऽस्मिन् प्रथमं होमोपकरणद्रव्यभेदान् तत्तद्द्रव्यकरणकहोमाधिगम्यतत्तत्फलभेदांश्चोपदिशति—मालतीत्यादिना ।

५। मध्वक्तेति। साङ्गम् अमात्यसुहृत्कोषादिराज्याङ्गसहितं भूपं राजानमित्यर्थः ।

६। शशिना कर्पूरेण ।

---

1. 'मृतकस्यापि' ? C. 2. '-च' A. 3. मध्वित्यादिपादचतुष्टयं A-B-पुस्तकयोर्नास्ति । 4. 'भुजान्' B. 5. '-त्रौ तु' A-C.

मालती[1]नवमल्लीभिर्मल्लिकापद्मकिंशुकैः ।
पूजनाद्धवनाद् वापि [2]मिश्रितैरप्यमिश्रितैः ।
सर्वसौभाग्यमाप्नोति बुद्ध्या च वाक्पतिर्भवेत् ॥७॥
कमलैररुणैर्होमः [3]सर्वसम्पत्तिदायकः ।
रक्तोत्पलैर्जगद् वश्यं राजानो वशगाः क्षणात् ॥८॥
नीलोत्पलैर्महादुष्टा वशमायान्ति नान्यथा ।
श्वेतोत्पलैः श्रियं वाचं लभते हवनाद् ध्रुवम् ॥९॥
कह्लारहवनान्मन्त्री सौभाग्यञ्च धनं [4]हरेत् ।
वकुलस्य फलैः पुष्पैः सौभाग्यं जायते महत् ॥१०॥
कर्पूरं कुङ्कुमञ्चैव मिश्रं मृगमदेन हि ।
हवनान्मरणञ्चैव[5] मन्त्रिणा विजितं[6] भवेत् ॥ ११ ॥
चम्पकैः पाटलैर्होमाच्छ्रियं प्रोल्लसितां वराम्[7] ।
[8]प्राप्नोति मन्त्री महतीं स्तम्भयेज्जगतीमिमाम् ॥१२॥
श्रीखण्डमगुरुं हुत्वा कर्पूरं गुग्गुलं तथा ।
भूपनागेन्द्रदेवानां पुरन्ध्रीर्वशमानयेत् ॥
सर्वे लोका वशास्तस्य भवन्त्येव न संशयः ॥१३॥

---

७। मिश्रितैरिति। मिश्रितैः पाटलादिनिरुक्तपुष्पैरेकीकृतैः। अमिश्रितैर्वा अन्यतमैर्वा इत्यर्थः।

१२। चम्पकैः पाटलैरिति मिश्रितैरित्यर्थः। अमिश्रितपाटलपुष्पेण होमस्य पूर्वमुक्तत्वात्।

१३। श्रीखण्डं चन्दनकाष्ठम्।

---

1. 'वरव-' A. 2. 'मिश्रैर्वामिश्रितैरपि' C. 3. 'सम्यक्' A-B. 4. 'भवेत्' ? A-B. 5. '-न्मदनञ्चैव' C. 6. 'विजितो' C. 7. 'च्छ्रिया प्रोक्ता हि युक्तया' ? A, 8. 'आ' A-B.

लवहोमाल्लभेद्राज्यं दारिद्र्य-[1]भयपीडितः।
दुर्गो[2]पसर्गशमनं पलत्रिमधुहोमतः ॥१४॥
महापलेन नियतं रिपोः सैन्यं विनाशयेत्।
खेचरो जायते रात्रौ कृत्वा होमं चतुष्पथे ॥१५॥
रुधिराक्तेन च्छागस्य मांसेन निशि होमतः।
मधुरत्रययुक्तेन गुरुणोक्तविधानतः।
महाराष्ट्रं [3]महादुर्गं समस्तं वशमानयेत् ॥१६॥
[4]पृथक् कृत्वा मधु क्षीरं घृतञ्च होमयेत् सुधीः।
आयुर्धनमथाऽऽरोग्यं समृद्धिर्जायते नृणाम् ॥१७॥
मधुना क्षीरयोगेण होमान्मृत्युं विनाशयेत्।
दधिमाक्षिकयोगेण सौभाग्यं धनमाप्नुयात्[5] ॥१८॥
राजिका[6]लवणाभ्यान्तु क्षोभयेज्जगतीमिमाम्।
वशयेद्दुष्टलोकांश्च हवनान्नात्र संशयः ॥१९॥
दध्नाऽष्टशतकं[7] हुत्वा[8]ऽकालमृत्युं वशं नयेत् ॥२०॥
जुहुयात् क्षीरसंयुक्तं घृतमष्टशतं बुधः।
मध्वाज्यगुग्गुलेनैव[9] राजेन्द्रं वशमानयेत् ॥२१॥
होमाद्दधिमधुक्षीरलाजाभिः साधकोत्तमः।
रोगहन्ता लोकहन्ता मृत्युहन्ता [10]भवेद् ध्रुवम् ॥२२॥

---

१४। त्रिमध्विति। त्रिमधुरमाह राघवभट्टधृतप्रयोगसारे—
पयो मधु घृतञ्चेति समं त्रिमधुरं स्मृतम्। इति।
१९। राजिका राजसर्षपः। 'राजिकापि च केदारे राजसर्षपरेखयो'रिति मेदिनी।

---

1. '-भव-' C. 2. '-पशमनञ्चैव' A-B. 3. 'महाद्वन्द्वं' C. 4. 'क्षीरमधु दधि घृतं पृथक् कृत्वा तु होमयेत्' C. 5. '-युः' A-B. 6. '-वरणा-' A. 7. 'शताष्टकं' C. 8. 'काममृत्यु-' C. 9. '-नापि' C. 10. 'भवेत् किल' C.

[1]आरोग्यं घृतदुग्धाभ्यां हवनेन शताष्टकम् ।
तिलाज्यहोममात्रेण सर्वकर्माणि साधयेत् ॥२३॥
सितां हुत्वा तु मन्त्रज्ञो रिपोः स्तम्भनमाचरेत् ।
गुग्गुलस्य च होमेन सर्वदुःखानि नाशयेत् ॥२४॥
वैरिणो वशगाः शीघ्रं चन्दनस्यापि होमतः ।
रक्तचन्दनहोमेन वश्या हि पुरुषाः स्त्रियः ॥२५॥
कर्पूरस्य च होमेन [2]वाग्वश्यं जायते नृणाम् ।
कस्तूरीहवनान्मन्त्री* सर्वे वश्या भवन्ति हि ॥२६॥
तिलतण्डुलहोमेन सर्वशान्तिर्भवेद् गृहे ।
शर्करागुडहोमेन सर्वकार्याणि साधयेत् ॥२७॥
घृतपायसहोमेन वशीकुर्यान्महाग्रहान् ॥२८॥
पूर्णवदरहोमेन सितायुक्तेन मन्त्रिणः ।
त्रैलोक्यं वशमाप्नोति धान्यवृद्धिर्भवेत् किल ॥२९॥
दशाङ्गधूपहोमेन सौभाग्यमतुलं [3]भवेत् ।
पूर्णदाडिम्बहोमेन वशीकुर्यान्महा[4]ग्रहान् ॥३०॥
सम्पूर्णवरहोमेन वशीकुर्यान्महीश्वरान् ।
मातुलुङ्गफलैर्होमात् त्रलिया वशगा ध्रुवम् ॥३१॥

---

२४। सितां शर्कराम् ।

३१। वरहोमेन कुङ्कुमहोमेन ।

---

1. 'आरोग्यमि'त्यतो 'वश्या भवन्ति हि' इत्यन्तानि वचनानि A-पुस्तके न सन्ति । 2. 'वागि'त्यतो 'बदरहोमेने'त्यन्तोऽशः' C-पुस्तके नास्ति । * अत्र मन्त्रीति प्रथमान्तपदस्यान्वयो नोपपद्यते । गन्धर्वतन्त्रे एकत्रिंशपटले 'कस्तूरीहोमतो देवा वशगा नात्र संशयः' इति पाठदर्शनात् 'कस्तूरीहवनाद्देवा' इति पाठः समीचीनतया प्रतिभाति । अथवा 'मन्त्रा' इति प्रायः समानानुपूर्वीकः पाठो लेखकप्रमादतो निरुक्ताकारमापन्न इति प्रतीमः । 3. 'लभेत्' C. 4. 'महेत्यतो वशीकुर्या'दित्यन्तोऽंशः B-पुस्तके नास्ति ।

नागरङ्गफलैर्होमाद् वैश्या वश्या भवन्ति हि ।
कुष्माण्डफलहोमेन शूद्रा वश्या भवन्ति हि ॥३२॥
द्राक्षाफलैः सिद्धयोऽष्टौ लक्षहोमान्न संशयः ॥३३॥
[1]कदलीफलहोमेन लक्षमात्रेण भूभृतः ।
वश्यास्तु दशसंख्याता भवन्त्येव न संशयः ॥३४॥
खर्जूरफलहोमेन लक्षमात्रेण भूभृतः ।
वश्या विंशतिसंख्याता भवन्त्येव न संशयः ॥३५॥
नारिकेलफलैर्होमात् समृद्धिर्जायतेऽचिरात् ।
लक्षमात्रेण मन्त्रज्ञो राजतुल्यो भवेद् ध्रुवम् ॥३६॥
[2]पक्काम्रफलहोमेन लक्षमात्रेण मन्त्रवित् ।
चतुःसमुद्रपर्यन्तां मेदिनीं वशमानयेत् ॥३७॥
जम्बूफलैः स्त्रियो वश्याः कुष्माण्डैर्दैत्यकन्यकाः ।
[3]श्रीफलैरुत्तमां लक्ष्मीं पत्रैर्वा होमतो लभेत् ।
इक्षुदण्डैः सुखावाप्तिस्तद्वशा राजकन्यकाः ॥३८॥

[ होमद्रव्यपरिमाणम् ]

अथ वक्ष्यामि [4]द्रव्यस्य [5]मानं हवनसिद्धिदम् ।
पुष्पं [6]समग्रं जुहुयात् कमलेनापि पुष्कलम् ॥३९॥
[7]कुसुम्भं [8]वाणपुष्पञ्च यथेष्टं जुहुयात् सुधीः ।
[9]शतसंख्यास्तिलाश्चैव राजिकाः शतसंख्यया ॥४०॥

1. 'कदली'त्यादिपादाष्टकं' A-पुस्तके नास्ति । 2. 'पक्का-' C. 3. 'श्रीफलै'रित्यादि पादचतुष्टयं' A-पुस्तके नास्ति । 4. 'होमस्य' A. 5. 'होमं' C. 6. 'सदग्रं' C. 7. 'कुसुमं' A. 8. 'बाल-' A-B. 9. 'शतसंख्याः शिला-' A.

लाजा मुष्टिप्रमाणाः स्युर्घृतं कर्षमितं [1]तथा ।
चुल्लुकार्द्धं तथा क्षीरमन्नं ग्रासमितं भवेत् ॥४१॥
स्थूलं फलञ्च कुष्माण्डं मातुलुङ्गं [2]तथैव च ।
[3]मनःप्रियैश्च खण्डैश्च फलैर्भवति निश्चयात् ॥४२॥
रम्भाफलं चतुःखण्डं लघु चेत् खण्डितं न हि ।
पनसैः फलगर्भस्थैश्चूतैर्मधुयुतैर्हुनेत् ॥४३॥
इक्षुखण्डं पुरास्थाने मनःसन्तोषकारणम् ।
द्राक्षाफलं समस्तं स्यान्नागरङ्गञ्च खर्जुरम् ॥४४॥
गुग्गुलुं[4] क्रमुकार्द्धञ्च कुङ्कुमञ्च तथा भवेत् ।
गुञ्जासमानं कर्पूरं कस्तूरी घुसृणं तथा ॥४५॥
अगुरुं चन्दनञ्चैव क्रमुकेण समं भवेत् ।
मनःप्रियाणि सर्वाणि फलानि हवनाय च ॥४६॥
मनःप्रियाहुतीः कृत्वा सर्वमन्यद्धुनेत् सुधीः ।
एतदाहुतिमानं स्यात्

[ तस्यैव प्रकारान्तरम् ]

प्रकारान्तरमुच्यते ॥ ४७ ॥
दधि प्रसृतिमानं स्यात् पृथुकाः [5]शक्तवोऽपि च ।
भवन्ति कर्षमाणश्च[6] गुडं पलार्द्धमात्रकम् ॥ ४८ ॥

---

४४। पुरास्थाने पर्वदेशे ।

---

1. 'भवेत्' C. 2. 'च खर्जूरम्' C. 3. 'मन' इत्यादि 'नागरङ्गञ्च खर्जुरम्' '-इत्यन्तोऽंशः' C-पुस्तके नास्ति । 4. '-लं' A. 5. 'सक्तवोऽ-' ? C. 6. '-न्तु' C.

ग्रासार्द्धं चरुमानं[1]स्यात् पलमेकमुदाहृतम् ।
मातुलुङ्गं चतुःखण्डं पनसं दशधा स्मृतम् ॥ ४९ ॥
अष्टधा नारिकेलानि खण्डितानि विदुर्बुधाः ।
त्रिधा खण्डं फलं वैल्वं कपित्थं खण्डितं [2]द्विधा ॥ ५० ॥
फला[3]न्यन्यानि खण्डानि समिधः स्युर्दशाङ्गुलाः ।
व्रीहयो मुष्टिमात्राः स्यू रक्तमाषा यवा अपि ॥ ५१ ॥
तण्डुलाः स्यु[4]स्तदर्द्धांशास्तिलाश्चुल्लुकसम्मिताः ।
[5]तिन्तिडीबीजमानानि मरीचान्यपि[6] विंशतिः ॥ ५२ ॥

[ द्रव्यानुक्तौ विशेषः ]

अनुक्ते तु हविर्द्रव्ये तिलाज्यं हविरुच्यते ॥ ५३ ॥

---

५१। समिध इति। दशाङ्गुलाः प्रादेशपरिमाणाः। समिधां लक्षणमाह कर्मप्रदीपेऽष्टमखण्डे—

नाङ्गुष्ठादधिका ग्राह्या समित् स्थूलतया क्वचित् ।
न निर्मुक्तत्वचा चैव न सकीटा न पाटिता ॥
प्रादेशान्नाधिका नोना तथा चैव द्विशाखिका ।
न सपत्रा न निर्वीर्या होमेषु च विजानता ॥
विशीर्णा विदला ह्रस्वा वक्रा स्थूला कृशा द्विधा ।
क्रिमिदष्टाश्च दीर्घाश्च वर्जनीयाः प्रयत्नतः ॥

गृह्यासंग्रहे प्रथमप्रपाठके—

विशीर्णायुःक्षयं कुर्याद्विदला व्याधिसम्भवा ।
ह्रस्वा व्याधिकरी प्रोक्ता दुर्भगत्वन्तु वक्रया ॥
विघ्नानि कुरुते स्थूला कृशा च रिपुवर्द्धिनी ।
द्विधा नाशयते ह्यर्थं भार्याश्च प्रियबान्धवान् ॥
कीटदष्टाऽतिभयदा दीर्घा चैव सुतान् हरेत् ।
तस्मात् सर्वप्रयत्नेन वर्जनीयाश्च वर्जयेत् ॥ इति ।

---

1. 'च' C. 2. 'त्रि-' A. B. 3. '-न्येतानि' A-B. 4. 'श्चतुर्द्धांशा-' ? A. 5. इतः पूर्वं B-पुस्तकपादटीकायां पतितोद्धाररीत्या 'चन्दनागुरुकर्पूरकस्तूरीकुङ्कुमानि च'त्यधिकः पाठो दृश्यते। परन्तु पूर्वमेवैतेषां द्रव्याणां परिमाणनिरूपणात् A-C-पुस्तकयोः B-पुस्तकस्य मूले चानिवेशितत्वाच्चायमंशो मूले निवेशितः। 6. '-न्येक-' B.

[ वैरिमन्त्रपरित्यागक्रमः ]

अथारिमन्त्रत्यागस्य[1] विधिः सम्यक् प्रचक्ष्यते ॥ ५४ ॥
शुचिः समाहितो भूत्वा प्रारभेत् प्रवरे[2] दिने ।
अशेषदुःखनाशाय देशिकः[3] प्रवरं [4]विधिम् ॥ ५५ ॥

[ घटस्थापनम् ]

तत्राऽऽदौ [5]रम्यभवने कुम्भं दीक्षाविधिक्रमात् ।
मण्डले स्थापयेद् विद्वान् पूरयेत्तं जलैः [6]शुभैः ॥ ५६ ॥

[ तत्र सावरणसाध्यदेवतापूजा ]

विलोममन्त्रपाठेन तत्राऽऽवाह्य तु देवताम् ।
सकलीकृत्य संपूज्याऽऽवरणानि प्रपूजयेत् ॥ ५७ ॥
एवमावरणानीष्ट्वा मन्त्री मन्त्रस्य देवताम् ।
हुत्वा विलोममन्त्रेण सर्पिषा गोरपि द्विजः ॥ ५८ ॥

[ दिक्पालबलिः ]

ततो यथावद्दुग्धान्नैर्देवताभ्यो बलिं हरेत् ।
विदिक्षु दिक्षु च तथा वक्ष्यमाणैर्मनुक्रमैः ॥ ५९ ॥

[ तत्रेन्द्रस्य बलिमन्त्रः ]

ॐ आयाहीन्द्र सुराधीश शतमन्यो शचीपते ।
नमस्तुभ्यं गृहाणेमं पुष्पधूपादिकं बलिम् (१) ॥ ६० ॥

[ अग्नेः ]

ॐ आयाहि तेजसां नाथ हव्यवाह वरप्रद ।
गृहाण पुष्पधूपादिबलिमेनं सुपूजितम् (२) ॥ ६१ ॥

---

५४। पूर्वं द्वितीयप्रकाशे वैरिमन्त्रा निरूपिताः। सम्प्रति तेषामनिष्टफलकानां विधिना परित्यागस्य क्रममाह—अथारिमन्त्रत्यागस्येत्यादिना ।

५७। सकलीकृत्य षडङ्गमन्त्रैरिति शेषः ।

---

1. 'संत्याग-' ? C 2. '-ले' A-B. 3. 'देशिकप्र-' A-B. 4. 'विधिः' ? A-C. 5. 'वश्य-' C. 6. 'शुभम्' A.

[ यमस्य ]

ॐ प्रेतराज समायाहि भिन्नाञ्जनसमप्रभ ।
वलिं दत्तं गृहाणेमं सुप्रीतो वरदो भव (३) ॥ ६२ ॥

[ निर्ऋतेः ]

ॐ नमस्ते रक्षसां नाथ नैर्ऋते त्वमिहागतः ।
गृहाण वलिपूजादि मया भक्त्या निवेदितम् (४) ॥ ६३ ॥

[ वरुणस्य ]

ॐ एहि पश्चिमदिक्पाल लोकनाथ नमोऽस्तु ते ।
भक्त्या निवेदितां पूजां गृहीत्वा प्रीतिमाप्नुहि (५) ॥६४॥

[ वायोः ]

ॐ प्रभञ्जन प्राणपते त्वमेहि सपरिच्छदः ।
मया प्रयुक्तं विधिवद् गृहाण वलिमादरात् (६) ॥ ६५ ॥

[ कुवेरचन्द्रयोः ]

ॐ कुवेर-तारकाधीशावागच्छेतां सुरोत्तमौ ।
पुष्पधूपादिभिः प्रीतौ भवेतां वरदौ मम (७) ॥ ६६ ॥

[ ईशानस्य ]

ॐ ईश त्वमेहि[1] भगवन् सर्वविद्यामय प्रभो ।
पूजितः पुष्पधूपाद्यैः प्रातो भव विभूतये (८) ६७ ॥

[ ब्रह्मणः ]

ॐ आयाहि सर्वदेवानां[2] नाथ ब्रह्मन् समर्चनम् ।
गृहाण सर्वविघ्नान् मे निवर्त्तय नमोऽस्तु ते (९) ॥ ६८ ॥

[ अनन्तस्य ]

ॐ आगच्छ वरदाव्यक्त विष्णो विश्वस्य नायक ।
पूजितः परया भक्त्या भव त्वं सुखदो मम (१०) ॥ ६९ ॥

---

1. '-मेव' A-B. 2. '-लोकानां' C.

[ साध्यदेवतापूजा ]

ततः सपरिवाराश्च पूजयेन्मन्त्रदेवताम् ।
मन्त्रेण विपरीतेन पुष्प[1]-धूपोपचारकैः ॥ ७० ॥

[ प्रार्थनम् ]

ततस्तु प्रार्थयेद [2]विद्वान् पूजितां मन्त्रदेवताम् ॥ ७१ ॥

[ तत्र मन्त्राः ]

आनुलोम्यमनालोच्य मया तरलबुद्धिना ।
तदुपात्तं पूजितश्च प्रभो मन्त्रस्वरूपकम् ।
[3]तेन मे मनसः क्षोभं [4]विनिवर्त्तय सर्वदा ॥ ७२ ॥
पापं प्रतिहतश्चास्तु भूयाच्च् श्रेयः सनातनम् ।
तनोतु मम कल्याणं पावनी भक्तिरेव ते ॥ ७३ ॥

[ तदनन्तरकृत्यम् ]

इति संप्रार्थ्य मन्त्राणां [5]वर्णं पत्रे विलोमतः ।
लिखित्वाऽमलकर्पूरचन्दनेन समर्चयेत् ।
कलसोपरि संस्थाप्य भक्त्या परमया पुनः ॥ ७४ ॥
तत् पत्रं मतिमान् पश्चाद् [6]बद्ध्वा निजशिरस्यथ ।
स्नायात् पूजितकुम्भस्थतोयैर्मन्त्रमयैः शुभैः ॥ ७५ ॥
पुनश्चान्येन तोयेन कुम्भमापूर्य संयतः ।
तन्मध्ये मन्त्रपत्रञ्च निक्षिप्याथ प्रपूजयेत् ॥ ७६ ॥
तन्मध्ये निम्नगातीरे शुद्धे [7]वाऽन्यजलाशये ।
निक्षिपेद्दश विप्रांश्च यथाशक्त्या प्रपूजयेत् ॥ ७७ ॥

---

७० । विपरीतेन विलोमेन ।

---

1. '-दीपो-' C. 2. 'देवीं' C. 3. 'तेन मनसः संक्षोभम्' A. 4. 'अशेषं विनिवर्त्तय' C. 5. 'मन्त्रं ?' A. C. 6. 'त्रक्ष्यामि भक्तिरन्यथा ?' A. 7. 'वान्ये' A-C.

[ निरुक्तानुष्ठानजं फलम् ]

[1]एवंकृतविधानस्य [2]रिपुमन्त्रोद्भवा रुजः ।
नश्यन्त्येव न सन्देहः क्रमाच्चित्तप्रसन्नता ॥ ७८ ॥
जायतेऽतीव सम्पन्नो वर्द्धते स्वकुलं क्रमात् ।

[ विधेरस्य प्रामाणिकग्रन्थसंवादित्वम् ]

मालिनीविजयस्येति मतमेतदुदीरितम् ॥ ७९ ॥

इति श्रीपूर्णानन्दपरमहंसविरचिते श्रीतत्त्वचिन्तामणौ
नवमः प्रकाशः ॥ ९ ॥

---

1. 'इत्थं' C. 2. 'रिपोर्मन्त्रो-' C,

# दशमः प्रकाशः



[ आदौ पञ्चमी, तत एकाक्षरी, ततस्त्रिकूटचतुष्कूटमन्त्रभेदाः ]

[ श्रीमत्त्रिपुरसुन्दरीविद्यानिरूपणप्रतिज्ञा ]

अथ वक्ष्यामि तां विद्यां संसारार्णवतारिणीम् ।
सर्वशास्त्रमयीं देवीं सर्वकारणरूपिणीम्[1] ॥ १ ॥
उत्पत्तिस्थितिसंहारकारिणीं मुक्तिदायिनीम् ॥
ब्रह्मविष्णु[2]भवैर्वन्द्यां श्रीमत्त्रिपुरसुन्दरीम् ॥ २ ॥
तस्या मन्त्रं प्रवक्ष्यामि सर्वसिद्धिप्रदायकम् ।

[ पञ्चमी विद्या ]

तत्रादौ पञ्चमी विद्या कथ्यते भुवि दुर्लभा ॥ ३ ॥

---

१—२। एवं पूर्वपूर्वप्रकाशैः साङ्गं दीक्षाक्रमं विस्तरत उपपाद्य श्रीमत्त्रिपुरसुन्दरीविद्यास्वरूपनिरूपणाय प्रतिजानीते—अथेति। अस्याः स्वरूपमाह—संसारार्णवतारिणीमित्यादिना श्रीमत्त्रिपुरसुन्दरीमित्यन्तेन। श्रीमत्त्रिपुरसुन्दरीमिति। त्रिपुराशब्दनिर्वचनमाह गन्धर्वतन्त्रे द्वितीयपटले—

त्रीन् यस्मात् पुरतो दध्याद्वर्गा सा परमेश्वरी ।
त्रिपुरेति समाख्याता सौन्दर्यातिशयात्तथा ॥ इति ।

त्रिपुरामहोपनिषद्भाष्यधृतकालिकापुराणेऽपि—

त्रिकोणमण्डलं चास्या भूपुरञ्च त्रिरेखकम् ।
मन्त्रोऽपि त्र्यक्षरः प्रोक्तस्तथा रूपत्रयं पुनः ॥
त्रिविधा कुण्डलीशक्तिस्त्रिदेवानाञ्च सृष्टये ।
सर्वं त्रयं त्रयं यस्मात् त्र्यक्षरी त्रिपुरा मता ॥ इति ।

३—४। तस्या इति। त्रिपुरसुन्दर्याः। त्रिपुराया बहवो भेदाः क्रमेण प्रदर्शयिष्यन्ते।

---

1. अतः परम् 'स्थूलसूक्ष्मविभेदेन परंब्रह्मस्वरूपिणीम्' इति B-पुस्तकेऽधिकः पाठो दृश्यते। स तु वक्ष्यमाणैकादशश्लोकेन पुनरुक्ततया प्रतिभानात् पुस्तकद्वयेऽनुक्तत्वाच्च न मूले निवेशितः।
2. '-शिवै-' C.

दुर्लभा सा महाविद्या पञ्चकूटात्मिका [1]परा ।
नित्या च मुक्तिदा शुद्धा सुखदा दुःखनाशिनी ॥ ४ ॥

[ पाञ्चभौतिकस्य जगतः पञ्चकूटात्मकत्वम् ]

देवीपञ्चात्मकं [2]सर्वं जगदेतच्चराचरम् ।
पृथिव्यापस्तथा तेजो वायुराकाशसम्भवम् ॥ ५ ॥

[ पृथिव्यादीनां तत्तद्देवताशक्तित्वम् ]

पृथिवी ब्राह्मणी शक्तिर्जलं नारायणी तथा ।
तेजो रुद्रस्य रुद्राणी वायुरीशस्य [3]चेश्वरी ॥ ६ ॥
माहेश्वरी तथाऽऽकाशं शक्तिर्माहेश्वरस्य च ।
[4]पञ्चदेवात्मकं पञ्च पञ्चमी-पञ्चशक्तयः ॥ ७ ॥

[ निरुक्तकूटपञ्चकात्मकशक्तिपञ्चकनिरूपणम् ]

[5]आद्या कामेश्वरी ज्ञेया तथा वज्रेश्वरी शुभा ।
तृतीया भगमाला च तुर्या त्रिपुरसुन्दरी ॥ ८ ॥
नित्या च पञ्चमी शक्तिः परंब्रह्मस्वरूपिणी ॥ ९ ॥

[ पञ्चम्याः स्वरूपम् ]

परमानन्दरूपं यज्जगतां कारणं महत् ।
[6]तस्माद्देव्याश्च तद्रूपमुदयास्तविवर्जितम् ॥ १० ॥

---

तत्र प्रथमं पञ्चमीं व्याचष्टे—तत्राद्याविस्यादिना । पञ्चकूटात्मिकेति । वाग्भवकूटं कामराजकूटत्रयं शक्तिकूटञ्चेति तदात्मिकेत्यर्थः ।

६-७। पृथिवी ब्राह्मणी शक्तिरित्यादिना यत् पृथिव्यादीनां ब्रह्मादिशक्तित्वमुपपादितम्, तस्य फलितमाह—पञ्चेति । पञ्चदेवात्मकं प्रागभिहितब्रह्मादिपञ्चदेवात्मकं पञ्च पृथिव्यादयः पञ्चम्याः पञ्चशक्तय इति ज्ञेयमित्यर्थः । एतेन पञ्चभूतात्मकमातृकावर्णानां मन्त्रघटकता व्याख्याता । विशेषस्तु योगिनीहृदये द्वितीयपटलेऽनुसन्धेयः।

१०। उदयास्तविवर्जितं ध्वंसप्रागभावातीतम् ।

---

1. 'शुभा' C. 2. 'सर्वमि'त्यतः 'पञ्चशक्तयः' इत्यन्तोंऽशः' A-पुस्तके नास्ति । 3. 'खेचरी' B. 4. 'पञ्चपञ्चात्मकं' B. 5. 'आदौ' A-B. 6. 'तस्या देव्याश्च' C.

स्थूलत्वे स्थूलरूपा सा सूक्ष्मत्वे सूक्ष्मरूपिणी ।
स्थूलसूक्ष्मविभेदेन परंब्रह्मस्वरूपिणी ॥ ११ ॥

[ शिवादभिन्नेयं शक्तिः ]

योऽसौ विश्वेश्वरो देवो विश्वं व्याप्य व्यवस्थितः ।
सैव विश्वेश्वरी देवी [1]व्यापकत्वेन संस्थिता ॥ १२ ॥
[2]सा एव पञ्चमी विद्या पञ्चकूटात्मिका परा ।

[ निरुक्तपञ्चमीप्रसादादेव शिवादीनामीश्वरत्वादि ]

शम्भुना चिन्त्यते सा तु तत्प्रसादाच्छिवो विभुः ॥ १३ ॥
जगतामीश्वरत्वञ्च लब्धं [3]तदनुकम्पया ।
ब्रह्मत्वं ब्रह्मणा प्राप्तं विष्णुत्वं विष्णुना स्वयम् ॥ १४ ॥

---

११। देव्या रूपत्रयमाह—स्थूलत्व इति। अत्रेदमवधेयम्—स्थूलसूक्ष्मपरभेदेन देवताया रूपत्रयमागमेषु दृश्यते। तत्र ध्यानप्रतिपादितं विलक्षणशिरःकरचरणादिविशिष्टं रूपं स्थूलम्, मन्त्रात्मकं रूपं सूक्ष्मम्, पररूपन्तु देशकालादिभिरनवच्छिन्नमन्तर्यागरूपोपासनागम्यमिति। तदुक्तं तन्त्रराजे चतुर्थपटले—

स्थूलं समस्तया नाम्ना सूक्ष्मं मन्त्रतनुं तथा ।
पररूपं त्वर्पणेन विदितं पूजनं शिवे ॥ इति ।

व्यक्तमाह त्रिपुरोपनिषद्भाष्ये तत्रभवता भास्कररायेण—"देवतायाश्च त्रीणि रूपाणि स्थूलं सूक्ष्मं परञ्चेति। तत्राद्यं तत्तद्ध्यानश्लोकोक्तम्, द्वितीयं तत्तन्मूलमन्त्रात्मकम्, तृतीयन्तूपासनात्मकम्। देवतायास्त्रैविध्यादुपास्तिरपि त्रिविधा बहिर्यागजपान्तर्यागभेदादिति"। एवञ्च स्थूलत्व इत्यादिग्रन्थस्यायमर्थः। उपासनायाः स्थूलत्वे ध्यानप्रतिपादितमूर्त्तिपूजायामित्यर्थः, सा देवता स्थूलरूपा, सूक्ष्मत्वे मन्त्रजपरूपायां सूक्ष्मोपासनायां सा सूक्ष्मरूपा, अन्तर्यागरूपपरोपासनायान्तु स्थूलसूक्ष्मविभेदेन प्रोक्तस्थूलसूक्ष्मभेदराहित्येन सा देवता परंब्रह्मस्वरूपिणीत्यर्थः।

---

1. 'पञ्चक-' C. 2 'सेत्या'दि पादद्वयं' C-पुस्तके नास्ति। 3. 'तस्यानु-' A-B.

सुरासुरमुनीन्द्राणां महत्त्वं तत्प्रसादतः ॥ १५ ॥

[ एतदुपासनयैव विश्वामित्रस्य सृष्ट्यादिकर्तृत्वम् ]

[1]विश्वामित्रे पुरा प्रोक्ता शिवेन दुर्लभा परा ।
[2]सोऽपि चाभूत् स्वयं कर्ता शिवतुल्यो [3]महामुनिः ॥१६॥
सृष्टिसंहारकारी च प्रभुरेको[4]ऽभवत् स्वयम् ।

[ अस्या ब्रह्मविद्यास्वरूपत्वम् ]

अतिगुह्यतमा विद्या ब्रह्मविद्यैव[5] केवला ॥ १७ ॥

[ एतद्विद्योपासनाधिकारिनिर्णयः ]

सर्वदानन्दहृदयोऽद्वैतानन्दपरायणः ।
गुरुभक्तो जितात्मश्च पञ्चमीं समुपासयेत्[6] ॥ १८ ॥

[ अस्याः प्रकर्षः ]

सर्वतीर्थमयी विद्या सर्वमन्त्रमयी [7]परा ।
सर्वदेवमयी[8] शुद्धा सर्व[9]शक्तिमयी [10]शुभा ॥ १९ ॥

[ पञ्चमीविद्याविदः प्रकर्षः ]

पृथिव्यां मानवः श्रेष्ठो यदि जानाति पञ्चमीम् ॥२०॥
यो जानाति महाविद्यां पञ्चकूटात्मिकां पराम् ।
स भवेत् खेचरो नित्यमभ्यासान्नात्र संशयः ॥ २१ ॥
सदा[11]म्नायविशुद्धात्मा योगी [12]भोगपरायणः ।
सर्वथा लभते मुक्तिं यदि जानाति पञ्चमीम् ॥
[13]स पूज्यः सर्वलोकेषु स देवो न तु मानुषः ॥ २२ ॥

---

1. 'विश्वेत्या'दि पादद्वयं A-पुस्तके नास्ति । 2. 'गोपिता-' A. 3. 'भवेन्मुनिः' A, '-अभवन्मुनिः' B. 4. 'भवेत्' A-C. 5. '-क-' C. 6. '-मुपानयेत्' A. 7. 'शुभा' A-B. 8. '-परा' C. 9. '-धर्म-' C. 10. 'परा' C. 11. 'भवति शु-' A-B. 12. 'योग-' A. 13. 'संपूज्य' A-B

समयाचारसम्पन्नो भूतशुद्धिं विचिन्तयेत् ।
कल्पना[1]शुद्धभावेन सर्वसिद्धिं लभेत्तु सः ॥ २३ ॥
सदानन्दमयो भूत्वा पञ्चमीं यो विचिन्तयेत् ।
पञ्चतत्त्वपरिज्ञानादमरत्वं लभेन्नरः ।
कारणानन्दरूपेण पञ्चमीं समुपासयेत् ॥ २४ ॥

[ पञ्चतत्त्वस्य ब्रह्मादिरूपत्वम् ]

पञ्च[2]तत्त्वात्मकं पञ्च ब्रह्माद्याः पञ्च देवताः ।
तथैव शक्तयः पञ्च पञ्चतत्त्वेन पञ्चमी[3] ।
पञ्च[4]कूटप्रकारेण त्रिकूटा वाग्भवादितः ॥ २५ ॥

[ अथ पञ्चमी, तत्र वाग्भवकूटम् ]

स्मरो योनिर्माया क्षिति[5]रथ कलालाञ्छित[6]शिरो-
महादेवो वह्निर्विरचिततनुः[7] शून्यघटितः ।
इदं [8]गुह्यं बीजं सकलकविताकारणपरं
नरो लब्ध्वा जप्त्वा सुरगुरुसमानः स भवति[9] ॥ २६ ॥

२६ । तत्र प्रथमं पञ्चमी त्रिपुरा श्रीः स्यादिति योगिनीहृदयद्वितीयपटलोक्तायाः पञ्चम्याः श्रीविद्यायाः कूटपञ्चकघटितपञ्चविंशत्यक्षरमन्त्रमभिदधानः प्रथमं वाग्भवकूटं निर्वक्ति—स्मर इत्यादिना । स्मरः ककारः, योनिरेकारः, माया ईकारः, क्षितिर्लकारः एतेन क ए ई ल इति प्राप्तम् । अथेति, एतद्बीजचतुष्टयानन्तरमित्यर्थः । कलया ईकारेण लाञ्छितं शिरो यस्य तथाभूतो महादेवो हकारः, वह्नी रकारः, तथा शून्यघटितः शून्येन बिन्दुना घटितः युक्त इत्यर्थः । विरचिततनुरिति एभिरीकारहकाररकारबिन्दुभिर्विरचिता तनुर्यस्य तथाभूतः । एतेन ह्रीं इति लब्धम् । एवञ्च क ए ई ल ह्रीं इति प्रथमं वाग्भवकूटमिति फलितम् । व्यक्तमाह तन्त्रसारे—

कामं विष्णुयुतं देवि शक्तिर्मायेन्द्र एव च ।
महामाया ततः पश्चाद् वाग्भवं बीजमुद्धरेत् ॥

इति । स्पष्टमन्यत् ।

1. '-मा ?-' A. 2. '-भूता-' 3. '-मीम्' A. 4. 'तत्त्व-' A-B. 5. '-नख-' ? C. 6. '-शरो' A. 7. '-नुस्त-' ?' C. 8. 'बीजं गुह्यं' C. 9. '-तु ?' C.

एतद् वाग्भवबीजमेवमुदितं

[ कामराजकूटत्रयम् ]

वक्ष्यामि शेषं परं

शम्भुः सोमरवी मही भगवतीबीजं क्रमेणोच्चरेत्[1] ।

कन्दर्पारिरवीशशक्रमुदितं बीजं भवान्याः परं

[2]कामं शम्भुसमीरणेन्द्रगिरिजाबीजं क्रमेणोद्धरेत्[3] ॥२७॥

---

२७। एवं वाग्भवकूटमभिधाय कूटत्रयात्मकं कामराजं वक्तुमुपक्रमते—एतदित्यादिना। एतदिति पूर्ववचनेन वाग्भवकूटमुदितमिति सम्बन्धः। शेषमिति कामराजकूटं वक्ष्यामीत्यर्थः। तत्र कामराजस्य कूटत्रयघटितस्य प्रथमं कूटं निर्वक्ति—शम्भुरित्यादिना। शम्भुर्हकारः, सोमः (चन्द्रबीजं) सकारः, रविः ककारः, मही (पृथ्वीबीजम्) लकारः, भगवती (मायाबीजम्) ह्रीम्। एवञ्च ह स क ल ह्रीमिति कामराजस्य प्रथमं कूटम्। व्यक्तमाह तन्त्रसारे—

वियच्चन्द्रस्ततः पश्चात् क-लौ नकुलि वह्नि च।
मायास्वरेण संयुक्तं नादबिन्दुकलान्वितम्।
प्रथमं कामराजस्य कूटं परमदुर्लभम्॥ इति।

द्वितीयं कूटमाह—कन्दर्पेति। कन्दर्पारिः (शिवः) हकारः, रविः ककारः, ईशो हकारः, शक्रो लकारः, परमिति अतः परं भवान्या बीजं ह्रीमिति। एवञ्च ह क ह ल ह्रीमिति द्वितीयं कूटमिति फलितम्। व्यक्तमाह तन्त्रसारे—

वियद्विष्णुयुतं कामो हंसः शक्रस्ततः परम्।
महामाया ततः पश्चात् स्वप्नावतीति कथ्यते॥ इति।

इदं कामराजद्वितीयकूटमेव स्वप्नावती विद्येत्येतदपि तन्त्रसारवचनादस्मादवगन्तव्यम्। स्वयमप्यग्रे वक्ष्यते।

तृतीयं कूटमाह—काम इत्यादिना। कामः ककारः, शम्भुः हकारः, समीरणो यकारः, इन्द्रो लकारः, गिरिजाबीजं ह्रीम्। एवञ्च क ह य ल ह्रीमिति तृतीयं कूटमिति फलितम्। व्यक्तमाह तन्त्रसारे—

---

1. '-द्धरेत्-' C. 2. 'कामः' A-B. 3. '-च्यते' A-B.

[ एतत्कूटत्रयजपफलम् ]

एतद्बीजवरं त्रिकूटघटितं श्रीकामराजाभिधं[1]
जप्त्वा देवमुनीन्द्र[2]वृन्दसकलो लोकत्रये राजते ।

[ शक्तिकूटम् ]

वक्ष्येऽन्यत् परमं समस्तजगतामेकाधिपं कामदं
शम्भुं मन्मथ[3]शक्रसोमसहितं देवीं क्रमेणोद्धरेत् ॥२८॥

[ अस्याः प्रकर्षः ]

[4]एषा श्रीत्रिपुरा परा हितकरी विद्यार्थसिद्धोदया
रक्ते मानसपङ्कजे विशतु मे कामासनाधिष्ठिते ।

---

मादनं शिवबीजञ्च वायुबीजं ततः परम् ।
इन्द्रबीजं ततः पश्चान्महामायां समुद्धरेत् ॥ इति ।

इदं तृतीयं कामराजकूटमेव मधुमती विद्येति अग्रे वक्ष्यते ।

२८। एतत्कूटत्रयघटितकामराजजपफलमाह—एतदित्यादि । एवं कूटचतुष्टयमभिधाय पञ्चमं शक्तिकूटमाह—वक्ष्येऽन्यदित्यादिना । शम्भुः हकारः, मन्मथः ककारः, शक्रो लकारः, सोमः ( चन्द्रबीजं ) सकारः, देवी ( मायाबीजं ) ह्रीम् । एवञ्च ह क ल स ह्रीमिति पञ्चमं कूटमिति । व्यक्तमाह तन्त्रसारे—

शिवबीजं ततः काममिन्द्रं देवीं नियोजयेत् ।
महामायां ततः पश्चाच्छक्तिकूटं समुद्धरेत् ॥ इति ।

अत्रेदमवधेयम्—पञ्चविंशत्यक्षरात्मकोऽयं मन्त्रः पञ्चकूटात्मकः । अत्र कूटशब्दः समूहार्थकः वैशेषिकादीनां कारणकूटादिशब्दवत् । तथा च प्रथमं निरुक्तपञ्चाक्षरात्मकं वाग्भवकूटम्, द्वितीयं निरुक्तपञ्चदशाक्षरात्मकं कामराजकूटम्, तृतीयं निरुक्तपञ्चाक्षरात्मकं शक्तिकूटमिति समष्ट्या चैतेषां मन्त्रोऽयं पञ्चविंशत्यक्षरो भवति । तदुक्तं तन्त्रसारधृतकुलोड्डीशे गन्धर्वतन्त्रे तृतीयपटले च—

वाग्भवं प्रथमं कूटं शक्तिकूटञ्च पञ्चमम् ।
मध्यकूटत्रयं देवि कामराजं मनोहरम् ॥ इति ।

साधकानां सुखबोधाय रेखापातेन कूटानामेतेषां संस्थानं प्रदर्श्यते—

---

1. '-बीजादिभिः' A-B. 2. '-ब्रह्म-' ? A-B. 3. '-सोमशक्र-' A-C. 4. 'एषे'त्यादिपादद्वयं A-पुस्तके नास्ति ।

ब्रह्मानन्तपुरारिमौलिमुकुटप्रोद्दाम[1]मुक्तावली-
राजश्रीचरणारविन्दयुगला पूर्णेन्दुशुभ्राननां ॥ २९ ॥
विद्याचूडामणिः प्रोक्ता सर्वतन्त्रेषु दुर्लभा ।
पञ्चकूटात्मिका विद्या पञ्चपञ्चाक्षरी भवेत् ॥ ३० ॥

[ कामराजकूटे विशेषः ]

कूटभेदेन वक्ष्यामि कामराजं सुदुर्लभम् ।
ज्ञात्वा[2] यत् साधयेन्नित्यमसाध्यमपि भूतले ॥ ३१ ॥
सौभाग्यं प्रथमं कूटं महामाङ्गल्यदायकम् ।
त्रिकूटं पदरूपेण काम[3]राजं महत्पदम् ।
एवं कूटत्रयेणापि विद्या सौभाग्य[4]रूपिणी ॥ ३२ ॥

[ पञ्चविंशत्यक्षरी प्रथमा पञ्चमी ]

| वाग्भव-कूटम् १ | कामराज-कूटम् २ | ३ | ४ | शक्ति-कूटम् ५ |
|---|---|---|---|---|
| क | ह | ह | क | ह |
| ए | स | क | ह | क |
| ई | क | ह | य | ल |
| ल | ल | ल | ल | स |
| ह्रीं | ह्रीं | ह्रीं | ह्रीं | ह्रीं |
| | | स्वप्नावती | मधुमती | |

३१—३२। पूर्वं यत् कामराजकूटत्रयमुक्तं तत्र प्रकारान्तरमाह—सौभाग्य-मित्यादिना। सौभाग्याया इदं सौभाग्यं शाक्तलोपामुद्राया वक्ष्यमाणायाः प्रथमं कूटमित्यर्थः। रेखान्यासेनायं मन्त्रः प्रदर्श्यते—एतेन ह स क ल ह्रीमिति कामराजस्य प्रथमं कूटम्। त्रिकूटमिति। अत्र त्रिशब्दस्तृतीयार्थकः। तथाच वाग्भवकूटमपेक्ष्य तृतीय-

1. '-दीप्ता-' C. 2. 'ज्ञात्वे'त्यादिपादषट्कं A-पुस्तके नास्ति। 3. '-बीजं' C. 4. '-सुन्दरी' C.

[1]एषा तु पञ्चकूटेन नित्यं कूटत्रये स्थिता[2] ।
दुर्लभा सर्वलोकेषु [3]सर्वसौभाग्यसुन्दरी ॥ ३३ ॥

[ कामराजमध्यमकूटजपफलम् ]

एतस्या एव विद्याया मध्यकूटस्य मध्यमम् ।
जप्त्वाऽऽनन्दमयो भूत्वा सर्वकाममुपालभेत् ॥ ३४ ॥
एषा स्वप्नावतीनाम्नी [4]विद्या त्रैलोक्यदुर्लभा ।
आकर्षणकरी विद्या [5]चित्ताह्लादनकारिणी ॥ ३५ ॥

[ मधुमती ]

[6]स्वप्नावत्या अन्तकूटं मधुमतीति कथ्यते ।
महाभोगकरी विद्या महासिद्धिप्रदायिनी ॥ ३६ ॥
पञ्चकूटात्मिका विद्या पञ्चतत्त्वेन पञ्चमी ।

[ निरुक्तपञ्चम्याराधनफलम् ]

[7]यस्या आराधनं कृत्वा किं न सिध्यति भूतले ॥ ३७ ॥

---

[ प्रकारान्तरम् ]

कूटपदरूपेण महत्पदं कामराजं प्रयुञ्जीतेत्यर्थः। महत्पदमित्यनेन कूटस्यास्य षडक्षरत्वं सूचितम्। तेन ह स क ह ल ह्रीमिति तृतीयकूटम्। एवञ्चास्य षडक्षरघटितत्वात् पञ्चमं शक्तिकूटं कामराजविद्यावत् स क ल ह्रीमिति चतुरक्षरम्। प्रथमं कूटं चतुर्थकूटञ्च पूर्ववत्। इत्यपरो भेदः।

| वाग्भव-कूटम् | कामराज-कूटम् | | | शक्ति-कूटम् |
|---|---|---|---|---|
| क<br>ए<br>ई<br>ल<br>ह्रीं | ह<br>स<br>क<br>ल<br>ह्रीं | ह<br>स<br>क<br>ह<br>ल<br>ह्रीं | क<br>ह<br>य<br>ल<br>ह्रीं | स<br>क<br>ल<br>ह्रीं |

---

1. 'एका' B. 'एकान्तं ?' A. 2. अतः परं A-पुस्तके 'दुर्लभा सर्वलोकेषु सर्वसौभाग्यसुन्दरी। एतस्या एव विद्याया मध्यकूटत्रये स्थिता ॥' इति पादचतुष्टयं दृश्यते, परन्तु B-C-पुस्तकयोरनुक्तत्वादधःपादचतुष्टयेन पुनरुक्ततया प्रतिभानाच्च तन्न मूले निवेशितम्। 3. 'महा-' C. 4. 'त्रैलोक्यदुर्लभा भवेत्' A-B. 5. 'महासिद्धिप्रदायिनी' A-B. 6. 'स्वप्ने-' त्यादिपादचतुष्टयं A-पुस्तके नास्ति। 7. 'अस्यामा-' ? C.

प्रवेशः परकायस्य कामरूपधरो भवेत् ।
अञ्जनं गुटिकादिश्च या या विद्या सुदुर्लभा ॥ ३८ ॥
विदिता[1] जायते तस्य साधकः खेचरो भवेत् ।
अणिमासिद्धयः सन्ति वश्या भवन्ति देवताः ॥ ३९ ॥
सिंहव्याघ्रादयो ये ये नागयक्षाः पतत्रिणः ।
दूरादेव पलायन्ते दर्शनात् साधकस्य च ॥ ४० ॥
शिवतुल्यो भवेन्मन्त्री नित्यं तदनुकम्पया ।
जीवन्मुक्तः साधकेन्द्रः कर्ता हर्ता भवेद्दिवि ॥ ४१ ॥
त्रैलोक्यदुर्लभा विद्या सर्वपक्षेषु पञ्चमी[2] ।
एकाक्षरेण कथितं ब्रह्मविद्यैव केवलम् ॥ ४२ ॥
या शक्तिः सर्वभूतेषु जगच्चैतन्यरूपिणी ।
सा देवी पञ्चमी विद्या सर्वाधारस्वरूपिणी ॥ ४३ ॥
तस्या भेदाश्च बहवस्तेजांसि च गुणा[3]स्तथा ।
नान्यत् परतरं किञ्चिद् विद्यते भुवनत्रये ॥ ४४ ॥
पुंसां रूपं स्त्रिया[4] रूपं यच्चान्यद्रूपमुच्यते ।
सर्वं तत् परमं रूपं तस्या एव न संशयः ॥ ४५ ॥

[ कालविशेषेण जपे फलविशेषः ]

[5]महाभूतदिने नक्तं श्मशाने यदि साधकः ।
सहस्रैकप्रमाणेन किं न सिध्यति भूतले ॥ ४६ ॥
यो जपेत् पञ्चमीं विद्यां परां त्रैलोक्यदुर्लभाम् ।
योगात्मा स भवेन्मुक्तो नानाभोगेन केवलम् ॥ ४७ ॥

1. '-तं' A. 2. -'मीं ?' C. 3. 'अपि' C. 4. 'स्त्रियो' C. 5. 'महेत्या'दि-पादद्वयं A-पुस्तके नास्ति ।

अभ्यासादब्दमात्रेण [1]सुसिद्धः साधको भवेत् ।

[ अस्या रहस्यत्वम् ]

यस्मै कस्मै न दातव्या विद्या परमदुर्लभा ॥ ४८ ॥

[ सच्छिष्याय प्रतिपाद्यत्वम् ]

कुलीनाय विशुद्धाय गुरुदेवपराय[2] च ।
दातव्या पञ्चमी विद्या पुत्राय प्राणदाय च[3] ॥ ४९ ॥

[ मन्त्रान्तरं तत्र शक्तिकूटे विशेषः ]

[4]अथान्यत् संप्रवक्ष्यामि शक्तिकूटं महाशुभम् ।
परमानन्दनिर्वाहं कुलोड्डीशे प्रकाशितम् ॥ ५० ॥
प्राण[5]जीवं समुद्धृत्य काम[6]बीजं समुद्धरेत् ।
तदधः शक्रबीजन्तु [7]योजयेद् भुवनेश्वरीम् ॥ ५१ ॥

[ अत्र वाग्भव-कामराजकूटव्यवस्था ]

वाग्भवं पूर्वमुदितं कामराजं[8] त्रयात्मकम् ।
एषा विद्या महाविद्या धर्मकामार्थमोक्षदा ॥ ५२ ॥

---

५०-५२। अथेदानीं कुलोड्डीशमतानुसारेण शक्तिबीजमाह—अथान्यदिति। प्रागुक्तायाः पञ्चकूटात्मिकायाः पञ्चमकूटं शक्तिकूटमिति पूर्वमुपदर्शितम्, इदानीं तस्यैव शक्तिकूटस्य प्रस्थानान्तरमनेन प्रदर्श्यते। एवञ्च शक्तिकूटस्य द्वैविध्येन मन्त्रस्यापि द्वैविध्यमवगन्तव्यम्। तमेव शक्तिकूटस्य भेदमाह—प्राणेत्यादिना। प्राणो हकारः, जीवः सकारः, कामबीजं ककारः, इन्द्रबीजं लकारः, भुवनेश्वरी ह्रीँ। एवञ्च ह स क ल ह्रीँ इति द्वितीयं शक्तिकूटम्।

---

1. 'सर्वज्ञः' C. 2. '-रताय' C. 3. 'वा' C. 4. 'अथान्यदि'त्यादिः 'पुरुषार्थफलप्रदे'त्यन्तोऽंशः A-पुस्तके नास्ति। 5. '-ब्रीजं' C. 6. '-राजं' A-B. 7. 'यो जपेद्' B. 8. 'ज-' B,

[ मतान्तरम् ]

अपरञ्च प्रवक्ष्यामि कुलामृतमतं परम् ॥ ५३ ॥

[ तत्र कामराजकूटे विशेषः ]

एतस्यामेव विद्यायां मधुमत्यास्तु मध्यमम् ।
त्यक्त्वा समीरणं जीवं योजयेत्[1] साधकोत्तमः ।
एषा गुह्या परा ज्ञेया पुरुषार्थफलप्रदा ॥ ५४ ॥

[ मन्त्रान्तरम् ]

अथापरं शक्तिकूटं वक्ष्यामि सर्वदुर्लभम् ।
सारात् सारतरं कूटं श्रीक्रमे तु प्रकाशितम् ॥ ५५ ॥

---

अनेन द्वितीयशक्तिकूटेन मन्त्रस्य पञ्चकूटत्वसम्पादनपरिपाटीमाह — वाग्भवमित्यादिना । तथा चात्राऽपि पूर्ववत् प्रथमं वाग्भवकूटम्, ततः कामराजकूटत्रयम्, ततो निरुक्तशक्तिकूटमिति पञ्चकूटात्मकत्वमस्य मन्त्रस्य सिद्धम् । तच्छक्तिकूटभेदभिन्नेयं द्वितीया पञ्चमी विद्येत्यवधेयम् । तदेतद्रेखापातेन प्रदर्श्यते—

[ प्रकारान्तरम् ]

| वाग्भव-कूटम् | कामराज-कूटम् | | | शक्ति-कूटम् |
|---|---|---|---|---|
| क | ह | ह | क | ह |
| ए | स | क | ह | स |
| ई | क | ह | य | क |
| ल | ल | ल | ल | ल |
| ह्रीं | ह्रीं | ह्रीं | ह्रीं | ह्रीं |
| | | ह्रस्वावती | मधुमती | |

अत्र वाग्भवकूटं कामराजकूटत्रयञ्च पूर्ववत् । शक्तिकूटं पूर्वतो भिन्नरूपम्, एवञ्च शक्तिकूटभेदेनैवास्याः पूर्वतो भेद इत्यवधेयम् ।

५३-५५ । अन्यादृशीं पञ्चमीं कुलामृतानुसारेण निरूपयति—अपरञ्चेत्यादिना । एतस्यामिति । एतस्यां पञ्चकूटात्मिकायां विद्यायां मधुमत्याः कामराजतृतीयकूटस्येत्यर्थः, मध्यमं क ह य ल ह्रीमित्यक्षरपञ्चकानां मध्यभूतं समीरणं वायुबीजं यकारं त्यक्त्वा तत्र जीवं सकारं योजयेदित्यर्थः । तेन क ह स ल ह्रीमिति पर्यवस्यति । एवञ्च शक्तिकूटद्वैविध्येन द्विविधायाः पञ्चम्याः कामराजतृतीयकूटमध्यभूतयकारस्थाने सकारयोजनात् पुनर्द्वैविध्येन समष्ट्या चातुर्विध्यं सिद्धम् । यथा—

५५-५७ । पञ्चकूटात्मकमन्त्रघटकं शक्तिकूटमन्यादृशं श्रीक्रमसंवादेनाह—अथेति ।

---

1. 'यो जपेत्' B.

[ तत्र शक्तिकूटे विशेषः ]

द्विजराजस्ततः प्राणो मादनं तदनन्तरम् ।
[1]इन्द्रबीजं शिवः पश्चान्मृगात्मा तदनन्तरम् ॥ ५६ ॥
वामनेत्रेन्दुनादेन बिन्दुना परिमण्डितम् ।

[ वाग्भवकामराजकूटव्यवस्था ]

वाग्भवं पूर्वमुदितं कामराजं त्रिकूटकम् ॥ ५७ ॥

[ प्रकारान्तरम् ] [ प्रकारान्तरम् ]

| वाग्भव-कूटम् | कामराज-कूटम् | | | शक्ति-कूटम् | वाग्भव-कूटम् | कामराज-कूटम् | | | शक्ति-कूटम् |
|---|---|---|---|---|---|---|---|---|---|
| क | ह | ह | क | ह | म | ह | ह | क | ह |
| ए | स | क | ह | क | ए | स | क | ह | स |
| ई | क | ह | स | ल | ई | क | ह | स | क |
| ल | ल | ल | ल | स | ल | ल | ल | ल | ल |
| ह्रीं | ह्रीं | ह्रीं | ह्रीं | ह्रीं | ह्रीं | ह्रीं | ह्रीं | ह्रीं | ह्रीं |

द्विजराज इति । द्विजराजः सकारः, प्राणो हकारः, मादनं ककारः, इन्द्रबीजं लकारः, एतेन स ह क ल इत्यक्षरचतुष्टयं प्राप्तम् । पश्चात् शिवो हकारः, मृगात्मा रकारः वामनेत्रेण दीर्घेणेकारेण इन्दुनादेन अर्द्धचन्द्राकारेण तदुपरि स्थितेन बिन्दुना च परिमण्डितः एतेन ह्रीमिति लब्धम् । एवञ्च कल्पेऽस्मिन् स ह क ल ह्रीमिति शक्तिकूटम् । तदुक्तं तन्त्रसारे—

"जीवप्राणौ महेशानि मादनं तदनन्तरम् ।
इन्द्रबीजं ततः पश्चाद् भुवनेशी तु पञ्चमम् ॥
इति वा शक्तिकूट"मिति ।

वाग्भवमिति । निरुक्तशक्तिकूटात् प्राक् पूर्ववद् वाग्भवकूटं कामराजकूटत्रयञ्च योजयेदित्यर्थः । एतदेव रेखापातेन प्रदर्श्यते—

[ प्रकारान्तरम् ]

| वाग्भव-कूटम् | कामराज-कूटम् | | | शक्ति-कूटम् |
|---|---|---|---|---|
| क | ह | ह | क | स |
| ए | स | क | ह | ह |
| ई | क | ह | य | क |
| ल | ल | ल | ल | ल |
| ह्रीं | ह्रीं | ह्रीं | ह्रीं | ह्रीं |

1. 'इन्द्रे'त्यादिपादद्वयं A-पुस्तके नास्ति ।

एवं श्रीपञ्चमी विद्या पञ्चपञ्चाक्षरी भवेत् ।
सर्वेषां दुर्लभा विद्या महामोक्षप्रदायिनी ।
अतियत्नेन गोप्तव्या मातृमैथुनवत् सदा ॥ ५८ ॥

[ एकाक्षरमन्त्रनिरूपणप्रतिज्ञा ]

अथ वक्ष्यामि तां विद्यां तुर्यां त्रिपुरसुन्दरीम् ।
प्रभुत्वं शम्भुना प्राप्तं यस्या [1]ध्यानप्रसादतः ॥ ५६ ॥

[ एकाक्षरमन्त्रः ]

कामेशीमादिहीनां तदनु परिगतं शान्तिदस्योर्द्ध्वषष्ठं
सूक्ष्मान्तान्तादियुक्तं शिरसि शशिकलाबिन्दुना लाञ्छितञ्च[2] ।
एतच्छ्रीमन्त्रराजं सकल-[3]लिपिमयं गुह्यगुह्यातिगुह्यं
साक्षाद् ब्रह्मस्वरूपं हरिहरमुनिभिः सेवितं सर्वसारम् ॥६०॥

[ अस्य प्रशस्तिरप्रकाश्यत्वञ्च ]

सेयं श्रीब्रह्मविद्या त्रिभुवनजननी सर्वकर्मोदया या
सर्वेषां जीवभूता सकलगुणमयी देवदेवैकवन्द्या ।

---

५८। पञ्चम्या एतेष्वेवान्तर्गता अपरे भेदाः एकादशे शाक्तपञ्चमीविद्यानिरूपणावसरे स्फुटं प्रदर्शयिष्यन्ते ।

५६। तुर्यां तुरीयचैतन्यस्वरूपाम् ।

६०। अथ श्रीमत्त्रिपुरसुन्दर्या एकाक्षरमन्त्रमाह—कामेशीमिति। कामेशीं कामेशीतिपदमित्यर्थः 'आदिहीनाम् आकारादियावद्वर्णरहिताम् एतेन 'क्' इति प्राप्तम् । शान्तिदस्येति। शान्तिदः शिवो हकार इत्यर्थः, तस्य ऊर्द्ध्वषष्ठं विलोमतः षष्ठवर्णं लकारं एतेन क्ल इति प्राप्तम् । ततश्च सूक्ष्मान्तान्तादियुक्तं सूक्ष्मं ह्रस्वेकारः, तस्यान्तो दीर्घेकारः तस्यान्त उकारस्तस्यादिर्दीर्घेकारस्तद्युक्तम् एवञ्च सूक्ष्मान्तान्तादियुक्तमित्यस्य दीर्घेकारयुक्तमित्यर्थः । एतेन 'क्ली' इति प्राप्तम् । शिरसि शिरःप्रदेशे शशिकलया अर्द्धचन्द्रेण बिन्दुना च लाञ्छितं बीजं लिखेदित्यर्थः । एतेन क्लीँ इत्येकाक्षरो मन्त्र इति पर्यवस्यति ।

[एकाक्षरो मन्त्रः]




---

1. 'देव्याः प्र-' C. 2. '-नादाङ्कितञ्च' B. 3. 'रिपु-' ? A.

सर्वाम्नायैः प्रपूज्या सकलहितकरी सर्वमन्त्रैकसारा
गोप्या सर्वैः प्रयत्नादभिमतफलदा नैव वाच्या परस्मिन् ॥६१

यस्मै कस्मै न वक्तव्यं मन्त्रराजं सुदुर्लभम् ।
मातृमैथुनवन्नित्यं गोपयेत् साधकोत्तमः ॥ ६२ ॥
अतिगुह्यतरं मन्त्रं सर्वशास्त्रेषु [1]गोपितम् ।

[ अस्य प्रामाणिकतन्त्रसंवादित्वम् ]

श्रीक्रमे च महातन्त्रे शिवेन परिकीर्त्तितम् ॥ ६३ ॥

[ स्वरूपम् ]

सिद्धिदा निर्मला [2]शान्ता त्रैलोक्यवशकारिणी ।
केवला चित्कला नित्या नित्यानन्दस्वरूपिणी ॥ ६४ ॥

[ पुनरस्य सर्वथा रहस्यत्वाभिधानम् ]

अप्रकाश्या महाविद्या गोपनीया प्रयत्नतः ॥ ६५ ॥
विद्यया सह [3]मर्त्तव्यो यदीच्छेदात्मनो हितम् ।
वरं पुत्रं धनं राज्यं देयं [4]नेयं कदाचन ॥ ६६ ॥

[ अस्य मन्त्रस्य सच्छिष्याय प्रतिपादनं तत्क्रमश्च ]

यदि जन्मसहस्रेण शिष्येण सेवितो गुरुः ।
तदा ज्ञात्वा कुलीनाय शिष्याय प्राणदाय च ॥ ६७ ॥
सिन्दूररजसा वापि कुङ्कुमेन विलेपिते ।
लिखित्वा दर्शयेद् भूमौ न च कर्णे प्रकाशयेत् ॥ ६८ ॥

---

६१। सर्वाम्नायैरिति । पूर्वादिसकलाम्नायैरित्यर्थः । अन्ये मन्त्रभेदा आम्नायभेदभिन्नाः । अयन्तु सर्वाम्नायप्रतिपादित इत्यस्य विशेष इति ध्येयम् । परस्मिन्निति परशिष्ये । परशिष्याय विद्येयं न वाच्येत्यर्थः ।

६६। नेयमिति । इयं विद्या कदाचन न देयेत्यर्थः ।

---

1. 'दुर्लभम्' C. 2. 'विद्या' C. 3. '-मन्तव्या' ? A-B. 4. '-नेकं' ? C.

प्रकाशात् सिद्धिहानिः स्यात् क्रुद्धा भवति सुन्दरी ।

[ एतन्मन्त्रप्रतिपादनानन्तरं गुरोः कर्तव्यम् ]

ततः स्वात्मविशुद्ध्यर्थं लक्षमेकं जपेद् गुरुः ॥ ६९ ॥

[ एतन्मन्त्रदीक्षितस्य विद्यान्तराराधनप्रतिषेधः ]

[1]अस्याऽऽराधनमाचर्य नान्यस्याऽऽराधनं चरेत् ।
[2]अन्यसंस्मरणाद्दुःखं योगिनीशापमालभेत् ॥ ७० ॥
अपमृत्युर्भवेत्तस्य मृते तु नरकं व्रजेत् ।

[ एतन्मन्त्राराधनफलम् ]

किमधिकं परं साध्यमस्याः सर्वत्र यद् भवेत् ॥ ७१ ॥
अस्याराधनमात्रेण सर्वसिद्धिं लभेद् यतः[3] ।
अनया सदृशं ज्ञानं सर्वतन्त्रेषु दुर्लभम् ॥ ७२ ॥

[ अस्याः कूटत्रयविभागः ]

आद्यन्तु वाग्भवं बीजं द्वितीयं कामराजकम् ।
तृतीयं शक्तिकूटं स्यात्त्र्यक्षरी त्रिपुरा परा ॥ ७३ ॥
[4]दुर्लभो मन्त्रराजस्तु[5] प्रोक्तो[6] बीजत्रयात्मकः ।

[ अस्या अनन्यसाधारण्यम् ]

अनया सदृशी विद्या नास्ति लोकत्रये यतः ॥ ७४ ॥

[ अस्य मन्त्रस्य देवता ]

अनन्तसुन्दरीनाम्नी भुक्तिमुक्तिप्रदायिनी ।

---

७३। एकाक्षरस्याप्यस्य मन्त्रस्य त्रिकूटात्मकत्वमुपपादयति—आद्यन्त्वित्यादिना। तथा च, क् इति वाग्भवकूटम्, ल् इति कामराजकूटम्, ईँ इति शक्तिकूटमित्यनया रीत्या त्रिकूटत्वमस्य मन्त्रस्य सिद्धम् ।

---

1. 'तस्या-' B. 2. 'अन्यस्याः स्म-' A. 3. इतः परं A-B-पुस्तकयोः 'अनया सदृशी विद्या नास्ति लोकत्रये यतः' । इत्यधिकः पाठो दृश्यते, परन्तु 'अनया सदृशं ज्ञानम्' इत्यनेन पुनरुक्ततया प्रतीतेः एतदधःश्लोकद्वयात् परं C-पुस्तकेऽस्य पादद्वयस्य निवेशदर्शनाच्चायमंशोऽस्माभिस्तत्रैव निवेशनीयः । 4. 'दुर्लभं' A. 5. '-न्तु' A. 6. '-क्तं' A.

[ अस्याः पञ्चदशाक्षरादिसर्वविद्यात्मकत्वम् ]

[1]एषा पञ्चदशी देवी सौभाग्यैषा च पञ्चमी ॥ ७५ ॥
एषा स्वप्नावती चैव एषा मधुमती तथा ।
एषा तत्त्वपरा ज्ञेया सप्तविंशाक्षरी तथा ॥ ७६ ॥

[ मन्त्रार्थः ]

सूर्याख्यः परमज्योतिर्मांसात्मा पाकशासनः ।
कामकला तुरीया च[2] शक्तिस्तु सार्द्धमातृका ॥ ७७ ॥
नादे [3]दीप्तिस्त्रयो देवा बिन्दुर्ब्रह्मस्वरूपधृक्[4] ।

[ अस्या ब्रह्मविद्यास्वरूपत्वम् ]

[5]एकाक्षरेण कथिता ब्रह्मविद्यैव केवला ॥ ७८ ॥
या शक्तिः सर्वभूतेषु जगच्चैतन्यकारिणी ।
ज्योतीरूपेण सा देवी परंतेजःस्वरूपिणी ॥ ७९ ॥
रक्तश्वेतहरिद्वर्णकृष्णनीलाभ्ररोचिषः ।
वर्णानि विविधान्येव तस्या भेदानि तत्त्वतः ॥ ८० ॥
तस्या भेदान्यनेकानि तेजांसि च गुणानि च ॥ ८१ ॥
स्थूलसूक्ष्मा[6]विभेदेन परंब्रह्मस्वरूपिणी ।
सैव विश्वेश्वरी देवी स्वतः कैवल्यदायिनी ॥ ८२ ॥

---

७५। अनन्तेति। अस्य मन्त्रस्यानन्तसुन्दरी देवतेत्यर्थः। अस्या विद्यायाः सर्वविद्यात्मकत्वमाह—एषा पञ्चदशीत्यादिना ।

७७-७८। एतन्मन्त्रार्थमाह—सूर्याख्य इति। सूर्याख्यः ककारः परमज्योतिःस्वरूपः। मांसात्मा लकारः पाकशासनो वह्निस्वरूपः कामकलेति सार्द्धमातृकातुरीयाशक्तिरीकारः कामकलास्वरूपेत्यर्थः ।

८०—८१। अत्र भेदानि गुणानि इति पुंलिङ्गप्रयोग आर्षः ।

---

1. 'एषेत्या'दि पादषट्कं A.-पुस्तके नास्ति। 2. '-येति' C. 3. 'सन्ति त्र-' A. 4. '-कः' C. 5. 'एकाक्षरेणे'त्यादि'देशिकोत्तमैरि'त्यन्तोंऽशः A-पुस्तके नास्ति। 6. '-प्र-' B.

[ एतन्मन्त्राक्षररहितानां विद्यानां सिद्धिप्रतिबन्धकत्वम् ]

या या विद्याः समुद्दिष्टा एतदक्षरवर्जिताः ।
सामान्याः सिद्धिरहिता ज्ञातव्या [1]देशिकोत्तमैः ॥८३॥

[ अस्याः स्वरूपम् ]

एवमेषा समुत्पन्ना महात्रिपुरसुन्दरी ॥ ८४ ॥
[2]अस्या देव्याश्च यद्रूपमुदयास्तविवर्जितम् ।
तस्या रूपञ्च तज् ज्ञेयं जगद् व्याप्य विजृम्भते ॥८५॥

[ एकादशाक्षरी विद्या ]

स्मरः शक्रो माया रविहरसुरेन्द्राः परशिवा[3]
शिवाद्यं ब्रह्मेन्द्रस्मरहरलता[4]बीजमपरम् ।
इमं मन्त्रं गुह्यं सकल[5]कविताकारणपरं[6]
नरो जप्त्वा सिद्धः प्रभवति महामोक्षपदवीम् ॥ ८६ ॥

---

८६ । अथ कूटत्रयात्मिकामेकादशाक्षरीं विद्यामभिदधानः प्रथमं वाग्भवकूटमाह—स्मरः शक्रो मायेति पदत्रयेण । स्मरः ककारः, शक्रो लकारः, माया ह्रीं । एवञ्च क ल ह्रीमित्याद्यं वाग्भवकूटम् । व्यक्तमाह तन्त्रसारे—

मादनं गोत्रभित् सान्तो रेफवामाक्षिचन्द्रवान् ।
नादबिन्दुसमायुक्तः कथितः परमेश्वरि ॥ इति ।

ततो द्वितीयं कामराजकूटमाह—रवीत्यादिना परशिवेत्यन्तेन । रविः ककारः, हरो हकारः, सुरेन्द्रो लकारः, परशिवा ह्रीँ । एवञ्च क ह ल ह्रीमिति द्वितीयमस्याः कामराजकूटम् । व्यक्तमाह तन्त्रसारे—

ब्रह्मा च गगनं शक्रो नकुलीशोऽनलस्तथा ।
मायाबिन्दुसनादेन कामराजं समुद्धरेत् ॥ इति ।

तृतीयं शक्तिकूटमाह—शिवाद्यमित्यादिना बीजमपरमित्यन्तेन । शिवाद्यमिति ।

---

1. 'साध-' C. 2. 'तस्या' A. 3. 'परशिवाः' B. 4. इतः प्रभृति अरिहेत्यन्तोऽंशः C-पुस्तके नास्ति । 5. '-कलिता' A. 6. '-पदं' A.

एषा विद्या महाविद्या कथितैकादशाक्षरी ।

[ एतन्मन्त्रजपफलम् ]

अरिहा सिद्धिदा नित्या त्रैलोक्ये चातिदुर्लभा ॥८७॥

[ अस्य रहस्यत्वम् ]

न देया यस्य कस्यापि गोपनीया प्रयत्नतः ।
दत्ते च सिद्धिहानिः स्यात् क्रुद्धा भवति सुन्दरी ॥८८॥

[ अनुगताय ज्येष्ठपुत्राय देयत्वम् ]

मनुर्विमृष्य दातव्यो ज्येष्ठपुत्राय धीमते ॥ ८९ ॥

[ तदन्यत्राप्रकाश्यत्वम् ]

सर्वदा गोपयेदेवं निर्वीर्यः स्यात् प्रकाशतः ।
तेन वीर्यवती विद्या भार्या कुलवधूरिव ॥९०॥

[ एतन्मन्त्रग्रहणफलम् ]

एतस्याः श्रुतिमात्रेण किं न सिध्यति भूतले ।

[ अस्य कीलितत्वादिसर्वदोषमुक्तत्वम् ]

शुद्धा सर्वत्र विज्ञेया सर्वदोषविवर्जिता ॥ ९१ ॥

---

शिवो हकारस्तदाद्यं सकारः, ब्रह्मा ककारः, इन्द्रो लकारः, स्मरहरेति स्मरहरः शिवस्तस्य लता शक्तिस्तद्रूपं बीजं ह्रीमिति मायाबीजमित्यर्थः । एवञ्च स क ल ह्रीमिति तृतीयमस्याः शक्तिकूटम् । तदुक्तं तन्त्रसारे—

शक्तिर्मादनशक्रश्च हरो वह्निश्च मायया ।
नादबिन्दुसमाक्रान्तः कथितः कामदो मनुः ॥

इति ।

तथा—

एषा विद्या महेशानि कथितैकादशाक्षरी ॥

इति ।

एतत्कूटत्रयसमष्टिरूपो मन्त्रो रेखापातेन स्फुटं प्रदर्श्यते—

[ एकादशाक्षरी ]

| वाग्भवकूटम् | कामराजकूटम् | शक्तिकूटम् |
|---|---|---|
| क | क | स |
| | ह | क |
| ल | ल | ल |
| ह्रीं | ह्रीं | ह्रीं |

[ चतुर्विंशत्यक्षरी विद्या ]

विद्यान्तरं प्रवक्ष्यामि चतुर्वर्गप्रदायकम्।

[ तत्र वाग्भवकूटम् ]

वाग्भवं गगनं हाद्यमुष्मा भौतिकबिन्दुमान् ॥ ६२ ॥
ज्योत्स्ना माया मादनेन्द्रमहामायासमन्वितम्।
एतत्तु वाग्भवं कूटं सर्व[1]पक्षेषु शोभनम् ॥ ६३ ॥

[ कामराजकूटम् ]

कामबीजं शिव[2]श्चन्द्रो ब्रह्मा शक्रः सुरेश्वरी।
[3]शुक्रात्मा भास्करोऽनन्तो देवराजः [4]शिवस्तथा ॥ ६४ ॥

[ शक्तिकूटम् ]

शक्त्य[5]क्षरं शिवात्मानं भृगुर्वह्नियुत[6]स्ततः।
मनुसर्गौ ततः शक्तिर्भानुरिन्द्रो महेश्वरी ॥ ६५ ॥

---

६२-६५। अथ कूटत्रयात्मिकां चतुर्विंशत्यक्षरीं विद्यामाह—विद्यान्तरमित्यादिना। तत्र प्रथमं वाग्भवकूटमाह—वाग्भवेति। वाग्भवं ऐँ, गगनं हकारः, हाद्यं हकारस्याद्यं सकारः, उष्मा रकारः, स च भौतिकबिन्दुमान् भौतिक ऐकारः बिन्दुर्नादबिन्दुः ताभ्यां युक्त इत्यर्थः। एतेन ऐँ ह स रैँ इति प्राप्तम्। टिप्पन्यान्तु ऐँ ह स् रैँ इति दृश्यते। ततश्च ज्योत्स्ना एकारः, माया ईकारः, मादनं ककारः, इन्द्रो लकारः, महामाया च ह्रीमिति। एवञ्च ऐँ ह स रैँ ए ई क ल ह्रीमिति आद्यमस्या वाग्भवकूटम् इत्येवाह—एतत्तु वाग्भवं कूटमित्यनेन।

ततः कामराजकूटमाह—कामबीजमित्यादिना। कामबीजं क्लीं, शिवो हकारः, चन्द्रः सकारः, ब्रह्मा ककारः, शक्रो लकारः, सुरेश्वरी ह्रीमिति। एवञ्च क्लीं ह स क ल ह्रीमिति द्वितीयमस्याः कामराजकूटमिति पर्यवस्यति।

ततः शक्तिकूटमाह—शुक्रात्मेति। शुक्रात्मा सकारः, भास्करः ककारः, अनन्त

---

1. 'प्रचुरदुर्लभम् ?' A. 2. '-तमं ?' A. 3. 'सूक्ष्मा-' A. 4. 'सुरेश्वरी' A. 5. '-क्षा-' A. '-त्त्या' C. 6. '-गं ततः' A.

[ एतन्मन्त्रप्रकर्षः ]

सृष्टिरूपा महाविद्या सारभूता महोदया ।
कथिता दुर्लभा विद्या परमानन्दरूपिणी ॥

[ अस्याः प्रामाणिकतन्त्रसंवादित्वम् ]

मन्त्रनिर्णयतन्त्रे च[1] शिवेन[2] परिकीर्त्तिता ॥ ९६ ॥

[ अष्टादशाक्षरी विद्या ]

अथान्तरं प्रवक्ष्यामि सारात् सारतरं महत् ।

[ तत्र वाग्भवकूटम् ]

वाग्भवं विजया माया ब्रह्मा शक्रश्च[3] पार्वती ॥ ९७ ॥

---

आकारः, देवराजो लकारः, शिवो हकारः, शक्त्यक्षरं सौः इति। एतैः स क आ ल ह सौः इत्यन्तं प्राप्तम् । ततश्च शिवात्मा हकारः, भृगुः सकारः, स च वह्निना रकारेण युतः तथा मनुरौकारः,सर्गो विसर्गः एतेन हस्रौः इति प्राप्तम् । ततश्च शिवः सकारः, भानुः ककारः, शक्रो लकारः, महेश्वरी ह्रीं एतैश्च स क ल ह्रीमिति प्राप्तम् । एवञ्च समष्ट्या स क आ ल ह सौः हस्रौः स क ल ह्रीमिति तृतीयमस्याः शक्तिकूटमिति पर्यवस्यति वह्नियुगन्ततः इति पाठे तु ह स र रौः इति मन्त्रः स्यात्। कूटत्रयविभाजकरेखापातेन समष्टिभूतोऽयं मन्त्रः प्रदर्श्यते—

[ सप्तविंशत्यक्षरी ]

| वाग्भवकूटम् | कामराजकूटम् | शक्तिकूटम् |
|---|---|---|
| ऐँ<br>ह<br>स<br>रैँ<br>ए<br>ई<br>क<br>ल<br>ह्रीं | क्लीं<br>ह<br>स<br>क<br>ल<br>ह्रीं | स<br>क<br>आ<br>ल<br>ह<br>सौः<br>ह<br>स्रौः<br>स<br>क<br>ल<br>ह्रीं |

९७-९९ । अथाष्टादशाक्षरीं विद्यामाह—अथान्तरमित्यादिना । तत्र प्रथमं वाग्भवकूटमाह—वाग्भवमित्यादिना पार्वतीत्यन्तेन । वाग्भवः ऐँ, विजया एकारः, माया ईकारः, ब्रह्मा ककारः, शक्रो लकारः, पार्वती ह्रीमिति । एवञ्च ऐँ ए ई क ल ह्रीमिति

---

1. '-पु-' A-B. 2. '-नेयं प्र-' C. 3. '-स्तु' C.

[ कामराजकूटम् ]

मन्मथं शिवशक्ती च [1]मदनो हर इन्द्रकः ।
महामाया

[ शक्तिकूटम् ]

ततो हाद्यं मनुसर्गविभूषितम् ॥ ९८ ॥
भृगुः प्रजापतिः शक्रो महामाया ततः परा ।
अष्टादशाक्षरी विद्या महात्रिपुरसुन्दरी ॥ ९९ ॥

[ विंशत्यक्षरी विद्या ]

सर्वान्ते हंससंयुक्ता [2]तदा विंशाक्षरी भवेत् ॥१००॥

---

वाग्भवकूटम् । द्वितीयं कामराजकूटमाह—मान्मथमित्यादिना महामायेत्यन्तेन । अत्र मान्मथं क्लीमिति, शिवो हकारः, शक्तिः सकारः, मादनः ककारः, हरो हकारः, इन्द्रो लकारः, महामाया ह्रीमिति । एवञ्च क्लीं ह स क ह ल ह्रीमिति कामराजकूटम् । तृतीयं शक्तिकूटमाह—तत इत्यादिना ततः परेत्यन्तेन । हाद्यं सकारः, तच्च मनुसर्गविभूषितं मनुना चतुर्दशस्वरेणौकारेण सर्गेण विसर्गेण च विभूषितम् । अनेन सौः इति प्राप्तम् । भृगुरित्यादि । भृगुः सकारः, प्रजापतिः ककारः, शक्रो लकारः, महामाया ह्रीमिति । एवञ्च सौः स क ल ह्रीमिति शक्तिकूटम् । इयं महात्रिपुरसुन्दरी । अत्र तत इत्येतत्पदद्वयं कूटविभाजकमित्यवगन्तव्यम् । रेखापातेनास्या अष्टदशाक्षरविद्यायाः कूटत्रयविभागः प्रदर्श्यते—

अष्टादशाक्षरी विद्या ( त्रिकूटा )

| वाग्भवकूटम् | कामराजकूटम् | शक्तिकूटम् |
|---|---|---|
| ऐँ | क्लीं | सौः |
| ए | ह | स |
| ई | स | क |
| क | क | ल |
| ल | ह | ह्रीं |
| ह्रीं | ल | |
| | ह्रीं | |

१०० । विंशत्यक्षरीं विद्यामाह—सर्वान्त इति । येयमष्टादशाक्षरी विद्या प्रदर्शिता सा यदि सर्वान्ते तृतीयकूटस्यान्तभाग इत्यर्थः हंससंयुक्ता हंस इत्यक्षरद्वयेन संयुक्ता स्यात् तदा विंशाक्षरी विंशत्यक्षरी विद्या भवेदित्यर्थः । सा यथा—

---

1. 'मादनो' B. 2. 'तथा' A-B.

[ एकविंशत्यक्षरी (उन्मनी विद्या) तत्र वाग्भवकूटम् ]

आकाशं पाशबीजन्तु त्रिकोणं बिन्दुमालिनी ।
भास्करो गोत्रभिन्माया

[ कामराजकूटम् ]

मनुना सर्गवान् भृगुः ॥१०१॥
वाग्भवश्च शिवः शक्तिर्ब्रह्मा[1] शम्भुः शचीपतिः ।
भुवनेशी

[ शक्तिकूटम् ]

कामबीजं लक्ष्मीर्भृगुः प्रजापतिः ॥१०२॥
पुरन्दरो महामाया चैकविंशाक्षरी शुभा ।

[ एतन्मन्त्रदेवतानिर्णयः फलञ्च ]

विद्यैषा चोन्मनीनाम्नी वाञ्छितार्थप्रदायिनी ॥
नारीणां मोहिनी देवी जगत्कारणरूपिणी ॥१०३॥

[ विंशत्यक्षरी ( त्रिकूटा ) ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| ऐँ | क्लीं | सौः |
| ए | ह | स |
| ई | स | क |
| क | क | ल |
| ल | ह | ह्रीं |
| ह्रीं | ल | हं |
| | ह्रीं | सः |

१०१-१०३। एकविंशत्यक्षरीमुन्मनीनाम्नीं विद्यामाह—आकाशमित्यादिना। इयमपि कूटत्रयात्मिका। तत्र प्रथमं वाग्भवकूटमाह—आकाशमित्यादिना मायेत्यन्तेन। आकाशं हकारः, पाशबीजं आं, त्रिकोणम् एकारः, बिन्दुमालिनी ईकारः, भास्करः

[ पञ्चविंशत्यक्षरी विद्या, तत्र वाग्भवकूटम् ]

मायां पाशसमायुक्तां महामायां ततः पठेत् ।
भगो माया ततो ब्रह्मा शक्रस्तु भुवनेश्वरी ॥१०४॥
वाग्भवं वाग्भवश्चेदं

[ कामराजकूटम् ]

शिखाकवचमालिखेत् ।
भुवनेश्या महेशश्च शक्तिर्ब्रह्मेश इन्द्रकः ॥१०५॥
महामायान्तरद्वन्द्वं कामराजमिदं महत् ।

[ शक्तिकूटम् ]

भुवनेश्या नेत्रमस्त्रं शक्तिर्मादन एव च ॥१०६॥
वज्रधृक् च महामाया कमलाबीजमुत्तमम् ।

[ एतन्मन्त्रप्रकर्षः ]

एषा परापि विज्ञेया तत्त्वरूपा महेश्वरी ॥१०७॥

---

ककारः, गोत्रभित् लकारः, माया ह्रीं । एवञ्च ह आं ए ई क ल ह्रीमिति प्रथमकूटम् । द्वितीयं कामराजकूटमाह—मनुनेत्यादिना भुवनेशीत्यन्तेन । मनुना औकारेण सर्गवान् विसर्गयुक्तो भृगुः सकारः अनेन सौः इति प्राप्तम् । वाग्भवमित्यादि, वाग्भवं ऐं, शिवो हकारः, शक्तिः सकारः, ब्रह्मा ककारः, शम्भुर्हकारः, शचीपतिर्लकारः, भुवनेशी ह्रीं । एवञ्च सौः ऐँ ह स क ह ल ह्रीमिति द्वितीयं कूटम् । तृतीयं शक्तिकूटमाह—कामबीजमित्यादिना । कामबीजं क्लीं, लक्ष्मीः श्रीं, भृगुः सकारः, प्रजापतिः ककारः, पुरन्दरो लकारः, महामाया ह्रीं । एवञ्च क्लीं श्रीं स क ल ह्रीमिति तृतीयकूटम् । तन्निरुक्तकूटत्रयसमष्टिपरिनिष्पन्ना विद्येयं प्रदर्श्यते—

[ एकविंशत्यक्षरी ( उन्मनीनाम ) विद्या ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| ह | सौः | क्लीं |
| आं | ऐँ | श्रीं |
| ए | ह | स |
| ई | स | क |
| क | क | ल |
| ल | ह | ह्रीं |
| ह्रीं | ल | |
| | ह्रीं | |

१०४-१०७ । अथ पञ्चविंशत्यक्षरं त्रिकूटात्मकं विद्यान्तरमभिदधानः प्रथमं वाग्भवकूटमाह—मायामिति । मायाबीजं ह्रीं, पाशबीजं आं, महामाया ह्रीं, भग एकारः

दुर्लभा त्रिपु लोकेपु सर्वकामार्थदायिनी ।
नास्ति विद्या समा चास्या बलवीर्यसमन्विता ॥१०८॥

[ पञ्चविंशत्यक्षरं विद्यान्तरम्, तत्र वाग्भवकूटम् ]

अमृतं[1] वदनश्चैव बाला शक्तिर्भगः परा ।
कामेन्द्रौ च महामाया वाग्भवं कूटमुत्तमम् ॥१०९॥

[ कामराजकूटम् ]

बालाबीजत्रयं शम्भुश्चन्द्रब्रह्म शभूपराः ।
कामराजमिदं प्रोक्तं

[ शक्तिकूटम् ]

शक्तिकूटं शृणुष्व [2]तत् ॥११०॥

---

माया ईकारः, ब्रह्मा ककारः, शक्रो लकारः, भुवनेश्वरी ह्रीं, वाग्भवं ऐँ। वाग्भवञ्चेदमिति इदं वाग्भवकूटमित्यर्थः। एवञ्च ह्रीं आं ह्रीं ए ई क ल ह्रीं ऐँ इति वाग्भवकूटम्। द्वितीयं कामराजकूटमाह—शिखेत्यादिना। भुवनेश्याः शिखाकवचमालिखेदिति सम्बन्धः। ततश्च शिखा हूं, कवचं हैं, महेशो हकारः, शक्तिः सकारः, ब्रह्मा ककारः, ईशो हकारः, इन्द्रो लकारः, महामायाक्षरद्वन्द्वं ह्रींह्रीमिति। एवञ्च हूँ हैँ ह स क ह ल ह्रीं ह्रीमिति कामराजकूटम्।

तृतीयं शक्तिकूटमाह—भुवनेश्या इत्यादिना। भुवनेश्वरीविद्याया नेत्रं हौँ, अस्त्रं हः, शक्तिः सकारः, मादनः ककारः, वज्रधृगिन्द्रबीजं लकारः, महामाया ह्रीं, कमलाबीजं श्रीमिति। एवञ्च हौं हः स क ल ह्रीं श्रीमिति शक्तिकूटमिति पर्यवस्यति। तदियं कूटत्रयसमष्टिः—

[ पञ्चविंशत्यक्षरा ( त्रिकूटा ) ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| ह्रीं | हूँ | हौँ |
| आं | हैँ | हः |
| ह्रीं | ह | स |
| ए | स | क |
| ई | क | ल |
| क | ह | ह्रीं |
| ल | ल | श्रीं |
| ह्रीं | ह्रीं | |
| ऐँ | ह्रीं | |

१०९-१११ । अथ पञ्चविंशत्यक्षरं मन्त्रान्तरमभिदधानः प्रथमं वाग्भवकूटमाह—

---

1. '-ता' C. 2. 'च' C.

वाग्भवं शम्भुवनिता रमाबीजं [1]ततः परम्।
शक्तिः कामः सहस्राक्षो महामाया ततः परम् ॥१११॥

[ एतन्मन्त्रप्रकर्षः ]

तत्त्वरूपा महामाया भुक्तिमुक्तिप्रदायिनी[2]।
सर्वीर्या सिद्धिदा नित्या विद्या सर्वार्थसिद्धिदा ॥११२॥

[ सप्तविंशत्यक्षरी विद्या, तत्र वाग्भवकूटम् ]

वाग्बीजममृता पाशं बाला-[3]तृतीयबीजकम्।
भैरवं बिन्दुमाली च ब्रह्मा शक्रः सुरेश्वरी[4] ॥११३॥

---

अमृतमित्यादिना महामायेत्यन्तेन। अमृतं सकारः, वदनं आं, बाला सौः, शक्तिः सकारः, भग एकारः, परा ईकारः, कामः ककारः, इन्द्रो लकारः, महामाया ह्रीं। एवञ्च स आं सौः स ए ई क ल ह्रीमिति वाग्भवकूटम्। कामराजकूटमाह—बालेत्यादिना परा इत्यन्तेन। बालाबीजत्रयं ऐँ क्लीं सौः, शम्भुर्हकारः, चन्द्रः सकारः, ब्रह्मा ककारः, ईशो हकारः, भूः पृथ्वीबीजं लकारः, परा ह्रीं मायाबीजम्। एवञ्च ऐँ क्लीं सौः ह स क ह ल ह्रीमिति कामराजकूटम्। शक्तिकूटमाह—वाग्भवमित्यादि महामाया ततः परमित्यन्तेन। वाग्भवं ऐँ, शम्भुवनिता ह्रीं, रमाबीजं श्रीं, शक्तिः सकारः, कामः ककारः, सहस्राक्षो लकारः, महामाया ह्रीमिति एवञ्च ऐँ ह्रीं श्रीं स क ल ह्रीमिति शक्तिकूटं पर्यवस्यति। तदेवं कूटत्रयसमष्टिरूपो मन्त्रो रेखापातेन स्फुटं प्रदर्श्यते—

[ पञ्चविंशत्यक्षरी ( त्रिकूटा ) ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| स | ऐँ | ऐँ |
| आं | क्लीं | ह्रीं |
| सौः | सौः | श्रीं |
| स | ह | स |
| ए | स | क |
| ई | क | ल |
| क | ह | ह्रीं |
| ल | ल | |
| ह्रीं | ह्रीं | |

११३-११६। अथ सप्तविंशत्यक्षरीं त्रिकूटामभिधास्यन् प्रथमं वागभवकूटमाह—वाग्बीजमित्यादिना। वाग्बीजं ऐँ, अमृता अकारः, पाशः आं। बालेति बालामन्त्रः

---

1. 'सबिन्दुकम्' A-B. 2. '-का' C. 3. '-त्रितय-' B. 4. '-रः ?' A.

वाग्भवं कथितं कूटं

[ कामराजकूटम् ]

कामराजमथोच्यते ।

महामाया वाग्भवश्च [1]मान्मथं सर्गवान् भृगुः ॥११४॥

मनुस्वरेण संयुक्तो वियच्छक्तिश्च भास्करः ।

शिवः शक्रो महामाया

[ शक्तिकूटम् ]

शक्तिकूटं लिखेत्ततः ॥११५॥

लक्ष्मीबीजं पाशबीजं [2]मायामङ्कुशमेव च ।

भृगुर्ब्रह्मा सहस्राक्षो महामाया तदन्तरम् ॥११६॥

---

ऐँ क्लीं सौः इति । तस्य तृतीयं बीजमित्यनेन सौः इति प्राप्तम् । भैरव एकारः, बिन्दुमाली ईकारः, ब्रह्मा ककारः, शक्रो लकारः, सुरेश्वरी ह्रीं । एवञ्च ऐँ अ आं सौः ए ई क ल ह्रीमिति वाग्भवकूटम् । कामराजकूटमाह—महामायेत्यादिना शिवः शक्रो महामायेत्यन्तेन । महामाया ह्रीं, वाग्भवः ऐँ, मान्मथं क्लीं । सर्गवान् विसर्गयुक्तो भृगुः सकारः, स च मनुस्वरेण औकारेण संयुक्तः । अनेन सौरिति प्राप्तम् । वियद् आकाशबीजं हकारः, शक्तिः सकारः, भास्करः ककारः, शिवो हकारः, शक्रो लकारः, महामाया ह्रीं । एवञ्च ह्रीं ऐँ क्लीं सौः ह स क ह ल ह्रीमिति कामराजकूटम् । तृतीयं शक्तिकूटं वक्तुमुपक्रमते—शक्तिकूटमित्यादिना । लक्ष्मीबीजमित्यादि । लक्ष्मीबीजं श्रीं, पाशबीजं आं, माया ह्रीं, अङ्कुशं क्रौँ, भृगुः सकारः, ब्रह्मा ककारः, सहस्राक्षो लकारः, महामाया ह्रीमिति । एवञ्च श्रीं आं ह्रीं क्रौँ स क ल ह्रीमिति शक्तिकूटम् । एतत्त्रिकूटघटितसप्तविंशत्यक्षरविद्याप्रस्थानं यथा—

[ सप्तविंशत्यक्षरी ]

| वाग्भव कूटम् | कामराज छटम् | शक्ति कूटम् |
|---|---|---|
| ऐँ | ह्रीं | श्रीं |
| अ | ऐँ | आं |
| आं | क्लीं | ह्रीं |
| सौः | सौः | क्रौँ |
| ए | ह | स |
| ई | स | क |
| क | क | ल |
| ल | ह | ह्रीं |
| ह्रीं | ल | |
| | ह्रीं | |

---

1. 'मन्मथं' C. 2. 'मायाङ्कुशं तथैव च' A.

[ एतन्मन्त्रप्रकर्षः ]

सप्तविंशाक्षरी विद्या महात्रिपुरसुन्दरी ॥११७॥
त्रैलोक्यं हन्ति यो नित्यं पिबेद् वा सिन्धुसागरम् ।
रमते सकलां नारीं जप्त्वा याति सुरालयम् ॥११८॥
विद्यास्मरणमात्रेण सर्वपापं प्रणाशयेत् ।
मनोः स्मरणमात्रेण [1]व्रजेद्भगवतः पदम् ॥११९॥
जपमात्रेण मन्त्रज्ञः शिवसायुज्यतां [2]व्रजेत् ।
एषा विद्या प्रयत्नेन गुप्ता ग्रन्थेषु कोटिषु ॥१२०॥
देव्याः प्राणोऽस्ति विद्यायां सत्यं सत्यं न चान्यथा ।
भाषिता शङ्करेणैव[3] सालङ्कारा महोदया ॥१२१॥
गोपनीया प्रयत्नेन न देया यस्य कस्यचित् ॥१२२॥

[ द्वात्रिंशदक्षरी विद्या तत्र वाग्भवकूटम् ]

नकुलीशो भृगुर्ब्रह्मा शक्रश्च भुवनेश्वरी ।
[4]हरो भृगुर्दिवानाथो वज्रधृग् भुवनेश्वरी ॥ १२३ ॥
एतत्तु वाग्भवं कूटं

[ कामराजकूटम् ]

कामराजं शृणुष्व च ।
कामबीजद्वयञ्चैव वाग्भवं [5]च हुमात्मकम् ॥१२४॥
शक्तिबीजं विसर्गस्तु शिवः शक्तिस्ततः परम् ।

---

१२३—१२६ । अथ त्रिकूटां द्वात्रिंशदक्षरविद्यामभिधत्ते । तत्र प्रथमं वाग्भवकूटमाह—नकुलीश इति । नकुलीशो हकारः, भृगुः सकारः, ब्रह्मा ककारः, शक्रो लकारः, भुवनेश्वरी ह्रीं, हरो हकारः, भृगुः सकारः, दिवानाथः ककारः, वज्रधृग् लकारः, भुवनेश्वरी ह्रीमिति । एवञ्च ह स क ल ह्रीं ह स क ल ह्रीं इति वाग्भव-

---

1. 'व्रजेत परतः' A. 2. 'लभेत्' C. 3. '-षा' C. 4. 'हर' इत्यादि पादद्वयं A-पुस्तके नास्ति । 5. 'वर्णमात्मकम्' ? C.

कामं गगनशक्ती च ततोऽपि भुवनेश्वरी ।

कामराजमिदं पुण्यं

[ शक्तिकूटम् ]

शक्तिकूटमथोच्यते ॥१२५॥

ह्रां ह्रीं क्लीं चैव हूँकारं स्त्रींकारं सकलं ततः ।

महामाया ततः पश्चाद्धंसबीजं तदन्तिके[1] ॥१२६॥

द्वात्रिंश[2]द्वर्णमुद्दिष्टा कामाख्या वरदा शुभा ।

[ द्वात्रिंशदक्षरी विद्या, तत्र वाग्भवकूटम् ]

बालाबीजत्रयश्चैव झिण्टीशो बिन्दुमालिनी ॥१२७॥

कामेन्द्रौ च महामाया

[ कामराजप्रथमकूटम् ]

श्रीं ह्रीं [3]क्लीश्च ततः परम् ।

पाशः शक्तिर्मादनश्च [4]शून्येन्द्रौ भुवनेश्वरी ॥१२८॥

---

कूटमिति पर्यवस्यति । कामराजकूटमाह— कामबीजमित्यादिना । कामबीजद्वयं क्लीं क्लीं वाग्भवः ऐँ, हुमात्मकं हुँ, शक्तिबीजं सकारः, ततो विसर्गः, शिवो हकारः, शक्तिः सकारः, कामः ककारः, गगनं हकारः, शक्रो लकारः, भुवनेश्वरी ह्रीं । एवञ्च क्लीं क्लीं ऐँ हुं सः ह स क ह ल ह्रीमिति कामराजकूटम्। तृतीयं शक्तिकूटमाह—ह्रां ह्रीमित्यादिना । एवञ्च ह्रां ह्रीं क्लीं हुं स्त्रीं स क ल, महामाया ह्रीं, हंसः इति शक्तिकूटम् । द्वात्रिंशदक्षरीयं विद्या रेखापातेन स्फुटं प्रदर्श्यते—

[ द्वात्रिंशदक्षरी ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| ह | क्लीं | ह्रीं |
| स | क्लीं | ह्रीं |
| क | ऐँ | क्लीं |
| ल | हुँ | हुँ |
| ह्रीं | सः | स्त्रीं |
| ह | ह | स |
| स | स | क |
| क | क | ल |
| ल | ह | ह्रीं |
| ह्रीं | ल | हं |
| | ह्रीं | सः |

१२७-१३०। द्वात्रिंशदक्षरं मन्त्रान्तरमाह--बालेत्यादिना । बालाबीजत्रयं ऐँ क्लीं सौः,

---

1. '-का' C. 2. '-शादर्ण-' C. 3. '-ह्रश्च' ? A. 4. 'मून्ये' ? C.

[ कामराजद्वितीयकूटम् ]

शिवः शक्तिश्च वाग्बीजं शिवः शक्तिस्ततः परम् ।
मदनेन्द्रौ ततः पश्चाद् भुवनेशी ततः परम् ॥
कामराजमिदं पुण्यं कथितं सर्वदुर्लभम् ॥१२९॥

[ शक्तिकूटम् ]

जीवः प्राणस्तु [1]शत्त्यर्णं शक्तिर्मादन इन्द्रकः ।
महाविद्येश्वरी पश्चाद् विद्या संहारिणी भवेत् ॥१३०॥

[ एतन्मन्त्रप्रकर्षः ]

दैत्यानां बलशान्त्यर्थं[2] भाषिता परमाक्षरैः ।
एषा सा सुन्दरी विद्या शत्रूणां प्राणनाशिनी ॥१३१॥

---

क्रिष्टीश एकारः, बिन्दुमालिनी ईकारः, कामः ककारः, इन्द्रो लकारः, महामाया ह्रीं । एवञ्च ऐँ क्लीं सौः ए ई क ल ह्रीमिति प्रथमं वाग्भवकूटम् । कामराजकूटद्वयमाह—श्रीमित्यादिना । अत्र प्रथमं श्रीं ह्रीं क्लीं ततः पाशः पाशबीजम् आं आकारः, शक्तिः सकारः, मादनं ककारः, शून्यो हकारः, इन्द्रो लकारः, भुवनेश्वरी ह्रीं । एवञ्च श्रीं ह्रीं क्लीं आं स क ह ल ह्रीमिति कामराजप्रथमकूटम् । द्वितीयं कामराजकूटमाह—शिव इत्यादिना । शिवो हकारः, शक्तिः सकारः, वागबीजं ऐँ ,शिवो हकारः, शक्तिः सकारः, मदनः ककारः, इन्द्रो लकारः, भुवनेशी ह्रीमिति । एवञ्च ह स ऐँ ह स क ल ह्रीमिति द्वितीयं कूटमित्युक्तं भवति । कामराजकूटमिदं कूटद्वयात्मकम् । B-पुस्तकपादटीकायान्तु द्वितीयशक्तिकूटे ककारात् परं लकारात् पूर्वं हकारो दृश्यते, स तु निरुक्तप्रमाणाप्राप्तत्वादस्माभिर्न मन्त्रे निवेशितः ।

शक्तिकूटमाह—जीव इत्यादिना । जीवः सकारः, प्राणो हकारः, शत्त्यर्णः सौः, शक्तिः सकारः, मादनः ककारः, इन्द्रो लकारः, महाविद्येश्वरी ह्रीं । एवञ्च स ह सौः स क ल ह्रीमिति शक्तिकूटमिति पर्यवस्यति । कूटविभागपूर्वकमेतत्समष्टिरूपो मन्त्रः प्रदर्श्यते—

[ द्वात्रिंशदक्षरी चतुष्कूटा ]

| वाग्भव-कूटम् | कामराज-कूटम् | | शक्ति-कूटम् |
|---|---|---|---|
| ऐँ | श्रीं | ह | स |
| क्लीं | ह्रीं | स | ह |
| सौः | क्लीं | ऐँ | सौः |
| ए | आं | ह | स |
| ई | स | स | क |
| क | क | क | ल |
| ल | ह | ल | ह्रीं |
| ह्रीं | ल | | |
| | ह्रीं | ह्रीं | |

---

1. '-शात्त्यन्तं' C. '-सन्ध्यन्तं' A. 2. '-नाशार्थं' C.

सर्वेषां दुर्लभा विद्या ब्रह्मविष्णुशिवार्चिता[1] ।
स्थितिरूपा महाविद्या साधकाय [2]वरप्रदा १३२॥
न चास्याः सदृशी काचित् त्रिषु लोकेषु विद्यते ॥१३३॥

[ ऊनत्रिंशदक्षरी मृत्युञ्जयाख्या विद्या, तत्र वाग्भवकूटम् ]

वाग्भवं [3]प्रथमं चैव शिवः शक्तिस्ततः परा ।
वह्निबीजं ततः पश्चाद् भौतिकेन समन्वितम् ॥१३४॥
भगो माया मादनेन्द्रमहामायाविभूषितम् ।
एतत्तु वाग्भवं कूटं सर्वपत्त्रेषु दुर्लभम् ॥१३५॥

[ कामराजकूटम् ]

क्लींकारं गगनं चन्द्रो मादनेन्द्रेण मायया ।
प्राणौ मदनशून्यौ च[4] देवराजः सुरेश्वरी ॥१३६॥
कामराजमिदं प्रोक्तं

[ शक्तिकूटम् ]

शक्तिकूटमथोच्यते ।
सौःकारं शिवशक्ती च वह्निबीजं[5] मनुस्वरम् ॥१३७॥
सर्गचन्द्रं नादयुक्तं शक्तिब्रह्मेन्द्रमायया ॥१३८॥

---

१३४—१३८। अथ मन्त्रान्तरमभिदधानः प्रथमं तस्य वाग्भवकूटमाह—वाग्भवं प्रथममित्यादिना। वाग्भवः ऐँ, शिवो हकारः, पराशक्तिः सकारः, ततो भौतिकेन ऐँकारेण समन्वितं वह्निबीजं रैँ, भग एकारः, माया ईकारः, मादनः ककारः, इन्द्रो लकारः, महामाया ह्रीमिति। एवञ्च ऐँ ह स रैँ ए ई क ल ह्रीमिति वागभवकूटम्। B-पुस्तकपाददिप्पन्यान्तु ईकारककारयोर्मध्ये सकारोऽधिको दृश्यते। परन्तु भगो माया-मादनेन्द्रेत्यादिप्रमाणेन सकारस्यालाभात् स नास्माभिर्मन्त्रे निवेशित इति ध्येयम्। कामराजकूटमाह—क्लींकारमित्यादिना। क्लीं, गगनं हकारः, चन्द्रः सकारः, मादनः ककारः, इन्द्रो लकारः, माया ह्रीं इति कामराजप्रथमकूटम्। द्वितीयं कामराज-कूटमाह—प्राणाविति। अत्र प्राणश्च प्राणश्च प्राणावित्येकशेषः। तत्र प्रथमप्राण-

---

1. '-र्जिता' A. 2. 'प्रदापयेत्' C. 3. 'परमं' A. 4. 'तु' C. 5. '-जमनु-' A.

सृष्टिरूपा महाविद्या[1] सारभूता महोदया ॥१३९॥

[ सप्तत्रिंशदक्षरी विद्या, तत्र वाग्भवकूटम् ]

अमृता पाशबीजन्तु शक्त्य[2]न्तं वाग्भवो भृगुः ।
शिवात्मा तत्परो वह्निर्भौतिकेनेन्दुना युतः ॥१४०॥
झिण्टीशो वामनेत्रन्तु कामेन्द्रौ भुवनेश्वरी ।
एतत्तु वाग्भवं कूटं कथितं सर्वदुर्लभम् ॥ १४१ ॥

[ एतत्कूटजपप्रशस्तिः ]

एतज्जप्त्वा महाबीजं किं न सिध्यति भूतले ॥१४२॥
मूको भवति वागीशो वाक्पतिर्जायते ध्रुवम् ।
वागीशं स्पर्द्धते वाक्यैः सर्वज्ञस्तु प्रजायते ॥१४३॥

---

शब्देन हकारो द्वितीयप्राणशब्देन च सकारो लभ्येते । ततश्च प्राणावित्यनेन ह स इति प्राप्तम् । मदनः ककारः, शून्यो हकारः, देवराजो लकारः, सुरेश्वरी ह्रीं । एवञ्च ह स क ह ल ह्रीमिति द्वितीयकूटम् । अत्र B-पुस्तकपादटिप्पन्यां कृते मन्त्रोद्धारे लकारात् पूर्वं हकारो नास्ति, तत्तु निरुक्त-प्रमाणविरुद्धम् । अत्र निरुक्तकूटद्वयात्मकं कामराजकूटमित्यवधेयम् । शक्तिकूटमाह—सौःकारमित्यादिना । सौः, शिवो हकारः, शक्तिः सकारः । वह्निबीजमिति वह्निबीजं रकारः,मनुस्वर औकारः, सर्गो विसर्गः, ततो बिन्दुनादौ एतेन रौँः इति प्राप्तम् । शक्तिः सकारः, ब्रह्मा ककारः, इन्द्रो लकारः, माया ह्रीं । एवञ्च सौः ह स रौँः स क ल ह्रीमिति शक्तिकूटमिति पर्यवस्यति । (B-टिप्पन्यान्तु सौः ह स क ल रौं इत्यादि) ।

[ ऊनत्रिंशदक्षरी विद्या ]

| वागभव-कूटम् | कामराज-कूटम् १ | कामराज-कूटम् २ | शक्ति-कूटम् |
|---|---|---|---|
| ऐँ | क्लीं | ह | सौः |
| ह | ह | स | ह |
| स | स | क | स |
| रैँ | क | ह | रौँः |
| ए | ल | ल | स |
| ई | ह्रीं | ह्रीं | क |
| क | | | ल |
| ल | | | ह्रीं |
| ह्रीं | | | |

१४०—१५० । सप्तत्रिंशदक्षरं त्रिकूटघटितं मन्त्रान्तरमभिदधानः प्रथमं वाग्-

---

1. '-माया' A-B. 2. '-र्णं' B.

[ कामराजकूटम् ]

कामकूटं प्रवक्ष्यामि सर्वसिद्धिप्रदायकम् ।
वाग्भवं [1]मान्मथं बीजं सौःकारं [2]बिन्दुमालिनी ॥१४४॥
नादबिन्दुकलायुक्ता शक्तिः शिवस्ततः परम् ।
ब्रह्मा शक्रश्च वह्निश्च मायार्द्धेन्दुसमन्वितः ॥१४५॥
शिवः शक्तिर्दिवानाथो[3] हरेन्द्रौ भुवनेश्वरी ।

[ एतत्कूटजपप्रशस्तिः ]

एतत्कूटस्य माहात्म्यं शतकोटिसुविस्तरम् ॥१४६॥
एतत्कूटवरं मन्त्री यो जानाति स साधकः ।
हेलया त्रिदिवं प्राप्य मोदते शम्भुना सह ॥१४७॥
रात्रियोगेन [4]च शतं सहस्रं यदि वा जपेत् ।
वाञ्छितं लभते कामं सत्यमेव न संशयः ॥१४८॥

[ शक्तिकूटम् एतत्कूटजपप्रशस्तिश्च ]

मनुस्वरः[5] सबिन्दुश्च[6] [7]शक्तिः शिवस्ततः परम् ।
बालायाः शक्तिकूटश्च शक्तिस्तु [8]कमलासनः ॥१४९॥
गोत्रभिद् भुवनेशानी हंसबीजं ततः [9]पठेत् ।
शक्तिकूटमिदं पुण्यं पुरुषार्थप्रवर्तकम्[10] ॥१५०॥
मृत्युञ्जयाख्या [11]विद्येयं [12]सप्तत्रिंशाक्षरी [13]परा ।

---

भवकूटमाह—अमृतेत्यादिना । अत्र अमृता अकारः, पाशबीजम् आं । शक्त्यन्तमिति । शक्तिः सकारः, तद्युक्तोऽन्तश्चतुर्दशस्वर औकारस्तेन सौः इति प्राप्तम् । वाग्भव ऐँ, भृगुः सकारः, शिवात्मा हकारः, तत्परस्तस्माद्धकारात् परो वह्नी-

---

1. 'मन्मथं' A-B. 2. 'चेन्दु-' C. 3. '-शशिदिवानाथौ' C. 4. 'नियतम्' C. 5. '-रं' ? B.-C. 6. '-श्च' A-B. 7. 'शिवः शक्ति-' C. 8. 'कामनाशनः' ? A. 9. 'परम्' C. 10. '-प्रदायकम्' C. 11. 'विज्ञेया' A. 12. 'सप्तविंशा-' ? C. 13. 'शुभा' C.

[ एतत्त्रिकूटात्मकमन्त्रप्रशस्तिः ]

पृथिव्यां दुर्लभा विद्या चतुर्वर्गप्रदायिनी ।
न देया कस्यचित् [1]स्थाने सुगोप्या दुर्लभा परा ॥१५१॥

रकारः, स च भौतिकेन ऐकारेण बिन्दुना च युक्तस्तेन रैं इति प्राप्तम्। झिण्टीश एकारः, वामनेत्रम् ईकारः, कामः ककारः, इन्द्रो लकारः, भुवनेश्वरी ह्रीं। एवञ्च अ आं सौः ऐं स ह रैं ए ई क ल ह्रीमिति वाग्भवकूटम्।

एतद्वाग्भवकूटजपफलमाह—एतदित्यादिना ।

अथ कामराजकूटमाह—कामकूटं प्रवक्ष्यामीत्यादिना। वाग्भवबीजं ऐं, मन्मथबीजं क्लीं, ततः सौः, ततो नादबिन्दुकलायुक्ता बिन्दुमालिनी ईं, शक्तिः सकारः, शिवो हकारः, ब्रह्मा ककारः, शक्रो लकारः, वह्नी रकारः, स च मायया ईकारेण अर्द्धचन्द्रेण च समन्वितः तेन रीँ इति प्राप्तम्। ततः शिवो हकारः, शक्तिः सकारः, दिवानाथः ककारः, हरो हकारः, इन्द्रो लकारः, भुवनेश्वरी ह्रीं। एवञ्च ऐं क्लीं सौः ईं स ह क ल रीँ ह स क ह ल ह्रीमिति कामराजकूटम्। शक्तिकूटमाह—मनुस्वर इत्यादिना। सबिन्दुर्मनुस्वर औं इति। शक्तिः सकारः, शिवो हकारः, बालायाः शक्तिकूटं सौः, शक्तिः सकारः, कमलासनो ब्रह्मा ककारः, गोत्रभिदिन्द्रबीजं लकारः, भुवनेशानी ह्रीं, हंसबीजं हंसः इति। एवञ्च औं स ह सौः स क ल ह्रीं हंसः इति शक्तिकूटमित्येवं पर्यवस्यति। शिवः शक्तिरिति पाठे तु ह स सौरित्यादिमन्त्रो भवतीति ज्ञेयम्। तदेतेषां समष्टिरूपो मन्त्रो रेखान्यासेन प्रदर्श्यते—

[ सप्तत्रिंशदक्षरी मृत्युञ्जयाख्या विद्या ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| अ | ऐं | औं |
| आं | क्लीं | स |
| सौः | सौः | ह |
| ऐं | ईं | सौः |
| स | स | स |
| ह | ह | क |
| रैं | क | ल |
| ए | ल | ह्रीं |
| ई | रीँ | हं |
| क | ह | सः |
| ल | स | |
| ह्रीं | क | |
| | ह | |
| | ल | |
| | ह्रीं | |

1. 'भद्रे' C.

[ पञ्चदशाक्षरी विद्या, तत्र वाग्भवकूटम् ]

शिवो [1]मदनशक्रौ च शक्तिस्तु भुवनेश्वरी ।

[ कामराजकूटम् ]

ब्रह्मा शिवेन्द्रौ शक्तिश्च महामाया [2]ततः परा ॥ १५२ ॥

[ शक्तिकूटम् ]

मादनेन्द्रौ शक्तिशिवौ महामाया तदन्तिके ।
एषा पञ्चदशी भाषा साक्षात् त्रिपुरसुन्दरी ॥ १५३ ॥

[ एतन्मन्त्रप्रकर्षः ]

[3]सर्वज्ञानमयी देवी चतुर्वर्गप्रदायिनी ।
एवमेषा महाविद्या महात्रिपुरसुन्दरी ॥ १५४ ॥

[ अस्य प्रामाणिकतन्त्रसंवादित्वम् ]

[4]बृहच्छ्रीक्रमतन्त्रस्य मतमेतदुदीरितम् ॥ १५५ ॥

---

१५२—१५३ । अथ पञ्चदशाक्षरं मन्त्रान्तरमाह—शिव इत्यादिना । शिवो हकारः, मदनः ककारः, शक्रो लकारः, शक्तिः सकारः, भुवनेश्वरी ह्रीं । एवञ्च ह क ल स ह्रीमिति वाग्भवकूटम् । कामराजकूटमाह—ब्रह्मेत्यादिना । ब्रह्मा ककारः, शिवो हकारः, इन्द्रो लकारः, शक्तिः सकारः, महामाया ह्रीं । एवञ्च क ह ल स ह्रीमिति कामराजकूटम् । शक्तिकूटमाह—मादनेत्यादिना । मादनः ककारः, इन्द्रो लकारः, शक्तिः सकारः, शिवो हकारः, महामाया ह्रीं । एवञ्च क ल स ह ह्रीमिति शक्तिकूटम् । एतेषां समष्टिरूपो मन्त्रो यथा—

[ पञ्चदशाक्षरी ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| ह | क | क |
| क | ह | ल |
| ल | ल | स |
| स | स | ह |
| ह्रीं | ह्रीं | ह्रीं |

---

1. 'मादन-' A-B. 2. 'तत' इत्यादि'महामाये'त्यन्तोऽंशः A-पुस्तके नास्ति । 3. 'सर्वे'त्यादिपादचतुष्टयं A-पुस्तके नास्ति । 4. 'बृह'दित्यादिपादद्वयं C-पुस्तके नास्ति ।

[ अथ शाम्भवकामराजविद्यानिरूपणप्रतिज्ञा ]

[1]अथ विद्यां प्रवक्ष्यामि कामदेवेन सेविताम् ।
यस्या आराधनेनैव कामः सर्वाङ्गसुन्दरः ॥ १५६ ॥

[ एतद्‌विद्याप्रकर्षः ]

विद्यानामुत्तमा विद्या सर्वतीर्थमयी परा ।
सर्वशास्त्रमयी विद्या सर्वसौभाग्यसुन्दरी ॥ १५७ ॥

[ तस्या द्वैविध्यम् ]

[2]शाक्तशाम्भवभेदेन कथयामि सुदुर्लभाम् ॥ १५८ ॥

[ तत्र शाम्भवकामराजविद्या पञ्चदशाक्षरी ]

कन्दर्पो विष्णुयुक्तोऽधरमुखसहितो दत्तकर्णोर्द्ध्ववर्णो
भूमायावर्णयुक्तस्तदनु कुलपरः शम्भुपूर्वः स्मरश्च ।
कन्दर्पारिः सुरेन्द्रस्त्रिभुवनजननी चाथ सोमः कलार्णौ
दत्त्वा मायां तदन्ते भजति सुरगणो मन्त्रमेनं प्रसिद्धम् ॥१५९॥

१५९। कन्दर्प इति। विष्णुरकारस्तद्युक्तः कन्दर्पः क् इति वर्णः। अत्र व्यञ्जनवर्णस्य स्वातन्त्र्येणोच्चारणासामर्थ्याद् विष्णुयुक्त इत्युक्तम्। अन्यत्राप्येवमेव। अधरेति अधरस्य ऐकारस्य मुखमेकारस्तत्सहित इत्यर्थः, एतेन क ए इति वर्णद्वयं प्राप्तम्। दत्तेति, दत्तकर्ण उकारस्तस्य ऊर्द्ध्ववर्ण ईकारः, भूमिबीजं लकारः, मायाबीजं ह्रीं। एवञ्च मन्त्रस्यास्य क ए ई ल ह्रीमिति वाग्भवकूटम्। अस्य कूटभेदांस्त्वग्रे स्वयमेव वक्ष्यति। तदनु द्वितीये कामराजकूटे प्रथमं कुलपरः शिवो हकारः, शम्भुपूर्वः शम्भुः शिवबीजं हकारस्तत्पूर्वः सकारः, स्मरः ककारः, कन्दर्पारिर्हकारः, सुरेन्द्रो लकारः, त्रिभुवनजननी ह्रीं। एवञ्च ह स क ह ल ह्रीमिति कामराजकूटम्। ततः शक्तिकूटमभिधत्ते—अथेति। अत्राथशब्दः कूटभेदसूचकः। सोमश्चन्द्रबीजं सकारः, कलार्णौ क ल इति वर्णद्वयम्, तदन्ते तेषां त्रयाणां वर्णानामन्ते मायां ह्रीमिति मायाबीजं दत्त्वा सुरगणो भजतीति सम्बन्धः। एतेन स क ल ह्रीमिति शक्तिकूटमिति पर्यवस्यति। अत्र सुर-गणो भजतीत्युक्त्या सुराणामुपासनीयत्वं मर्त्यानामनुपासनीयत्वञ्चास्य सूचितम्।

1. 'अथे'त्यादिपादाष्टकं C-पुस्तके नास्ति। 2. 'शक्ति-'? A.

[ तत्र कूटत्रयविभागपरिपाटी ]

आद्यन्तु वाग्भवं कूटं पञ्चवर्णात्मकं शुभम् ।
ऋतुवर्णात्मकं [1]कूटं कामराजन्तु मध्यमम्[2] ॥ १६० ॥
चतुरक्षररूपन्तु शक्तिकूटं तदन्तिमे[3] ।
एवं कूटात्मिका [4]देवी त्र्यक्षरी त्रिपुरेश्वरी ॥ १६१ ॥

[ अस्या विद्यायाः कीलितत्वम् ]

वामकेशी शाम्भवी सा[5] पूर्वाम्नायैः[6] प्रकीर्तिता ।
ज्ञेया सा कीलिता विद्या सिद्धिदा न हि भूतले ॥ १६२ ॥

[ अत्र प्राचीनेतिवृत्तम् ]

एतत्कारणवृत्तान्तं कथयामि समासतः ॥ १६३ ॥
ब्राह्मणो मूर्ख एको हि महादुःखी महीतले ।
आसीच्च नगरे नित्यं [7]भिक्षार्थी विचरेद्द्विजः ॥ १६४ ॥
कदाचिदेकः सन्न्यासी तं ददर्श द्विजं कृशम् ।
जलाभिलाषिणं विप्रं निजगाद सरस्तटे ॥ १६५ ॥
कस्मादिह समायातः को वा त्वं कथय ध्रुवम् ।
विलोक्य सहसा विप्रो नत्वा तं दण्डधारिणम् ॥ १६६ ॥

१६०-६१। अस्य कूटभेदान् दर्शयति—आद्यन्त्वित्यादिना। प्रथमं पञ्चवर्णात्मकं वाग्भवकूटम्, द्वितीयं षड्वर्णात्मकं कामराजकूटम्। तृतीयं वर्णचतुष्टयात्मकं शक्तिकूटम्। कूटत्रयविभागपुरःसरमस्य स्वरूपं रेखापातेन प्रदर्श्यते—

[ शाम्भवकामराजविद्या पञ्चदशाक्षरी ]
( कीलिता )

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| क | ह | स |
| ए | स | क |
| ई | क | ल |
| ल | ह | ह्रीं |
| ह्रीं | ल | |
| | ह्रीं | |

1. 'मन्त्रं' C. 2. '-मे' B. 3. '-के' C. 4. 'विद्या तथैव' A-B. 5. '-वीशा' A. 6. '-य-' C. 7. 'दुःखार्त्तो' A-B.

ब्राह्मणोऽहं दुःखभागी कमलाकरसंज्ञकः ।
दत्त्वाशीर्वादं सन्न्यासी भूयो ब्राह्मणमब्रवीत् ॥ १६७ ॥
तवैव दुःखनाशार्थं हितोपायं शृणु द्विज ।
मन्त्रैकं कथयामि त्वां स्नानं कुरु विधानतः ॥ १६८ ॥
विधिवत् स्नानमाचर्य[1] जलादुत्थाय तत्क्षणात् ।
पद्मपत्रे जलं कृत्वा [2]पद्मपुष्पेण चार्च्चय ॥ १६९ ॥
यथा ज्ञानविधानेन गुरुणा कथितो मनुः ॥ १७० ॥
यताहारेण भो [3]विप्र पुरश्चरणमेव हि ।
कर्तव्यं पुण्यतीर्थेषु पर्वतेषु नदीषु वा[4] ॥ १७१ ॥
विभूतिर्भविता गुर्वी वाणी तव मुखे सदा ।
भूपतिर्भूतले भूत्वा चान्ते स्वर्गं गमिष्यसि ॥ १७२ ॥
आज्ञाप्य शिष्यमिति यद्धर्मात्मा मन्त्रविद् गुरुः ।
तपःस्थाने ततो गत्वा [5]पुनस्तद्धर्ममाचरेत् ॥ १७३ ॥
गुरोर्वचनमाकर्ण्य शिष्यः स कमलाकरः ।
एकचित्तः सदा भूयो जपेन्मन्त्रं विधानतः ॥ १७४ ॥
[6]लक्षसंख्यमुक्तस्थाने यतिर्भूत्वा द्विजोत्तमः ।
अनेककालपर्यन्तं न लब्ध्वा वाञ्छितं फलम् ॥ १७५ ॥
अनाहारो मुक्त[7]निद्रो जपेन्मन्त्रं सुविस्तरम् ।
न दृष्ट्वा कार्यसम्पत्तिं महादुःखी बभूव सः[8] ॥ १७६ ॥
तपो व्यर्थं वृथा विद्या मन्त्रतन्त्रमकारणम् ।
एतत् कष्टं समासाद्य वदन् विप्रो विषादवान्[9] ॥ १७७ ॥

---

1. '-रभ्य' A, '-साद्य' B. 2. '-पद्मपुष्पैः प्रपूजयेत्' ? A-B. 3. 'शिष्य' C. 4. 'च' C. 5. 'पुनर्धर्मं समाचरेत्' B., 'पुनस्तद्धं समाचरेत्' A. 6. 'यथा-' A-B. 7. '-केशो' A. 8. 'च' A-C. 9. '-दृतः' A-B.

न माता न पिता चैव न भ्राता न च बान्धवाः ।
सारथिर्नास्ति मेऽरण्ये [1]महादुःखेऽप्युपस्थिते ॥ १७८ ॥
निर्दयो मे विधाता च निर्दयो[2] मे सनातनः ।
निर्दयः पार्वतानाथो निर्दया करुणामयी ॥ १७९ ॥
धर्मकर्म तिरस्कृत्य मन्त्रतन्त्रं विशेषतः ।
स दिदृक्षुर्विधातारं गहनं वनमाविशत् ॥ १८० ॥
जन्तवो [3]बहवस्तत्र विशालव्यालसङ्कुलाः[4] ।
यक्षराक्षसकुष्माण्ड-डाकिनीगणसंवृताः ॥ १८१ ॥
उत्तमं भयमासाद्य [5]क्लेशतापेन तापितः ।
बलहीनो वटुर्भूत्वाभर्त्सयत् कमलासनम् ॥ १८२ ॥
इत्थमेवंविधे काले भर्त्सिते कमलासने ।
वटुना दुःखितेनापि[6] सरस्तेनावलोकितम् ॥ १८३ ॥
नानापुष्पसमाकीर्णं हंसषट्पदशोभितम् ।
नानावृक्षतटाक्रान्तं नानापक्षिविभूषितम् ॥ १८४ ॥
क्रन्दन् भूमौ वटुः शेते सरस्तीरे विषादवान् ।
ब्रह्मोद्देशे तनुं त्यक्त्वा क्षिप्रं यामि यमालयम् ॥ १८५ ॥
सरःकमलसंस्थोऽपि लज्जया चतुराननः ।
[7]ब्राह्मणं रूपमास्थाय गतवान् विप्रसन्निधौ ॥ १८६ ॥
[8]शयनस्थं द्विजं [9]क्लिष्टं तमुवाच पितामहः ।
कस्त्वं कथं वने चास्मिन् हेतुना केन वागतः ॥ १८७ ॥

---

1. 'महद्दुःखे' B. 'महद्भयमु-?' C. 2. '-यस्तु' C. 3. 'बहुशः-' C. 4. '-लः' ? B-C. 5. 'कालपाशेन पीडितः' C. 6. '-नैव' C. 7. 'ब्राह्मण-' A-B. 8. 'शयानस्थं' B. 9. 'तत्र' A-B.

श्रुत्वा तद्वचनं विप्रो [1]विस्मितश्चाभवत्तदा ।
कुतः कमागतः को वा मनुष्यो वाथ दानवः ॥ १८८ ॥
किञ्चिन्न भाषते वाक्यं ब्राह्मणं पृष्टवान् पुनः ।
अव्यक्तचक्षुषा विप्रः [2]प्रत्युत्तरं ददाति सः ॥ १८९ ॥
त्वमेव कः समायातः कस्मादिह वदस्व तत् ।
द्विजस्य वचनं श्रुत्वा ब्रह्मा वाक्यमभाषत[3] ॥ १९० ॥
ब्राह्मणोऽहं तपस्वी च निवसाम्यत्र कानने ।
जलं फलं समादाय[4] तपस्तप्तो ह्यतन्द्रितः ।
अनेककालपर्यन्तं नरसङ्गविवर्जितः ॥ १९१ ॥
कथं त्वमीदृशो[5] रूपं कथ्यतां तद्द्विजोत्तम ।
त्वां विलोक्य विशेषेण मदीयं दह्यते वपुः ॥ १९२ ॥
एतद्दुःखमभिप्राप्य कथमत्रापि तिष्ठसि[6] ॥१९३॥

ब्राह्मण उवाच

विधातुर्दर्शनार्थाय आगतोऽस्मि वनान्तिके ।
तदुद्देशे वधं कृत्वा यास्यामि धर्मशाश्वतम् ॥१९४॥

ब्रह्मोवाच

वृथाऽऽशा क्रियते[7] विप्र या न स्यात् पृथिवीतले ॥१९५॥
कैलासशिखरे रम्ये ब्रह्मविष्णुमहेश्वराः ।
तिष्ठन्ति सर्वदा देवाः कदाचित् स्वर्गशासने ॥१९६॥
कथं भवेद्दर्शनं वा त्वया सार्द्धं हविर्भुजः ।
इदं शरीरमादाय गच्छ त्वं निजवेश्मनि ॥१९७॥

1. 'विदित-' A. 2. 'उत्तरं स ददाति हि' A-B. 3. '-मुवाच ह' A-B. 4. '-धाय' C. 5. '-शं' A-C. 6. '-ति' C. 7. 'हि यतसे' A.

तपस्विनं प्रणम्याथ विप्रो वचनमब्रवीत् ।
गच्छ गच्छ महाभाग तूर्णमेव निजालयम् ॥१९८॥
[1]मत्कर्मफलयोगेन [2]यदर्थमुपकल्पितम् ।
तद्वोक्तव्यं मया साक्षात् किमेतद्वचनेन वै ॥१९९॥
दर्शनं ब्रह्मणा सार्द्धं भवेद् [3]यद्यचिरान्मम ।
निवृत्तिर्मे तदा ज्ञेया [4]अन्यथा निधनं [5]किल ॥२००॥
निष्ठुरं वचनं श्रुत्वा ब्राह्मणस्य प्रजापतिः ।
प्रपलाय्य [6]गतस्तस्माद् यत्र देवो महेश्वरः ॥२०१॥
प्रणिपातसहस्रेण देवदेवं प्रणम्य च ।
पुनः परमया भक्त्या निजगाद पितामहः ॥२०२॥
किं करोमि जगन्नाथ कुत्र गच्छामि साम्प्रतम् ।
ब्राह्मणस्य वधेनैव[7] विनाशो मे भविष्यति ॥२०३॥
ज्ञात्वा तु सर्वं वृत्तान्तं सर्वज्ञः परमेश्वरः ।
प्रत्युवाच विधातारं किं वधं ब्रूहि मे[8] ध्रुवम् ॥२०४॥
ब्रह्मणा सर्ववृत्तान्तं कथितं शङ्करस्य च ।
केनोपायेन देवेश तद्वधो न भवेन्मयि ॥२०५॥
तूष्णीं भूयो महेशोऽपि सहसा [9]सरसीं प्रति ।
जगामाव्यक्तरूपेण ब्राह्मणस्य च सन्निधौ ॥२०६॥
कमलाकरमाहूयावदत्तत्र[10] पिनाकधृक् ।
कथं त्यजसि देहं त्वं कान्तमत्यन्तसुन्दरम् ॥२०७॥

1. 'सत्-' A-B. 2. 'मदर्थ-' C. 3. 'यदि चि-' A. 4. 'नान्यथा' ? C. 5. 'श्रृणु' C. 6. 'गतो ह्यस्माद्' A-B. 7. '-नापि' A-B. 8. 'ते' C. 9. 'सरसं' A-C. 10. '-य देवस्तत्र' A.

आत्मघाती भवेद् यस्तु [1]क्रुद्धात्मा धरणीतले ।
मत्तः शृणु विशेषं त्वमुत्कटं नरकं व्रजेत् ॥२०८॥
नोच्यते वटुना तेन ज्ञानहीनेन दुःखिना ।
विचिन्त्यैतन्महादेव उपविश्य पुनर्वदन् ॥२०९॥
[2]दुर्मोहस्त्वं दुराचारो मुक्तहार्दोऽप्रियंवदः ।
मां विलोक्य महारण्ये न ददास्युत्तरं कथम् ॥२१०॥
इत्येतद् वचनं श्रुत्वा [3]तथोमेशं ददर्श सः ।
देवदेवं जगन्नाथं तपस्विरूपधारिणम् ॥२११॥
नत्वा [4]विनम्रभावेन स्वीयदुःखं न्यवेदयत् ।
अखिलं सर्ववृत्तान्तं कथितं [5]तद्द्विजेन तु ॥२१२॥
ज्ञात्वा श्रुत्वा महेशोऽपि द्विजस्य मनुलक्षणम् ।
सदयः पार्वतीनाथो ब्राह्मणाय वचोऽब्रवीत् ॥२१३॥
गृहीतदुष्टमन्त्रेण हन्यते सिद्धिरुत्तमा ।२१४।
प्रत्युवाच द्विजस्तत्र कथं जानासि लक्षणम् ।
समस्तं ब्रूहि भगवन् शृणोमि त्वत्प्रसादतः ॥२१५॥

ईश्वर उवाच ।

तवाभिप्रायमासाद्य सर्वं ज्ञातं मया द्विज ।
यदि त्वं प्रियमाकाङ्क्षी विप्रोऽसि[6] परमार्थतः ॥२१६॥
तदा मत्तो मनुं गृह्ण भुक्तिमुक्तिप्रदायकम् ॥२१७॥
कथिता देवदेवेन विद्या परमदुर्लभा ।
ब्राह्मणाय सुसिद्धा सा सर्वाभीष्टप्रदायिनी ॥२१८॥

1. 'क्रुद्धत्वाद्धरणीतले' B. 2. 'दुर्म्मोही त्वं' A-B. 3. 'उत्थायेशं' C. 4. 'विनय-' C. 5. 'वह्नि-' ? A. 6. '-पि' A-B.

एवमुक्तो [1]विभुस्तस्य [2]अन्तर्धानोऽभवच्च सः ॥२१६॥
लक्षमेकं मनुं जप्त्वा व्रती [3]चैव द्विजोत्तमः ।
लभेताभीष्टसिद्धन्तु सत्यमेव सुनिश्चितम् ॥२२०॥
शुद्धमन्त्रप्रभावेण प्रत्यक्षा चण्डिकाभवत् ।
वरं गृहाण विप्र त्वं मनसा वाञ्छितं यथा ॥२२१॥
दृष्ट्वा तां चण्डिकां देवीं नमस्कुर्याद्द्विजोत्तमः[4] ।
इह [5]विप्रपतिर्भूत्वा परे यामि विभोस्तनौ ।
वरेणातःपरेणापि फलं किं मे भविष्यति ॥२२२॥
एकं भो न वरं लेभे परं ब्रह्मसमागमम् ।
अधुना भूपतिर्भूत्वा राज्यसौख्यमवाप्स्यसि[6] ॥२२३॥
अतः परं मनुं जप्त्वा शचीपतिर्भविष्यसि ॥२२४॥
वरं लब्ध्वा महाभागो ब्राह्मणः कमलाकरः ।
चण्डिकायाः प्रसादेन सहसा स नृपोऽभवत् ॥२२५॥
[7]लभते वाञ्छितां सिद्धिं मन्त्रात् कार्यं न सिध्यति ॥२२६॥
अतोऽपि विधिनानेन यो जपेत् कीलितं मनुम् ।
कल्पकोटिशतेनापि सिद्धिस्तस्य न जायते ॥२२७॥

इति श्रीपूर्णानन्दपरमहंसविरचिते श्रीतत्त्वचिन्तामणौ
दशमः प्रकाशः ॥ १० ॥

---

२२३। एकमिति। एकं परंब्रह्मसमागमं वरं कोऽपि न लेभे अतोऽलं ते तत्प्रार्थनया। तत् किं मया लभ्यमित्यत आह—अधुनेत्यादि।

२२६। मन्त्रादिति कीलितमन्त्रादित्यर्थः।

---

1. 'द्विज-'? A-B. 2. '-र्धानं भवेच्च' A-B. 3. 'तेन' C. 4. '-प्रीत ब्राह्मणः' C. 5. 'हि भूपति-' C. 6. '-ति' A-B. 7. 'न तस्माद् वाञ्छितं कार्यं' C.

## एकादशः प्रकाशः

[ शाक्तकामराजविद्या, लोपामुद्राभेदनिरूपणम्, शाक्तपञ्चमीभेदनिरूपणञ्च ]

[ प्रागुक्तमन्त्रदोषस्मारणम् ]

[1]प्रकाशे दशमेऽमुत्र श्रीविद्याविषये किल ।
अभिशप्तस्य मन्त्रस्य कारणं लिखितं मया ॥ १ ॥

[ अथाकीलितविद्यानिरूपणप्रतिज्ञा ]

अथातोऽकीलितां विद्यां शाक्तां परमदुर्लभाम् ।
ऊर्द्ध्वाम्नायमहातन्त्रे शिवेन [2]परिकीर्त्तिताम् ।
सङ्केतेन प्रवक्ष्यामि [3]श्रीगुरोः कृपया पराम् ॥ २ ॥

[ शाक्तकामराजविद्या, तत्र वाग्भवकूटम् ]

वामाक्षी भगवर्णस्तु [4]काममिन्द्रौ(?)[5]महेश्वरी ।

[ कामराजशक्तिकूटे ]

पूर्ववत् कामशक्त्याख्यौ वर्णौ निष्कीलितात्मकौ ॥ ३ ॥

---

१-२। पूर्वं दशमे प्रकाशे कमलाकरोपाख्यानेनाभिशप्तस्य शाम्भवकामराजमन्त्रस्य सिद्धिप्रतिबन्धकत्वं विशेषेणोपपाद्य प्रकाशेऽस्मिंस्तत् स्मारयति—प्रकाश इत्यादिना। सा शाम्भवकामराजविद्या कीलितत्वदोषपरिहारक्रमानुसरणमन्तरेणानाराधिता सिद्धिं प्रतिबध्नाति। वक्ष्यमाणशाक्तकामराजविद्या तु कीलितत्वादिदोषपरिहीनतया साधकैः सुतरामुपादेयेत्येवाह—अथात इत्यादिना।

३। इदानीं तामकीलितां शाक्तकामराजविद्यामूर्द्ध्वाम्नायतन्त्रानुसारिणीमाह—वामाक्षीत्यादिना। वामाक्षी ईकारः, भगवर्ण एकारः, कामः ककारः, इन्द्रो लकारः,

---

1. 'प्रकाश' इत्यादिपादचतुष्टयम् C-पुस्तके नास्ति। 2. 'परिकीर्त्तिते'ति A-C-पुस्तकधृतः पाठः प्रामादिकः प्रथमाया अनन्वयात्। 3. 'श्रीगुरुः' ? A. 4. अत्र 'काम इन्द्र' इति पाठः समीचीन इति प्रतिभाति लकारद्वयस्यान्यत्रादर्शनात्। 5. 'ह्रुते-' A.B.

[ अस्या निष्कीलितत्वं प्रकर्षश्च ]

निष्कीलिता महाविद्या [1]शाक्ता सर्वार्थसिद्धिदा ।
सवीर्या मोक्षदा नित्या त्रैलोक्यवशकारिणी ॥ ४ ॥

[ अस्या आम्नायविशेषानुगतत्वम् ]

पूर्वाम्ना[2]यमहाविद्या सुगोप्तव्या प्रयत्नतः ॥ ५ ॥

[ पश्चिमाम्नायानुगतलोपामुद्रानिरूपणप्रतिज्ञा ]

लोपामुद्रां प्रवक्ष्यामि पश्चिमाम्नाययोजिताम् ॥ ६ ॥

[ शाम्भवलोपामुद्रा ]

हसौ [3]कामः शक्रो भुवनभयभङ्गव्यसनिनी
शिवः सोमः सूर्यो मदनदहनः शक्रगिरिजे ।
विधुर्ब्रह्मा भूमिर्भुवनजननीबीजघटिता
[4]भजन्त्येते धन्याः परमपदविज्ञाननिपुणाः ॥ ७ ॥

---

महेश्वरी ह्रीं । एवञ्च ई ए क ल ह्रीमिति वाग्भवकूटमिति पर्यवस्यति* । पूर्ववदिति । अत्रायमभिप्रायः—पूर्वं शाम्भवकामराजविद्यायां क ए ई ल ह्रीमिति निरुक्तवाग्भवकूटसमावेशेनैव तस्याः कीलितत्वम्, अतस्तद्वाग्भवकूटपरित्यागेन यद्यपरकूटद्वयम् ई ए क ल ह्रीमित्येतन्मन्त्रोक्तवाग्भवकूटेन संयोज्येत, तदा न कीलितत्वदोषः । इममेवार्थं सूचयितुमत्र तद्विलक्षणं वाग्भवकूटमात्रमभिधाय पूर्ववत् कामशक्त्याख्यावित्यादिना ह स क ह ल ह्रीं, स क ल ह्रीमित्येतयोः कामराजशक्तिकूटयोर्ग्रहणं समुदितमन्त्रस्य निष्कीलितत्वञ्चाभिहितमिति निष्कर्षः । कूटत्रयविभागपूर्वकं समुदितो मन्त्रः प्रदर्श्यते—

[ शाक्तकामराजविद्या ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| ई | ह | स |
| ए | स | क |
| क | क | ल |
| ल | ह | ह्रीं |
| ह्रीं | ल | |
| | ह्रीं | |

७ । शाम्भवीं लोपामुद्रां संहारदोषयुक्तामाह—हसावित्यादिना । हसाविति

---

1. 'शक्त्या' C. 2. '-ये म-' B-C. 3. 'शक्रः कामो' ? A. 4. 'भवन्त्येते' C.

* B-टिप्पन्यान्तु ए ई क ल ह्रीमिति मन्त्रोद्धारो दृश्यते, स तु निरुक्तं प्रमाणं नानुसरतीति ध्येयम् ।

[ निरुक्तकूटत्रयस्वरूपम् ]

[1]शुक्लं वाग्भव[2]मादिबीजमुदितं शास्त्रेषु बुद्धिप्रदं
रक्तं कोटिसितेतरांशुसदृशं कामाधिराजं परम् ।
वश्यं यस्य चराचरादि जगतो योनिश्च [3]या कीर्त्तिता
[4]शाक्तं गौरमनन्ततापशमनं बीजं शिवं साधकैः ॥८॥

[ अस्याः प्रकर्षः ]

शिवशक्तिमयी देवी साक्षात्त्रिपुरसुन्दरी ।
दुर्लभा परमा विद्या संहारदोषसंयुता ॥
शाम्भवी सा समुद्दिष्टा

[ शाक्तलोपामुद्रा तत्र वाग्भवकूटम् ]

शाक्तांश्च कथयाम्यथ ॥ ९ ॥

---

हकारः, सकारश्च, कामः ककारः, शक्रो लकारः, भुवनभयभङ्गव्यसनिनी ह्रीं । एवञ्च ह स क ल ह्रीमिति वाग्भवकूटम् । शिव इति । शिवोऽकारः, सोमः सकारः, सूर्यः ककारः, मदनदहनो हकारः, शक्रो लकारः, गिरिजा ह्रीं । एवञ्च ह स क ह ल ह्रीमिति कामराजकूटम् । विधुरिति । विधुः सकारः, ब्रह्मा ककारः, भूमिर्लकारः, भुवनजनीबीजं ह्रीमिति तेन घटिता । एवञ्च स क ल ह्रीमिति शक्तिकूटम् । तथा चैतत्समुदितो मन्त्रः कूटभेदेन प्रदर्श्यते—

[ शाम्भवी ( प्रथमा ) लोपामुद्रा संहारदोषयुक्ता ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| ह | ह | स |
| स | स | क |
| क | क | ल |
| ल | ह | ह्रीं |
| ह्रीं | ल | |
| | ह्रीं | |

८। निरुक्तमन्त्रघटकवाग्भवादिकूटत्रयस्य स्वरूपमाह—शुक्लमित्यादिना । शाक्तं शक्तिकूटमित्यर्थः ।

९-१०। एवं शाम्भवलोपामुद्रामभिधाय शाक्तां लोपामुद्रां पञ्चदशाक्षरीमाह

---

1. 'शुद्धं' A, C. 2. '-बीजमेतदु-' C. 3. 'वा' C. 4. 'शक्ति-' C.

झिण्टीशोऽपि भगः कामो देवराजो महेश्वरी ।

[ कामराजशक्तिकूटे ]

पूर्ववत् कामशक्त्याख्यौ वर्णौ निष्कीलितात्मकौ ॥१०॥

[ सप्तदशाक्षरी शाक्तलोपामुद्रा ]

एषा श्रीः प्राणसंयुक्ता महात्रिपुरसुन्दरी ।

[ अस्याः प्रकर्षः ]

विद्या वेद्या परा गुप्ता संहारदोष[1]वर्जिता ।
संहारी [2]पूर्वमुद्दिष्टा [3]दानहीना न भोगदा ॥ ११ ॥

झिण्टीश इत्यादिना । झिण्टीश एकारः, भगोऽत्र ईकारः, कामः ककारः, देवराजो लकारः, महेश्वरी ह्रीं । एवञ्च ए ई क ल ह्रीमिति वागभवकूटम् । पूर्ववदिति कामराजकूटं शक्तिकूटञ्च पूर्ववत् शाम्भव-लोपामुद्रावदित्यर्थः । एतत्त्रिकूटघटित-मन्त्रस्य स्वरूपं रेखान्यासेन प्रदर्श्यते—

[ पञ्चदशाक्षरी शाक्तलोपामुद्रा ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| ए ई क ल ह्रीं | ह स क ह ल ह्रीं | स क ल ह्रीं |

११ । मन्त्रान्तरमाह—एषेति । प्रागुक्ता पञ्चदशाक्षरी श्रीः श्रीविद्यैव प्राणेन हंस-बीजेन हंस इति वर्णद्वयेनेत्यर्थः, संयुक्ता चेत्तदा सप्तदशाक्षरी महात्रिपुरसुन्दरी भवेदित्यर्थः । तदुक्तं तन्त्रसारे—

त्रिकूटान्ते हंसबीजं बिन्दुसर्गविभूषितम् ।
एषा श्रीः प्राणसंयुक्ता दारिद्र्यदुःखमोचनी ॥

इति । एतन्मन्त्रस्वरूपं प्रदर्श्यते—

[ सप्तदशाक्षरीयम् ]

| वाग्भवकूटम् | कामराजकूटम् | शक्तिकूटम् |
|---|---|---|
| ए ई क ल ह्रीं | ह स क ह ल ह्रीं | स क ल ह्रीं हं सः |

1. 'रूप-' C. 2. 'सर्व-' A. 3. 'कुलैर्हीना' C.

पूर्वं यदादौ च त्रिमूर्त्तिका च[1]
ज्योत्स्ना यदा स्यात् परतस्तथावत् ।
तदा हि मन्त्रे विनियोज्य बीजं
प्रवर्त्ततेऽर्णः क्रमशो विशेषः ॥ १२ ॥

इदन्तु कथितं सारं

[ सप्तदशाक्षरं मन्त्रान्तरम् ]

परञ्च कथयाम्यथ ।

[ तत्र वाग्भवकामराजकूटयोर्विशेषः ]

वाग्भवे कामराजे[2] च शक्तिराद्या भवेद् यदि ॥१३॥
सर्वसिद्धिकरी विद्या मुक्तिदा भोगदायिनी ।
पूर्ववत् शक्तिकूटञ्च[3] योजयेत्तदनन्तरम् ॥१४॥

१२। मन्त्रान्तरमाह—पूर्वं इति। पूर्वं प्रागुक्तकामराजविद्याया वाग्भवकूटे यदा आदौ त्रिमूर्त्तिका दीर्घेकारस्तथा ज्योत्स्ना एकारः स्यात्, एतेन ई ए क ल ह्रीमिति वाग्भवकूटं यदा स्यादिति बोध्यम्। तदा मन्त्रे प्रागुक्तायामीकारादिकामराज-विद्यायामित्यर्थः, बीजं हंसबीजं विनियोज्य त्रिकूटान्त इति शेषः, वक्ष्यमाणमन्त्रे तथा दर्शनात्। क्रमशो विशेषाऽर्णः विशिष्टो मन्त्रो भवतीत्यर्थः। रेखापातेनायं मन्त्रः प्रदर्श्यते—

[ सप्तदशाक्षरी ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| ई | ह | स |
| ए | स | क |
| क | क | ल |
| ल | ह | ह्रीं |
| ह्रीं | ल | हं |
| | ह्रीं | सः |

१३-१५। अथ सप्तदशाक्षरं मन्त्रान्तरं वक्तुं प्रतिजानीते—परञ्चेत्यादिना। अस्यापि मन्त्रस्य त्रिकूटघटितत्वेन प्रथमं वाग्भवकामराजकूटयोर्व्यवस्थामाह—वाग्भव इत्यादिना। प्रागुक्तसप्तदशाक्षरमन्त्रस्यैव वाग्भवकूटे यदि शक्तिराद्या भवेत् प्रागुक्ते-काराधःस्थितमेकारं यदीकारात् पूर्वं योजयेदित्यर्थः। तथा कामराजकूटे यदि शक्तिः

1. '-पि' C. 2. '-बीजे' C. 3. '-न्तु', C.

त्रिकूटान्ते हंसबीजं बिन्दुसर्गसमन्वितम्।
तदा सप्तदशी विद्या दुःखदारिद्रनाशिनी[1] ॥१५॥

[ अष्टादशाक्षरी ]

ऐंकारं प्रथमे कूटे क्लींकारं कामराजके।
सौःकारं शक्तिकूटे च विद्या अष्टादशाक्षरी ॥१६॥

---

सकारः आद्या भवेत् हकाराधःस्थितं सकारं यदि हकारात् पूर्वं योजयेदित्यर्थः। एतेन ए ई क ल ह्रीमिति वागभवकूटम्, स ह क ह ल ह्रीमिति कामराजकूटमित्युक्तं भवति। एतत्कूटद्वयजपफलमाह—सर्वसिद्धिकरीत्यादिना। शक्तिकूटमाह—पूर्ववदिति। अस्य मन्त्रस्य शाक्तलोपामुद्रापञ्चदशाक्षर-मन्त्रप्रकृतिकतया पूर्ववत् शक्तिकूटमित्यनेन स क ल ह्रीमिति शाक्तकामराजशक्तिकूटमेव बोध्यम्। तस्य शक्तिकूटस्यान्ते बिन्दु-विसर्गसमन्वितं हंसबीजं हं सः इति वर्णद्वयं योजयेदित्यर्थः। अन्यथा पूर्वेणैव हंस-बीजस्य लाभात् त्रिकूटान्ते इत्यादेर्वैयर्थ्यं स्यादिति ध्येयम्। रेखापातेनास्य संस्थानं प्रदर्श्यते—

[ सप्तदशाक्षरी ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| ए | स | स |
| ई | ह | क |
| क | क | ल |
| ल | ह | ह्रीं |
| ह्रीं | ल | हं |
| | ह्रीं | सः |

१६। अष्टादशाक्षरीं त्रिकूटघटितां विद्यामाह—ऐँकारमित्यादिना। हंसरूप-वर्णद्वयरहितस्यैव निरुक्तमन्त्रस्य कूटत्रयाणां प्रथमे वाग्भवकूटे आदाविति शेषः ऐँकारम्, द्वितीयकामराजकूटस्यादौ क्लींकारम्, तृतीय-शक्तिकूटस्यादौ सौःकारं चेन्नियोजयेत् तेन प्रागुक्ता पञ्चदशाक्षरी विद्यैव ऐँ क्लीं सौः इत्यक्षरत्रयवृद्ध्याष्टादशाक्षरी भवेदिति फलितार्थः। अस्याः संस्थानं प्रदर्श्यते—

[ अष्टादशाक्षरी ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| ऐँ | क्लीं | सौः |
| ए | ह | स |
| ई | स | क |
| क | क | ल |
| ल | ह | ह्रीं |
| ह्रीं | ल | |
| | ह्रीं | |

---

1. '-मोचनी' C.

[ विंशत्यक्षरी ]

सर्वान्ते हंससंयुक्ता[1] तदा विंशाक्षरी भवेत् ।

[ अत्र प्रामाणिकतन्त्रनिर्णयः ]

मन्त्रनिर्णयतन्त्रस्य मतं ज्ञात्वेति कीर्त्तितम् ॥१७॥

[ शाक्तवामकेशीविद्यायाः प्रशस्तिः ]

पूर्वाम्नाये वामकेशी [2]या विद्या समुदाहृता ।
सवीर्या सिद्धिदा सा तु शाक्ता परमदुर्लभा ॥१८॥

[ विद्यायाः स्वरूपम् ]

प्रथमं वाग्भवं कूटं बीजभेदाद् वदाम्यथ[3] ।
महेशः शक्तिकामौ च [4]शक्रबीजं ततः पठेत् ।

---

१७। विंशत्यक्षरीमाह—सर्वान्त इति। एतस्या अष्टादशाक्षरविद्यायाः सर्वान्ते शक्तिकूटान्ते इत्यर्थः। हंस इति वर्णद्वय-निवेशे विंशत्यक्षरी विद्या भवेदिति मन्त्र-निर्णयतन्त्रसम्मतः क्रमः। अस्याः संस्थानं यथा—

[ विंशत्यक्षरी विद्या ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| ऐँ | क्लीं | सौः |
| ए | ह | स |
| ई | स | क |
| क | क | ल |
| ल | ह | ह्रीं |
| ह्रीं | ल | हं |
| | ह्रीं | सः |

१८। पूर्वं दशमे प्रकाशे कन्दर्पो विष्णुयुक्तोऽधरमुखसहित इत्यादिना या शाम्भवकामराजविद्याभिहिता सैव शाम्भवी वामकेशीत्युक्तं तत्रैव 'वामकेशी शाम्भवी सा पूर्वाम्नायैः प्रकीर्त्तिते'त्यादिना। सा च कीलिता सिद्धिपरिपन्थिनी। शाक्ता वामकेशी तु वीर्यवती सिद्धिदायिनी चेत्येवाह पूर्वाम्नाय—इत्यादिना।

१९। तस्याः शाक्तवामकेश्याः किं स्वरूपमित्यत्राह—प्रथममित्यादि। प्रथममादि-

---

1. '-बीजे च' C. 2. 'विद्या या' B. 3. '-ह्मम्' C. 4. 'शक्ति-' ? A.

[1]महामाया ततः पश्चात् सकीलं वाग्भवान्वितम् ॥१९॥

[ प्रकारान्तरम् ]

[2]यदीदं वाग्भवश्चैव पुरा शक्तिश्च योजिता ।
तदा गुप्ततमा विद्या न शास्त्रेषु प्रकीर्त्तिता ॥२०॥
शिवः शक्तिस्ततो ब्रह्मा शिवः शक्रस्ततः परम् ।
महामाया ततः पश्चाद् ब्रह्मबीजं तदन्तिके ।

---

प्राप्तं वाग्भवकूटं बीजभेदाद् वदामीति सम्बन्धः । एवञ्च वाग्भवकूटभेदेनैवास्या भेदः, कामराजशक्तिकूटे तु पूर्ववदेवेति बोध्यम् ।

अथ वाग्भवकूटमाह—महेश इत्यादिना । महेशो हकारः, शक्तिः सकारः, कामः ककारः, शक्रबीजं लकारः, महामाया ह्रीं । एवञ्च ह स क ल ह्रीमिति वाग्भवकूटम् । समुदितमन्त्रस्वरूपमाह---सकीलमिति । वाग्भवान्वितमेतद् वाग्भवकूटविशिष्टं सकीलं कीलितशाम्भवकामराजं तत्कामराजकूटं तच्छक्तिकूटञ्च पठेदित्यर्थः । रेखापातेनास्य स्वरूपं प्रदर्श्यते--

[ शाक्तकामराज-भेदः ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| ह | ह | स |
| स | स | क |
| क | क | ल |
| ल | ह | ह्रीं |
| ह्रीं | ल | |
| | ह्रीं | |

२०-२१ । प्रकारान्तरमाह—यदीत्यादिना । यदि इदं वाग्भवकूटं विलिख्य तत्र पुरा प्रथमं हकारात् पूर्वं शक्तिः सकारः योजिता स्यादिति सम्बन्धः । एवञ्च पूर्वोक्तवाग्भवे हकारात् पूर्वं सकार योजिते स ह क ल ह्रीमिति वाग्भवकूटं भवति। अत्र कामराजकूटेऽपि विशेषमाह शिव इत्यादिना । शिवो हकारः, शक्तिः सकारः, ब्रह्मा ककारः, पुनः शिवो हकारः, शक्रो लकारः, महामाया ह्रीं, तदन्तिके ब्रह्मबीजं कामबीजं क्लीं । एवञ्च ह स क ह ल ह्रीं क्लीमिति कामराजकूटम्। शक्तिकूटमाह—पूर्ववदिति । एतेन स क ल ह्रीमिति शक्तिकूटमिति स्थितम् । रेखापातेनायं मन्त्रः प्रदर्श्यते—

---

1. 'महामाये'त्यतः 'प्रकीर्तिते'त्यन्तोऽंशः A-पुस्तके नास्ति । 2. 'यदीदमि'त्यादिपादद्वयं B-पुस्तके नास्ति ।

पूर्ववत् शक्तिबीजन्तु

[ पश्चिमाम्नायसम्मता शाक्तलोपामुद्रा ]

शाक्तं शृणु वदाम्यथ ॥२१॥

[ तत्र वाग्भवकूटम् ]

शक्तिर्महेशः कामश्च[1] [2]शक्रबीजं परेश्वरी ।

[ कामराजशक्तिकूटे ]

पूर्ववत् कामशक्त्याख्यौ वर्णौ निष्कीलितात्मकौ ॥२२॥

[ शाक्तकामराजभेदः ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| स | ह | स |
| ह | स | क |
| क | क | ल |
| ल | ह | ह्रीं |
| ह्रीं | ल | |
| | ह्रीं | |
| | क्लीं | |

२१-२२। शाक्तलोपामुद्रामाह—शाक्तं शृण्वित्यादिना। इयमपि पूर्ववत् कूटत्रयात्मिका। तत्र प्रथमं वाग्भवकूटं निरूपयति—शक्तिरित्यादिना। शक्तिः सकारः, महेशो हकारः, कामः ककारः, शक्रबीजं लकारः, परेश्वरी ह्रीं। एवञ्च स ह क ल ह्रीमिति वाग्भवकूटम्। द्वितीयं कामराजकूटं तृतीयं शक्तिकूटञ्च निरूपयति—पूर्ववदित्यादिना। कामराजकूटशक्तिकूटे—ह स क ह ल ह्रीं, स क ल ह्रीमित्याकारक इत्यर्थः। आगमतत्त्वविलासे तु ह स क ल ह्रीमिति कामराजकूटमित्युपदर्शितम्।

[ शाक्ता लोपामुद्रा पञ्चदशाक्षरी ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| स | ह | स |
| ह | स | क |
| क | क | ल |
| ल | ह | ह्रीं |
| ह्रीं | ल | |
| | ह्रीं | |

1. '-स्तु' C. 2. '-शक्ति-' ? A.

[ एतदुपजीव्यागमनिर्णयः ]

इति शाक्ता महाविद्या पश्चिमाम्नाययोजिता ।

[ एतत्कूटत्रयाधिष्ठातृदेवतानिर्णयः ]

वागीश्वरी ज्ञानशक्तिर्वाग्भवे मोक्षदायिनी ॥२३॥
कामराजे[1] कामकला महातत्त्वप्रबोधिनी ।
शक्तिबीजे महामाया शिवशक्तिस्वरूपिणी ॥२४॥
एवं सा त्र्यक्षरी विद्या महात्रिपुरसुन्दरी ॥२५॥

[ प्रकारान्तरम् ]

[2]वामकेश्याश्च विद्यायां परां शक्तिं शृणुष्व [3]च ।
मादनस्थे भगे बीजे त्रैलोक्ये नास्त्यतोऽधिकम् ॥२६॥
प्रकाशाद्यापरे माया [4]सन्धित्वादेव निश्चितम् ।
तदेवैकारमुद्दिष्टं नान्यदेकारमीरितम् ।
ब्रह्माण्डादिकटाहान्तं जगदद्यापि वर्त्तते ॥२७॥

[ शाक्तकामराजविद्या तत्र वाग्भवकूटम् ]

एतद् भगं ततो माया ब्रह्मा शक्रो हरप्रिया ।

[ कामराजकूटम् ]

शिवः शक्तिर्विधिः शून्यो वज्रधृक् [5]परमेश्वरी ॥२८॥

[ शक्तिकूटम् ]

हाद्यं मादनशक्रौ च महामाया ततः परम् ।

[ अस्या भेदत्रयम् ]

ब्रह्मबीजं [6]ततो दद्यात् त्रिकूटान्ते च साधकः ॥२९॥

---

२३-२५। पश्चिमाम्नाययोजिता पश्चिमाम्नाये प्रतिपादितेत्यर्थः। एतत्कूटत्रयाधिष्ठातृदेवताः फलनिरूपणमुखेनाह—वागीश्वरीत्यादिना। त्र्यक्षरीति त्रिकूटेत्यर्थः।

२८-३०। पुनः शाक्तकामराजविद्यान्तरमाह—एतदित्यादिना। भग एकारः, माया ईकारः, ब्रह्मा ककारः, शक्रो लकारः, हरप्रिया ह्रीं। एवञ्च ए ई क ल ह्रीमिति वागभवकूटम्। अस्य वाग्भवकूटत्वं स्फुटमाह तन्त्रसारधृतश्रीक्रमे—

---

1. '-बीजे' A. 2. 'काम-' A-B. 3. 'तत्' C. 4. 'सन्दित्वा-' ? B. 5. 'भुवनेश्वरी' C. 6. 'त्रिकूटान्ते प्रदद्यात् साधकोत्तमः' C.

**प्रथमा सुन्दरी [1]विद्या द्वितीया ब्रह्मसुन्दरी।**
**शक्तिकूटे महामाया [2]अनन्तसुन्दरी मता ॥३०॥**

एतद् भगं ततो माया ब्रह्मा शक्रो हरोऽग्निना।
वामनेत्रेण संयुक्तो नादबिन्दुविभूषितः।
एतद् वाग्भवमुद्दिष्टं पूर्ववत् कामशक्तिकम् ॥ इति।

कामराजकूटमाह—शिव इत्यादिना। शिवो हकारः, शक्तिः सकारः, विधिः ककारः, शून्यो हकारः, वज्रधृग् लकारः, परमेश्वरी ह्रीं। एवञ्च—ह स क ह ल ह्रीमिति कामराजकूटम्। शक्तिकूटमाह—हाद्यमिति। हाद्यं हकारस्याद्यं सकारः, मादनः ककारः, शक्रो लकारः, महामाया ह्रीं। एवञ्च स क ल ह्रीमिति शक्तिकूटम्। ब्रह्मबीजमिति। त्रिकूटान्ते इति पाठे ब्रह्मबीजं प्रणवं त्रिकूटान्ते निरुक्तमन्त्रत्रयकानां वाग्भव-कामराज-शक्तिकूटानामन्ते दद्यादित्यर्थे ए ई क ल ह्रीं ॐ। ह स क ह ल ह्रीं ॐ। स क ल ह्रीं ॐ इति मन्त्रस्वरूपं पर्यवस्यति। परन्तु B-पुस्तकपादटीकायां त्रिकूटान्ते इत्यत्र त्रिकूटेषु इति पाठदर्शनात्, तन्त्रसारे च—'ब्रह्मबीजं यदा दद्यात्त्रिकूटे परमेश्वरि' इति वचने प्रणवान्तत्वनियमाभावात्, आगमतत्त्वविलासे ब्रह्मबीजं प्रणवः, स चाद्यकूटादौ चेत् सुन्दरी, द्वितीयकूटादौ चेद् ब्रह्मसुन्दरी, तृतीयकूटादौ चेदनन्तसुन्दरी इत्यादिना विशिष्य प्रणवादित्वप्रतिपादनात् B-पुस्तकपादटीकायां प्रणवपूर्वककूटत्रयात्मकमन्त्रोद्धारपरिपाटीदर्शनाच्च त्रिकूटान्त इत्यत्र त्रिकूटेष्विति पाठः समीचीनतया प्रतिभाति। एतन्मन्त्रविषयं विद्यात्रयमाह—प्रथमा सुन्दरी विद्येत्यादिना। अत्रेदमवधेयम्—पूर्ववचने यत् त्रिकूटे प्रणवयोगोऽभिहितः, स तु सुन्दर्यादिविद्याभेदेन न तु सर्वत्र। तथा हि प्रागुक्तत्रिकूटात्मकपञ्चदशाक्षरमन्त्रे प्रथमकूटमात्रे प्रणवयोगात् सुन्दरी विद्या भवति। प्रथमतृतीयकूटवर्जं द्वितीयकूटे प्रणवयोगाद् ब्रह्मसुन्दरी, प्रथमद्वितीयवर्जं तृतीयकूटे तद्योगादनन्तसुन्दरीति। एवञ्च पञ्चदशाक्षरमन्त्रस्य एकैकप्रणवयोगेन षोडशाक्षरत्वमुपपद्यते। एतदभिप्रायेणैव एषा तु षोडशी विद्येत्याद्युक्तम्। एतन्मन्त्रत्रयं सुखबोधाय रेखापातेन स्फुटं प्रदर्श्यते—

[ अष्टादशाक्षरी सुन्दरी ( षोडशी ) ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| ॐ | ह | स |
| ए | स | क |
| ई | क | ल |
| क | ह | ह्रीं |
| ल | ल | |
| ह्रीं | ह्रीं | |

1. 'देवी' C. 2. 'अनन्ता-'? A.

एषा तु षोडशी विद्या व्यक्तिभेदेन दर्शिता।

[ अस्याः प्रकर्षः ]

विद्या वेद्या परा गुप्ता संहाररूपवर्जिता ॥३१॥

[ मन्त्रान्तरम् ]

एषा श्रीः प्राणसंयुक्ता दुःखदारिद्र्य[1]नाशिनी ॥३२॥

[ मन्त्रान्तरम् ]

अथ वक्ष्यामि तां विद्यां कामराजमनोहराम्।

[ वाग्भवकूटम् ]

शिवबीजं शक्तिसोमं मादनञ्च पुरन्दरम् ॥३३॥

---

[ ब्रह्मसुन्दरी (षोडशी) ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| ए | ॐ | स |
| ई | ह | क |
| क | स | ल |
| ल | क | ह्रीं |
| ह्रीं | ह | |
| | ल | |
| | ह्रीं | |

[ अनन्तसुन्दरी (षोडशी) ]

| वाग्भवकूटम् | कामराजकूटम् | शक्तिकूटम् |
|---|---|---|
| ए | ह | ॐ |
| ई | स | स |
| क | क | क |
| ल | ह | ल |
| ह्रीं | ल | ह्रीं |
| | ह्रीं | |

[ कामराजविद्या ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| ए | ह | स |
| ई | स | क |
| क | क | ल |
| ल | ह | ह्रीं |
| ह्रीं | ल | हं |
| | ह्रीं | सः |

३२। मन्त्रान्तरमाह—एषेति। एषा प्रागुक्ता श्रीः सुन्दरी विद्या प्राणेन हंसः इति बीजेन संयुक्तेत्यर्थः। अत्र विशेषानभिधानेऽपि शक्तिकूटान्ते हंसबीजयोगो बोध्यः। 'त्रिकूटान्ते हंसबीजं बिन्दुसर्गविभूषितम्' इति तन्त्रसारवचनदर्शनात्। त्रिकूटान्ते तृतीयकूटान्ते।

३३—३४। शाक्तलोपामुद्रान्तरमाह—अथेत्यादिना महाविद्येत्यन्तेन। काम-

---

1. '-मोचनी' C.

महामायां

[ कामराज-शक्तिकूटे ]

काम-शक्ती पूर्ववच्च समुद्धरेत् ।

एवमेषा महाविद्या

[ अथ नवाक्षरी ]

शृणुष्व चापरामथ ॥ ३४ ॥

[ तत्र वाग्भवकूटम् ]

शिवः शक्तिर्भुवनेशी वाग्भवं बीजमुत्तमम् ।

[ कामराजकूटम् ]

द्विजराजं पञ्चवक्त्रं[1] महामाया ततः परम् ॥३५॥

---

राजमनोहरामिति कामराजस्य कामेश्वरस्य मनोहारिणीमित्यर्थः । शिवेति । शिवबीजं हकारः, *शक्तिः सकारः, सोमः सकारः, मादनः ककारः, पुरन्दरो लकारः, महामाया ह्रीं। एवञ्च ह स स क ल ह्रीमिति वाग्भवकूटम् । अपरकूटद्वयमाह—कामेति । कामशक्ती कामराजकूटं शक्तिकूटञ्चेत्यर्थः । पूर्ववदिति कामराजविद्यावत् । तन्त्रसारेऽपि पुनः शाक्तलोपामुद्रा तु इत्यभिधाय—शिवबीजं शक्तिसोमं मादनञ्च पुरन्दरम् । व्योमवह्निसमायुक्तं तुरीयस्वरबिन्दुकम् ॥ पूर्ववत् कामराजन्तु शक्तिकूटं समुद्धरेत् ॥ इत्यनेन कामराजविद्याद्वितीयतृतीयकूटाभ्यामेवाव-शिष्टकूटद्वयनिष्पत्तिरभिहिता । रेखापातेनायं मन्त्रः प्रदर्श्यते—

[ शाक्तलोपामुद्रा ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| ह | ह | स |
| स | स | क |
| स | क | ल |
| क | ह | ह्रीं |
| ल | ल | |
| ह्रीं | ह्रीं | |

३५—३६ । अथ नवाक्षरीं विद्यामभिदधानः प्रथमं वाग्भवकूटमाह—शिव इति । शिवो हकारः, शक्तिः सकारः, भुवनेशी ह्रीं । एवञ्च ह स ह्रीमिति वाग्भव-

---

1. '-कूटं' A.

* अत्र शक्तिरेकार इति B-पुस्तकपादटिप्पनी, शक्तिः सकार इति तन्त्रसारः ।

[ शक्तिकूटम् ]

ब्रह्मा शिवो महामाया नवार्णा परिकीर्त्तिता ।

[ अस्याः पूर्वाम्नायानुगतत्वम् ]

रुद्रशक्तिरियं देवी पूर्वाम्नाया हि नायिका ॥३६॥

[ दक्षिणोत्तरमध्यमाम्नायानुगतलोपामुद्राविद्यानिरूपणप्रतिज्ञा ]

इदानीन्तु प्रवक्ष्यामि दक्षिणोत्तरमध्यमम् ॥३७॥

[ तत्र वाग्भवकूटम् ]

मादनं पञ्चवक्त्रस्तु[1] लोहिता रुद्रयोगिनी ।
पुरन्दरो महामाया वाग्भवं बीजमुत्तमम् ॥३८॥

[ कामराजशक्तिकूटे ]

पूर्ववत् कामशक्त्याख्या[2]वुद्धरेत् साधकोत्तमः ।

---

कूटम् । कामराजकूटमाह—द्विजेति । द्विजराजः सकारः, पञ्चवक्त्रो हकारः, महामाया ह्रीं । एवञ्च स ह ह्रीमिति कामराजकूटम् । शक्तिकूटमाह—ब्रह्मेति । ब्रह्मा ककारः, शिवो हकारः, महामाया ह्रीं । एवञ्च क ह ह्रीमिति शक्तिकूटम् ।

शिवः शक्तिर्भुवनेशी वाग्भवं बीजमुत्तमम् ।
कामं व्योम च देवेशि महामाया ततः परम् ।
कामं व्योम महामाया नवार्णा परिकीर्त्तिता ॥

इति तन्त्रसारधृतवचनानुसारेण तु क ह ह्रीमिति कामराजकूटम्, शक्तिकूटञ्चेति विशेषो दृश्यते । मन्त्रोऽयं रेखापातेन प्रदर्श्यते—

[ रुद्रशक्तिर्नवार्णा ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| ह | स | क |
| स | ह | ह |
| ह्रीं | ह्रीं | ह्रीं |

३७—३९ । एवं पूर्वाम्नायानुगतां विद्यामभिधाय क्रमेण दक्षिणोत्तरमध्यमाम्नायानुसारेण तामभिधातुं प्रतिजानीते—इदानीन्त्वित्यादिना । तत्र प्रथमं दक्षिणाम्नायानुसारेण त्रिपुरां विद्यामभिदधानः प्रथमं वाग्भवकूटमाह—मादनमित्यादिना । मादनं

---

1. '-वक्त्रार्ण' A-B. 2. '-मु-' A-B.

एतच्छाम्भवमुद्दिष्टं

[ शाक्तलोपामुद्रा ]

शाक्तञ्च कथयाम्यथ ॥३९॥

[ तत्र वाग्भवकूटम् ]

[1]भृग्वीशं गगनं हान्तं काल[2]मिन्द्रं महेश्वरम्[3] ।
वामाक्षिवह्निचन्द्राढ्यं वाग्भवं कूटमुत्तमम् ॥४०॥

[ कामराजशक्तिकूटे ]

कामराजं[4] [5]शक्तिकूटं पूर्ववच्च समुद्धरेत् ।

[ अस्या दक्षिणाम्नायानुगतत्वम् ]

दक्षिणं [6]दक्षहन्तारं सर्वदुःखविमोचनम् ॥४१॥

---

...कारः, पञ्चवक्त्रो हकारः, लोहिता ...कारः, रुद्रयोगिनी मकारः, पुरन्दरो ...कारः, महामाया ह्रीं । एवञ्च क ह क्ष म ल ह्रीमिति वाग्भवकूटम् । पूर्ववदिति । ...स्य कामशक्त्याख्यौ कामराजकूट-शक्ति-कूटे पूर्ववत् कामराजविद्यावदित्यर्थः । तेन ह स क ह ल ह्रीमिति कामराजकूटम्, स क ल ह्रीमिति शक्तिकूटम् । रेखापातेनेयं ...मुपदर्श्यते—

[ षोडशी शाम्भवलोपामुद्रा ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| क | ह | स |
| ह | स | क |
| क्ष | क | ल |
| म | ह | ह्रीं |
| ल | ल | |
| ह्रीं | ह्रीं | |

३९ । इयं शाम्भवलोपामुद्रेत्येवाह—एतच्छाम्भवमुद्दिष्टमित्यनेन ।

४०—४१ । शाक्तलोपामुद्रां त्रिकूटामभिदधानः प्रथमं वाग्भवकूटमाह—भृग्वीश-मित्यादिना । भृग्वीशः सकारः, गगनं हकारः, हान्तः क्षकारः, कालो मकारः, इन्द्रो लकारः, महेश्वरो हकारः, स च वामाक्षिवह्निचन्द्राढ्य ईकाररकारचन्द्रबिन्दुपरि-मण्डित इत्यर्थः, एतेन ह्रीमिति प्राप्तम् । एवञ्च स ह क्ष म ल ह्रीमिति वाग्भवकूटमिति

---

1. '-भूबीजं' ? B. 2. 'काम-' ? C. 3. '-रीम्' ? C. 4. '-बीजं' A-B. 5. 'वह्नि-' A-B. 6. 'हस्त-' ? A.

[ अथ मदद्रवाविद्यानिरूपणप्रतिज्ञा ]

अपराञ्च प्रवक्ष्यामि सर्वकामप्रपूरिणीम्[1] ।

[ मदद्रवामन्त्रः ]

भौतिको बिन्दुसंयुक्तः क्लिन्ने च तदधः पठेत् ॥४२॥
मादनं शक्रसंयुक्तं मूर्त्तिबिन्दुसमन्वितम्[2] ।
मदद्रवे [3]चन्द्रसंस्थमोकारान्तेन कादिना ॥४३॥
कामबीजं ततः पश्चात् षष्ठस्वरविभूषितम् ।
[4]इन्द्रं झिण्टीशसंयुक्तं वियत् सोमो [5]ग्रहेश्वरः ॥४४॥
महासेनस्ततः पश्चाद् [6]गीता दक्षिणनायिका ।
मदद्रवेयं [7]कथिता शक्तिविभ्रमकारिणी ॥४५॥

---

पर्यवस्यति। एवं वाग्भवकूटमभिधाय कूटान्तरव्यवस्थामाह—कामराजमिति। अस्य कामराजकूटं शक्तिकूटञ्च पूर्ववत् निरुक्तकामराजविद्यावत् समुद्धरेदित्यर्थः। एवञ्च ह स क ह ल ह्रीमिति कामराजकूटम्। स क ल ह्रीमिति शक्तिकूटमिति बोध्यम्। तदयं समुदितो मन्त्रः प्रदर्श्यते—

[ षोडशी शाक्तलोपामुद्रा ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| स | ह | स |
| ह | स | क |
| क्ष | क | ल |
| म | ह | ह्रीं |
| ल | ल | |
| ह्रीं | ह्रीं | |

दक्षिणमिति। दक्षिणं दक्षिणाम्नायं तदनुगतमित्यर्थः।

४२—४५। मन्त्रान्तरमाह—भौतिक इत्यादिना। भौतिक ऐकारः, स च बिन्दुसंयुक्तस्तेन ऐँ इति प्राप्तम्। तदधः ऐँ इत्यनन्तरं 'क्लिन्ने' इति पठेत्। मादनमिति। मादनः ककारः, स च शक्रेण लकारेण संयुक्तः। मूर्त्तिरीकारः बिन्दुरनुस्वारस्ताभ्यां समन्वितः एतेन क्लीं इति प्राप्तम्। ततो मदद्रवे इति। चन्द्रसंस्थः सकारः ओकारान्तेन औकारेण कादिना विसर्गेण च युक्त इत्यर्थः। एतेन सौः इति प्राप्तम्।

---

1. '-रणीं' C. 2. '-विभूषितम्' C. 3. 'च चन्द्रस्थ-' C. 4. 'इन्द्र-' C. 5. 'ग्र-' A. 6. 'दीर्घ-' ? C. 7. 'गदिता' C.

[ अथोत्तराम्नायानुगतविद्यानिरूपणप्रतिज्ञा ]

अथाहमुत्तराम्नायं कथयामि विशेषतः ॥४६॥

[ तत्र वाग्भवकूटम् ]

विष्णुरीशस्ततो हान्तः कामेशः पृथिवी ततः।
भुवनेशी ततः पश्चाद् वाग्भवं बीजशाम्भवम् ॥४७॥

[ कामराजशक्तिकूटव्यवस्था ]

कामराजं शक्तिकूटं पूर्ववच्च समुद्धरेत्।

[ एतन्मन्त्राराधनफलम् ]

एषा विद्या परा ज्ञेया सर्वसिद्धिप्रदायिका ॥४८॥

---

कामबीजमिति। कामबीजं ककारः, तच्च षष्ठस्वरेण ऊकारेण विभूषितम्। एतेन 'कू' इति प्राप्तम्। इन्द्रमिति। इन्द्रो लकारः, स च झिण्टीशेन एकारेण संयुक्तः। तेन 'ले' इति प्राप्तम्। वियदिति। वियत् हकारः, सोमः सकारः, ग्रहेश्वरो दिनकृदौकारः, महासेनो विसर्गः। एतेन ह्सौः इति प्राप्तम्। एवञ्च ऐँ क्लिन्ने क्लीं मदद्रवे सौः कूले ह्सौरिति समुदितो मन्त्रः। दक्षिणनायिकेति। दक्षिणाम्नायप्रतिपादिता शक्तिरित्यर्थः। अस्या विद्याया मदद्रवेति संज्ञेत्याह—मदद्रवेयमित्यनेन।

४६—४८। अथोत्तराम्नायप्रतिपादितविद्याप्रतिपादनमथेत्यादिना प्रतिज्ञाय प्रथमं वाग्भवकूटमाह—विष्णुरित्यादिना। विष्णुरकारः तद्युक्त ईशो हकारः। तन्त्रसारेऽप्येवमेव व्याख्यातम्। हान्तः क्षकारः, कामेशो मकारः, तन्त्रसारे—

विष्णुरीशस्ततो हान्तः कालेशः पृथिवी ततः।

इत्यादिवचने कालेशपददर्शनात् कालेशो मकार इति तद्व्याख्यानदर्शनाच्च प्रकृते कामेशपदस्य महाकालपरतया मकारबोधकत्वमित्यवधेयम्। पृथिवी लकारः, भुवनेशी ह्रीं। एवञ्च ह क्ष म ल ह्रीमिति वाग्भवकूटमिति पर्यवस्यति। बीजशाम्भवमिति शाम्भवबीजमित्यर्थः। पूर्वनिपातशास्त्रस्य प्रायिकत्वाद् विशेषणस्य परनिपातः। अपरकूटद्वयव्यवस्थामाह—कामराजमित्यादिना। कामराजं कामराजकूटमित्यर्थः। पूर्ववदिति कामराजविद्यावदित्यर्थः। तदुक्तं तन्त्रसारे—

कामराजं शक्तिकूटं पूर्ववत् कथितं प्रिये।

एवञ्च ह स क ह ल ह्रीमिति कामराजकूटम्। स क ल ह्रीमिति शक्तिकूटम्। तदयं त्रिकूटात्मकः समुदितो मन्त्रः—

[ पञ्चदशाक्षरी (लोपामुद्रा) ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
| --- | --- | --- |
| ह | ह | स |
| क्ष | स | क |
| म | क | ल |
| ल | ह | ह्रीं |
| ह्रीं | ल | |
| | ह्रीं | |

[ मन्त्रान्तरम् , तत्र वाग्भवकूटम् ]

माया शिवो नृसिंहश्च [1]कामः शक्रः सुरेश्वरी ।
एतद् वाग्भवकूटन्तु

[ कामराजशक्तिकूटव्यवस्था ]

पूर्ववत् कामराजकम् ।
शक्तिकूटं तथा चैव विद्या [2]परमदुर्लभा ॥४९॥

[ अथान्यादृशषोडशीविद्यानिरूपणप्रतिज्ञा ]

षोडशीश्च प्रवक्ष्यामि व्यक्तिभेदेन साम्प्रतम् ।

[ तत्र वाग्भवकूटम् ]

ब्रह्मा नृसिंहः कालेशश्चन्द्र[3]श्च भुवनेश्वरी ॥५०॥

---

४९ । त्रिकूटात्मकं मन्त्रान्तरमाह—मायेत्यादिना परमदुर्लभेत्यन्तेन । अत्र माया शक्तिः सकारः, शिवो हकारः, नृसिंहः क्षकारः, कामः ककारः, शक्रो लकारः, सुरेश्वरी ह्रीं । एवञ्च स ह क्ष क ल ह्रीमिति वाग्भवकूटम् । काल इति पाठे तु कालो मकारस्तेन स ह क्ष म ल ह्रीमिति वाग्भवकूटं स्यात्, तथात्वे च भृग्वीशं गगनं हान्तमित्यादिप्रागुक्तवचनप्रतिपादित-षोडशाक्षरमन्त्रेण पौनरुक्त्यं प्रसज्येतेत्यतः काम इत्येव पाठो मूले निवेशित इत्यवधेयम् । कामराजवाग्भवकूटयोर्व्यवस्थामाह—पूर्ववदिति । प्रागुक्तकामराजविद्यावदित्यर्थः । तदयं समुदितो मन्त्रः—

[ षोडशाक्षरी ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| स | ह | स |
| ह | स | क |
| क्ष | क | ल |
| क | ह | ह्रीं |
| ल | ल | |
| ह्रीं | ह्रीं | |

५०-५२ । षोडशीमन्यादृशीं विद्यां वक्तुं प्रतिजानीते—षोडशीश्चेत्यादिना । तत्र प्रथमं वाग्भवकूटमाह—ब्रह्मेति । ब्रह्मा ककारः, नृसिंहः क्षकारः, कालेशो मकारः, चन्द्रः सकारः, भुवनेश्वरी ह्रीं । एवञ्च क क्ष म स ह्रीमिति वाग्भवकूटम् ।

---

1. 'कालः' B. 2. 'वेद्या ह्यदुर्लभा' C. 3. '-न्तु' C.

[ कामराजकूटम् ]

शिवो नृसिंहकालेशौ [1]शक्रः शिवस्ततः परम् ।

महामाया ततः पश्चाच्

[ शक्तिकूटम् ]

शक्तिकूटं शृणुष्व च ॥५१॥

[2]चन्द्रो नृसिंहकालेशौ शक्रस्तु भुवनेश्वरी ।

एषा सा परमा विद्या

[ मन्त्रान्तरम् ]

[3]पराञ्च कथयाम्य[4]हम् ॥५२॥

[ तत्र वाग्भवकूटम् ]

एतस्या वाग्भवं कूटं

[ कामराजकूटम् ]

कामराजं शृणुष्व च ।

महेशः क्रोधकामौ च कालेशः पृथिवी हरः ॥५३॥

---

शिव इति । शिवो हकारः, नृसिंहः त्तकारः, कालेशो मकारः, शक्रो लकारः, शिवो हकारः, महामाया ह्रीं । एवञ्च ह त्त म ल ह ह्रीमिति कामराजकूटम् । शक्तिकूटमाह—शक्तिकूटं शृणुष्व चेत्यादिना । चन्द्र इति । चन्द्रः सकारः, नृसिंहः त्तकारः, कालेशो मकारः, शक्रो लकारः, भुवनेश्वरी ह्रीं । एवञ्च स त्त म ल ह्रीमिति शक्तिकूटम् । तदेतत्कूटत्रयघटितो मन्त्रः प्रदर्श्यते—

[ षोडशी ]

| वाग्भव-कूटम् | शक्ति-कूटम् | कामराज-कूटम् |
|---|---|---|
| क | ह | स |
| क्ष | क्ष | क्ष |
| म | म | म |
| स | ल | ल |
| ह्रीं | ह | ह्रीं |
| | ह्रीं | |

५२-५४ । अथ सप्तदशाक्षरीमाह—पराञ्चेत्यादिना । एतस्या इति । अव्यवहित-

---

1. 'शक्र' इत्यादिपादपञ्चकं A-पुस्तके नास्ति । 'शक्र' इत्यादिपादत्रयं A-पुस्तके नास्ति । 2. '-शिवः' B. 3. 'अपरां' A-B. 4. '-थ' C.

महामाया ततः पश्चात्

[ शक्तिकूटव्यवस्था ]

पूर्ववच्छक्तिकूटकम् ।

[ अस्याः प्रकर्षः ]

एषा सप्तदशी विद्या चतुर्वर्गफलप्रदा ॥५४॥

[ मन्त्रान्तरम् ]

प्रणवञ्च[1] महाबीजमूर्द्ध्वाम्नायः[2] प्रकीर्त्तितः ।

[ अध-आम्नायानुगतो मन्त्रः ]

महामायामहाबीजमधआम्नाय ईरितः ॥५५॥

[ अनेन मन्त्राणामाम्नायानुगतत्वम् ]

एवमेव प्रकारेण षडाम्नायाः प्रकीर्त्तिताः ॥५६॥

---

पूर्ववर्त्तिन्याः षोडश्या इत्यर्थः । एतेनात्रापि प्रागुक्तषोडशाक्षरीवत् क क्ष म स ह्रीमित्येव वाग्भवकूटमिति बोध्यम् । कामराजकूटे विशेषमाह—कामराजं शृणुष्व चेत्यादिना । महेश इति । महेशो हकारः, क्रोधः क्षकारः, कामः ककारः, कालेशो मकारः, पृथिवी लकारः, हरो हकारः, महामाया ह्रीं । एवञ्च ह क्ष क म ल ह ह्रीमिति कामराज-कूटम् । शक्तिकूटव्यवस्थामाह—पूर्व-वदिति । अव्यवहितपूर्वोदितषोडशी-वदित्यर्थः । एवञ्च स क्ष म ल ह्रीमिति शक्तिकूटम् । अयमर्थः स्फुटं प्रदर्श्यते—

[ सप्तदशाक्षरी ]

| वाग्भव-कूटम् | कामराज-कूटम् | शक्ति-कूटम् |
|---|---|---|
| क | ह | स |
| क्ष | क्ष | क्ष |
| म | क | म |
| स | म | ल |
| ह्रीं | ल | ह्रीं |
| | ह | |
| | ह्रीं | |

५५ । इदानीमूर्द्ध्वाधआम्नायानुगतमन्त्रनिरूपणमाह—प्रणवञ्चेति । प्रणव ॐकारः, महाबीजमिति महामायाबीजं ह्रीं । एवञ्च ॐ ह्रीमिति ऊर्द्ध्वाम्नायानुगतो मन्त्र इति । अध-आम्नायानुगतं मन्त्रं निरूपयति—महेति । महामायामहाबीजं ह्रीं इति । एवञ्च ह्रीमित्येकाक्षरोऽधआम्नायानुगतो मन्त्रः ।

५६ । एवमिति । पूर्वं पञ्चमाम्नायानुगता मन्त्रा अभिहिताः । अत्रापि बृहच्छ्रीक्रम संवादेनोर्द्ध्वाध-आम्नायद्वयानुगतमन्त्रनिरूपणात् षडाम्नायाः प्रकीर्त्तिता इत्यर्थः ।

---

6. '-न्तु' C. 7. '-म्नाय-' ? C.

[ षडाम्नायज्ञानप्रशस्तिः ]

वेत्ति यः षट् क्रमेणापि धरण्यां साधकोत्तमः ।
दीर्घायु[1]र्धनसम्पत्तिरैश्वर्येण युतः सदा ॥५७॥

[ षडाम्नायाज्ञाननिन्दा ]

षडिदं यो न जानाति न जपेच्चण्डिकां पराम् ।
[2]निष्फलं जीवितं[3] तस्य स भवेत् साधकोऽधमः[4] ॥५८॥

[ अथ सौभाग्यामन्त्रः ]

अथ वक्ष्यामि सौभाग्यां [5]जनेशां सर्वकामदाम्[6] ।

[ तत्र वाग्भवकूटम् ]

शक्तिः शम्भुः स्वयम्भुश्च शक्रस्तु भुवनेश्वरी ॥५९॥

[ कामराजकूटम् ]

शिवो मादनरुद्रेन्द्रा महामाया ततः [7]परा ।

[ शक्तिकूटम् ]

कामः शिवस्तथा ब्रह्मा शक्रोऽपि भुवनेश्वरी ॥६०॥

[ अस्याः प्रकर्षः ]

इयन्तु परमा विद्या [8]सुन्दरी सुभगोदया ।
विद्यानामुत्तमा विद्या वश्यसौभाग्यवाक्प्रदा ॥६१॥

---

५७। निरुक्तषडाम्नायज्ञानफलमाह—वेत्तीत्यादिना। दीर्घेति। दीर्घमायुर्धनं सम्पत्तिश्च यस्य सः।

५८। निरुक्तषडाम्नायाज्ञाने दोषमाह—षडिदमिति।

५९-६१। इदानीं सौभाग्यामन्त्रं कूटत्रयात्मकं वक्तुं प्रतिजानीते—अथेति। तत्र वाग्भवकूटमाह—शक्तिरित्यादिना। शक्तिः सकारः, शम्भुर्हकारः, स्वयम्भुः

---

1. '-र्बल-' C. 2. 'विफ-' B. 3. '-वनं' C. 4. '-त्तमः'? A-B. 5. 'जनेशीं'? B-C. 6. इतः परं C-पुस्तके 'इयन्तु परमा विद्या सुन्दरी सुभगोदया' इत्यधिकः पाठो दृश्यते, परन्तु पादषट्कानन्तरं अस्मदुपजीव्येषु त्रिष्वपि पुस्तकेषु अस्य पुनरुक्तिदर्शनात् A-B-पुस्तकयोरनुक्तत्वाच्च नायं पाठो मूले निवेशितः। 7. 'परम्' A. 8. 'कथिता' B.

एतच्च कथितं सारं

[ प्रकारान्तरम् ]

परञ्च कथयाम्यथ ॥८२॥

तारमायारमा[1]कामवाग्भवैर्वाग्भवं भवेत् ।
तदेव विपरीतन्तु कामराजं [2]ततो जपेत् ॥८३॥
सतारं वाग्भवं कामरमामायासमन्वितम् ।
चैतन्यं कथितं सारं

[ प्रकारान्तरम् ]

परञ्च कथयाम्यथ ॥८४॥

वाङ्माया कमलाबीजं वाग्भवस्यादि योजयेत् ।
वेदाद्यं[3]लक्ष्मीवाग्बीजे[4] मन्मथं तदनन्तरम् ॥८५॥
मायाबीजं ततो दत्त्वा वाग्भवाख्यं समुद्ध[5]रेत् ।
आद्यन्ते तारमायान्तु मध्ये श्रीबीजसंयुतम् ॥८६॥
तारस्यान्ते वाग्भवन्तु कामबीजं तथा स्थितम् ।
एवमेतत्[6] समुच्चार्य कामराजं[7] समुच्चरेत् ॥८७॥

८२-८४ । प्रकारान्तरमाह—परञ्चेत्यादिना । तत्र वाग्भवकूटात् पूर्वं बीजयोगमाह—तारेत्यादिना । तारः प्रणवः, माया ह्रीं, रमा श्रीं, कामः क्लीं, वाग्भवः ऐँ, एतैः पूर्वं योजितैः वाग्भवकूटं दीपनीयुक्तं भवेदित्यर्थः । एवञ्च ॐ ह्रीं श्रीं क्लीं ऐँ इत्युच्चार्य वाग्भवकूटं जपेदित्यर्थः । अथ कामराजकूटे बीजयोगमाह—तदेवेत्यादिना । प्रागुक्तबीजपञ्चकमेव विपरीतं विलोमेन संस्थापितमुच्चार्य कामराजकूटं जपेदित्यर्थः । एवञ्च ऐँ क्लीं श्रीं ह्रीं ॐ इत्युच्चार्य कामराजकूटं जपेदिति फलितार्थः । शक्तिकूटे बीजयोगमाह—सतारमित्यादिना । सतारं वाग्भवं तारो वाग्भवश्च ततः कामरमामायासमन्वितं शक्तिकूटमित्यर्थाद्वाह्यतस्य विशेषणम् । एवञ्च ॐ ऐँ क्लीं श्रीं ह्रीमित्यनन्तरं शक्तिकूटं जपेदिति फलितम् ।

८४—८६ । प्रकारान्तरमाह—परञ्चेत्यादिना । तत्रायं क्रमः—वाग्भवस्यादि

1. 'कार-' ? C. 2. 'नभोऽन्वितम्' A-C. 3. '-द्य-' A-B. 4. '-जं' B.
5. '-च-' A-B. 6 '-मेव' A-B. 7. '-बीजं' C.

एतस्या एव विद्याया मध्ये कामं [1]नियोजयेत् ।
मन्मथादिस्थमधरं [2]श्रीबीजं मन्मथान्तरम् ॥८८॥
एवं क्रमेण संयोज्य शक्तिकूटं तदोच्चरेत् ।
इयन्तु दीपनी विद्या सर्वतन्त्रेषु गोपिता ॥८९॥

---

वाग्भवकूटस्यादावित्यर्थः। वागित्यादि, वाक् वाग्भवबीजम् ऐँ, मायाबीजं ह्रीं, कमलाबीजं श्रीं, इत्येतद् बीजत्रयं योजयेदित्यर्थः। एतद्बीजत्रयात् पूर्वं बीजान्तरयोगमाह—वेदाद्यमित्यादिना। वेदाद्यः प्रणवः, लक्ष्मीः श्रीं, वाग्बीजम् ऐँ, मन्मथः क्लीं, मायाबीजं ह्रीं एतद्बीजपञ्चकं निरुक्तवाग्भव-मायाश्रीबीजेभ्यः पूर्वं विन्यस्य वाग्भवकूटं जपेदिति सम्बन्धः। अत्र वाग्भवस्यादि योजयेदित्युक्तेर्वाङ्मायाकमलाबीजानां वाग्भवकूटाव्यवहितपूर्ववर्त्तित्वावगमाद् वेदादिबीजपञ्चकस्य तत्पूर्वमवस्थितिरर्थादवगन्तव्या। एवञ्च ॐ श्रीं ऐँ क्लीं, ह्रीं ऐँ ह्रीं श्रीं इत्युक्त्वा वाग्भवकूटमुच्चारयेदिति फलितार्थः।

कामराजकूटात् पूर्वं बीजयोगमाह—आद्यन्त इति। अत्राद्यन्तत्वं वक्ष्यमाण-श्रीबीजमपेक्ष्य। तथा च श्रीबीजस्यादौ तारो मायाबीजञ्च, अन्तेऽपि तथैव तारमायायोगः, अनेन ॐ ह्रीं श्रीं ॐ ह्रीमिति प्राप्तम्। तारस्यान्त इति। आद्यतारस्यान्ते वाग्भवबीजं कामबीजञ्च। तथा स्थितमित्यनेनान्त्यतारस्यान्तेऽपि वाग्भव-कामबीजयोग उक्तः। एतेन ॐ ऐँ क्लीं ह्रीं श्रीं ॐ ऐँ क्लीं ह्रीमित्येतेषां बीजानां संग्रहः। एवमेतदिति एतद् बीजनवकं समुच्चार्य कामराजकूटमुच्चरेदित्यर्थः।

अथ शक्तिकूटात् पूर्वं बीजयोगमाह—एतस्या इति। एतस्याः कामराजादौ प्रयोज्याया दीपनीविद्याया इत्यर्थः। मध्ये कामबीजं प्रयोजयेत्। अयम्भावः—शक्तिकूटदीपनीयं कामराजकूटदीपनीवदेव, बीजानां केषाञ्चित् पौर्वापर्यविपर्यय एवात्र विशेषः, तमेव विशेषं दर्शयितुमाह—मध्ये कामं नियोजयेदिति। कामबीजप्रयोगस्तु श्रीबीजात् पूर्वमेव कर्त्तव्यः श्रीबीजं मन्मथान्तरमिति वक्ष्यमाणत्वात्। एवञ्च कामराजदीपन्या मायाबीजस्थाने कामबीजस्य कामबीजस्थाने च वाग्भवबीजस्याऽऽदानात् मायाबीजस्य वाग्भवबीजात् पूर्वं निवेशः कर्त्तव्य इत्यर्थादवगम्यते। तथा च ॐ ह्रीं ऐँ क्लीं श्रीं ॐ ऐँ क्लीं ह्रीमित्युच्चार्य वाग्भवकूटमुच्चारयेदिति फलितम्।

---

1. 'प्र-' C. 2. 'श्रीमन्मथमथान्तरम्' A-B.

[ अन्यादृशी दीपनी ]

रमा माया हंसबीजं वाग्भवाद्ये नियोजयेत् ।
काम[1]राजं ततः पश्चाद् ब्रह्मबीजं तदन्तिके ।
शक्त्यन्ते हंसबीजन्तु प्रजपेत् साधकोत्तमः ॥६०॥

[ अन्यादृशी दीपनी ]

[2]अथवा प्रणवं लक्ष्मीं मान्मथं वाग्भवं पराम् ।
एतज्जप्त्वा वाग्भवाख्यमुच्चरेत् साधकोत्तमः ॥६१॥
प्रणवञ्चैव वाग्बीजं रमा मन्मथमायया ।
एवमेव [3]तदा जप्त्वा कामराजं समुच्चरेत् ॥६२॥
प्रणवञ्चाधरं कामं रमाञ्च परमेश्वरीम् ।
एवं क्रमेण संयोज्य शक्तिकूटं समुच्चरेत् ॥६३॥
एतच्च कथितं सारं सर्वसिद्धिप्रदायकम् ।
एता गुप्ततमाः सर्वा विद्याश्चैतन्यकारिकाः ॥६४॥

६०। क्रमान्तरेण दीपनीमाह—रमेत्यादिना। वाग्भवकूटादौ रमाबीजं मायाबीजं हंसबीजञ्च नियोजयेत्। श्रीं ह्रीं हंस इत्यनन्तरं वाग्भवकूटमुच्चरेत् जपेदित्यर्थः। कामराजमिति। ततः कामराजकूटमुच्चार्य ब्रह्मबीजं प्रणवमुच्चारयेदित्यर्थः। शक्त्यन्त इति। ततः शक्तिकूटमुच्चार्य हंसबीजं हंस इति वर्णद्वयात्मकं बीजं जपेदित्यर्थः। जपस्तु तत्तत्कूटसमभिव्याहृतस्येति सर्वत्र बोध्यम्।

६१—६३। अथ दीपनीमन्यादृशीमभिदधानः प्रथमं वाग्भवकूटे बीजयोगमाह—अथवेति। प्रणवः ॐ, लक्ष्मीः श्रीं, मान्मथं क्लीं, वाग्भवं ऐँ, परा ह्रीं। एवञ्च ॐ श्रीं क्लीं ऐँ ह्रीमिति जप्त्वा वाग्भवकूटमुच्चारयेदित्यर्थः। कामराजकूटे बीजयोगमाह—प्रणवञ्चेत्यादिना। एवञ्च ॐ ऐँ श्रीं क्लीं ह्रीमिति जप्त्वा कामराजकूटमुच्चारयेदित्यर्थः। शक्तिकूटात् पूर्वं बीजयोगमाह प्रणवमित्यादिना। एवञ्च ॐ ऐँ क्लीं श्रीं ह्रीमिति जप्त्वा शक्तिकूटमुच्चारयेदित्यर्थः।

1. '-बीजं' A-C. 2. 'अथवे'त्यादि पादचतुष्टयं B-पुस्तके नास्ति। 3. 'ततो' C.

आसामेकतमां दत्त्वा जपेद् विद्यां समाहितः ॥६५॥

[ वामकेशीविद्याया दीपन्यां विशेषः ]

वामकेश्याश्च विद्यायां विशेषः पुनरुच्यते ।
वाग्भवे कामराजे[1] च शक्तिकूटे च तत्क्रमात् ॥६६॥
कामबीजत्रयेणैव दीपन्यादि समीरितम् ।
[2]जपस्याऽऽदौ जपस्यान्ते सप्तवारमनुक्रमात् ॥६७॥

[ वामकेशीविद्यास्वरूपनिरूपणप्रतिज्ञा ]

वामकेशी च या विद्या शब्दब्रह्मस्वरूपिणी ।
तस्या रूपप्र[3]भावश्च संक्षेपात् कथयाम्यथ ॥६८॥

६५। आसामिति। पूर्वं ये दीपनीभेदा दर्शितास्तेषामेकतमं यं कञ्चन दत्त्वा विद्यां स्वेष्टमन्त्रं जपेदित्यर्थः। दीपनीजपस्तु स्वेष्टमन्त्रजपस्यादावन्ते च सप्तकृत्वः कर्त्तव्य इति स्वयमेव वक्ष्यति ।

६६—६७। एवं सर्वविद्यासाधारण्येन दीपनीयोगमभिधाय वामकेशीविद्यायां विशेषमाह—वामकेश्यामित्यादिना । वाग्भव इत्यादि । तथा चात्र कूटत्रयादौ क्लीमिति कामबीजत्रयं योजयेदित्यर्थः। दीपन्यादीत्यादिपदेन प्राणचैतन्यादीनां परिग्रहः। दीपनीजपव्यवस्थामुपदिशति—जपस्येति । तथा च स्वेष्टमन्त्रजपादौ सप्तधा दीपनीजपः तत्तत्संख्यातजपस्यान्तेऽपि तथा ।

६८। अथेदानीं शब्दब्रह्मस्वरूपाया वामकेशीविद्यायाः स्वरूपं प्रभावश्च वक्तुं प्रतिजानीते वामकेशीत्यादिना। अथ केयं वामकेशी नाम ? उच्यते—दशमे प्रकाशे 'कन्दर्पो विष्णुयुक्तोऽधरमुखसहितो दन्तकर्णोर्द्ध्ववर्णो' ( १५६ श्लो० ) इत्यादिना या सुरगणसेव्या कीलिता शाम्भवकामराजविद्याऽभिहिता सैव वामकेशीविद्येत्युक्तं तत्रैव —'वामकेशी शाम्भवी सा पूर्वाम्नायैः प्रकीर्त्तिता । ज्ञेया सा कीलिता विद्या सिद्धिदा न हि भूतले॥' (१६२ श्लो०) इत्यनेन। एवञ्चात्र प्रागुक्तशाम्भवकामराजविद्यैव वामकेशीति स्थितम्। शब्दब्रह्मस्वरूपिणीत्यनेन मन्त्रघटकवर्णानां देवतास्वरूपत्वं सूचितम्। तस्या इति। तस्या रूपस्य मन्त्रघटकवर्णात्मकस्य प्रभावं संक्षेपात् कथयामि वक्ष्यमाण-

1. '-बीजे' A. 2. 'जपादौ च जपान्ते च' A. 3. '-भेद-' C.

[ वामकेशीविद्यास्वरूपम्, तत्र वाग्भवकूटार्थः ]

**सहस्रदलमध्ये तु त्रिकोणं शिरसि स्थितम्।**
**तत्रैव मादनं बीजं बिन्दुमाश्रित्य दीपवत् ॥९९॥**
**कोटिचन्द्रप्रतीकाशं चिदानन्दमयं परम्।**
**अनुत्तरपदं गुह्यं ललाटोर्द्ध्वे व्यवस्थितम् ॥१००॥**
**भगमाधारसंस्थानं त्रिकोणपदमाश्रितम् ॥१०१॥**

---

वचनैः प्रतिपादयामीत्यर्थः। रूपप्रभेदश्चेति पाठे रूपे 'क ए ई ल ह्रीमि'ति मन्त्रे यः प्रभेदः मन्त्रघटकवर्णानामर्थगतः प्रकृष्टो भेदस्तं कथयामीत्यर्थः।

९९—१००। तत्र क ए ई ल ह्रीमिति वाग्भवकूटं व्याचक्षाणः प्रथमं ककारस्य स्वरूपमाह—सहस्रेत्यादिना। शिरसि सहस्रारपद्मकर्णिकाभ्यन्तरे त्रिकोणं स्थितम्। तदुक्तमत्रैव सहस्रारं प्रकृत्य षष्ठप्रकाशे—

'त्रिकोणं तस्यान्तः स्फुरति च सततं विद्युदाकाररूपम्' इति।

तत्रैवेति। तत्र निरुक्तत्रिकोणे बिन्दुं 'तदन्तः शून्यं तत् सकलसुरगणैः सेवित-ञ्चातिगुह्यमि'ति षष्ठप्रकाशोक्तशिवशक्त्यैकात्म्यरूपं परं बिन्दुमाश्रित्य मादनं कामबीजं ककारो वर्त्तत इत्यर्थः, परबिन्दोः स्वरूपं व्यक्तमाह अमृतानन्दनाथकृतयोगिनीहृदय-द्वितीयपटलटीकाधृत-सौभाग्यसुभगोदये—

'रक्तो बिन्दुः शक्तिः शुक्लः शम्भुः परस्तदैकात्म्यम्'।

इति। एवञ्च शिवशक्तिसामरस्यरूपपरबिन्दुमाश्रित्य दीपवत् मादनं बीजं ककारो वर्त्तते इत्युक्तं भवति। दीपवदिति यथा दीपो मल्लिकादिकमाश्रित्यैव स्वां द्युतिं प्रकटयति तथा कामबीजमपि परं बिन्दुमाश्रित्यैवेत्यर्थः। तस्य स्वरूपमाह कोटिचन्द्रप्रतीकाश-मित्यादिना। अनुत्तरपदमिति। यदपेक्षया साधकानामुत्तरं चरमं पदं नास्तीत्यर्थः। एवञ्च कोटिचन्द्रसदृशदीप्तिमत्त्व-चिदानन्दमयत्वादिस्वरूपस्य तस्याराधनेन तदैक्य-भावनया च तत्स्वरूपावाप्तिर्भवतीति। एवमन्यत्रापि बोध्यम्।

१०१। अथ द्वितीयमेकारं व्याचष्टे—भगमित्यादिना। भगं योनिबीजमेकारम् आधारसंस्थानं मूलाधारेऽवस्थितम्। तत्रापि त्रिकोणपदमाश्रितम्, मूलाधारकमल-कर्णिकान्तरालस्थ-योन्याकार-त्रिकोणस्थितमित्यर्थः। परिचिन्तयेदिति वक्ष्यमाण-क्रिययाऽभिसम्बन्धः।

मृणालतन्तुरूपा सा विश्वयोनिरुदाहृता ।
चतुर्थी हृदये पद्मे मेरुमाश्रित्य संस्थिता ॥१०२॥
इच्छा-ज्ञाना-क्रियारूपा शम्भुशक्तिः परापरा ।
हकारार्द्धकलारूपा तडित्कोटिसमप्रभा ॥१०३॥
शक्रो ललाटमध्ये तु दीपितां परिचिन्तयेत् ॥१०४॥
विद्युत्पुञ्जप्रतीकाशां पञ्चमीं [1]नेत्रनासिके ।
वाग्भवेयं महाविद्या वागीशत्वप्रदायिनी ॥१०५॥

१०२—१०३। अथ तृतीयमीकारं व्याचष्टे—मृणालेत्यादिना। चतुर्थी अकारादिस्वरचतुर्थवर्णरूपा ईकाररूपेत्यर्थः। परापरा शम्भुशक्तिः अनाहताख्ये हृत्पद्मे मेरुमाश्रित्य संस्थितेति सम्बन्धः। तामेव विशिनष्टि—मृणालतन्तुरूपेति, मृणालतन्तुवदतिशयसूक्ष्मा। तथा विश्वयोनिः, ईकारस्य शम्भुशक्तिरूपतया—

तस्याः पुनः पुनः सृष्टिर्जायते लीयते सदा ।
तस्माच्छक्तिः प्रधाना च शक्त्या व्याप्तमिदं जगत् ॥

इति गन्धर्वतन्त्रतृतीयपटलवचनेन शक्त्या एव जगत्सृष्टेरभिधानात् तस्या विश्वयोनित्वम्। इच्छाज्ञानाक्रियारूपेति। इच्छाशक्तिप्रधानः प्रकाशाख्यः शम्भुः, क्रियाशक्तिप्रधाना च विमर्षरूपा परा शक्तिः, ज्ञानशक्तिप्राधान्यमुभयसाधारणम्। तत्र च प्रकाशविमर्षात्मकयोरभेदेन विमर्षरूपायाः शक्तेरिच्छाज्ञानाक्रियारूपत्वमुपपन्नम्। एतदभिप्रायेणैव हकारार्द्धकलारूपेत्युक्तम्। हकारः शिवस्तदर्द्धकलारूपा हरार्द्धाङ्गविहारिणीत्यर्थः। तथा तडित्कोटिसमप्रभा। तदुक्तं षष्ठप्रकाशेऽनाहतपद्मं प्रकृत्य—'एतन्नीरजकर्णिकान्तरलसच्छक्तिस्त्रिकोणाभिधा विद्युत्कोटिसमानकोमलवपुरि'त्यादि। इति चतुर्थस्वरस्वरूपनिर्णयः।

१०४—१०५। अथ चतुर्थमक्षरं लकारं व्याचष्टे—शक्र इति। शक्र इन्द्रबीजं लकारो ललाटमध्ये संस्थित इति सम्बन्धः। एतेनास्य बीजस्येन्द्ररूपत्वं सूचितम् अस्य विशेषोऽग्रे वक्ष्यते। अथ पञ्चमं मायाबीजं व्याचष्टे—दीपितामित्यादिना। पञ्चमीं ककारमपेक्ष्य पञ्चमवर्णरूपाम्। नेत्रनासिके नेत्राणि च नासिके च तेषां समाहारः नेत्रनासिकं तस्मिन्। तथा च नेत्रत्रये नासिकयोश्च विद्युत्पुञ्जप्रतीकाशां पञ्चमीं

1. 'नासिके तथा' A.

[ कामराजकूटार्थः ]

शिवो [1]ज्ञानाख्यसंयुक्तस्त्रिशून्येषु व्यवस्थितः ॥१०६॥
सूर्यकोटिप्रतीकाशं महापद्मोपरि स्थितम् ।
सकारं मुखमध्ये तु बालार्कसदृशं परम् ॥१०७॥
मादनं जठरे चैव जवाभं परिचिन्तयेत् ॥१०८॥
हकारेण बहिर्याति द्वादशाङ्गुलमानतः ।
प्राणो वायुरिति [2]प्रोक्तो हंसाभः परमेश्वरः ॥१०९॥
सहस्रस्य दलाग्रन्तु कला[3]षोडशपूर्वकम् ।
इन्द्रन्तु[4] तत्र मध्ये तु ॐकार[5]रूपभेदकम् ॥११०॥
ह्रींकारं हृदये [6]मध्ये कोटिसूर्यसमप्रभम् ।
बिन्दुद्वये कुचे युग्मे जवाभमर्द्धचन्द्रकम् ॥१११॥
नादबिन्दू तदग्रे च शिवशक्तिसमन्विते ।
कामराजे महाबीज आकर्षणकरे परे ॥११२॥

---

दीपितां चिन्तयेदित्यर्थः। अनेन हकार-रकारेकाराणां नेत्रत्रये नादबिन्द्वोश्च नसोश्चिन्तनमुपदिष्टमिति प्रतिभाति। एवं वाग्भवकूटं व्याख्याय तत्फलमाह—वाग्भवेयमित्यादिना।

१०६—१०८। अथ 'ह स क ह ल ह्रीमि'ति द्वितीयं कामराजकूटं व्याचक्षाणः प्रथमं हकारार्थमाह—शिव इति। शिवो हकारः, ज्ञानाख्यसंयुक्तः ज्ञानेच्छाक्रियाशक्तियुक्त इत्यर्थः, त्रिशून्येषु ऊर्द्ध्वाधोमध्यबिन्दुत्रये व्यवस्थित इत्यर्थः। महापद्मोपरि सहस्रारे। द्वितीयं सकारध्यानमाह—सकारमिति। तृतीयं ककारमाह—मादनमिति।

१०९। चतुर्थं हकारं व्याचष्टे—हकारेणेत्यादिना। प्राणो मुखनासिकाग्रवर्त्ती वायुः। हकारः प्राणवाचकः। अत्र हकारेण द्वादशाङ्गुलमानतः प्राणो वायुर्बहिर्याति इति प्रोक्तः। अथ प्राणापरपर्यायस्ये हकारस्य किं स्वरूपमित्यत आह—हंसाभ इति। हंसाभः शुक्लवर्णः परमेश्वरः शिव इत्यर्थः।

११०—११२। पञ्चमं लकारमाह—सहस्रस्येति। सहस्रारस्य दलाग्रे चन्द्रस्य षोडश कला विलसन्तीत्यर्थः। इन्द्रमिति तत्र लकारं चिन्तयेदित्यर्थः।

---

1. 'ज्ञानत्व-' C. 2. 'प्रोक्तं' C. 3. '-पूर्वकषोडश' ? C. 4. '-न्त्र' C. 5. '-ऽ' A-B. 6. 'पद्म' C.

[ शक्तिकूटार्थः ]

नाभिपद्मत्रिकोणे च दाडिमाभं सकारकम् ।
पद्मद्वयप्रकोष्ठे च मादनं पीतसन्निभम् ॥११३॥
पृष्ठो[1]पस्थकयोश्चैवं शक्रं तेजःस्वरूपिणम् ।
चतुर्थीं[2] योनिमध्ये तु दीपितां परिचिन्तयेत् ॥११४॥
शिवस्यापि च यद् बीजं तदण्डयुगलं भवेत् ।
देव्या बीजश्च परमं योनित्वेन[3] विचिन्तयेत् ॥११५॥

[ अन्यादृशं ध्यानतत्त्वम् ]

भूयोऽहं कथयिष्यामि ध्यानतत्त्वं समाहितः ॥११६॥

---

अथ मायाबीजमाह—ॐकारेत्यादिना । ॐकाररूपभेदकं ह्रींकारं कोटिसूर्यसमप्रभं हृदये ध्यायेदित्यर्थः । बिन्द्विति बिन्दुद्वयरूपे कुचद्वन्द्वे जवाभं जवाकुसुमसदृशरक्तवर्णम् अर्द्धचन्द्रं तदग्रे नादबिन्दू च ध्यायेदिति सम्बन्धः ।

११३—११५ । अथ स क ल ह्रीमिति शक्तिकूटं व्याचक्षाणः प्रथमं सकारं व्याचष्टे—नाभीत्यादिना ; नाभिपद्मत्रिकोणे इत्यर्थः । दाडिमाभं रक्तवर्णं सकारं परिचिन्तयेदित्यर्थः । चतुर्थीं ह्रीमिति बीजम् । पूर्वमेव व्याख्यातमन्यदिति नात्र पुनः प्रपञ्च्यते ।

११६ । अथ वामकेशीविद्याया अन्यादृशं स्वरूपमाह—भूय इत्यादिना । ध्यानतत्त्वमिति । ध्यानं स्वरूपचिन्ता तस्य तत्त्वं याथार्थ्यम् । मन्त्रदेवतयोरभेदस्य सर्वागमप्रसिद्धत्वेन तत्तन्मन्त्रघटकवर्णानां कया रीत्या तत्तद्देवतावाचकत्वं येन तयोरभेदः साधकैरनुभूयेत इत्येतच्चिन्तनमेव ध्यानं तस्य तत्त्वमित्यर्थः । समाहित इति विक्षिप्ते चेतसि सूक्ष्मातिसूक्ष्मतया दुरधिगमस्य ध्यानतत्त्वस्य प्रवेशासम्भवात् समाहित इत्युक्तम् । एतेन समाहितचेतसामेव ध्यानतत्त्वं कथञ्चिदनुभवगोचरतामवगाहते नेतरेषामिति सूचितम् ।

---

1. '-पस्थयो-' ? B. 2. '-र्थीं' B. 3. '-त्वे परि-' A-B.

[ तत्र कामराजकूटार्थः ]

कामराजे महाकूटे सृष्टिस्थितिशिवद्वयम् ।
शक्तिबीजन्तु तत्रैव शङ्करस्य त्रिनेत्रकम् ॥११७॥
हकारः[1] सृष्टिरूपत्वाद् दद्यादैश्वर्यमष्टधा ।
[2]द्वितीयः स्थितिरूपत्वान्महाभोगं प्रयच्छति ॥११८॥
[3]सकारः सृष्टिरूपत्वात्तेषु भोगं नियच्छति ।
त्रिकूटत्रयह्रींकारं देव्या नेत्रत्रयं शुभम् ॥११९॥

[ वाग्भवकूटस्थमायाबीजार्कः ]

हकारः शाम्भवो भावो रेफोऽप्रतिहतद्युतिः ।
रेफाच्चैव महामाया सर्व[4]व्याप्तिं प्रयच्छति ॥१२०॥

११७। तत्र पञ्चदशाक्षरशाम्भवकामराजविद्यायाः कामराजकूटघटकवर्णाना-मर्थान् विविनक्ति—कामराज इति। कामराजकूटघटकवर्णाः ह स क ह ल ह्रीमिति षट्। तत्र हकारद्वयार्थमाह—सृष्टीत्यादिना। शिवद्वयं हकारद्वयं सृष्टिस्थितिरूपम्, तत्र प्रथमो हकारः सृष्टिरूपो द्वितीयः स्थितिरूपः। तदुक्तं सौभाग्यसुभगोदये—

अत्र कलमध्यस्थितो हकारः स्थितिस्वरूपत्वम्।
अस्य द्योतयति परं स्थितिरूपं सम्विदम्बिकाकारः।

इति। एवञ्चानयोः सृष्टिस्थितिरूपत्वाभिधानाद् ब्रह्मविष्णुशक्तिस्वरूपत्वमवगन्तव्यम्। शक्तिबीजन्त्विति। शक्तिबीजं निरुक्तकूटघटकवर्णानामन्यतमः सकारः शङ्करस्य त्रिनेत्रकं तृतीयनेत्रस्वरूपः संहाररूप इत्यर्थः। एतेन सकारोऽयं संहारिणी रौद्री शक्ति-रित्यवगम्यते। कूटत्रयस्थित-ककारत्रयस्य स्वरूपन्त्वग्रे वक्ष्यति।

११८। निरुक्तवर्णानां सृष्ट्यादिरूपत्वमभिधाय तत्फलमाह—हकार इत्यादिना। ऐश्वर्यमष्टधेत्यणिमाद्यष्टैश्वर्याणीत्यर्थः। द्वितीय इति। द्वितीयो हकार इत्यर्थः। स्थिति-रूपतया द्वितीयहकारस्य भोगसाधकत्वमित्यर्थः।

११९। सकार इति।

अथेदानीं कूटत्रयान्त्यभूतं ह्रींकारत्रयं व्याचष्टे—त्रिकूटेत्यादिना।

१२०। एवं सामान्यतः कूटत्रयस्थितस्य ह्रींकारत्रयस्य स्वरूपमभिधाय कूटभेदे-

1. 'र-' ? A-B. 2. 'द्वितीयं' B, 'द्वितयः' ? C. 3. 'सकार' इत्यादि पादद्वयं A-पुस्तके नास्ति। 4. '-प्राप्तिं' C.

[ कामराजकूटस्थमायाबीजार्थः ]

कामराजस्य ह्रीं[1]कारे फलं वक्ष्यामि तत्परम् ॥१२१॥
हकारो लयरूपत्वात् [2]संहरेद् भेदसन्ततिम् ।
रेफः कालाग्निरूपत्वात् पापौघक्षयकारकः ।
महामाया कामकला चिदानन्दप्रकाशिका ॥१२२॥

[ शक्तिकूटस्थमायाबीजार्थः ]

शक्तिबीजस्य ह्रींकार एतदेव फलं लभेत् ।
हकारो हन्ति वै मृत्युं रेफः सर्वप्रकाशकः ॥१२३॥

---

नास्याः स्वरूपमाह—हकार इत्यादिना । शाम्भवो भावः परशिवसत्त्वानतिरिक्तसत्त्वाकत्वम्, परशिवसामरस्यरूपत्वमिति यावत् हकारस्येत्यर्थः । रेफ इति । रेफः ह्रीं-बीजघटको रकारः अप्रतिहतद्युतिः मायानभिभूततेजःप्रसरः । रेफादिति । रेफात् परिवर्त्तिनी महामाया ईकारः सर्वव्याप्तिं प्रयच्छति । तथा च परशिवसामरस्यरूपा भगवत्यप्रतिहततेजःप्रसरा शिवादिक्षित्यन्तषट्त्रिंशत्तत्त्वात्मकं सर्वं जगद् व्याप्य तिष्ठतीति वाग्भवकूटघटकह्रींकारार्थः ।

१२१—१२२ । अथ कामराजकूटस्य ह्रींकारं व्याचष्टे—कामराजस्येत्यादिना । हकार इति । लयरूपत्वात् संहाररूपत्वात् । हकारस्य संहाररूपत्वं शिवबीजत्वेन । तथा चायं संहाररूपी हकारो भेदसन्ततिं षट्त्रिंशत्तत्त्वपरशक्त्योर्भेदज्ञानं संहरेदित्यर्थः । रेफ इति । कालाग्निस्वरूपतया पापसमूहं दहतीत्यर्थः । महामायेति । महामाया ईकारः, कामकला तुरीयचैतन्यस्वरूपा अत एव चिदानन्दप्रकाशिका । तथा च कामराजकूट-ह्रींकारः सकलभेदज्ञाननिरसनपुरःसरं पापराशिं भस्मसात् कृत्वा चिदानन्दमयब्रह्मस्वरूपं साधकहृदये प्रकाशयतीति फलितार्थः ।

१२३—१२४ । एवं कामराजस्य ह्रींकारं व्याख्याय शक्तिकूटस्थं ह्रींकारं व्याचष्टे—शक्तिबीजस्येत्यादिना । एतदेवेति वक्ष्यमाणरूपम् । तदेवाह—हकार इत्यादिना । हकारो मृत्युं हन्ति तस्य यमपाशसंयमनकृतं मरणं न भवतीत्यर्थः । रेफः सर्व-

---

1. '-कारं' C. 2. 'संहरेदि'त्यादि पादद्वयं C-पुस्तके नास्ति ।

चिदानन्दमयी माया चिदैक्यं परिभावयेत् ।
देव्या नेत्रत्रयं प्रोक्तं

[ कूटत्रयस्थलकारत्रयार्थाः ]

शेषञ्च कथयाम्यथ[1] ॥१२४॥
लकारोऽपीन्द्ररूपत्वान्महैश्वर्यं प्रयच्छति ।
लकारः पृथिवीशत्वाद्[2] रूपैश्वर्यकरः सदा ॥१२५॥
लकारो महदैश्वर्यं मोक्षरूपं प्रयच्छति ।
शक्रस्त्रिभुवने राजा त्रिकूटेषु व्यवस्थितः ॥१२६॥

[ कूटत्रयस्थककारार्थाः ]

कूटत्रये ककारे च कामस्त्रिभुवनेश्वरः ।
चिदानन्दमयं रूपं प्रयच्छति न संशयः ॥१२७॥
ककारः कामरूपत्वात् [3]महाकान्तिं प्रयच्छति ।
तत्त्वातीतं पदं पश्चात् ककारो मस्तकान्तकः[4] ॥१२८॥

---

प्रकाशकः प्रकाश-विमर्शात्मकं सर्वं प्रकाशयतीत्यर्थः । चिदिति । चिदानन्दमयी ज्ञानानन्दस्वरूपा माया ईकारः चिदैक्यं चिदात्मकेन ब्रह्मणा ऐक्यमभेदं परिभावयेत् सम्पादयेदित्यर्थः ।

तथा चायं ह्रींकारो मरणदुःखमपाकृत्य सर्वं खल्विदं ब्रह्मेतिश्रुतिप्रतिपादित-ब्रह्मस्वरूपतां प्रकाश्य चिदानन्दस्वरूपत्वमवगमयतीति फलितार्थः ।

१२४—१२६ । अथ त्रिकूटेष्ववस्थितानामपरेषामपि वर्णानामर्थान् वक्तुं प्रतिजानीते—शेषञ्चेत्यादिना । अत्र प्रथमं वाग्भवकूटस्थं लकारं व्याचष्टे—लकारोऽपीत्यादिना । इन्द्ररूपत्वात् इन्द्रबीजत्वात् लकारो निरतिशयमैश्वर्यं प्रयच्छति । इन्द्रस्य परमैश्वर्याधीश्वरत्वात्तद्बीजस्य परमैश्वर्यदानदाक्ष्यं सुतरामुपपद्यत इति भावः । अथ द्वितीयकूटस्थं लकारमाह—लकारः पृथिवीशत्वादित्यादिना । तृतीयकूटस्थं लकारं व्याचष्टे—लकार इत्यादिना । फलितमाह—शक्र इत्यादिना ।

१२७-१२८ । अथ कूटत्रयेऽवस्थितस्य ककारत्रयस्य स्वरूपमभिदधानः प्रथमं

---

1. '-ह्यम्' C. 2. 'रूपैश्वर्य'त्यादि पादत्रयं A-पुस्तके नास्ति । 3. 'सर्वशान्ति' A-B.
4. '-रः सप्तकान्तकः' C.

[ अस्याः सर्वयोनित्वम् ]

योनिरेषा महाकामा शक्तिरेषा प्रकीर्त्तिता ।
एतादृशी महाविद्या [1]अर्द्धनारीश्वरः शिवः ॥१२९॥

[ सौभाग्यामन्त्रार्थः ]

सौभाग्याया वीजभेदं वक्ष्यामि परमाद्भुतम् ॥१३०॥
आद्यन्ते च हकारौ द्वौ मध्ये द्वौ च हकारकौ ।
चतुर्वेदः शिवः शम्भुश्चतुर्दिक्षु व्यवस्थितः ॥१३१॥
प्रथमे मध्यमे कूटे ककारौ[2] च प्रकीर्त्तितौ ।
शक्तिकूटे ककारौ द्वौ ब्रह्मणस्तु चतुर्मुखम् ॥१३२॥
त्रिकूटे[3]ष्विन्द्रवीजन्तु त्रिकोणा पृथिवी परा ।
त्रिपुरा च महामाया शक्तिरेका प्रकीर्त्तिता ॥१३३॥

---

वाग्भवकूटस्थं ककारं व्याचष्टे—ककार इत्यादिना । ककारेऽर्थाद् वाग्भवकूटस्थिते ककारे स्थितः कामः ककारस्य कामवीजत्वात्तत्र कामस्य स्थितिरुपपद्यते । त्रिभुवनेश्वरः । त्रिभुवनेशितृत्वाच्च अनिर्वचनीयचिदानन्दमयत्वस्य तत्राव्यभिचाराच्चिदानन्दमयं रूपं स्वरूपं प्रयच्छति साधकायेति शेषः । अथ द्वितीयं कामराजकूटस्थं ककारं व्याचष्टे—ककार इत्यादिना । कामरूपत्वाद् वाच्यवाचकयोरभेदेन कामस्वरूपत्वात् महाकान्ति प्रयच्छतीति सम्बन्धः । तथा च ककारस्य निरुपमसौन्दर्यास्पदीभूतकामदेवरूपार्थबोधकतया तस्यालौकिककान्तिदानदाक्ष्यमुपपद्यत इति भावः । अथ तृतीयं शक्तिकूटस्थं ककारं व्याचष्टे—तत्त्वातीतमित्यादिना । तथा च शक्तिकूटस्थितः ककारस्तत्त्वातीतं पदं परं ब्रह्मरूपं पदं निर्वाणमुक्तिमित्यर्थः, प्रयच्छतीति सम्बन्धः ।

१३०—१३३ । पूर्वमेकादशे प्रकाशे 'अथ वक्ष्यामि सौभाग्यामि'त्यादिना ( ५६—६० श्लो० ) या पञ्चदशाक्षरी सौभाग्याविद्या प्रदर्शिता तस्यास्त्रिकूटघटकानामक्षराणां स्वरूपं निर्वक्ति—सौभाग्याया इत्यादिना । बीजभेदमिति । बीजानामर्थभेदमित्यर्थः । आद्यन्त इति आदौ स ह क ल ह्रीमिति वाग्भवकूटे एको हकारः क ह क ल ह्रीमिति अन्ते शक्तिकूटे चापर इति कूटद्वये द्वौ हकारावित्यर्थः । तथा मध्ये ह क ह ल ह्री-

---

1. '-स्व-' C. 2. 'द्वौ' C. 3. 'द्वि' ? C.

[ एतद्विद्याज्ञानफलम् ]

**यो जानाति महाविद्यां सौभाग्यां [1]परमाक्षरीम्।**
**स स्वर्गभागी मुक्तश्च देवीपुत्रो महीतले ॥१३४॥**

इति श्रीपूर्णानन्दपरमहंसविरचिते श्रीतत्त्वचिन्तामणौ
द्वादशः प्रकाशः ॥ १२ ॥

---

मिति कामराजकूटे द्वौ हकाराविति मिलित्वा चत्वारो हकाराः। एतेषां स्वरूपमाह—चतुर्वेद इत्यादिना।

अथ ककारचतुष्टयं व्याचष्टे—प्रथम इत्यादिना। प्रथमे वाग्भवकूटे मध्यमे कामराजकूटे च पूर्वोपदर्शिते। द्वौ ककारौ तथा शक्तिकूटे द्वाविति चत्वारः ककाराः। तेषां स्वरूपमाह—ब्रह्मणस्त्विति। ककारस्य ब्रह्मबीजतयाऽत्र ककारचतुष्टयं ब्रह्मणो मुखचतुष्टयस्वरूपमित्यर्थः। अथ त्रिकूटस्थ-लकारत्रयं व्याचष्टे—त्रिकूटेष्वित्यादिना। त्रिकूटेषु इन्द्रबीजं लकारत्रयं त्रिकोणपृथिवीस्वरूपमित्यर्थः। त्रिपुरेति। महामाया ह्रीमिति बीजत्रयं तथा एका शक्तिः सकारस्त्रिपुरा प्रकीर्त्तितेत्यर्थः।

१३४। य इति। परमाक्षरीं परः परशिवस्तेन मा मानं येषां तथाभूतान्यक्षराणि यत्र तादृशीं शिवशक्तिसामरस्यरूपां निरुक्तपञ्चदशाक्षरीं यो जानातीति सम्बन्धः।

---

1. 'पञ्च-' C.

# त्रयोदशः प्रकाशः

[ षोडशीविद्यानिर्वचनम् ]

[ षोडशीस्वरूपनिरूपणप्रतिज्ञा ]

अथ वक्ष्यामि तां विद्यां सर्वाद्यां सर्वसिद्धिदाम् ।
शब्दब्रह्ममयीं नित्यां षोडशार्ण[1]स्वरूपिणीम् ।
ब्रह्मविद्यास्वरूपाञ्च भुक्तिमुक्तिफलप्रदाम् ॥ १ ॥

[ दीक्षामन्तरेण श्रीविद्याजपे दोषः ]

विना गुरूपदेशेन श्रीविद्यां यो जपेद् बुधः ।
योगिनीनां भवेद् भक्ष्यः श्रीगुरोः शासनादपि ॥ २ ॥

[ अनधिकारिणे श्रीविद्यादाननिषेधः ]

षोडशार्णां महाविद्यां न दद्याद् यस्य कस्यचित् ।
राज्यं देयं धनं देयं वरं नेयं[2] कदाचन ॥ ३ ॥
प्रकाशात् सिद्धिहानिः स्यादित्याज्ञा [3]शम्भुना कृता ॥४॥
[4]राज्ञे [5]राज्यप्रदायापि पुत्राय प्राणदाय च[6] ।
देयन्तु सर्वसाम्राज्यं [7]पुत्रं मित्रं कलत्रकम् ।
शिरोऽपि प्राणसहितं न देया षोडशाक्षरी ॥ ५ ॥

---

१। एवं दशमैकादशद्वादशपटलैः श्रीविद्यामन्त्रान् विस्तरतः प्रतिपाद्य पटलेऽस्मिन् पूर्वोपदर्शितषोडशीं विशेषतो निर्वक्ति—अथेत्यादिना ।

३। षोडशार्णामिति। वरं राज्यं देयं धनं देयमियं कदाचन न देयेत्यर्थः ।

---

1. '-शेन्दु-' A. 2. 'वरनेयं ?' C. 3. 'शङ्करैः' A-B. 4. 'राज्ये ?' A-B. 5. 'राज्यं' A-B. 6. 'वा' C. 7. 'पुत्रमित्र-' C.

[ अस्या रहस्यत्वम् ]

गोपितव्या महाविद्या स्वयोनि[1]रिव सर्वदा ॥ ६ ॥

[ गुरुभक्ताय देयत्वम् ]

उदके लवणं लीनं यथा भवति वै तथा ।
मनो भवति वै लीनं पादयोः श्रीगुरोर्यदि ।
तदा देया महाविद्या कृपया षोडशाक्षरी ॥ ७ ॥

[ षोडशीविद्याया अनुचार्यत्वम् ]

उच्चार्यमाणा ये मन्त्रास्ते सर्वे [2]वाचिकाः स्मृताः ।
[3]उच्चाररहितं वस्तु श्रीविद्या षोडशाक्षरी ॥ ८ ॥

[ अस्याश्चातुर्विध्यम् ]

चतुर्विधप्रकारेण कथयामि सुदुर्लभाम् ॥ ९ ॥

[ षोडशीविद्यानिर्णयः ]

दक्षिणामूर्त्तितन्त्रस्य या या विद्या समुद्धृता ।
सा सा च षोडशी विद्या सकला बीजभेदतः ॥१०॥

[ विद्याया जाग्रद्रूपतासम्पादनम् ]

[4]चन्द्राद्यं वरुणान्तञ्च शक्रादिसहितं पृथक् ।
वामाक्षिबिन्दु[5]नादाढ्यं विश्वमातृकलात्मकम् ।
[6]विद्यादौ योजनादेव जाग्रद्रूपा च षोडशी ॥११॥

---

१०। समुद्धृतेति, एकादशप्रकाशे इत्यर्थः ।

११। अथ पारिभाषिकीं षोडशीमाह--चन्द्राद्यमिति। चन्द्रबीजं सकारस्तदाद्यं हकारः, तथा वरुणान्तं वरुणबीजं वकारस्तदन्तं शकारः । शक्रादीति । शक्रो लकारस्तस्यादी रकारस्तत्सहितम् । पृथगित्यनेन प्रागुक्तयोर्हकारशकारयोः प्रत्येकेन रकारयोगः सूचितः । एतेन ह्र श्र इति प्राप्तम् । वामाक्षीति । वामाक्षि ईकारः बिन्दुनादौ

---

1. '-रपरे यथा' C. 2. 'वामिकाः' A. 3. 'उच्चार्यरहितं वर्णं' A-B. 4. 'चन्द्राद्यन्तं वारुणान्तञ्च' ? C. 5. '-नादाढ्यं ?' A-B. 6. 'विद्याद्ये' C.

[ जाग्रद्रूपतायां साधकस्यावस्था ]

उत्पत्तिर्जागरो बोधो [1]व्यावृत्तिर्मनसः सदा ।
[2]कलाचतुष्टयं जाग्रदवस्थायां व्यवस्थितम् ॥१२॥

[ जाग्रदवस्थास्वरूपम् ]

जाग्रत् सत्त्वगुणा प्रोक्ता केवला शक्तिरूपिणी ॥१३॥

[ त्रिकूटादिविद्यानां पञ्चकूटादित्वम् ]

त्रिकूटाः सकला भेदाः पञ्चकूटा भवन्ति हि ।
वैष्णवी वसुकूटा स्यादेवं नारायणी भवेत् ॥१४॥
द्वितीयोऽयं प्रकारः स्याद् दुर्लभो भुवनत्रये ॥१५॥
एषैव शिवरूपा च व्यापकत्वाच्च निश्चला ।

[ विद्यायाः सुषुप्तिरूपता ]

सुषुप्तिरूपिणी साक्षाद् ब्रह्मरूपा यतो भवेत् ॥१६॥

---

प्रसिद्धौ तैराढ्यं युक्तमित्यर्थः पृथगित्यस्यात्रापि सम्बन्धः । एवञ्च ह श्र इत्येतयोः प्रत्येकेन चतुर्थस्वरनादबिन्दुयोगे ह्रीं श्रीमिति बीजद्वयं लभ्यते। विद्यादाविति। अत्र तन्त्रसारकृता, पारिभाषिकीं षोडशीमाह ज्ञानार्णवे इति प्रकरय—

चन्द्रान्तं वरुणान्तञ्च शक्रादिसहितं पृथक् ।
वामाक्षिबिन्दुनादाढ्यं विश्वमातृकलात्मकम् ।
विद्यादौ योजयेद्देवि साक्षाद् ब्रह्मस्वरूपिणी ॥

इत्याद्येतत्समानानुपूर्वीकं वचनद्वयमुद्धृतम् । चन्द्रान्तं हकार इति व्याख्यातञ्च । तदिह चन्द्रः सकार आद्यो यस्य हकारस्य इति बहुव्रीह्याश्रयणे चन्द्राद्यशब्देन हकार एव लभ्यते इति न ज्ञानार्णववचनविरोधः । विद्यादौ पूर्वोक्तद्वादशविद्यादाविति व्याख्यातं तन्त्रसारे । एवञ्चात्रापि प्रागुक्तमन्वाद्याराधितद्वादशविद्यानामादौ निरुक्तबीजानां योजनात् महेश्वरी षोडशी जाग्रद्रूपा भवतीत्यर्थः ।

१२ । देव्या जाग्रद्रूपतायां साधकस्यावस्थाचतुष्टयमाह—उत्पत्तिरित्यादिना ।

१४-१६ । पूर्वं चन्द्राद्यमित्यादिना यद् विद्यादौ बीजद्वययोग उक्तस्तस्य फलमाह

---

1. 'व्यावृत्ति मनसः ?' C. 2. 'कलेत्यादिपादचतुष्टयं' C-पुस्तके नास्ति ।

[ तत्र साधकस्यावस्था ]

मरणं विस्मृतिर्मूर्च्छा निद्रा च तमसावृता ।
सुषुप्तेस्तु[1] कला ज्ञेया सुषुप्तिः शिवरूपिणी ॥१७॥
जाग्रद्रूपा शाम्भवी तु [2]बीजैकविनियोजनात् ।

[ विद्यायाः स्वप्नरूपता ]

सुषुप्त्यन्ते जागरादौ स्वप्नावस्था [3]रजोमयी ॥१८॥

[ तत्र साधकस्यावस्था ]

अभि[4]लापो भ्रमश्चिन्ता विषयेषु मनःस्मृतिः ।
कलाचतुष्टयं स्वप्नावस्थायान्तु विधीयते ॥१९॥

---

—त्रिकूटा इत्यादि । तन्त्रसारेऽपि—'चन्द्रान्तं वरुणान्तञ्चे'त्यादि 'साक्षाद् ब्रह्मस्वरूपिणी'त्यन्तमभिधाय—

त्रिकूटाः सकला भेदाः पञ्चकूटा भवन्ति हि ।
वैष्णवी वसुकूटा स्यात् षट्कूटा शाङ्करी भवेत् ।

इत्युक्तम् । एवञ्च प्रकृते त्रिकूटभेदानामादौ ह्रीं श्रीमित्येकाक्षरकूटद्वययोगे पञ्चकूटत्वम् । तथा षट्कूटात्मकविष्णूपासितविद्यायाः पूर्वं निरुक्तबीजद्वययोगेऽष्टकूटत्वम् ।

यथा—ह्रीं । श्रीं । क ए ई ल ह्रीं । ह स क ह ल ह्रीं । स क ल ह्रीं इति पञ्चकूटा । यथा—ह्रीं । श्रीं । ह स क ल ह्रीं । ह स क ह ल ह्रीं । स क ल ह्रीं । स ह क ल ह्रीं । स ह स क ल ह्रीं । ह स क ल ह्रीं । इत्यष्टकूटा । एवं नारायणी भवेदिति । तन्त्रसारे षट्कूटा शाङ्करी भवेदित्यभिधानादत्र नारायणी शाङ्करीत्यर्थः । तथा चाऽगस्त्यस्य द्विधा विद्यामित्यादिना (१२।२१) या शङ्करोपासिता चतुष्कूटा विद्या प्रदर्शिता सा ह्रीं श्रीमिति बीजद्वयात्मककूटद्वययोगात् षट्कूटा भवेदिति फलितार्थः ।

तथा च—ह्रीं । श्रीं । क ए ई ल ह्रीं । ह स क ह ल ह्रीं । स ह स क ल ह्रीं । क ए ई ल ह स क ह ल स ह स क ल ह्रीं । इति षट्कूटा । प्रागुक्तद्वादशभेदानां निरुक्तरीत्या कूटवृद्धिरिति ज्ञेयम् । षोडशाक्षरत्वव्यभिचारादेतासां पारिभाषिकषोडशीति संज्ञा । एवमन्यत्रापि ।

---

1. 'च ?' C. 2. 'बीजेन विनियोजयेत्' C. 3. 'मनोमयी' A. 4. '-शापो ?' C.

[ निरुक्तपञ्चकूटात्मकविद्यानां प्रणवयोगे विशेषः ]

पञ्चकूटात्मिका[1] या या षोडशी शिवशक्तिका ।
वेदादिमण्डिता सा तु शिवशक्तिमयी भवेत् ॥२०॥

[ एतदुपास्तिफलम् ]

अस्याः स्मरणमात्रेण [2]गजदानशतं भवेत् ।

[ निगमनम् ]

भेदत्रयन्तु कथितं सारात् सारतरं महत् ॥२१॥

[ शाम्भवकामराज-प्रथमलोपामुद्रयोर्विशेषः ]

वामकेश्याश्च लोपाया विशेषो भेद उच्यते ।
समयाङ्कमहातन्त्रभेदमालक्ष्य[3] दुर्लभः ॥२२॥

[ कामराजषोडश्यास्त्रैविध्यम् ]

षोडशी कामराजाख्या त्रिधा भवति बीजतः ॥२३॥

---

२०। पञ्चकूटात्मिकेति । पूर्वं चन्द्राद्यमित्यादिना त्रिकूटाः सकला भेदा इत्यादिना चादौ मायारमायोगनिर्वाह्यपञ्चकूटात्मिका शिवशक्तिका निरूक्तबीजद्वयरूपशिवशक्तिमयी या या विद्या प्रदर्शिता, सा सा वेदादिमण्डिता वेदादिः प्रणवस्तेन मण्डिता प्रणवपूर्विका इति भावः षट्कूटाद्यात्मिका विद्या भवतीत्यर्थः । अत्रेदमवधेयम्—पूर्वं त्रिकूटानां ह्रीं श्रीमितिबीजद्वययोगेन यत् पञ्चकूटत्वमुपदर्शितं ह्रीं श्रीमित्येतयोः पूर्वं प्रणवयोगेन तासां षट्कूटत्वम् । अत्र पञ्चकूटात्मिकेत्युपलक्षणं पूर्वोपदर्शितानामष्टकूटाद्यात्मिकानां नवकूटाद्यात्मकत्वमपि साधकैरुन्नेयम् । व्यक्तमाह तन्त्रसारे—

वेदादिमण्डिता देवि शिवशक्तिमयी यदा ।
तदा भेदास्तु सकलाः षट्कूटाः परमेश्वरि ।
वैष्णवी नवकूटा स्यात् सप्तकूटा च शाङ्करी ॥

इति । तथा च ॐ । ह्रीं । श्रीं । क ए ई ल ह्रीं । ह स क ह ल ह्रीं । स क ल ह्रीं ।
इति त्रिकूटायाभेदो दिङ्मात्रमुपदर्श्यते । अन्ये भेदास्त्वनेन क्रमेणोह्याः ।

---

1. 'माया' A-B. 2. 'जगदानन्दितं' A-B. 3. '-मालम्ब्य' B.

[ तत्र प्रथमा ]

दत्त्वा [1]गोपालबीजन्तु कामराजस्य[2] पूर्वतः ।
षोडशी कामराजाख्या कन्दर्पाराधिता मता ॥२४॥

[ अस्याः प्रशस्तिः ]

अस्याः प्रसादात् कामोऽपि त्रैलोक्यविजयान्वितः ।
सर्वसौन्दर्यसुभगः [3]कारयेत्त्रिजगद् वशम् ॥२५॥

[ द्वितीया ]

मायापुरस्कृता विद्या षोडशी सर्वदुर्लभा ।
श्रीकृष्णाराधिताख्येयं

[ अस्याः प्रशस्तिः ]

यतोऽभूदीश्वरः स्वयम् ।
यत्प्रसादात् स्वयं कृष्णो बिभर्त्ति च गुणत्रयम् ॥२६॥

[ तृतीया ]

श्रीमती षोडशी विद्या सर्वसौभाग्यदायिनी[4] ।

---

२४—२५ । अथ कामराजषोडशीभेदानाह—दत्त्वेत्यादिना । दशमप्रकाशे 'अथ विद्यां प्रवक्ष्यामि कामदेवेन सेविताम्' इत्युपक्रम्य 'कन्दर्पो विष्णुयुक्त' इत्यादिना या शाम्भवकामराजविद्या प्रदर्शिता सैवात्र कामराजाख्येति पदेन ग्राह्या, प्रथमप्राप्तत्वात् कन्दर्पाराधितत्वश्रवणाच्च । तथा च—क ए ई ल ह्रीं । ह स क ह ल ह्रीं । स क ल ह्रीं । इति पूर्वोपदर्शितपञ्चदशाक्षरशाम्भवकामराजविद्यायाः पूर्वतो यदि क्लीमिति गोपालबीजं योजयेत्तदैको भेदः ।

२६ । मायापुरस्कृतेति । निरुक्तकामराजविद्या यदि मायापुरस्कृता ह्रीमिति मायाबीजपूर्विका स्यात्तदा द्वितीया ।

२७ । श्रीमतीति । सा चेच्छ्रीमती आदितः श्रीमिति लक्ष्मीबीजयुक्ता स्यात्तदा तृतीया । यथा—

---

1. 'गोदान-' ? C. 2. 'दुर्लभः' A-B. 3. 'कारयन्त्रि-' C. 4. इतः परं 'लक्ष्म्या चाराधिता विद्या सर्वसौभाग्यदायिनी'ति A-B-पुस्तकयोरधिकः पाठो दृश्यते ।

[1]लक्ष्म्या चाराधिता विद्या बिभर्त्ति च गुणत्रयम्।

[ अस्याः प्रशस्तिः ]

यत्प्रसादादभूल्लक्ष्मीर्वैष्णवी विष्णुवल्लभा ॥२७॥

[ अन्यादृशषोडशीस्वरूपनिरूपणप्रतिज्ञा ]

अपराश्च प्रवक्ष्यामि षोडशीं सर्वदुर्लभाम् ॥२८॥

[ तत्र क्रमः ]

कामराजाख्यविद्यादौ[2] कामयोनिश्रियः क्रमात्।
जप्त्वा तु[3] साध[4]कश्रेष्ठो वागीशत्वमुपेयिवान् ॥२९॥

---

(१) क्लीं क ए ई ल ह्रीं। ह स क ह ल ह्रीं। स क ल ह्रीं।
(२) ह्रीं क ए ई ल ह्रीं। ह स क ह ल ह्रीं। स क ल ह्रीं।
(३) श्रीं क ए ई ल ह्रीं। ह स क ह ल ह्रीं। स क ल ह्रीं।

वामकेश्याश्च लोपाया इत्यनेन निरुक्तकामराजविद्यावत् प्रथमलोपामुद्राया अप्येतद् भेद-त्रयमुपदिष्टमिति तदपि प्रदर्श्यते—

(१) क्लीं ह स क ल ह्रीं। ह स क ह ल ह्रीं। स क ल ह्रीं।
(२) ह्रीं ह स क ल ह्रीं। ह स क ह ल ह्रीं। स क ल ह्रीं।
(३) श्रीं ह स क ल ह्रीं। ह स क ह ल ह्रीं। स क ल ह्रीं।

अत्र पञ्चदशाक्षरमन्त्रादावेकाक्षरयोजनात् षोडशाक्षरत्वं ज्ञेयम्।

२८—३०। प्रकारान्तरेण षोडशीं वक्तुं प्रतिजानीते—अपराश्चेत्यादिना। काम-राजेत्यादि। पञ्चदशाक्षर्याः शाम्भवकामराजविद्याया आदौ क्रमात् कामयोनिश्रियो जपेदित्यर्थः। अत्र योनिर्मायाबीजं ह्रींकारः। क्रमादिति कामयोनिश्रियः, योनिश्रीकामाः, श्रीयोनिकामाश्च। एतान् यदि क्रमेण योजयेत् तदा अष्टादशाक्षरं विद्यात्रयं भवतीत्यर्थः अयमर्थस्तु क्रमादित्यनेन लब्धः। व्यक्तमाह तन्त्रसारधृतकुलोड्डीशे—

काममायारमापूर्वो माया लक्ष्मीः स्मरस्तथा।
रमा माया तथा कामो वसुचन्द्राक्षरी त्रिधा॥

इति। एवञ्च—

---

1. 'लक्ष्मी' A. 2. '-द्यै ?' C. 3. 'च' C. 4. '-को भक्त्या' C.

[ अस्या रहस्यत्वं प्रकर्षश्च ]

**एषा गुप्ततमा विद्या सर्वतन्त्रेषु गोपिता ।**
**अनया सदृशी विद्या न भूता न भविष्यति ॥३०॥**

[ अजपाविद्या ]

**अपरं परमं गुह्यं कथयामि विशेषतः ।**
**[1]अजपा च महाविद्या [2]सर्वतन्त्रेषु निर्मला ॥ ३१ ॥**

---

( १ ) क्लीं ह्रीं श्रीं क ए ई ल ह्रीं । ह स क ह ल ह्रीं । स क ल ह्रीं ।
( २ ) ह्रीं श्रीं क्लीं क ए ई ल ह्रीं । ह स क ह ल ह्रीं । स क ल ह्रीं ।
( ३ ) श्रीं ह्रीं क्लीं क ए ई ल ह्रीं । ह स क ह ल ह्रीं । स क ल ह्रीं ।

एवं प्रथमलोपामुद्रायाः पूर्वं निरुक्तबीजयोगेन मन्त्रत्रयं भवतीति ज्ञेयम् । 'वामकेश्याश्च लोपाया विशेषो भेद उच्यते' इति पूर्वमुक्तत्वात्, 'यथा तु कामराजस्य प्रकारः परिकीर्त्तितः । लोपामुद्राख्यविद्यायाः प्रकार ईदृशः स्मृत ॥' इति वक्ष्यमाणत्वाच्च । तदयं लोपामुद्रायां बीजयोगः प्रदर्श्यते—

(१) क्लीं ह्रीं श्रीं ह स क ल ह्रीं । ह स क ह ल ह्रीं । स क ल ह्रीं ।
(२) ह्रीं श्रीं क्लीं ह स क ल ह्रीं । ह स क ह ल ह्रीं । स क ल ह्रीं ।
(३) श्रीं ह्रीं क्लीं ह स क ल ह्रीं । ह स क ह ल ह्रीं । स क ल ह्रीं ।

३१ । अथाजपामन्त्रं वक्तुं प्रतिजानीते—अपरमित्यादिना । अजपेति । अजपामन्त्रमाह तन्त्रसारे—

वियदर्द्धेन्दुलसितं तदादिः सर्गसंयुतः ।
अजपाख्यो मनुः प्रोक्तो द्व्यक्षरः सुरपादपः ॥

इति । अस्यार्थः—वियत् आकाशबीजं हकारस्तच्च अर्द्धेन्दुरनुस्वारस्तेन लसितम् ; एतेन हम् इति प्राप्तम् । तदादिरिति । तस्य हकारस्य आदिः सकारः स च सर्गेण विसर्गेण संयुतः, एतेन सः इति प्राप्तम् । एवञ्च हंसः इत्यजपामन्त्र इत्युक्तं भवति । अस्या अजपानामबीजमाह प्राणतोषणीधृत-कुलमूलावतारकल्पसूत्रटीकायाम्—

विना जपेन देवेशि जपो भवति मन्त्रिणः ।
अजपेयं ततः प्रोक्ता भवपाशनिकृन्तिनी ॥

---

1. 'आजगाम ?' A. 2. 'सुप्रकाशा सुदुर्लभा' C.

[ अस्याः प्रशस्तिः ]

यत्स्मृतेर्यज्जपाद् ध्यानादत्यन्तविनियोजनात्[1] ।
सिद्धिदा सर्वकामानां शिवकण्ठविभूषिता[2] ॥ ३२ ॥

[ अन्यादृशषोडशीनिरूपणप्रतिज्ञा ]

अथापरां[3] प्रवक्ष्यामि वागीशत्वप्रदायिनीम् ॥ ३३ ॥

[ तत्र बृहस्पतिसेविता ]

गीर्बीजाद्या महाविद्या जीवेनाराधिता परा ।
यत्प्रसादात् सुराचार्यो वागीशत्वमुपालभत्[4] ॥ ३४ ॥

[ शिवसेविता ]

बिन्दुस्रग्बीजपूर्वा सा शम्भुना परिपूजिता ॥ ३५ ॥

---

३२। यत्स्मृतेरित्यादि । यस्या अजपायाः स्मृत्यादिना शिवकण्ठविभूषिता शक्तिः सर्वकामानां सिद्धिदा भवतीति सम्बन्धः ।

३३—३४। भगवत्याः षोडशीदेव्याः स्वरूपान्तरमाह—अथेत्यादिना । अत्रेदमवधेयम्—प्रागुक्तशाम्भवकामराजविद्या प्रथमलोपामुद्रा च गोपालबीजाद्या मायाबीजाद्या श्रीबीजाद्येति त्रिधा, तथा गीर्बीजाद्या शक्तिबीजाद्या प्रणवाद्येति त्रिधा । एवञ्च समयाङ्कमतानुसारेण षड् भेदाः षोडश्या उपदिश्यन्ते । तत्र 'दत्त्वा गोपालबीजन्त्वि'त्यादिना 'विष्णुवल्लभे'त्यन्तेन पूर्वभेदत्रयमुपदर्शितम् । अथान्त्यं भेदत्रयमभिदधानः प्रथमं गीर्बीजाद्यामाह—अथापरामित्यादिना । गीर्बीजाद्या वाग्भवबीजाद्या । एवञ्च—

ऐँ क ए ई ल ह्रीं । ह स क ह ल ह्रीं । स क ल ह्रीं । इति षोडशाक्षरो मन्त्रः पर्यवस्यति । अनया रीत्या प्रथमलोपामुद्राया अपि—

ऐँ ह स क ल ह्रीं । ह स क ह ल ह्रीं । स क ल ह्रीं ।

इति षोडशाक्षरो मन्त्रोऽवगन्तव्यः ।

३५। द्वितीयामाह—बिन्दुस्रगिति । अत्र बिन्दुस्रग्बीजं सौरिति । 'सौरिति पराबीजाद्या इति आगमचन्द्रिकासंवादात् । ततश्च—

सौः क ए ई ल ह्रीं । ह स क ह ल ह्रीं । स क ल ह्रीं ।

---

1. '-दाद्यन्ते विनियोजयेत्' C. 2. '-विभूषणा' C. 3. 'अपराञ्च' C. 4. '-लभेत्' A. B.

[ कामराजलोपामुद्रयोस्तुल्यत्वम् ]

**यथा तु कामराजस्य प्रकारः परिकीर्त्तितः ।**
**लोपामुद्राख्यविद्यायाः प्रकार ईदृशः स्मृतः ॥ ३६ ॥**

[ तस्या रहस्यत्वं प्रशस्तिश्च ]

**[1]स तु गुह्यतमस्तन्त्रे मनोरथप्रदायकः ॥ ३७ ॥**

[ निरुक्तकामराजविद्यायाः प्रणवयोगेन षोडशीत्वम् ]

**कामराजमहाविद्या [2]तारपूर्वा च षोडशी ।**
**उपास्या नारदेनेयं यतोऽभून्मानसी गतिः ॥ ३८ ॥**

इति पराबीजघटितः षोडशाक्षरो मन्त्रः। प्रणवाद्यस्तु ३८श-श्लोकेन वक्ष्यते। अनया रीत्या प्रथमलोपामुद्राया अपि—

सौः ह स क ल ह्रीं। ह स क ह ल ह्रीं। स क ल ह्रीं।

इति षोडशाक्षरो मन्त्रो वेदितव्यः।

३६। यथा त्विति। अनेन कामराजविद्यावत् प्रथमलोपामुद्राया अपि निरुक्तबीजयोगेन षोडशाक्षरत्वमुपदिष्टम्। क्रमस्तु प्रदर्शित एव।

३८। कामराजेति। इयमपि शाम्भवकामराजविद्यैव। सा तारपूर्वा प्रणवाद्या चेत्तदापि षोडश्या अपरो भेदः। पूर्ववचने 'यथा त्वि'त्यादिना 'प्रकार ईदृशः स्मृत' इत्यन्तेन च कामराजलोपामुद्रे उपसंहृत्य पुनः कामराजविद्यामात्राभिधानात् ताराद्या कामराजमहाविद्यैव न तु प्रथमलोपामुद्राऽपीति ग्रन्थकृतामाशयः प्रतीयते। यद्वा, तारपूर्वा चेति चकारस्य कामराजमहाविद्येत्यतः परं योजनात् लोपामुद्राया अपि संग्रहोऽत्र बोध्यः। आगमचन्द्रिकादौ लोपामुद्राया अपि पूर्वं प्रणवयोगे षोडशीत्वस्य व्यक्तमभिधानात्।

**अत्रतदवधेयम्**—इतः पूर्वं शाम्भवकामराजलोपामुद्रयोरादौ तत्तद्बीजयोगेन षोडशीत्वमुपदर्शितम्, शाक्तकामराज-लोपामुद्रयोरपि निरुक्तबीजपूर्वकयोरेते भेदा बोध्याः। आगमचन्द्रिकायाम्—

ह स क ल ह्रीं। ह स क ह ल ह्रीं। स क ल ह्रीं।

इति शाक्तकामराजमभिधाय "इयं श्रीबीजाद्या सौः इत्याद्या ऐँबीजाद्या ह्रींबीजाद्या श्रीबीजाद्या क्लींबीजाद्या इति षट्प्रकारा" इति व्यक्तमुक्तत्वात्।

1. 'स तु गुह्यतम' इत्यादिपादद्वयं A-C-पुस्तकयोः 'यतोभूऽन्मानसी गतिः' इत्यतः परं सन्निवेशितं दृश्यते। 2. 'तारा-' A. 'चानु-' C.

[ अन्यादृशी षोडशी विद्या ]

इदानीन्तु प्रवक्ष्यामि षोडशीं सर्वदुर्लभाम् ।
यस्या विज्ञानमात्रेण ब्रह्म साक्षान्न संशयः ॥ ३९ ॥

[ तस्याः स्वरूपम् ]

सुषुप्त्यादौ जागरान्ते स्फुरत्तामात्रलक्षणा ।
अवस्थाशेषतां प्राप्ता तुर्या तु परमा कला ।
भावाभावविनिर्मुक्ता गुणातीता [1]निगद्यते ॥ ४० ॥

[ अस्याः कलाचतुष्टयम् ]

वैराग्यञ्च मुमुक्षुत्वं समाधि[2]रमलं मनः ।
सदसद्वस्तुनिर्द्धारस्तुर्यायास्तु कला इमाः ॥ ४१ ॥

[ अस्याः प्रशस्तिः ]

यत्प्रसादाच्छिवो देवो जगतामीश्वरो विभुः ।
विद्यानामुत्तमा विद्या सर्वशास्त्रेषु दुर्लभा ॥ ४२ ॥
एकोच्चारेण नश्यन्ति महापातककोटयः ॥ ४३ ॥
[3]तीर्थस्नानसहस्राणि यज्ञदानशतानि च ।
तुलापुरुषलक्षाणि वाजिमेधशतानि च ॥ ४४ ॥
तुलां नार्हन्ति कुत्रापि नात्र कार्या विचारणा ।
एकोच्चारणमात्रेण किं पुनर्ब्रह्म केवलम् ॥ ४५ ॥
[4]वाजपेयसहस्राणि प्रादक्षिण्यं भुवस्तथा ।
काश्यादितीर्थयात्राश्च सार्द्धकोटित्रयान्विताः ।
तुलां नार्हन्ति कुत्रापि नात्र कार्या विचारणा ॥ ४६ ॥

---

३९ । अथ षोडशीमन्यादृशीं वक्तुं प्रतिजानीते—इदानीन्त्वित्यादिना ।

---

1. 'निजायते ?' C. 2. '-र्विमलं' C. 3. 'तीर्थस्नानसहस्राणी'त्यादि पादाष्टकं C-पुस्तके नास्ति । 4. 'तीर्थस्नानं महादानं' C.

[ उद्दिष्टविद्यास्वरूपनिरूपणप्रतिज्ञा ]

[1]सङ्केतेन प्रवक्ष्यामि श्रीगुरोः कृपया पराम्।
[2]सर्वथा गोपयेद् विद्यां यदीच्छेदात्मनो हितम्॥ ४७॥

[ विद्यायाः स्वरूपम् ]

सान्तान्तं शिवपूर्वसप्तमयुतं सूक्ष्मान्त[3]मन्त्रान्वितं
देवीं दक्षिणबाहुशक्रनयनं [4]कामं कलालाञ्छितम्।
दन्तान्तोर्द्ध्वमुखं सजीवदशनं [5]शेषं मुखेनान्वितं
बीजं पञ्चकमित्थमेवमुदितं सर्वार्थसिद्धिप्रदम्॥ ४८॥

[ बीजान्तरयोगः ]

वेदाद्यं त्रिगुणां रमामथ वदेत् कामेन संसेवितां
लोपां वा पुनरेव पञ्चकमथो पूर्वं विलोमक्रमात्।

---

४८। अथ षोडशीमन्याद्भशीमाह—सान्तान्तमित्यादिना। सः अन्तो यस्य स सान्तः षकारः, सोऽपि षकारोऽन्तो यस्य स सान्तान्तः शकारस्तं, शिवपूर्वसप्तमयुतं शिवो हकारस्ततपूर्ववर्त्ती विलोमेन पठितः सप्तमो रकारस्तद्युतम्। एतेन श्र इति प्राप्तम्। सूक्ष्ममिकारस्तस्यान्त ईकारः तथा मस्तं मस्तकमनुस्वारस्ताभ्यामीकारानुस्वाराभ्यामन्वितं युक्तमिति सान्तान्तविशेषणम्। एतेन श्रीमिति रमाबीजं लभ्यते। अथ मायाबीजमाह—देवीमिति। देवीं मायां ह्रीमिति मायाबीजमित्यर्थः। ततः कामबीजमाह—दक्षिणेत्यादिना। दक्षिणबाहुः ककारः, शक्रो लकारः तयोर्नयनं मेलनं यत्र तथाभूतं कामं बिन्दुं कला कामकला ईकारस्तेन लाञ्छितम्। एतेन क्लीमिति बीजं लभ्यते। दन्तान्तोर्द्ध्वमुखमिति। दन्तान्त ऐकारः, ऊर्द्ध्वमुखं मुखस्योर्द्ध्वं बिन्दुः। एतेन ऐँ इति वाग्भवबीजं प्राप्तम्। सजीवेति। जीवः सकारस्तेन सह वर्त्तमानं दशनमौकारं मुखेन विसर्गेणान्वितम्, लिखेदिति शेषः। बीजमिति। इत्थं प्रागुक्तरूपं श्रीं ह्रीं क्लीं ऐँ सौः इति बीजपञ्चकं सर्वार्थसिद्धिप्रदमुदितमिति सम्बन्धः।

४९। निरुक्तबीजपञ्चकानन्तरं योज्यानि बीजान्याह—वेदाद्यमित्यादिना। वेदाद्यः प्रणवः, त्रिगुणा माया ह्रीं, रमा श्रीं इति वदेदिति सम्बन्धः। अथ श्रीं ह्रीं क्लीं ऐँ

---

1. 'सङ्केतेने'त्यादि पादद्वयं A-पुस्तके नास्ति। 2. 'सर्वदा' A-B. 3. '-मस्त्रान्वितं' C. 4. 'वामं ?' C. 5. 'सेयं' A; 'जीवं' B.

[ अस्याः प्रशस्तिः ]

एषा श्रीः परमा परात् परतरा सर्वार्थसिद्धिप्रदा
सारात् सारतरा समस्तजगतामुत्पत्तिभूता शिवा ॥ ४९ ॥
साक्षाद् ब्रह्मस्वरूपा सुरमुनिनिवहैर्वन्दिता[1]नन्दरूपा
[2]संसारस्यैकसारा त्रिभुवनजननी धर्मकर्मोदया या ।
सेयं श्रीब्रह्मविद्या सकलगुणमयी निर्गुणा [3]निष्प्रपञ्चा
विद्येयं सर्वपूर्वा सकलहितकरी चित्कलानन्तरूपा ॥५०॥

[ अस्या रहस्यत्वं प्रशस्तिश्च ]

राज्ञे साम्राज्यराज्यं वरमपि च शिरः स्वर्णरत्नश्च देयं
पुत्रो मित्रं कलत्रं सकल[4]परिजनश्चाथवा नैव देया ।
श्रीविद्या षोडशार्णा सकल[5]गुणमयी देवदेवैकवन्द्या
सर्वाम्नायैः प्रपूज्या सकल[6]हितकरी गोपनीया प्रयत्नात् ॥५१॥

[ अस्या अनिर्वाच्यस्वरूपत्वम् ]

वक्त्रकोटिसहस्रैस्तु जिह्वाकोटिशतैरपि ।
वर्णितुं नैव [7]शक्येयं [8]श्रीविद्या षोडशाक्षरी ॥ ५२ ॥

---

सौः ॐ ह्रीं श्रीमिति निरुक्तबीजानन्तरम्, कामेन संसेवितां क ए ई ल ह्रीं। ह स क ह ल ह्रीं। स क ल ह्रीमिति कामदेवसंसेवितशाम्भवकामराजविद्याम्, लोपां वेति ह स क ल ह्रीं। ह स क ह ल ह्रीं। स क ल ह्रीमिति प्रथमलोपामुद्रां वा वदेदिति सम्बन्धः। अन्ते बीजयोगमाह पुनरेवेति। अथो पुनः पूर्वं पञ्चकं सान्तान्तमित्यादिना रमामित्यन्तेनोक्तं श्रीं ह्रीं क्लीं ऐँ सौः इति बीजपञ्चकं विलोमक्रमात् सौः ऐँ क्लीं ह्रीं श्रीमिति क्रमाद् वदेदिति सम्बन्धः।

---

1. '-नन्तरूपा' C. 2. 'संसारे'त्यादि पादत्रयं A-पुस्तके नास्ति। 3. 'निर्विकारा' C. 4. '-रिपुजन-' A. 5. '-मनुमयी' C. 6. '-शुभकरी' C. 7. शक्तोऽयं' C. 8. 'शिवेन' A-B.

[ वैखर्याद्यनभिव्यज्यत्वम् ]

**वैखरी [1]वाच्यभावत्वादशक्ता गुणवर्णने ।**
**यतो निरक्षरं वस्तु परा तत्र तु कारणम् ॥ ५३ ॥**

५३-५४ । वक्त्रकोटिसहस्रैस्त्वित्यादिना यदस्या निरुपाख्यरूपत्वमुक्तं तत्र हेतुमाह—वैखरीत्यादिना। अत्रेदमवधेयम्—वाक् चतुर्धा भिद्यते—परा पश्यन्ती मध्यमा वैखरी चेति। आसां स्वरूपं संक्षेपेण विविच्यते। सारदातिलके प्रथमपटले सृष्टिप्रकरणे अर्थसृष्ट्यनन्तरं शब्दसृष्टिनिरूपणावसरे—

द्विचत्वारिंशता मूले गुणिता विश्वनायिका ।
सा प्रसूते कुण्डलिनी शब्दब्रह्ममयी विभुः ॥
शक्तिं ततो ध्वनिस्तस्मान्नादस्तस्मान्निरोधिका ।
ततोऽर्द्धेन्दुस्ततो विन्दुस्तस्मादासीत् परा ततः ॥
पश्यन्ती मध्यमा वाचि वैखरी शब्दजन्मभूः ।

इत्युक्तम्। एवञ्च शब्दब्रह्मस्वरूपिणी कुण्डलिनी प्रथमं शक्तिं प्रसूते। ततो ध्वनिस्तस्मान्नाद इत्यादिक्रमेण बिन्द्वन्ताः परशक्तेरेवावस्थाभेदा ग्रन्थगौरवभिया न व्याख्यायन्ते, विस्तरस्तु सारदातिलके राघवभट्टकृतायां तट्टीकायाञ्चानुसन्धेयः। तस्माद् बिन्दोः परा नादात्मिका शब्दसृष्टिर्भवति। तस्या एव परायाः क्रमेण पश्यन्ती मध्यमा वैखरी चेति त्रिविधा शब्दसृष्टिः। तत्र परा मूलाधारे सूक्ष्मा ज्योतिर्मात्रस्वरूपा। तत ऊर्द्ध्वगामिनी पश्यन्ती स्वाधिष्ठाने। ततोऽप्युद्गच्छन्ती मध्यमा हृदये। ततोऽप्युद्गच्छन्ती वैखरी मुखे। आसु च क्रमेणोत्तरोत्तरं स्थूलरूपतामयासु चरमं स्थौल्यमधिगच्छन्ती वैखरी शब्दप्रपञ्चं जनयति। तथा च राघवभट्टधृतं वचनम्—

सूक्ष्मा कुण्डलिनी मध्ये ज्योतिर्मात्रात्मरूपिणी ।
अश्रोत्रविषया तस्मादुद्गच्छन्त्यूर्द्ध्वगामिनी ॥
स्वयंप्रकाशा पश्यन्ती सुषुम्णामाश्रिता भवेत् ।
सैव हृत्पङ्कजं प्राप्य मध्यमा नादरूपिणी ॥
ततः संजल्पमात्रा स्यादविभक्तोर्द्ध्वगामिनी ।
सैवोरःकण्ठतालुस्था शिरोघ्राणरदस्थिता ॥

1. 'भाव्य-' A-B.

जिह्वामूलोष्ठनिस्यूतसर्ववर्णपरिग्रहा ।
शब्दप्रपञ्चजननी श्रोत्रग्राह्या तु वैखरी ॥

इति । तन्त्रराजे षड्विंशपटलेऽपि—

स्वात्मेच्छाशक्तिघातेन प्राणवायुस्वरूपतः ।
मूलाधारे समुत्पन्नः पराख्यो नाद उत्तमः ॥
स एवोर्द्ध्वं तया नीतः स्वाधिष्ठाने विजृम्भितः ।
पश्यन्त्याख्यामवाप्नोति तथैवोर्द्ध्वं शनैः शनैः ॥
अनाहते बुद्धितत्त्वसमेतो मध्यमाभिधः ।
तथा तयोर्द्ध्वं नुन्नः स विशुद्धौ कण्ठदेशतः ॥
वैखर्याख्यस्ततः शीर्षकण्ठताल्वोष्ठदन्ततः ।
जिह्वामूलाग्रपृष्ठस्थस्तथा नासाग्रतः क्रमात् ॥
कण्ठताल्वोष्ठकण्ठौष्ठाद्दन्तौष्ठद्वयतस्तथा ।
समुत्पन्नान्यक्षराणि क्रमादादिक्षकावधि ॥
आदि-क्षान्तरतेत्येषामक्षरत्वमुदीरितम् ।
तेषु स्वराः स्वतन्त्राः स्युस्तैर्व्यञ्ज्याद् व्यञ्जनं भवेत् ॥

इति [ ५—१० ] ; एवञ्च सर्वेषां प्राणिनां मूलाधारे ज्योतिर्मालात्मिका।

मूलाधारोद्भवो वायुः प्राणाद्याख्यां समश्नुते । इति तन्त्रराजसप्तविंशपटलोक्तरूपप्राणवायुस्वरूपा परमात्मनः स्वेच्छाशक्त्याघातेन समुत्पन्ना नादात्मिका परा वाक् अतिसूक्ष्मरूपेत्युक्तं भवति, इयमेव प्रथमावस्था । सैव नादात्मिका परा तया परमात्मन इच्छाशक्त्या प्रेरिता क्रमेणोर्द्ध्वगामिनी स्वाधिष्ठाने विजृम्भिता पूर्वतो व्यक्तरूपा पश्यन्तीत्याख्यां भजते। तयैवेच्छाशक्त्या प्रेरिता क्रमादनाहतपद्मे विजृम्भिता मध्यमेत्याख्यामवाप्नोति। ततश्च तयैवेच्छाशक्त्या प्रेरिता क्रमेण कण्ठदेशस्थिते विशुद्धाख्ये चक्रे विजृम्भिता वैखरीत्याख्यामधिगच्छन्ती स्वेच्छावशात् शीर्षकण्ठताल्वोष्ठदन्तादिसम्बन्धतोऽकारादिक्षकारान्तानेकपञ्चाशद्वर्णान् सृजति । एतदभिप्रायेणैव लक्ष्मणाचार्यैरपि सारदायां प्रथमपटले—

क्रमेणानेन सृजति कुण्डली वर्णमालिकाम् ।

इत्युक्तम् । इदानीं प्रकृतमनुसरामः । वैखरीति ।

प्राणान्ते नापि वक्तव्या तुरीया षोडशाक्षरी ।
शब्दातीतपरा वस्तु सम्विज्ज्ञानस्वरूपिणी ।

मूकीभूता हि पश्यन्ती मध्यमा मध्यमा [1]भवेत् ।

[ प्रशस्तिः ]

ब्रह्मविद्यास्वरूपा च भुक्तिमुक्तिफलप्रदा ॥ ५४ ॥

प्राणान्ते नापि वक्तव्या तुरीया षोडशाक्षरी ।

शब्दातीतपरा वस्तु [2]सम्बिजज्ञानस्वरूपिणी ॥ ५५ ॥

[ अस्या विद्यान्तरप्रकृतित्वम् ]

[3]अस्मान्मन्त्रान्निःसरन्ति महामन्त्राः सहस्रशः ।

विस्फुलिङ्गा यथा यान्ति सुतप्त[4]लोहगोलकात् ॥ ५६ ॥

[ पुनरस्या रहस्यत्वम् ]

विद्यया सह मर्त्तव्यं न देया यस्य कस्यचित् ॥ ५७ ॥

---

इति वक्ष्यमाणवचनेन अस्या विद्यायास्तुरीयचैतन्यस्वरूपत्वं प्रतिपादयिष्यते, तुरीयचैतन्यस्वरूपत्वाच्चेयं शब्दातीता श्रवणेन्द्रियाग्राह्या च, अत एव सा परा प्रागुक्तानां परा-पश्यन्ती-मध्यमा-वैखरीरूपाणां शब्दब्रह्मणोऽवस्थाभेदानां प्रथमावस्था-रूपाऽतिसूक्ष्मा मूलाधारमात्रस्थिता शब्दातीतत्वादवाच्या च । वैखरी तु श्रवणेन्द्रिय-विषयीभूतस्थूलशब्दमात्रविषयिणी कण्ठस्थिते विशुद्धाख्यचक्रे विजृम्भमाणा कथं सूक्ष्मातिसूक्ष्मामतिदूरे मूलाधारे विहरन्तीं पराविद्यामिमां विषयीकुर्यादित्येवाह—वैखरी वाच्यभावत्वादित्यादिना । वाच्यभावत्वात् वाच्यो वाग्विषयो भावः सत्ता यस्यास्तथाभूतत्वात् इन्द्रियगोचरवर्णमात्रविषयत्वादित्यर्थः, वैखरी पूर्वोक्तरूपा अस्या विद्याया इन्द्रियागोचरीभूताया गुणवर्णने अशक्ता इत्यर्थः । एतदेवाह—यत इत्यादिना । यत इयं विद्या निरक्षरम् अक्षरातीतं वस्तु अतोऽक्षरव्यञ्जिका वैखरी गुणवर्णने अशक्तेति सम्बन्धः । तर्हि का शक्ता इत्यत आह—परेति, तस्या गुणवर्णने कारणं परैव, शक्त्यन्तरं मूकीभूतेत्यर्थः । अथापराभ्यां पश्यन्तीमध्यमाभ्यां शक्तिभ्यां कथं नास्याः स्वरूपोप-लब्धिरित्यत आह—मूकीभूतेति । एतेन पूर्वोक्तयुक्त्या पश्यन्तीमध्यमयोरप्यस्या गुणवर्णनेऽसामर्थ्यमिति ज्ञेयम् । मध्यमा मध्यमा भवेदिति । पश्यन्ती-वैखर्योर्मध्ये

---

1. '-भवत्' B. 2. 'सत्व-' B. 3. 'अस्या मन्त्रा निः-' C. 4. '-लौह-' C.

[ सच्छिष्याय देयत्वम् ]

शिष्याय भक्तियुक्ताय सत्यवाक्यपराय च ।

प्रदद्यान्मन्त्रराजन्तु

[ दाने क्रमः ]

जले [1]संलिख्य साधकः ॥ ५८ ॥

शिष्यमूर्ध्नि पदं दत्त्वा दिव्याचारक्रमेण तु ।

लक्षमेकं तदर्द्धं वा गजान्तकसहस्रकम् ॥ ५९ ॥

एकाकी शिवगेहे तु जप्त्वा मन्त्रं प्रकाशयेत् ।

श्रीमत्त्रिपुरसुन्दर्या

[ निरुक्तक्रमविपर्यये दोषः ]

नान्यथा सिद्धिदा भवेत् ॥ ६० ॥

[ अथास्या अपरे भेदाः ]

अथास्या अन्यभेदास्तु कथ्यन्ते तन्त्रयोगतः ।

[ तत्र परिपाटी ]

[2]अस्या मध्यात् कामराजं लोपां वा संत्यजेत्ततः[3] ॥६१॥

दक्षिणामूर्त्ति[4]तन्त्रस्य सर्वविद्याः क्षिपेत् क्रमात् ।

तदा च सकला भेदास्तुरीया षोडशी भवेत् ॥ ६२ ॥

---

वर्त्तमानत्वात् मध्यमा मध्यस्थिता मध्यमानाम्नी शक्तिरपि अस्या गुणवर्णने मूकीभूतेति सम्बन्ध इत्यास्तां विस्तरः ।

६१-६२। 'सान्तान्तं शिवपूर्वसप्तमयुतमि'त्यादिना षोडश्या मन्त्रभेदमभिधाय 'अस्मान्मन्त्रान्निःसरन्ति महामन्त्राः सहस्रश' इत्युक्तम्, इदानीं तेषामेव कांश्चिन्मन्त्रान् दर्शयति—अस्या मध्यादित्यादिना । तथा च सान्तान्तमित्यादिनोपदर्शितान् आद्यन्तयोरनुलोमविलोमपठितान् वर्णान् यथापूर्वमुच्चारयेत् । निरुक्तं शाम्भवकामराजं लोपामुद्रां वा मध्यतः परित्यज्य तत्र प्रागुपदर्शिता दक्षिणामूर्त्तितन्त्रोक्ताः सर्वा विद्याः क्रमेण क्षिपेत् । एवञ्चैतद्बीजैस्तत्तन्मन्त्रयोजनादेकैका विद्या भवतीति ।

---

1. 'त्रि-' A-B. 2. 'अस्मान्मध्यात्' A-B. 3. '-द्बुधः' C. 4. '-मन्त्रस्य' A-B.

[ तत्रैकतमस्यापि ज्ञानं शिवतासम्पादकम् ]

एषामन्यतमं ज्ञात्वा ज्ञातव्यं [1]नावशिष्यते।
स ईशो वा नास्ति भेदः सत्यं सत्यं [2]सुनिश्चितम् ॥ ६३ ॥

[ एतन्मन्त्राभ्यासजन्यः साधकस्य शक्तिप्रकर्षः ]

विषं निर्विषतां याति जलं स्तम्भयति ध्रुवम्।
जलीकरोति भुवनं भुवनीकुरुते जलम् ॥ ६४ ॥
वह्निं जलमयं कुर्याज्जलं वह्निश्च कारयेत्।
व्यत्ययं कुरुते सर्वं दृढाभ्यासान्न संशयः ॥ ६५ ॥

इति श्रीपूर्णानन्दपरमहंसविरचिते श्रीतत्त्वचिन्तामणौ
त्रयोदशः प्रकाशः ॥ १३ ॥



1. 'वा न' A-B। 2. 'वरानने' A-B.

## चतुर्दशः प्रकाशः

[ प्रातःकृत्यम् , तत्र श्रीगुरुमन्त्र-नवकुलनाथ-
गुरुमण्डलादिनिरूपणम् ]

[ श्रीमत्त्रिपुरासपर्यावतारः ]

नित्यानन्दमहोदयां[1] स्मितमुखीमालोलनेत्रत्रया-
मुद्यत्सूर्यजवाङ्गरागरुचिरां भक्तैककल्पद्रुमम्[2] ।
नत्वा तां त्रिपुरां परां [3]परशिवक्रोडे समुल्लासितां
पूर्णानन्द-यतिस्तनोति विमलं तत्पादपद्मार्चनम् ॥ १ ॥

[ प्रातःकृत्यम्, तत्र सहस्रारे श्रीगुरोर्ध्यानम् ]

सहस्रदलपङ्कजे सकलशीतरश्मिप्रभं
वराभयकराम्बुजं निजकुलेन संश्लेषितम् ।
प्रसन्नवदनेक्षणं सकलदेवतारूपिणं
स्मरेच्छिरसि हंसगं तदभिधानपूर्वं गुरुम् ॥ २ ॥

[ गुरु-शक्त्योः पूजनं तन्मन्त्रजपश्च ]

प्रातर्यथाक्रमवशाद् गुरुदेवशक्ती
पद्मासनः [4]शिवशिवामभिरूपतश्च ।

---

१। एवं पूर्वप्रकाशान्तेन ग्रन्थेन श्रीमत्त्रिपुरसुन्दरीविद्यानिरूपणान्तमभिधाय प्रकाशेऽस्मिन् प्रातःकृत्यादिक्रमभिधास्यन् प्रथमं देवीनमस्कारपुरःसरं सपर्यानिरूपणमवतारयति—नित्यानन्देत्यादिना ।

२। श्रीगुरुध्यानस्वरूपमाह—सहस्रेति । अस्य व्याख्यानन्तु 'दशशतदलपद्म' इत्यादिग्रन्थादिमश्लोकव्याख्यानदृष्ट्याऽवगन्तव्यम् । निजकुलेन स्वशक्त्या ।

३। प्रातरिति। प्रातरिति पदं पूर्वश्लोकेऽपि योजनीयम्, 'प्रातः शिरसि

---

1. '-रीं' B-C. 2. '-द्रुमाम्' A-C. 3. 'परतमामानन्दपूर्णाकृतिं' A-B. 4. 'शिरसि वानतिरूपमर्चेत्' A-B.

नानाविधोपकरणादिभिरेव मन्त्री
संपूज्य तन्मनुवरं मनसा जपेत् त्रिः ॥ ३ ॥

[ श्रीगुरुमन्त्रः ]

हसौः पदं समालिख्य [1]ह-स-क्ष-म-ल-वानिलान् ।
[2]वह्नियुक्तांस्त्रिधा [3]जप्त्वा पूर्वदीर्घत्रयान्वितान् ॥ ४ ॥
बिन्दुनादकलायुक्तान् श्रीपरान्ते च पारकम् ।
सर्वाराध्यपदं पश्चात् सर्वमूर्द्धपदं ततः ॥ ५ ॥
नाथसर्वगुरुप्रान्ते गुरुः स्वयं ततो गुरुः ।
श्रीगुरुनाथशब्दान्ते स-ह-क्ष-म-ल-वानिलान् ॥ ६ ॥
रेफदीर्घश्रुतियुतान् बिन्दुनादकलान्वितान् ।
पिण्डीकृतं लिखेदाद्यं चतुर्थश्च ततो लिखेत् ॥ ७ ॥

---

शुक्लाब्जे द्विनेत्रं द्विभुजं गुरुम्' इत्यादिदर्शनात् । गुरुदेवशक्तीति गुरुदेवश्च शक्तिश्च, अभिरूपतः अभिरूपे शिवशिवात्मिके गुरुदेवशक्ती नानाविधोपकरणादिभिर्मानसैरिति शेषः, संपूज्येति सम्बन्धः ।

४—६ । पूर्ववचने तन्मनुवरं मनसा जपेदित्युक्तम्, तमेव मनुमाह—हसौरित्यादिना गुरोर्मनुरित्यन्तेन । प्रथमं हसौरिति पदं लिखेत् ततश्च ह स क्ष म ल वानिलानिति । अनिलो वायुबीजं यकारः । अनेन ह स क्ष म ल व य इति प्राप्तम् । वह्नियुक्तानिति वह्नी रकारस्तद्युक्तान् एतेन ह स क्ष म ल व य र इति प्राप्तम् । ततश्च पूर्वदीर्घत्रयान्वितान् पूर्वदीर्घत्रयेण द्वितीयचतुर्थषष्ठस्वरैः अन्वितान् अनु पश्चादन्त्यावच्छेदे इतान् युक्तान् । एतेन रकार एव दीर्घस्वरयोग उक्तः । तथा बिन्दुनादकलायुक्तान् तान् हकारादिरकारान्तवर्णान् त्रिधा कृत्वा निरुक्तदीर्घस्वरत्रयभेदेन क्रमशो विभज्येत्यर्थः । एवञ्च ह्सौः ह स क्ष म ल व य रां, ह स क्ष म ल व य रीं, ह स क्ष म ल व य रूं इत्यन्तं प्राप्तम् । श्रीपरान्त इति । श्रीपरान्ते श्रीपरेत्यनन्तरं पारकं पर एव पारकम् । अत्र पर इति वक्तव्ये छन्दोऽनुरोधात् स्वार्थेऽण्-क-प्रत्ययौ । अनेन श्रीपरापर इति प्राप्तम् । ततः सर्वाराध्येति, ततश्च सर्वमूर्द्धनाथेति ततश्च

---

1. 'स-ह-क्ष-' A. 2. 'बिन्दुयुक्तं त्रि-' A ; 'वह्निमुक्तां त्रि-' C. 3. 'कृत्वा' A-B.

तृतीयश्च द्वितीयश्च पूर्ववद् विलिखेत्ततः ।
मन्त्री श्रीशम्भुगुर्वन्ते [1]पुनराद्यं समालिखेत् ॥ ८ ॥
आद्य[2]कूटचतुर्थश्च पुनराद्यं तृतीयकम् ।
चत्वारिंशन्नागवर्णैर्मण्डितोऽयं गुरोर्मनुः ॥ ९ ॥

[ श्रीगुरोर्मन्त्रान्तरम् ]

अथवा वाग्भवं मायां लक्ष्मीबीजं समुद्धरेत् ।
ह स ख फ्रें तथाऽऽनन्दभैरवाख्यं स ह ख फ्रेम् ।
गुरुनाम तथा शक्तिनाम श्रीपादुकां स्मरेत् ॥ १० ॥

सर्वगुर्वित्यनन्तरं गुरुस्वयंगुरुश्रीगुरुनाथेति वदेदित्यर्थः । स ह चेति । रेफो रकारः दीर्घश्रतिः दीर्घाणां तृतीयवर्ण उकारः, रेफेण सहिता दीर्घश्रुतिस्तद्युतान् इत्यर्थः । तथा बिन्दुनादकलान्वितान् एतेन रूं इति प्राप्तं समष्ट्या तु स ह क्ष म ल व य रूं इति लब्धम् । पिण्डीकृतमिति समष्टिरूपमाद्यं लिखेत् । एतेन ह्सौः इति प्राप्तम् । ततश्चतुर्थं ह स क्ष म ल व य रूं इति । तृतीयं ह स क्ष म ल व य रीं इति । द्वितीयं ह स क्ष म ल व य रां इति पूर्ववल्लिखेत् । ततः श्रीशम्भुगुर्वन्ते श्रीशम्भुगुर्वित्यनन्तरं पुनराद्यं हसौः इति समालिखेदित्यर्थः । पाठोऽयं प्रामादिक इति प्रतिभाति* । आद्येति । आद्यकूटं हसौरिति तस्य चतुर्थं ह स क्ष म ल व य रूं । पुनराद्यं ह्सौरिति लिखेत् । तृतीयकमिति आद्यकूटमपेक्ष्य । ततश्च ह स क्ष म ल व य रीं इति लिखेदिति श्रीगुरुमन्त्रः । मन्त्रोऽयं समाहारेण प्रदर्श्यते । ह्सौः ह स क्ष म ल व य रां ह स क्ष म ल व य रीं ह स क्ष म ल व य रूं श्रीपरापरसर्वाराध्यसर्वमूर्द्धनाथ-सर्वगुरु-गुरु-स्वयंगुरु-श्रीगुरुनाथ स ह क्ष म ल व य रूं ह्सौः ह स क्ष म ल व य रूं ह स क्ष म ल व य रीं ह स क्ष म ल व य रां श्रीशम्भु (मद्) गुरु ह्सौः ह स क्ष म ल व य रूं ह्सौः ह स क्ष म ल व य रीं इति श्रीगुरुमन्त्रः । कौलावलीनिर्णये प्रथमोल्लासेऽप्येवमेव प्रमाणं दृश्यते । वर्णसंख्यानिरूपणपूर्वकं मन्त्रं निगमयति । चत्वारिंशदिति । हसक्षेत्यादिनवकूटानि तत्तत्कूटत्वेन एकैकाक्षराणीति नवाक्षरलाभः । हसौरित्याद्योऽपरे ऊनचत्वारिंशद्वर्णा इति मिलित्वाऽष्टचत्वारिंशद्वर्णात्मकोऽयं गुरुमन्त्र इत्यर्थः ।

१० । पूर्वतः संक्षिप्तं मन्त्रान्तरमाह—अथवेत्यादिना । वाग्भवः ऐं, माया ह्रीं,

1. 'प्रणवाद्यं' A. 2. '-कूटं' A-B.

* B-पुस्तकपादटिप्पन्यान्तु श्रीमद्गुरु इति मन्त्रोद्धारः कृतः ।

[ निरुक्तगुरुमन्त्रजपसंख्या ]

दशधा सप्तधा वापि त्रिधा वैनां जपेत् [1]सुधीः ।

[ जपसमर्पणम् ]

जपं समर्पयेन्मन्त्री श्रीगुरोर्दक्षिणे करे ॥ ११ ॥

[ प्रातः श्रीगुरुस्तोत्रपाठस्य कर्त्तव्यता ]

स्तुवीत पञ्चभिः श्लोकैस्तं नित्यं सर्वसिद्धये ।
[2]प्रातः प्रबोधसमये जपात् सुदिवसं भवेत् ॥ १२ ॥

[ श्रीगुरुस्तुतिः ]

नमस्ते नाथ भगवन् शिवाय गुरुरूपिणे ।
विद्यावतारसंसिद्ध्यै[3] स्वीकृतानेकविग्रह (१) ॥ १३ ॥
नारायणस्वरूपाय परमा[4]त्मस्वरूपिणे ।
सर्वाज्ञान-तमोभेदभानवे [5]च चिदात्मने (२) ॥१४॥
स्वतन्त्राय दयाक्लृप्तविग्रहाय शिवात्मने ।
परत्रेह च भक्तानां भव्यानां [6]भव्यदायिने (३) ॥ १५ ॥

---

लक्ष्मीबीजं श्रीं, एवञ्च प्रथमम् ऐं ह्रीं श्रीमिति बीजत्रयमुद्धरेत् । ततो ह स ख फ्रें इति । ततश्च आनन्दभैरवाख्यम् आनन्दभैरवस्य मनुं ह स क्ष म ल व र यूं इत्यानन्दभैरवमन्त्रः । ततश्च स ह ख फ्रें ह स क्ष म ल व र यूं (आनन्दभैरवाय वौषट्) स ह ख फ्रें श्रीअमुकानन्दनाथ श्रीअमुकीदेव्यम्बा श्रीपादुकां स्मरामी-(पूजयामी)ति मन्त्रः पर्यवस्यति । अत्र

'गुरुरानन्दनाथान्तश्चाम्बान्ता शक्तिरीरिता'

इति मातृकाभेदतन्त्रसप्तमपटलवचनदर्शनाद् गुरुनामशक्तिनामेत्यनेन आनन्दनाथान्ताम्बान्तश्रीगुरुतच्छक्तिनाम ग्रहणीयम् ।

---

1. 'कृतिः' C. 2. 'प्रातरि'त्यादिपादद्वयं C-पुस्तके नास्ति । 3. '-द्धौ' A.
4. '-त्मैकरू-' C. 5. 'चिद्घनाय ते' C. 6. 'भव-' C.

विवेकिनां विवेकाय विमर्षाय विमर्षिणाम् ।
प्रकाशिनां प्रकाशाय ज्ञानिनां ज्ञानरूपिणे (४) ॥ १६ ॥
पुरस्तात् पार्श्वयोः पृष्ठे नमस्कुर्यादुपर्यधः ।
सदा सच्चित्त[1]भावेन विधेहि तव दासताम् (५) ॥ १७ ॥

[ श्रीगुरु-नमस्कारः ]

[2]स्तुतीः कृत्वा नमस्कुर्यादनेन मनुना ततः ॥ १८ ॥
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ १९ ॥
त्वत्प्रसादादहं देव कृतकृत्योऽस्मि सर्वतः ।
मायामृत्युमहापाशाद् विमुक्तोऽस्मि शिवोऽस्मि च ॥२०॥

[ कुलनाथ-( श्रीगुरु )ध्यानस्थाननिरूपणम् ]

ततः कुलमुखस्योर्द्ध्वं कुलनाथान् विचिन्तयेत् ॥ २१ ॥

[ कुलनाथतत्पूजननिरूपणप्रतिज्ञा ]

[3]कुलनाथान् प्रवक्ष्यामि शिवरूपपरिग्रहान् ।
विद्यावतारसोपानभूतांस्तत्पूजनं तथा ॥ २२ ॥

---

२१। एवं श्रीगुरुनमस्कारान्तमभिधाय कुलनाथचिन्तनमुपदिशति—तत इत्यादिना। कुलनाथान् श्रीगुरून् विचिन्तयेत्। केत्यत आह—कुलमुखस्येति। अत्र कुलशब्देन कुलकुण्डलिनीसहस्रारगमनपथरूपा सुषुम्णा नाड्युच्यते, तस्य मुखं सहस्राराधो वर्त्तमानं तस्योर्द्ध्वं सहस्रारे इत्यर्थः। कुलनाथान् विचिन्तयेदित्यर्थः। तदुक्तं पादुकापञ्चके—

तत्र नाथचरणारविन्दयोः कुङ्कुमासवपरीमरन्दयोः ।
द्वन्द्वमिन्दुमकरन्दशीतलं मानसं स्मरति मङ्गलास्पदम् ॥ इति ।

२२। अथ क इमे कुलनाथा नाम इत्याकाङ्क्षायामाह—कुलनाथानित्यादि ।

---

1. '-रूपेण गुरवे च नमोऽस्तु ते' A-B. 2. 'स्तुत्यानया स्तुतिं कृत्वा नमस्कुर्यात्ततो बुधः' A-B. 3. 'अथ' C.

[ दिव्यकुलनाथत्रयनिरूपणम् ]

**प्रकाशोऽथ विमर्शोऽन्य आनन्दोऽपर इत्यपि ।**
**नामभेदादहं लोके कल्पयन् दिव्यरूपतः ॥ २३ ॥**

[ सिद्धकुलनाथत्रयनिरूपणम् ]

**त्रयस्तेभ्यः समुत्पन्नाः सिद्धाश्च त्रय एव ते ।**
**ज्ञानः सत्यः पूर्ण इति श्रीमुखास्ते समीरिताः ॥ २४ ॥**

---

शिवरूपपरिग्रहान् शिवस्य परमशिवस्य यद्रूपं स्वरूपं तत् परिगृह्यते यैस्तथाभूतान् । एतेनैतेषां शिवरूपत्वं नित्यविग्रहत्वञ्चोक्तम् । व्यक्तमाह तन्त्रराजे प्रथमपटले—

'अथ नाथान् प्रवक्ष्यामि मद्रूपान् नित्यविग्रहान्' इति ।

विद्यावतारेति । विद्यायास्तन्त्रविद्याया अवतारस्य सोपानभूतान् । भगवान् परमशिव एव तत्तत्कुलनाथरूपेणावतीर्य तन्त्राण्यशेषाण्युपदिशतीति तात्पर्यम् । तत्पूजनं तथेति । कुलनाथान् तथा तत्पूजनं तेषां कुलनाथानां पूजनं प्रवक्ष्यामीति सम्बन्धः ।

२३ । कुलनाथास्त्रिविधा भवन्ति—दिव्याः, सिद्धा भौमाश्चेति । तत्र प्रथमं दिव्यानाह—प्रकाश इत्यादिना । अहं पूर्णाहन्तारूपः परमशिवः नामभेदात् प्रकाश-विमर्शानन्दरूपनामत्रयभेदादित्यर्थः दिव्यरूपत आत्मानं कल्पयन् अस्मीति शेषः । तथा च प्रकृतिभूतस्य परमशिवस्य प्रकाशविमर्शानन्दरूपतया तद्विकृतिभूतस्य नाथत्रयस्यापि तत्तद्रूपत्वम् । दिव्यरूपत इत्यनेनैतेषां दिव्यगुरुत्वमुक्तम् । व्यक्तमाह गन्धर्वतन्त्रे षड्विंशपटले—

गुरुर्भूत्वैव भगवान् महाविद्यां ददाति वै ।
दिव्यो गुरुऋषिः सोऽथ दिव्यां विद्यां प्रकाश्य च ॥
दिव्यौघानकरोच्छिष्यान् वक्ष्येऽथ शृणु पार्वति ।
प्रकाशोऽथ विमर्शोऽन्य आनन्दोऽपर इत्यपि ॥
नामभेदादहं लोके कल्पयन् दिव्यरूपतः । इत्यादि ।

२४ । एवं दिव्यान् कुलनाथान् निरूप्य सिद्धानाह—त्रय इत्यादिना । तेभ्यः प्रागुक्तप्रकाशादिदिव्येभ्यस्त्रयः समुत्पन्नास्त्रय एव ते सिद्धाश्चेत्यर्थः । तेषां संज्ञा आह—ज्ञान इत्यादिना । तथा च ज्ञानः सत्यः पूर्ण इत्येते त्रयः कुलनाथाः सिद्ध-व्यपदेशिनः प्रागुक्तदिव्यगुरुभ्यः समुत्पन्ना इति स्थितम् । तान् विशेषयति—श्रीमुखा इति श्रीशब्दपूर्वका इत्यर्थः ।

दिव्या वसन्ति खे नित्याः सिद्धा भूमाविहापि च।

[ तेभ्योऽपरकुलनाथत्रयोत्पत्तिः ]

निवसन्ति ततस्तेभ्यः समुत्पन्नास्त्रयस्तथा ॥ २५ ॥

[ भौमकुलनाथत्रयम् ]

स्वभावः [1]प्रतिभस्तद्वत् [2]सुभगश्चेति नामतः।

ते भूमावेव सततं निवसन्ति शिवात्मकाः ॥ २६ ॥

[ निरुक्तकुलनाथैस्तन्त्रशास्त्रस्य प्रवर्त्तनम् ]

एतैश्च नवभिस्तन्त्रं लोके प्रथितवैभवम्।

[3]अकल्पयत् कादिशक्ती[4]स्तदनन्या कृते युगे ॥ २७ ॥

[ एतेषां रूपम् ]

एते द्विनेत्रा द्विभुजा ललिताकारसंयुताः।

प्रसन्नवदनाः स्मेरा वराभयकरान्विताः ॥ २८ ॥

---

२५। अथैतेषां स्थानं निर्वक्ति दिव्या इत्यादिना। तत्र दिव्याः प्रकाश-विमर्षानन्दरूपाः नित्याः नित्यविग्रहाः कुलनाथाः खे सहस्रारान्तर्वर्तिनि शून्ये वसन्ति। अत्र तन्त्रराजप्रथमपटल-गन्धर्वषड्विंशपटलयोरेतत्समानानुपूर्वीके वचने दिव्या मदन्तिके नित्यमिति पाठो दृश्यते। सिद्धानां स्थानमाह—सिद्धा इत्यादिना। सिद्धाः ज्ञान-सत्य-पूर्णात्मानः भूमौ इहापि च वसन्ति। अथ भौमान् कुलनाथानाह। तेभ्यः प्रागुक्तसिद्धेभ्यः त्रयो वक्ष्यमाणाः समुत्पन्नाः।

२६। अथ किमभिधानास्ते इत्यत आह—स्वभाव इत्यादि। स्वभावः प्रतिभः सुभगश्चेतिनामानस्त्रयः कुलनाथा भूमावेव सर्वदा निवसन्ति नान्यत्रेत्यर्थः। तेऽपि त्रयः शिवात्मकाः शिवस्वरूपा एव।

२७। एतेषां तन्त्रप्रवर्त्तकत्वमाह—एतैरित्यादिना। प्रागुक्तैर्नवभिः कुलनाथैः।

---

1. 'प्रतित-' ? A. 2. 'सुभगा-' A-B 3. 'आकल्पयेत्' A ; 'अकल्पयेत्' C. 4. '-स्तद्वदन्यां' C.

[ पूज्यत्वम् ]

पूज्या एवंविधाः स्वस्वमण्डलादिषु पूजने ।
देवीश्रीचक्रसंस्थास्तु[1] [2]दिव्याकारास्तदाज्ञया ॥ २९ ॥
त्र्यक्षराद्याभिधानास्ते सर्वेऽप्यानन्दसंयुताः ।
स्वमण्डलेषु नाथान्ताः शक्त्यन्ता एव मण्डले ॥ ३० ॥

[ प्रागुक्तमन्त्राणां नवाक्षरत्वसम्पादनम् ]

मायालक्ष्म्यादिकास्तद्वन्नवार्णाख्यास्तथाऽभवन् ।
[3]नवानां नवशक्तीनां देवतानाञ्च पूजने ॥ ३१ ॥

२९। स्वस्वमण्डलादिष्विति । मण्डलमग्रे वक्ष्यति । आदिपदेन स्वशीर्षादीनामपि ग्रहणम् ।

३०। अथ निरुक्तानां नवानां नाथानां स्वस्वमण्डले पूज्यानां नवार्णमन्त्रान् निरूपयति—त्र्यक्षरेत्यादिना । अत्रेदमवधेयम्—प्रकाशोऽथ विमर्शोऽन्य इत्यादिना ये त्र्यक्षरा नव कुलनाथाः पूर्वमुपदर्शिताः तानादितः कृत्वा सर्वेषामेव तेषामन्ते आनन्दपदं योजयेत् । अनेन प्रकाशानन्द-विमर्शानन्देत्येवमादिरूपाः पञ्चाक्षरा मन्त्रा भवन्ति । स्वमण्डलेष्विति । वक्ष्यमाणस्वमण्डलेषु पूज्यास्ते नाथान्ता नाथेति द्व्यक्षरान्ताश्चेत् तदा प्रकाशानन्दनाथ-विमर्शानन्दनाथेत्येवंरूपेण सप्ताक्षरा जायन्ते । कुलनाथशक्तिनवाक्षरं दर्शयितुमाह—शक्त्यन्ता इति । ते पञ्चाक्षराः शक्त्यन्ताः शक्तीतिद्व्यक्षरान्ताश्चेत्तदापि प्रकाशानन्द-शक्ति-विमर्शानन्दशक्तीत्येवंरूपेण सप्ताक्षराः कुलशक्तिमन्त्रा भवन्ति ।

३१। नवाक्षरत्वमुपपादयति—मायेत्यादिना । ते सप्ताक्षरा नाथान्ताः शक्त्यन्ता वा मायालक्ष्म्यादिकाः, माया ह्रीं लक्ष्मीः श्रीं इत्यादिकाश्चेत् प्रकाशानन्दनाथ इत्यादेः प्रकाशानन्दशक्तीत्यादेर्वा पूर्वं यदि ह्रीं श्रीमिति बीजद्वयं योज्येत तदा नवार्णाख्या मन्त्रा भवन्तीत्यभिप्रायेणाह—नवार्णाख्यास्तथाऽभवन्निति ।

एवञ्च—

ह्रीं श्रीं प्रकाशानन्दनाथः
ह्रीं श्रीं विमर्शानन्दनाथः
ह्रीं श्रीं आनन्दानन्दनाथः

1. 'तु' A-B. 2. 'देव्या-' A-C. 3. 'नवर्णां' B, 'नराणां' A,

[ सप्ताक्षरयोगेण निरुक्तनवाक्षरस्य षोडशाक्षरत्वम् ]

या विद्या सर्वसन्तोषकारिणी सर्वसिद्धिदा ।
[1]सप्ताक्षर्या तया मन्त्री पूजयेन्नामपूर्वकम् ॥ ३२ ॥

[ सप्ताक्षरमन्त्रः ]

जवी मरुत्समोपेतो [2]गोत्रा च धरया युता ।
प्राणोऽपि मरुता युक्तः खेन च स्यात्तृतीयकम् ॥ ३३ ॥
पुनर्जवी क्ष्मयोपेतो ज्या च वातसमन्विता ।
व्याप्तं मरुत्सखं षष्ठं नभोऽग्निः[3] सप्तमाक्षरम् ॥ ३४ ॥

[ निगमनम् ]

एवं सप्ताक्षरी प्रोक्ता शक्तितन्त्रेषु सिद्धिदा ॥ ३५ ॥

---

इत्यादयो नवनवार्णा मन्त्रा ऊह्याः । एतेषां मण्डले विनियोगस्तु तत्परिपाट्यां प्रदर्शयिष्यते ।

३२। अथ वक्ष्यमाणसप्ताक्षरीयोगेण नवार्णाया अस्याः षोडशाक्षरत्वसम्पादनाय प्रस्तौति या विद्येत्यादि ।

३३-३५। पूर्ववचने सप्ताक्षर्या तयेत्युक्तम् । तां सप्ताक्षरीमेवाह—जवीत्यादिना । जवी पकारः, स च मरुत्समोपेतः मरुता आकारेण युक्तः । एतेन पा इति प्राप्तम् । गोत्रेति,—गोत्रा दकारः सा च धरया उकारेण युक्ता । एतेन दु इति प्राप्तम् । प्राण इति,—प्राणः ककारः स च मरुता आकारेण खेन नभोबीजेन मकारेण बिन्दुरूपेण युक्तः एतेन कां इति प्राप्तम् । तृतीयकमिति, मन्त्रस्य तृतीयमक्षरमित्यर्थः । पुनरिति, जवी पकारः क्ष्मया ऊकारेणोपेतः । एतेन पू इति प्राप्तम् । ज्या जकारः सा च वातेनाकारेण समन्विता । एतेन ज इति प्राप्तम् । व्याप्तमिति । व्याप्तं यकारः मरुत् पूर्ववदाकारः । एतेन या इति लब्धम् । नभः पूर्ववत् मकारः अग्निरिकारः एतेन मि इति प्राप्तम् । सप्तमाक्षरमिति । एतन्मन्त्रस्य सप्तममक्षरमित्यर्थः । एवमिति, पादुकां पूजयामि इति सप्ताक्षरात्मिकेत्यर्थः । जवीत्यादि सप्तमाक्षरमित्यन्तं वचनद्वयं तन्त्रराजे

---

1. 'सप्ताक्षरी' B, 'प्राप्ताक्षय्य-' A. 2. 'गोत्रा चे'त्यादिपादचतुष्टयं A-पुस्तके नास्ति । 3. '-ऽग्नि' C.

[ मन्त्रयोर्योगः ]

सर्वासामपि शक्तीनां देवतानाञ्च नामभिः ।
[1]योजयेन्नामपूर्वां तां सिद्धैश्च साधारणान् यथा ॥ ३६ ॥

[ शक्तीतरतन्त्रेषु विशेषः ]

[2]शक्तितन्त्राद् बहिर्भूततन्त्रेषु मनसा [3]स्मृतिः ॥ ३७ ॥

[ नवार्णसप्तार्णयोर्योगे षोडशार्णत्वम् ]

[4]नवानां नव नामानि नवार्णानि पृथक् पृथक् ।
तानि सप्ताक्षरीयोगात् प्रत्येकं षोडशाक्षरम् ।

[ तेषां षोडशार्णानां षोडशनित्यारूपत्वम् ]

नित्याषोडशरूपाणि तानि जातान्यनुक्रमात् ॥ ३८ ॥

[ गुरुमण्डलपूजाकालः ]

[5]गुरुमण्डलपूजाञ्च कुर्यात् सप्तसु पर्वसु ।

[ पूर्णासु पर्वसु च नाम्नो विशेषः ]

पूर्णासु षोडशार्णानि नामान्यालिख्य पूजयेत् ॥ ३९ ॥
अन्यत्र पर्वषट्के तु नवार्णान्येव लेखयेत् ।

[ उभयोरेव पूजने मन्त्रस्याभेदः ]

पूजयेत्तत्र तत्रापि वदन् सप्ताक्षरीं बुधः ॥ ४० ॥

---

प्रथमपटलेऽपि तुल्यरूपं दृश्यते । तट्टीकाकृता सुभगानन्दनाथेनाप्ययमेव मन्त्रोद्धार-क्रमः प्रदर्शितः ।

३६ । प्रागुक्तनवाक्षरमन्त्रेण निरुक्तसप्ताक्षरमन्त्रयोगे षोडशाक्षरो मन्त्रो भवतीति प्रतिपादयितुमाह सर्वासामित्यादि । सर्वासां शक्तीनां प्रागुक्तानां नवानामित्यर्थः । देवतानां नाथानाम् । नामभिरिति आनन्दशक्त्यानन्दनाथादिभिः । नामपूर्वां प्रकाशविमर्शादिनामपूर्विकां तां प्रागुक्तसप्ताक्षरीं योजयेदित्यर्थः । साधारणान् यथेति । प्रागुक्तान् प्रकाशादीन् यथानन्दनाथेन योजयेत्तद्वदित्यर्थः ।

---

1. 'यो जपे-' 2. 'सिद्धि-' A-B. 3. 'स्थितिः' C. 4. 'नवार्णा' A-B. 5. 'गुरुमण्डलपूजाञ्चे'त्यतः पादाष्टकं A-पुस्तके नास्ति ।

[ गुरुमण्डलपूजाया नवोपहारसाध्यत्वम् ]

गुरुमण्डलपूजासु सर्वत्र नव [1]चोदिताः ।
[2]उपचारा[3]स्ततस्तांस्तैः पूजयेच्छृणु तानपि ॥ ४१ ॥

[ उपचारनवकनिर्णयः ]

गन्धं पुष्पं तथा धूपं दीपं नैवेद्यकं तथा ।
ताम्बूलाचमनं स्तोत्रं [4]स्वात्मतेति समीरिताः ॥ ४२ ॥

[ गुरुमण्डलनिर्माणाधारः ]

गुरुमण्डलनिर्माणं पीठे कुर्यात् प्रसन्नधीः ।
फलकायां स्थले [5]वापि सुशुद्धे सुसमे स्थिते ॥ ४३ ॥

[ मण्डलनिर्माणोपकरणनिर्णयः ]

रक्तचन्दनकाश्मीर-लघुकस्तूरिकायुतैः[6] ।
[7]पङ्कैर्विदध्यात् सर्वत्र गुरुमण्डलकल्पनम् ॥ ४४ ॥

[ मण्डलपूजान्ते कर्त्तव्यम् ]

[8]पूजनान्ते मार्जयित्वा भाले चोरसि चांशयोः ।
धारयेत् सर्वतो लक्ष्मीरस्य स्यात् सर्वदुर्लभा ॥ ४५ ॥
प्राक् प्रत्यग् दक्षिणो[9]दक् च सूत्राणि दश विन्यसेत् ।
पञ्चाङ्गुलान्तरालानि तानि कोष्ठानि योजयेत् ॥ ४६ ॥
[10]एकाशीतिपदोपेतं चतुरस्त्रन्तु मण्डलम् ॥ ४७ ॥

---

४६-४७। अथ गुरुमण्डलनिर्माणमुपदिशति प्रागित्यादिना। पूर्वतः पश्चिमान्तानि दश, तथा दक्षिणत उत्तरान्तानि दश सूत्राणि पातयेत्। सूत्राणां पातनं पञ्चाङ्गुलव्यवधानेन कार्यम्। तथा कृते पञ्चाङ्गुलान्तरालैकाशीतिपदं मण्डलं भवति। परितः पञ्चाङ्गुलान्तरालनवनवकोष्ठात्मकतया पञ्चचत्वारिंशदङ्गुलात्मकमिदं मण्डलमित्यपि सुधीभिरवधेयम्।

---

1. 'पूजिताः' C. 2. 'उपहारै-' C. 3. '-स्तथास्तांस्तैः' A-B. 4. 'स्वात्मनेति' A. 5. 'चैव' A-B. 6. '-क्षतैः' A. 7. 'लक्ष्मै-' B. 8. 'पूजान्ते मार्जयित्वा तद्' C. 9. '-दर्क-' C. 10. 'एकाशीती'त्यादिपादद्वयं A-B-पुस्तकयोर्नास्ति।

तत्सर्वमध्ये प्रथमं द्वितीयं तत्पुरोगते।
तृतीयश्च [1]तृतीये च लिखेन्नवनवस्वपि॥ ४८॥
एवं नवनवोपेतं मण्डलं सर्वपर्वसु॥ ४९॥
नवकं नवधा कृत्वा मध्ये सूत्रद्वयार्पणात्।
तेषु नामार्णनव[2]कं समालिख्यार्चयेत् क्रमात्॥ ५०॥

४८-४९। मण्डलेऽस्मिन् कुलनाथानां क्रमेणावस्थितिं वर्णयति तदित्यादिना। तत्सर्वमध्ये तेषां सर्वेषां नवकानां मध्ये नवके प्रथमं ह्रीं श्रीं प्रकाशानन्दनाथेत्येवं रूपं प्रथमोद्दिष्टकुलनाथं लिखेत् इत्यर्थः। तत्पुरोगते तस्य मध्यनवकस्य पुरोगते अग्रतः स्थिते पूर्वदिग्वर्त्तिनीत्यर्थः नवके नवकोष्ठात्मकेऽंसे द्वितीयं ह्रीं श्रीं विमर्षानन्दनाथेत्येवं रूपं लिखेत्। तृतीयश्चेति, तृतीये आग्नेयनवके तृतीयं ह्रीं श्रीं आनन्दानन्दनाथेत्येवं रूपं तृतीयं कुलनाथं लिखेत्। नवनवस्वपीति, अनेनैव क्रमेण प्रादक्षिण्येनापरेष्वपि नवकेष्वपरान् कुलनाथान् लिखेत्। एतेन दक्षिणनवके ह्रीं श्रीं श्रीज्ञानानन्दनाथम्, नैर्ऋतनवके ह्रीं श्रीं श्रीसत्यानन्दनाथम्, प्रतीच्यनवके ह्रीं श्रीं श्रीपूर्णानन्दनाथम्, तथा वायव्यनवके ह्रीं श्रीं स्वभावानन्दनाथम्, कौबेरनवके ह्रीं श्रीं प्रतिभानन्दनाथम्, ऐशाननवके च ह्रीं श्रीं सुभगानन्दनाथं लिखेदिति बोध्यम्। पर्वाण्यग्रे वक्ष्यन्ते।

५०। अथ मण्डलस्य नवधा विभागमुपदिशति नवकमित्यादिना। मध्ये मण्डलमध्ये उभयतस्त्रीणि त्रीणि पदानि त्यक्त्वेत्यर्थः। सूत्रद्वयार्पणादिति। पूर्वापरायतस्य दक्षिणोत्तरायतस्य च सूत्रद्वयस्यार्पणात् नवकं नवधा कृत्वेति सम्बन्धः। तेषु नवकेषु नवनाथनामार्णविन्यासपरिपाटीमाह तेष्विति। तेषु नवकेषु प्रागुक्तक्रमेणैव नामार्णनवकं समालिख्यार्चयेत्। एतदुक्तं भवति—प्रथमं मध्यनवकस्य मध्ये ह्रीं श्रीं प्रकाशानन्दनाथेति नवार्णमन्त्रस्य प्रथमाक्षरं लिखेत्। तत्पूर्वकोष्ठे द्वितीयमक्षरं श्रीमिति। तृतीये आग्नेये तृतीयमक्षरं प्रेति। चतुर्थे याम्ये चतुर्थमक्षरं केति। पञ्चमे नैर्ऋते पञ्चममक्षरं शेति। षष्ठे पश्चिमे षष्ठमक्षरं नेति। सप्तमे वायव्ये सप्तममक्षरं न्देति। अष्टमेऽष्टममक्षरं नेति। नवमे नवममक्षरं थेति। एवञ्च मध्यमनवके मध्यतः पूर्वादि प्रादक्षिण्येन ह्रीं श्रीं प्र का शा न न्द ना थेति नव वर्णानेकैकशो लिखेदिति मध्यमनवकप्रक्रिया। एवमन्येष्वप्यष्टसु कोष्ठेष्ववशिष्टानामष्टानां नाथानां विनियोगः सुधीभिरूह्येयः। स्फुटमवधानाय गुरुमण्डलचित्रं प्रदर्श्यते—

1. 'द्वितीये' C. 2. '-कमालिख्याभ्यर्चयेत्' C.

[1]पूर्णापर्वणि तन्मध्ये कृत्वा सूत्र[2]त्रयं त्रयम्।
षोडशीकृत्य तेष्वेव लिखेन्नामानि तानि वै ॥ ५१ ॥

## गुरुमण्डलम् (१)

(६) (२) (३)

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| | (९) थः | (२) श्रीं | (३) सु | (९) थः | (२) श्रीं | (३) वि | (९) थः | (२) श्रीं | (३) आ | |
| | (८) ना | (१) ह्रीं | (४) भ | (८) ना | (१) ह्रीं | (४) म | (८) ना | (१) ह्रीं | (४) न | |
| | (७) न्द | (६) न | (५) गा | (७) न्द | (६) न | (५) र्पा | (७) न्द | (६) न | (५) न्दा | |
| | (९) थः | (२) श्रीं | (३) प्र | (९) थः | (१)<br>(२) श्रीं | (३) प्र | (९) थः | (२) श्रीं | (३) श्री | |
| (८) | (८) ना | (१) ह्रीं | (४) ति | (८) ना | (१) ह्रीं | (४) का | (८) ना | (१) ह्रीं | (४) ज्ञा | (४) |
| | (७) न्द | (६) न | (५) भा | (७) न्द | (६) न | (५) शा | (७) न्द | (६) न | (५) ना | |
| | (९) थः | (२) श्रीं | (३) स्व | (९) थः | (२) श्रीं | (३) श्री | (९) थः | (२) श्रीं | (३) श्री | |
| | (८) ना | (१) ह्रीं | (४) भा | (८) ना | (१) ह्रीं | (४) पू | (८) ना | (१) ह्रीं | (४) स | |
| | (७) न्द | (६) न | (५) वा | (७) न्द | (६) न | (५) र्णा | (७) न्द | (६) न | (५) त्या | |

(७) (६) (५)

५१। अथ प्रागुक्त-षोडशाक्षरकुलनाथार्णन्यासाय प्रतिनवकं षोडशकोष्ठसम्पत्तये निरुक्तैकाशीतिपद-मण्डले विशेषमाह पूर्णेत्यादिना। अत्र तु तन्मध्ये प्रागुक्तनवकमध्ये त्रीणि त्रीणि सूत्राण्युभयतो विन्यस्य षोडशीकृत्य उभयतः सूत्रत्रयन्यासेनेति शेषः तेष्वेव षोडशपदकोष्ठेषु तानि षोडशाक्षराणि नामानि लिखेदित्यर्थः।

1. 'पूर्ण-' B. 2. '-द्वयं द्वयम्' A.

एतदुक्तं भवति—प्रागुक्त-गुरुमण्डले नवकानां मध्यमकोष्ठमध्यदेशे एकैकशः पूर्वापरायता नवकत्रयव्यापिन्यस्तिस्रः दक्षिणोत्तरायताश्च तिस्रो रेखाः कर्त्तव्याः। एवं कृते सर्वाणि नवकानि षोडशकोष्ठात्मकानि जायन्ते इति। इत्यभिप्रायेणैव षोडशीकृत्येत्युक्तम्। लिखेदिति। तत्र नामानि 'ह्रीं श्रीं प्र का शा न न्द ना थ पा दु कां पू ज या मि' इत्यादिरूपाणि प्रागुपदर्शितानि लिखेदित्यर्थः। अत्र षोडशकोष्ठेषु षोडशाक्षरनामार्णन्यासविधानात् प्रतिकोष्ठमेकैकं वर्णं लिखेदिति बोध्यम्। लिखनन्तु पूर्वोक्तरीत्या प्रादक्षिण्येनैव, विशेषानभिधानात्। तथा प्रागुक्तमण्डले मध्यकोष्ठतो वर्णन्यासविधानादत्रापि प्रथमं मध्यमकोष्ठचतुष्के ततो बहिःकोष्ठेष्वित्यवधेयम्। अत एव तन्त्रराजे द्वितीयपटले पूर्णेत्याद्येतत्समानानुपूर्वीकवचनव्याख्यायां सुभगानन्दनाथेन मध्यचतुष्टये वामाधःस्थितं कोष्ठमारभ्य मध्यचतुष्टयं प्रादक्षिण्येन परीत्यामुक्तक्रमं बहिरपि तथा परीयादित्युक्तम्। तदत्र कुलनाथानां तन्नामार्णानाञ्च संस्थानं द्वितीयेन गुरुमण्डलचित्रेण प्रदर्श्यते—

## गुरुमण्डलम् (२)

| | (१) | | | | (२) | | | | (३) | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | पा १० | दु ११ | कां १२ | पू १३ | पा १० | दु ११ | कां १२ | पू १३ | पा १० | दु ११ | कां १२ | पू १३ | |
| | थ ९ | श्रीं २ | सु ३ | ज १४ | थ ९ | श्रीं २ | वि ३ | ज १४ | थ ९ | श्रीं २ | आ ३ | ज १४ | |
| | ना ८ | ह्रीं १ | भ ४ | या १५ | ना ८ | ह्रीं १ | म ४ | या १५ | ना ८ | ह्रीं १ | न ४ | या १५ | |
| | न्द ७ | न ६ | गा ५ | मि १६ | न्द ७ | न ६ | र्पा ५ | मि १६ | न्द ७ | न ६ | न्दा ५ | मि १६ | |
| | पा १० | दु ११ | कां १२ | पू १३ | पा १० | दु(१) ११ | कां १२ | पू १३ | पा १० | दु ११ | कां १२ | पू १३ | |
| | थ ९ | श्रीं २ | प्र ३ | ज १४ | थ ९ | श्रीं २ | प्र ३ | ज १४ | थ ९ | श्रीं २ | श्री ३ | ज १४ | |
| (८) | ना ८ | ह्रीं १ | ति ४ | या १५ | ना ८ | ह्रीं १ | का ४ | या १५ | ना ८ | ह्रीं १ | ज्ञा ४ | या १५ | (४) |
| | न्द ७ | न ६ | भा ५ | मि १६ | न्द ७ | न ६ | शा ५ | मि १६ | न्द ७ | न ६ | ना ५ | मि १६ | |
| | पा १० | दु ११ | कां १२ | पू १३ | पा १० | दु ११ | कां १२ | पू १३ | पा १० | दु ११ | कां १२ | पू १३ | |
| | थ ९ | श्रीं २ | स्व ३ | ज १४ | थ ९ | श्रीं २ | श्री ३ | ज १४ | थ ९ | श्रीं २ | श्री ३ | ज १४ | |
| | ना ८ | ह्रीं १ | भा ४ | या १५ | ना ८ | ह्रीं १ | पू ४ | या १५ | ना ८ | ह्रीं १ | स ४ | या १५ | |
| | न्द ७ | न ६ | वा ५ | मि १६ | न्द ७ | न ८ | र्णा ५ | मि १६ | न्द ७ | न ६ | त्या ५ | मि १६ | |
| | | | (७) | | | | (६) | | | | (५) | | |

[ जीवतो मृतस्य वा गुरोः क्रमेणानेन पूजायाः कर्त्तव्यत्वम् ]

एवं पूजा गुरौ जीव[1]त्यपेतेऽपि समीरिता ।
स्थानानि मण्डलीकृत्य तत्रार्चा-[2]लेखने मते ॥ ५२ ॥

[ निरुक्तक्रमेणानुष्ठितायाः पूजायाः फलम् ]

एवं यः पूजयेन्नाथान् [3]पर्वस्ववहितो बुधः ।
स देशिकवरः सिद्धस्तस्माद् विद्याप्तिरुत्तमा ॥ ५३ ॥

[ वैपरीत्ये दोषः ]

अन्यथावाप्ति[4]रुभयोरनर्थाय सुनिश्चितम् ।
व्याधिशस्त्रादिपीडा वा वितन्द्रा [5]विजने मृतिः ॥ ५४ ॥
इत्यादि[6]व्यसनाप्तिश्च नृपादशनितो मृतिः ।
तस्मादुक्त[7]क्रमेणैव [8]कुर्यात् सर्वार्थसिद्धये ॥ ५५ ॥

[ पर्वसप्तकम् ]

गुरोस्तु जन्मदिवसं विद्याप्राप्तिदिनं तथा ।
स्वजन्मदिवसश्चाथ व्याप्तिवासरमेव वा ॥ ५६ ॥

---

५२। गुरौ जीवति मृते चायमेव गुरुमण्डलपूजाक्रम इत्येवाह एवं पूजेत्यादिना। परन्तु मृते गुरौ मण्डलपूजायां यस्मिन्नंशे विशेषस्तमाह स्थानानीत्यादिना। तत्र स्थानानि मण्डलीकृत्येति वृत्तरूपेणालिख्येत्यर्थः। तत्र वृत्तीकृते मण्डले अर्चा-लेखने अर्चा पूजा लेखनं मन्त्रार्णानाम्। एते मते इत्यर्थः।

५४। पूर्वं मण्डलपूजादीनां यः क्रम उक्तस्तदन्यथाकरणे दोषमाह—अन्यथेति। अन्यथा निरुक्तक्रमवैपरीत्येनोभयोर्गुरुशिष्ययोरवाप्तिरनर्थाय भवतीति शेषः। अनर्थानेव दर्शयति व्याधीत्यादिना।

---

1. '-त्यापद्यपि' C. 2. '-लेखनैर्मता' A-B, '-लेखने मता' C. 3. 'परानपि हितो ?' A. 4. 'व्याप्ति-' A-B. 5. '-भिजले' C. 6. '-व्यसनैः प्राप्तिर्-' C. 7. '-द् व्यक्त-' C. 8. 'तद्वद्गुर्वर्थ-' A-B.

अक्षरत्रयसम्पातदिनं [1]पूर्णादिनं तथा ।
षट् पर्वाणि विशिष्टानि सदर्शं सप्त पर्विकाः ॥ ५७ ॥

[ अत्र पूजायाः कर्त्तव्यता ]

मासतो वर्षतो वापि कुर्यादेतेषु पूजनम् ॥ ५८ ॥

[ तत्र विशेषः ]

गुरोस्तु जीवतो नित्यं व्याप्ते तत्पुत्रकादिकम् ।
पूजयेत्ततत्समं तन्तु [2]प्रणामाद्यैरुपाचरेत् ॥ ५९ ॥

[ गुरुतत्पुत्रादीनामभावे कर्त्तव्यम् ]

तदभावे तत्कुलीनं तदुक्तं वा समर्चयेत् ।

[ निगमनम् ]

प्रसङ्गान्नाथवर्गाणां पूजामण्डलमीरितम् ॥ ६० ॥

[ ततः कुण्डलिन्युत्थापनम् ]

मूलाधारचतुर्दलादथ परां विद्युल्लताभासुरां
सूक्ष्मां पद्ममृणालतन्तुसदृशीं हंसेन मोक्षालये ।
नीत्वा ब्रह्मसनातनेन महतामेकात्मरूपं भजेत्[3]
पश्चान्मूलसरोरुहेऽमृतमयीं सोऽहं स्मरन् प्रार्थयेत्[4] ॥६१॥

---

५६-५७ । पूर्वम् एवं नवनवोपेतं मण्डलं सर्वपर्वस्वित्युक्तम्, तान्येव पारिभाषिकाणि पर्वाणि निर्दिशति—गुरोरित्यादिना । विद्याप्राप्तिदिनं दीक्षादिनम् । व्याप्तिवासरं मृत्युदिनं गुरोरिति शेषः । अक्षरत्रयसम्पातदिनम् इति, वर्गाक्षरद्वयं घटिकाक्षरञ्चेति त्रीण्यक्षराणि यस्मिन् दिने सङ्गतानि भवन्ति तदक्षरत्रयसम्पातदिनमिति तन्त्रराजद्वितीयपटलटीकायां सुभगानन्दनाथः । वर्गाक्षरादिस्वरूपन्तु तन्त्रराजपञ्चविंशपटले विशिष्याभिहित इति विस्तरभयान्नेह प्रपञ्च्यते ।

५८ । मासत इति । प्रतिमासं तदसम्भवे प्रतिवर्षमेतेषु गुरोर्जन्मदिवसादिषु पूजनं कुर्यादिति सम्बन्धः ।

६१ । मूलाधारेति । अयमर्थः षष्ठे प्रकाशे 'नीत्वा तां कुलकुण्डली'मित्यादिकुण्डलिन्युत्थापनक्रमप्रतिपादकश्लोकटीकायां विस्तरेण प्रपञ्चितमस्माभिः ।

---

1. 'पूर्ण-' A-B. 2. 'प्राणायामै-' ? C. 3. 'भजे' B. 4. 'प्रार्थये' A-B.

[ शय्यातो भूमौ पादक्षेपः ]

त्यजेत् प्रभाते चरणं विधिज्ञः
समीरणा[1]नुक्रमतो धरायाम्[2] ।
शिवोक्तमन्त्रं परिभाव्य [3]तल्पात्
समस्तदोषापनुदं जनानाम् ॥ ६२ ॥

[ तत्र प्रार्थनमन्त्रः ]

ॐ समुद्रवलये [4]मातः पर्वतस्तनमण्डले ।
विष्णुपत्नि ! नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥ ६३ ॥

[ निरुक्तमन्त्रेण भूमौ पादक्षेपस्योपदेशः ]

अनेन मनुना मन्त्री भूमौ पादं [5]विनिक्षिपेत् ।

[ कुलवृक्षाणां दर्शनं नतिश्च ]

कुलवृक्षान् विलोक्याथ [6]नमस्कुर्यादलक्षितः ॥ ६४ ॥

---

६४। कुलवृक्षानिति। कुलवृक्षानाह—कुलार्णवपञ्चमखण्ड एकादशोल्लासे—

श्लेष्मातकं करञ्जाख्यं निम्बाश्वत्थकदम्बकाः ।
बिल्ववटोडुम्बराश्च तिन्तिडी नवमी स्मृता ॥ इति ।

कौलावलीनिर्णये द्वितीयोल्लासेऽपि—

बहिर्गत्वा यदा पश्येत् कुलवृक्षं सुसाधकः ।
नमस्कुर्यात् प्रयत्नेन कुलं कुलपतिं तथा ॥
अशोकः केशरः कर्णिकारश्चूतस्तिलस्तथा ।
नमेरुश्च पियालश्च सिन्धुवारकदम्बकौ ॥
मरुवकश्चम्पकशाखी कुलवृक्षाश्च द्वादश ॥ इति ।

प्रकारान्तरमपि प्रागुक्तकुलार्णवसम्मतमाह तत्रैव—

अथवा कुलवृक्षांश्च कथयामि सुसिद्धये ।
श्लेष्मातककरञ्जानि निम्बाश्वत्थकदम्बकाः ।
बिल्वो वटोडुम्बरश्च चिञ्चेति नवमी स्मृता ॥ इति ।

---

1. '-नुत्-' B. 2. 'धरायाः' A-B. 3. 'जल्पनात्' A., 'तल्पात्' C. 4. 'देवि' C. 5. 'परित्यजेत्' C. 6. 'भूमौ पादं विनिक्षिपेत्' A.

[ विण्मूत्रादित्यागो दन्तशोधनमन्त्रश्च ]

विण्मूत्रादिविरेचनं यतमनाः कृत्वा तु शौचं स्मरे-
न्मूलं मृज्जलसेचनेन करपत् संशोध्य पूर्वाननः।
कामं काम च सर्वमेव जनतो ङेऽन्तः प्रियो हृद्युतो
मन्त्रो दन्तविशोधनाय गदितस्तन्त्रानुसारक्रमात् ॥ ६५ ॥

[ शिखाबन्धादीनि सन्ध्यान्तानि कर्माणि ]

मूलेनैव शिखां[1] त्रिपुण्ड्रतिलकं कृत्वा च तत्र क्रमा-
दाचामेत् त्रिपुरां विधाय पुरतो न्यासौ कराङ्गौ ततः।
कुर्याच्च् श्रीक्रमसंहितोक्त-परमां सन्ध्यां यतान्तर्मना
यां कृत्वा त्रिपुरां परां भगवतीमाराध्य देवो भवेत् ॥६६॥

६५। दन्तधावनमन्त्रमाह—काममित्यादिना। कामं कामबीजं क्लीं। ततः काम कामदेवपदम्। ततः सर्वपदम्। ततो जनतः जन इति पदात् ङेऽन्तश्चतुर्थ्यन्तः प्रिय इति पदम्। एतेन प्रियायेति प्राप्तम्। हृद्युतः नमःपदान्तः। एवञ्च क्लीं कामदेवसर्वजनप्रियाय नमः। इति चतुर्दशाक्षरो मन्त्रः पर्यवस्यति। अत्र द्वितीय-कामपदेन कामदेवेत्यक्षरचतुष्टयं बोध्यम्। व्यक्तमाह कौलावलीनिर्णये प्रथमोल्लासे—

कामबीजं कामदेवं सर्वान्ते जनमालिखेत्।
प्रियाय हृदयान्तोऽयं मनुर्दन्तविशुद्धये॥

इति। गन्धर्वतन्त्रे पञ्चमपटलेऽपि—

क्लीमात्मकं कामदेवसर्वान्ते जनमालिखेत्।
प्रियाय हृदयान्तोऽयं मनुर्दन्तविशुद्धये॥
चतुर्दशाक्षरैर्वक्त्रं क्षालयेच्छुद्धिहेतवे॥ इति।

एवमेव प्राणतोषणीधृतदक्षिणामूर्त्तावपि। एवञ्च कौलावलीनिर्णयगन्धर्वादिषु कामदेवपदस्य मन्त्रघटकत्वदर्शनाद् देवपदानुपादाने चतुर्दशाक्षरैर्वक्त्रमित्यादिगन्धर्वादि-वचनविरोधसम्भवाच्च प्रकृते कामपदेन कामदेवेत्यक्षरचतुष्टयं मन्त्रघटकत्वेनोपादेय-मिति निष्कर्षः।

६६। मूलेनैवेति। अत्र सन्ध्यापदेन प्रातःकृत्यादिरूपा मानसी सन्ध्यावगन्तव्या,

1. 'शिखा-' C.

[ अथ सन्ध्या, तत्र स्वदेहे पञ्चदशाक्षरन्यासः ]

शिरः कण्ठे मुखे श्रोत्रे नेत्रनासा[1]भुजेषु च ।
हृदि गुह्ये पृष्ठदेशे नाभौ च जठरे गुदे ।
पादे गुल्फे महादेव्या न्यसेत् पञ्चदशाक्षरम् ॥ ६७ ॥

[ ध्यानम् ]

संपूर्णां चिन्तयेद् विद्यां [2]ब्रह्मरन्ध्रेऽरुणप्रभाम् ।
[3]स्मरत्सुधाषोडशार्णां महासौभाग्यदां स्मरेत् ॥ ६८ ॥

[ सौभाग्यदण्डिनीमुद्राविनियोगः ]

वामांस[4]देशे सौभाग्यदण्डिनीं भ्रामयेदथ ।

[ रिपुजिह्वाया विनियोगः ]

[5]रिपुजिह्वाग्रहां मुद्रां पादमूले च विन्यसेत् ॥ ६९ ॥
त्रैलोक्यस्य [6]त्वहं कर्त्ता ध्यात्वैवं तिलके न्यसेत् ।
संपूर्णामेव वदने वेष्टनत्वेन विन्यसेत् ॥ ७० ॥
पुनः संपूर्णवदने गलोर्द्ध्वे विन्यसेदथ ।
व्यापकत्वे योनिमुद्रां मुखे क्षिप्त्वाऽभिवन्द्य च ॥ ७१ ॥

---

पञ्चदशे स्नानानन्तरं तान्त्रिकसन्ध्याया वक्ष्यमाणत्वात् अत्र तदनवसरत्वाच्च । सुगममन्यत् ।

६७। शिर इति। पूर्वश्लोके प्रातःकृत्याङ्गतया श्रीक्रमसंहितोक्तमानससन्ध्योपासनमुद्दिष्टं तदेव प्रदर्शयति—शिर इत्यादिना । तथा च शिर-आदिषु पञ्चदशसु स्थानेषु क्रमेण पूर्वोपदर्शितश्रीविद्या-पञ्चदशाक्षरमन्त्रस्यैकैकं वर्णं न्यसेदित्यर्थः ।

---

1. '-न्तरेषु' A-B. 2. 'ब्रह्मरन्ध्र' इत्यादिपादद्वयं A-पुस्तके नास्ति । 3. 'भवेद' A. 4. 'देशतो भागात् कुण्डली ?' A. 5. 'विप्रजिह्वामहामुद्रां पादमूलोपरि न्यसेद' A-B. 6 'अयं' A, 'अहं' B.

[ सौभाग्यदण्डिन्याः स्वरूपं फलञ्च ]

मुष्टिं बद्ध्वा तले मन्त्री तर्जनीं [1]दण्डवच्चरेत् ।
सौभाग्यदण्डिनी नाम रिपून् दण्डयते क्षणात् ॥ ७२ ॥

[ रिपुजिह्वाग्रहा मुद्रा करशुद्धिश्च ]

अङ्गुष्ठं [2]मुष्टिगं कुर्याद् [3]रिपुजिह्वाग्रहा भवेत् ॥ ७३ ॥
अनामिकां परिभ्राम्य मूर्द्धांसं परितः सुधीः ।
ब्रह्मरन्ध्रे क्षिपेच्चैव [4]मणिबन्धे न्यसेत्ततः ॥ ७४ ॥
[5]ललाटेऽनामिकां कुर्यात् षोडशार्णां स्मरन् बुधः ।
त्रैलोक्यमरुणं ध्यायन् श्रीविद्यां मनसि स्मरेत् ॥ ७५ ॥
ॐकारं वाग्भवं कूटमोंकारं कामराजकम् ।
शान्तान्तं कादिसंयुक्तम् [6]ऐकारान्तान्तयोजितम् ॥ ७६ ॥
त्रिपुरा परमेशानी करशुद्धौ समीरिता ॥ ७७ ॥

---

७२ । मुष्टिमिति । अत्र तले इत्यनेन वामहस्ततले इति बोध्यम् । तन्त्रसारे मुद्राप्रकरणे—

वामहस्तेन मुष्टिन्तु बद्ध्वा कर्णप्रदेशके ।
तर्जनीं सरलां कृत्वा भ्रामयेन्मनुवित्तमः ।
सौभाग्यदण्डिनी मुद्रा न्यासकालेऽपि सूचिता ॥

इति वचनेन तथा व्यक्तमभिधानात् ।

७३ । अङ्गुष्ठमिति । तन्त्रसारे तु—

अन्तरङ्गुष्ठमुष्ट्या तु निरुध्य तर्जनीमिमाम् ।
रिपुजिह्वाग्रहा मुद्रा न्यासकाले तु सूचिता ॥

इत्यनेन मुष्टावङ्गुष्ठेन तर्जन्या अपि निरोध उक्त इति विशेषो दृश्यते ।

---

1. 'कुण्डवत्' A. 2. 'पृष्ठगं' A-B. 3. 'विप्र-' A. 4. 'मणिरन्ध्रे', B. C. 'मणे रन्ध्रे' C. 5. 'ललाटमालिकां' B, 'ललाटा-' C. 6. 'ऐकारान्तान्तु योजिताम् ?' C.

[ विद्याध्यानम् ]

अथाऽऽधारे वाग्भवन्तु तडिद्वर्णं त्रिकोणके ।
तदुद्भवां तडिद्वर्णां द्विभुजां बालरूपिणीम् ॥ ७८ ॥
पुस्तकाज्ज्वलसत्पाणिपद्मां चारुत्रिलोचनाम् ।
[1]बिम्बाधरां पीतवर्णां बिषतन्तुतनीयसीम् ॥ ७९ ॥
वाग्भवाख्यस्वरूपां तां परशक्तौ[2] समानयेत् ।
शुद्धस्फटिकसङ्काशां गोक्षीररजतोपमाम् ॥ ८० ॥
कदम्बगोलकाकारां ब्रह्मरन्ध्रव्यवस्थिताम् ।
अभय[3]मक्षसूत्रञ्च पाशं विद्याञ्च धारिणीम् ॥ ८१ ॥

[ त्रिपुरार्घ्यदानम् ]

वाग्भवन्तु समुच्चार्य त्रिपुरा वाग्भवेश्वरी ।
पादुकां पूजयामीति त्रिधा चार्घ्यं निवेदयेत् ॥ ८२ ॥

---

७८-८१। अथाऽऽधार इत्यादि। अत्रेदमवधेयम्—पूर्वं यन्मानससन्ध्योपासनमुद्दिष्टं तत् प्रातर्मध्याह्ने सायमर्द्धरात्रे चेति कालचतुष्टयेऽनुष्ठेयम्, अन्यथा 'सायाह्ने शक्तिबीजन्तु श्वेतं वै सोममण्डले' इति, 'अर्द्धरात्रे तदन्तरम्' इति, 'तुरीयं बीजमुच्चार्ये'ति च वक्ष्यमाणवचनैर्विशिष्य सायमर्द्धरात्रयोरुपादानं व्यर्थं स्यात्। एवञ्च तत्र तत्र सायमर्द्धरात्रयोर्व्यवस्थापनात् पूर्वोक्तकल्पद्वयं प्रातर्मध्याह्नकालविषयमिति स्थितम्। तत्र शिरःकण्ठ इत्यादिना 'करशुद्धौ समीरिते'त्यन्तेन ग्रन्थेनोक्ताः प्रक्रियाः कालचतुष्टयसाधारणाः। अथाधार इत्यादिना तु प्रथमप्राप्तं प्रातःकालीनध्यानादिप्रक्रियामभिधत्ते। आधारे मूलाधारे त्रिकोणके मूलाधारस्थिते त्रिकोणे इत्यर्थः। तडिद्वर्णं वाग्भवबीजं ध्यात्वेति शेषः तदुद्भवां तद्वाग्भवबीजोद्भवां द्विभुजां बालरूपिणीमित्यादिसर्वविशेषणविशिष्टां तां परशक्तौ सहस्रारस्थितायां समानयेदिति सम्बन्धः। तत्रापि शुद्धस्फटिकसङ्काशामित्यादिविशेषणविशिष्टां तां ध्यायेदित्यर्थः।

८२। ध्यानानन्तरमर्घ्यदानमुपदिशति—वाग्भवन्त्वित्यादिना।

---

1. 'किं बाधारे' C. 2. '-शम्भौ' C. 3. '-ञ्चाक्ष-' B-C.

[ त्रिपुरागायत्री ]

[1]त्रिपुरादेवि विद्महे वाग्भवेश्वरीपदं भवेत् ।
धीमहीति ततस्तन्नो [2]मुक्तिः प्रचोदयादिमाम् ॥ ८३ ॥

[ पूरकादिक्रमेण तज्जपः ]

त्रिर्जपेदथ मन्त्रज्ञः पूरकादिविधानतः ॥ ८४ ॥

[ देव्या ध्यानम् ]

हृदया[3]म्बुजमध्यस्थे केशरे सूर्यमण्डले ।
द्वितीयं कामराजन्तु तरुणारुणसन्निभम् ॥ ८५ ॥
तदुद्भवां रक्तवर्णां चतुर्भुजां त्रिलोचनाम् ।
पाशाङ्कुशधनुर्बाणधारिणीं [4]यौवनान्विताम् ॥ ८६ ॥

[ तत्र क्रमान्तरम् ]

अथवारुण[5]संदीप्तां कामकूटस्वरूपिणीम् ।
सहस्रकमले नीत्वा ध्यायेदादित्यसुप्रभाम् ॥ ८७ ॥
[6]चतुर्भुजां महादीप्तां त्रिनेत्राञ्च वराननाम् ।
सर्वज्ञानमयं वामे पुस्तकं प्रणवात्मकम् ॥ ८८ ॥
दक्षिणेऽक्षस्रजं सूर्यकान्तितुल्यां वराभयौ ।
दक्षवामकराभ्याञ्च[7] बिभ्रतीं परमेश्वरीम् ॥ ८९ ॥

---

८३-८४ । अर्घ्यत्रयदानानन्तरं पूरक-कुम्भक-रेचक-रीत्या त्रिधा गायत्रीजपमुपदिशति—त्रिपुरेत्यादिना त्रिर्जपेदित्यन्तेन ।

८५ । एवं प्रातःकालीनध्यानादिप्रक्रियामभिधाय माध्याह्निकं ध्यानमाह—हृदयाम्बुजमध्यस्थ इत्यादिना । एवं वक्ष्यमाणस्थलेष्वपि बोध्यम् ।

---

1. 'वाग्भवन्तु समुच्चार्य त्रिपुरादेवि विद्महे । वाग्भवेश्वरीपदं लिखेत्, ततो धीमहीत्यादि' ?' C. 2. 'मुक्तिश्चेति प्रचोदयात्' A. 3. '-म्भोज-' C. 4. 'यौवनोन्नताम्' C. 5. '-दीप्तां तां' C. 6. 'चतुर्भुजामित्यादि पादद्वयं' A-पुस्तके नास्ति । 7. '-न्तु' C.

[ अर्घ्यदानम् ]

एवं ध्यात्वा कामराजमुद्धरेत् त्रिपुरापदम् ।
कामेश्वरीपादुकाञ्च स्मृत्वाऽर्घ्यं त्रिः प्रकल्पयेत् ॥ ६० ॥

[ गायत्री तज्जपश्च ]

कामराजं समुच्चार्य त्रिपुरादेवि विद्महे ।
महाकामेश्वरी [1]धीमहि तन्नः पदतस्ततः ।
क्लिन्ने प्रचोदयान्मन्त्री [2]त्रिधा च प्रजपेदिमाम् ॥ ६१ ॥

[ सायाह्ने देव्या ध्यानम् ]

सायाह्ने शक्तिबीजन्तु श्वेतं वै सोममण्डले ।
[3]तदुद्भवां श्वेतवर्णां जटामुकुटधारिणीम् ।
त्रिनेत्रां द्विभुजामीषत्स्फुरद्दंष्ट्राङ्कुलां शुभाम् ॥ ६२ ॥

[ तत्र कल्पान्तरम् ]

अथवा शक्तिरूपां तां ध्यायेच्छुद्धसरोरुहे ॥ ६३ ॥
सर्वालङ्कारभूयिष्ठां दक्षिणे च [4]वरप्रदाम् ।
अक्षमालां वरं वामे दधतीं पुस्तकाभयौ ॥ ६४ ॥

[ तत्रार्घ्यदानक्रमः ]

[5]शक्तिबीजं समुच्चार्य [6]त्रिपुरा अमृतेश्वरी ।
पादुकां पूजयामीति त्रिधाऽर्घ्यं परिकल्पयेत् ॥ ६५ ॥

[ गायत्री तज्जपश्च ]

गायत्रीं प्रजपेन्मन्त्री शक्ति[7]बीजस्वरूपिणीम् ॥ ६६ ॥

---

1. 'धीमहीति तन्नः पदात्ततः' B-C. 2. 'गायत्रीं' C. 3. 'तदुत्तरां' A. 4. 'करद्वये' C. 5. 'एवं ध्यात्वा' C. 6. 'त्रिपुराममृतेश्वरीम्' C. 7. '-कूट-' C.

त्रिपुरादेवि विद्महे स्वशक्तीश्वरि धीमहि ।
तन्नोऽमृते प्रचोदयाद्

[ अर्द्धरात्रे ध्यानम् ]

अर्द्धरात्र तदन्तरम् ॥ ९७ ॥
तुरीयं बीजमुच्चार्य पद्मरागसमप्रभम् ।
आकाशे परमानन्दे समावाह्य सुरेश्वरीम् ॥ ९८ ॥
[1]तदुद्भवां महादेवीं पद्मरागसमप्रभाम् ।
पाशाङ्कुशधरां चापधारिणीं लोचनत्रयाम् ॥ ९९ ॥

[ तत्रार्घ्यक्रमः ]

तुरीयं बीजमुच्चार्य महात्रिपुर[2]सुन्दरी ।
पादुकां पूजयामीति [3]त्रिधाऽर्घ्यं परिकल्पयेत् ॥ १०० ॥

[ तत्र गायत्री तज्जपश्च ]

गायत्रीं प्रजपेन्मन्त्री तुरीयबीजरूपिणीम् ।
त्रिपुरसुन्दरीशब्दान्ते विद्महे [4]तदनन्तरम् ॥ १०१ ॥
कामेश्वरी धीमहीति तन्नः [5]क्लिन्ने प्रचोदयात् ।
अष्टोत्तरशतं त्रिंशद्दशधा प्रजपेदिमाम् ॥ १०२ ॥

[ निगमनम् ]

प्रसङ्गात् सकला सन्ध्या क्रमेण परिकीर्त्तिता ॥ १०३ ॥

[ प्रातःकृत्यस्यावश्यकत्वम् ]

अथ प्राभातिकं कृत्वा विरमेच्च यथा[6]क्रमम् ।
प्राभातिकविहीनेन कृतं [7]तदकृतं भवेत् ॥ १०४ ॥

---

1. 'तदुत्तरां' A. 2. '-सुन्दरीं' A. 3. 'त्रिरर्घ्यं' C. 4. 'पदमुच्चरेत्' C.
5. 'क्लिन्नः' C. 6. '-सुखम्' C. 7. 'यदकृतं' C.

[ ततो देवगृहेऽनुष्ठानम् ]

ततो देवस्थलं [1]गत्वा निर्माल्यमपकृत्य च।
दद्यात् पुष्पाञ्जलिं विद्वानर्घ्यपाद्ये[2] तथैव च ॥ १०५ ॥
मुखप्रक्षालनं [3]दद्याद् दद्याद्वै [4]दन्तधावनम्।
दद्यादाचमनीयञ्च दद्याद् वासोऽमलं शुभम् ॥ १०६ ॥
नमस्कृत्य जपं कृत्वा स्तुत्वा नत्वा सुखी भवेत् ॥ १०७ ॥

इति श्रीपूर्णानन्दपरमहंसविरचिते श्रीतत्त्वचिन्तामणौ
चतुर्दशः प्रकाशः ॥ १४ ॥

---

1. 'कृत्वा' A. 2. '-पात्रे' A-B. 3. 'दत्त्वा' ? C. 4. 'तदनन्तरम्' C.

## पञ्चदशः प्रकाशः



[ स्नानक्रमस्य द्वैविध्यम् ]

स्नानप्रकारो [1]द्विविधो [2]बाह्याभ्यन्तरभेदतः ॥ १ ॥

[ तत्राऽऽन्तरस्नाननिरूपणप्रतिज्ञा ]

आन्तरं स्नान[3]मत्यन्तरहस्यमपि सादरात् ।
कथयामि न सन्देहश्चतुर्वर्गाप्तयेऽपि च ॥ २ ॥

[ आन्तरस्नानक्रमः ]

मनसा मूलमन्त्रेण प्राणायामपुरःसरम् ।
[4]कुर्वीत प्रयतो मन्त्री मानसं स्नानमुत्तमम् ॥ ३ ॥
[5]संवित्त्रयमनुस्मृत्य चरणत्रयमध्यतः ।
[6]स्रवन्तं सच्चिदानन्दप्रवाहं भव[7]मोचनम् ॥ ४ ॥
विमुक्तिसाधनं पुंसां स्मरणादेव योगिनाम् ।
तेन प्लावितमात्मानं भावयेद् भवशान्तये ॥ ५ ॥

[ आन्तरस्नानस्य निगमनं फलञ्च ]

एवमाभ्यन्तरं स्नानं तीर्थकोटिफलप्रदम् ।

[ अथ बाह्यस्नानम् ]

अथ गृह्योक्तविधिना बाह्यस्नानं समाचरेत् ॥ ६ ॥

---

१। पूर्वप्रकाशे प्रातःकृत्यं विस्तरत उपवर्ण्य प्रकाशेऽस्मिन् वाच्यायां देवीसपर्यायामस्नातस्य निन्दाश्रवणात् प्रथमं स्नानमभिधत्ते स्नानप्रकार इत्यादिना ।

---

1. 'विविधो' A-C. 2. 'बाह्यान्तरविभेदतः' B. 3. '-मारभ्य' A-B. 4. 'कुर्वंतः' A. 5. 'समित्त्रय-' ? A. 6. 'स्मरणं' A-B. 7. '-गोचरम्' C, '-शोधनम्' A.

[ तत्राऽऽचमनम् ]

आत्मवद्याशिवैस्तत्त्वैराचामेत् पूर्ववत्ततः ।

[ तीर्थावाहनम् ]

[1]यन्त्रराजं जले ध्यात्वा[2] [3]तीर्थावाहनमाचरेत् ॥ ७ ॥

[ तत्र मन्त्रः ]

गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धुकावेरि जलेऽस्मिन् सन्निधिं कुरु ॥ ८ ॥

[ निरुक्तमन्त्रेणाङ्कुशमुद्रया प्रोक्तावाहनस्य कर्त्तव्यता ]

अनेन [4]मनुना मन्त्री मुद्रयाऽङ्कुशसंज्ञया ॥ ९ ॥

[ अङ्कुशमुद्रा ]

मुष्टिं बद्ध्वा दक्षहस्ते मध्यमां दण्डवच्चरेत् ।
अङ्कुशाकाररूपेण तर्जनीं तत्र योजयेत् ।
अङ्कुशाख्या महामुद्रा त्रैलोक्याकर्षणक्षमा ॥ १० ॥

[ अभिषेकः ]

मूलं स्मरन् मूर्ध्नि तोयं कुम्भाख्येन त्रिधा क्षिपेत् ॥११॥

[ कुम्भमुद्रा ]

दक्षाङ्गुष्ठे पराङ्गुष्ठं क्षिप्त्वा हस्तद्वयेन तु ।
सावकाशां चैव मुष्टिं कुम्भमुद्रां विदुर्बुधाः ॥ १२ ॥

[ मज्जनविधिः ]

सप्त च्छिद्राणि संरुध्य त्रिधा मज्जेत्ततः सुधीः ॥ १३ ॥

---

७। यन्त्रराजमिति वक्ष्यमाणश्रीयन्त्रमित्यर्थः ।

९। अनेनेति। अङ्कुशसंज्ञया मुद्रया तीर्थावाहनमाचरेदिति पूर्वेण सम्बन्धः ।

१३। सप्तच्छिद्राणीति। चक्षुश्छिद्रद्वयं कर्णच्छिद्रद्वयं नासिकाच्छिद्रद्वयम् एकं मुखच्छिद्रमिति सप्त च्छिद्राणि ।

---

1. 'मन्त्रराजं' C. 2. 'स्नात्वा' C. 3. 'तीर्थमावाहयेद् बुधः' C. 4. 'तीर्थमावाह्य' C.

[ स्वकृत-श्यामारहस्यात् स्नानप्रक्रियान्तरज्ञानोपदेशः ]

[1]अन्यत् स्नानरहस्यन्तु श्यामाख्ये चैव मत्कृते।
अनुसन्धेयमत्रैव नोक्तन्तु ग्रन्थगौरवात् ॥ १४ ॥

[ वैदिकसन्ध्यानन्तरं तान्त्रिकसन्ध्या, तत्राचमनादि ]

ततश्च वैदिकीं सन्ध्यां कृत्वाचम्य विधानतः।

[ षडङ्गन्यासपुरःसरमघमर्षणम् ]

षडङ्गन्यासमाचर्य वामहस्ते जलं ततः ॥ १५ ॥
गृहीत्वा दक्षहस्तेन संपुटं [2]कारयेत्ततः।
शिववायुजलपृथ्वीवह्निबीजैस्त्रिधा पुनः ॥ १६ ॥

---

१४। अन्यदिति। श्यामाख्ये श्यामारहस्यनामके निबन्धे। श्रीमत्पूर्णानन्द-परमहंसकृते श्यामारहस्ये प्रथमपरिच्छेदे प्रातःकृत्यनिरूपणानन्तरम् "अथ नद्यादौ गत्वा कालिकारूपं सर्वं विभाव्ये"त्यादिना स्नानरहस्यं विशिष्य निरूपितम्।

१६। दक्षहस्तेन संपुटं कारयेदाच्छादयेत्। आच्छाद्य च शिववायुजलपृथ्वीवह्नि-बीजैः हं यं वं लं रमित्येतैस्त्रिधाऽभिमन्त्र्य तत्त्वमुद्रया मूलमन्त्रेण तज्जलं शिरसि सप्त-वारं निक्षिपेदिति सम्बन्धः। तत्त्वमुद्रालक्षणमाह गन्धर्वतन्त्रे सप्तमपटले—

अङ्गुष्ठानामिकायोगं (:) तत्त्वमुद्रेयमीरिता।

अत्र विशिष्यानुक्तावपि वामहस्ताङ्गुलिविवरगलितजलबिन्दुभिः शिरसि प्रोक्षणं विधेयम्, गन्धर्वतन्त्रे षष्ठपटले—

वामहस्ते जलं गृह्य गलितोदकबिन्दुभिः।
सप्तधा प्रोक्षणं कुर्यान्मूर्द्ध्नि मन्त्रमनुस्मरन् ॥
अवशिष्टोदकं दक्षहस्ते संगृह्य साधकः।
नासामाश्लिष्य तोयेन ततस्तेनाघमर्षणम् ॥

इत्यादिना तथा व्यक्तमभिधानात्। अत्र ततस्तेनाघमर्षणमित्युक्त्या निरुक्तसंस्कार-संस्कृतजलेन नासापुटोत्तोलितेन पापक्षालनस्यैवाघमर्षणत्वमुक्तम्। मूले वहन्नासा-पुटेन तु उत्तोल्य क्षालयेत् पापमित्युक्तम्। उत्तोलनक्रममाह गन्धर्वतन्त्रे षष्ठपटले—

ईडयाकृष्य देहान्तः क्षालितैः पापसञ्चयैः।
कृष्णवर्णं तदुदकं वामनाड्या विरेचितम् ॥

---

1. 'अन्यत् स्नानरहस्यमि'त्यादि पादचतुष्टयं C-पुस्तके नास्ति। 2. 'कारयेद् बुधः' C.

अभिमन्त्र्य च मूलेन सप्तधा तत्त्वमुद्रया ।
निक्षिपेत्तज्जलं मूर्ध्नि शेषं दक्षे निधाय च ॥ १७ ॥
तत्तु तेजोमयं ध्यात्वा वहन्नासापुटेन तु ।
उत्तोल्य क्षालयेत् पापं वामकुक्षिस्थितं नरम् ॥ १८ ॥
ब्रह्महत्याशिरस्कञ्च स्वर्णस्तेयभुजद्वयम् ।
[1]सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम् ॥ १९ ॥
तत्संसर्गिपदद्वन्द्वमङ्गप्रत्यङ्गपातकम् ।
उपपातकरोमाणं [2]रक्तश्मश्रुविलोचनम् ॥ २० ॥
खड्गचर्मधरं क्रूरं कृष्णं क्रोधप्रपूरितम् ।
नानापातकसङ्घैस्तु सर्वाङ्गं परिचिन्तयेत् ॥ २१ ॥
भूमौ वज्रशिलायान्तु तं त्यजेदघसञ्चयम् ।

[ सन्ध्याया अनन्तरप्रक्रियोपदेशस्तर्पणञ्च ]

ततश्च तान्त्रिकीं सन्ध्यां कृत्वा [3]सन्तर्पयेत् पराम् ॥२२॥

---

दक्षहस्ते तु तन्मन्त्री पापरूपं विचिन्त्य च ।
पुरतो वज्रपाषाणे प्रक्षिपेदस्त्रमन्त्रतः ॥ इति ।

१८—२१ । पापपुरुषस्य स्वरूपमाह—पापमित्यादिना । पापं नरं पापपुरुषं तं विशिनष्टि वामकुक्षिस्थितमित्यादिना ।

२२ । ततश्चेति । ततो निरुक्ताघमर्षणानन्तरं तान्त्रिकीं सन्ध्यामवशिष्टां कृत्वा तर्पणमाचरेत् । अत्र तन्त्रसारे श्रीविद्याप्रकरणे तान्त्रिकस्नानानन्तरं 'तान्त्रिकाघमर्षणान्तं कर्म कृत्वा तर्पणं कुर्यादि'त्युक्तम् ।

पूर्णानन्दगुरुणा ब्रह्मानन्दपरमहंसेन तु त्रिपुरार्चनरहस्ये अघमर्षणानन्तरं "करौ प्रक्षाल्य पूर्ववदाचम्य सूर्यमण्डले देवीं ध्यात्वा जलेन पञ्चोपचारैरभ्यर्च्य अञ्जलौ जलमादाय उत्थाय 'वाग्भवेश्वरि विद्महे कामेश्वरि धीमहि तन्नः शक्तिः प्रचोदयात् श्रीमहात्रिपुर-

---

1. 'सुरापाने'त्यादिपादचतुष्टयं A-पुस्तके नास्ति । 2. 'रक्ते'त्यादिपादद्वयं A-C-पुस्तकयोर्नास्ति । 3. 'तर्पणमाचरेत्' A-B.

देवर्षिपितृपूर्वान्तु सायुधां सपरीकराम्।
[1]जले वा तर्पयेद्देवीं गृहे वा तर्पयेत् सुधीः ॥ २३ ॥
संशोध्य वाग्भवेनापः कामराजेन दीपकम्।
अमृतं शक्तिकूटेन तेनैव तर्पयेत् पराम् ॥ २४ ॥
[2]यन्त्रराजं जले ध्यात्वा देवीमावाहयेत्तदा[3] ॥ २५ ॥
गणेशादींश्च सन्तर्प्य गणनाथांश्च तर्पयेत्।
सरस्वत्यादि सन्तर्प्य भद्रकाल्यादि दैवतम् ॥ २६ ॥

---

सुन्दरि एष तेऽर्घः स्वाहा' इत्यर्घत्रयं दत्त्वा ह्रां ह्रीं हंसः मार्त्तण्डभैरवाय प्रकाशशक्तिसहिताय इदमर्घ्यं स्वाहेति सूर्यायार्घ्यत्रयं दत्त्वा गायत्रीं मूलञ्च यथाशक्ति जप्त्वा जपं देव्यै निवेद्य तां हृदि विसर्ज्य षडङ्गं कुर्यादिति सन्ध्या"—इत्यन्तमभिधाय "अथ तर्पणम्" इत्यादिना तर्पणविधिरुपदिष्टः।

कौलावलीनिर्णये द्वितीयोल्लासे अघमर्षणान्तमभिधाय,

प्रक्षाल्य हस्तयुगलमाचामेत्तदनन्तरम्।
मायाप्राणात्मकं मन्त्रं मार्त्तण्डभैरवाय च।
प्रकाशशक्तियुक्ताय अर्घ्यं स्वाहा ततो वदेत्।
सूर्यायार्घ्यं विधायाथ शक्तिसन्ध्या प्रकीर्त्तिता।
विभाव्य पुरतो यन्त्रं तत्र देवीं गणान्विताम्।
गृहीत्वा गन्धतोयञ्च कुलपात्रं ततः परम्।
तर्पयेद्देवतावक्त्रे विधिवत् साधकोत्तमः ॥

इत्यादिना अघमर्षणानन्तरं हस्तक्षालनाचमनपूर्वकं सूर्यार्घ्यान्तमभिधाय देवीतर्पणमुपदिष्टम्।

प्रकृते तु अघमर्षणानन्तरं 'तान्त्रिकीं सन्ध्यां कृत्वा सन्तर्पयेत् परा'मित्यभिधानात् तर्पणात् परं सूर्यार्घ्यदानाभिधानाच्च सन्ध्यां कृत्वेत्यनेन सूर्यार्घ्यदानमूलमन्त्रजपादिवर्जं स्वगुरुब्रह्मानन्दाभिमतकरप्रक्षालनादिदेव्यर्घ्यदानान्तं कर्म समाप्येत्याशयः पूर्णानन्दपरमहंसानामिति प्रतिभाति। अत्राऽऽचार्याणां मतभेददर्शनात् स्वस्वसम्प्रदायानुसारेणैकतमः पक्षः समाश्रयणीय इति दिक्।

---

1. 'जलैर्वा' C. 2. 'मन्त्रराजं' C. 3. '-त्ततः' C.

यन्त्र[1]बाह्यचतुर्द्वारे शस्तौ च गुरुतर्पणम् ।
अमुकानन्दनाथश्च अमुकाम्बापदद्वयम् ॥ २७ ॥
अग्नौ परं गुरुञ्चैव नैरृत्यां परमेष्ठिनम् ।
परापरश्च वायव्यां गुरुपत्नीश्च मध्यमे ॥ २८ ॥
षडाननश्च सन्तर्प्य ब्रह्मादिपञ्चदेवताः ॥ २९ ॥
[2]देव्यावाहनविद्याश्च[3] तिथिनित्याश्च[4] तर्पयेत् ।
त्रिवारं मूलविद्याश्च स्वशक्त्या सप्तधा [5]जलैः ॥ ३० ॥
भाषापञ्चमयीं देवीं सौभाग्यां पञ्चमीं ततः ।
अणिमादींश्च सन्तर्प्य ब्रह्माण्याद्यष्टदेवताः ॥ ३१ ॥
सङ्क्षोभण्यादि[6]मुद्राश्च त्रिपुरां प्रकटां ततः ।
कामाकर्षणरूपादि तर्पयेत्त्रिपुरेश्वरीम्[7] ॥ ३२ ॥
[8]सुगुप्तयोगिनीस्तत्र अनङ्गकुसुमादिकाः ।
सुन्दरीं तर्पयेत्तत्र[9] [10]सुगुप्ततरयोगिनीम् ॥ ३३ ॥
सङ्क्षोभण्यादिशक्तीश्च तथा त्रिपुरवासिनीम् ।
[11]योगिनीसम्प्रदायाश्च[12] सर्वसिद्ध्यादिदेवताः ॥ ३४ ॥
[13]श्रीपरां त्रिपुरां नित्यां तर्पयेत् कुलयोगिनीम्[14] ।
[15]सर्वज्ञादींश्च सन्तर्प्य तथा त्रिपुरमालिनीम् ॥ ३५ ॥
[16]विदर्भयोगिनीस्तत्र वशिन्याद्यष्टदेवताः ।
तर्पयेत्त्रिपुरां सिद्धां रहस्ययोगिनीस्तथा[17] ॥ ३६ ॥

---

1. '-बाह्ये' A-B. 2. 'देव्यावाहने'त्यादिपादाष्टकं A-पुस्तके नास्ति । 3. 'नित्यञ्च' B. 4. '-न्तु' B. 5. 'जले' B. 6. '-भिण्यादि-' B. 7. '-श्वरी' C. 8. 'सुगुप्ता' A, 'सुगोप्ता' B. 9. '-च्चैव' C. 10. 'सुगुप्त-' B-C. 11. 'योगिनीः' 12. '-नीवरप्रदायाश्च' A-B. 13. 'श्रीपूर्वां' B, त्रिपुरां श्रीपरां' C. 14. 'योगिनीः' C. 15. 'सर्वे'त्यादिपादद्वयं A-पुस्तके नास्ति ; 'सवर्गा-' B. 16. 'निगर्व-' C. 17. '-नीं तथा' A.

[1]जम्भादींस्त्रिपुरां देवीमतिरहस्ययोगिनीम् ।
षडङ्गयुवतीश्चैव कामेश्वर्यादिकं त्रयम् ॥ ३७ ॥
मूलविद्यां ततो मन्त्री महात्रिपुरसुन्दरीम् ।
सर्वानन्दमयं चक्रं तथैव परमेश्वरीम् ॥ ३८ ॥
चतुःसमयदेवीन्तु[2] बौद्धादिदेवतां ततः ।
वटुकादींश्च सन्तर्प्य एकैकाञ्जलिना सुधीः ॥ ३९ ॥
स्वस्वस्थाने महादेवीं बिन्दौ द्वादशधा पुनः ।
तर्पणञ्च समाप्याथ [3]त्रिवारं प्रोक्षणं तनौ[4] ॥ ४० ॥
त्रिधा चार्घ्यं दिनेशाय तन्मुखं सम्यगुत्क्षिपेत् ॥ ४१ ॥

[ मार्त्तण्डभैरवध्यानम् ]

[5]हेमाम्भोजप्रवाल[6]प्रथिमनिजरुचिं[7] चारुखट्वाङ्गपद्मौ
[8]चक्रं शक्तिं सपाशं सृणिमपि रुचिरामक्षमालां कपालम् ।
हस्ताम्भोजैर्दधानं त्रिनयनविलसद्वेदवक्त्राभिरामं
मार्त्तण्डं [9]वल्लभार्द्धं मणिमयमुकुटं हारदीप्तं भजामः ॥४२॥

[ मार्त्तण्डभैरवाय ( सूर्याय ) अर्घ्यदानम् ]

[10]संस्मृत्य भैरवं देवं मार्त्तण्डाख्यं जगत्पतिम् ।
मूलेन मनुना मन्त्री सूर्यस्य मनुनापि वा ॥ ४३॥
मायाबीजं समुच्चार्य सोहन्तु विपरीततः ।
सूर्यमन्त्रश्च संप्रोक्तो रक्तपुष्पजलादिभिः ॥ ४४ ॥

---

४४-४५ । मायेति । मायाबीजं ह्रीं । सोहमित्यस्य वैपरीत्येनोक्तौ हंसः इति

---

1. 'यन्त्रा-' A. 2. '-स्तु' C. 3. 'त्रिपुरां' A-B. 4. 'तनोः' B. 5. 'हैमा-' C.
6. 'प्रथित-' B. 7. '-रुचां' A, 'निरूढां ?' C. 8. 'शङ्ख' A. 9. '-स्वर्णभार्द्धं' ? C.
10 संस्मृत्येत्यादि जलादिभिरित्यन्तं पादाष्टकम् A-B-पुस्तकयोर्नास्ति ।

मार्त्तण्डभैरवं ङेऽन्तं प्रकाशशक्तिसंयुतम् ।
अर्घ्यं दत्त्वा मूलमन्त्रं जपेदष्टोत्तरं शतम् ॥ ४५ ॥

[ तत्र सूर्यमण्डले देव्या ध्यानम् ]

सवितुर्मण्डले देवीं ध्यात्वा चन्द्रकलाधराम् ।
सद्यःसन्तप्तहेमाभां सूर्यमण्डलरूपिणीम् ॥४६॥
भास्वद्रत्नौघमुकुटां नानाभरणभूषिताम् ।
पाशाङ्कुशाभयवरान्

[ अथ यागस्थानप्रवेशक्रमः ]

अथ चाङ्कुशमुद्रया ॥४७॥
हृदये तां समानीय हृदि मन्त्रं परामृशन् ।
अवहिर्मानसो योगी [1]याग[2]भूमिमथाविशेत् ॥४८॥

[ प्रशस्तयागभूमयस्तत्र देवीपूजाविधिश्च ]

एकलिङ्गे पर्वते वा पितृभूमौ [3]सरस्तटे ।
गङ्गागर्भे तटे वापि [4]सङ्गमे शून्यमन्दिरे ।

---

स्यात् । एवञ्च ह्रीं हंसः इति सूर्यमन्त्रः । ततश्च मूलं निरुक्तसूर्यमन्त्रं वा समुच्चार्य मार्त्तण्डभैरवाय प्रकाशशक्तिसहिताय इदमर्घ्यं स्वाहेति वदेदित्यर्थः ।

४७-४८ । पाशेति । पाशाङ्कुशाभयवरान् दधतीमिति शेषः । अथेति । एवं ध्यानानन्तरम् अङ्कुशमुद्रया तां हृदि अनाहतपद्मे समानीय सवितृमण्डलादिति शेषः । अङ्कुशमुद्रालक्षणमाह तन्त्रसारे—

ऋज्वीञ्च मध्यमां कृत्वा तर्जनीं मध्यपर्वणि ।
संयोज्याऽऽकुञ्चयेत् किञ्चिन्मुद्रैषाऽङ्कुशसंज्ञिका ॥ इति ।

मन्त्रं परामृशन् तन्मूलमन्त्रस्वरूपं चिन्तयन् । अवहिर्मानसः हृत्पद्मस्थस्वेष्टदेवतासमाहितमनाः । यागभूमिं पूजास्थानम् ।

४९ । पूजास्थानानि निरूपयति एकलिङ्ग इत्यादिना । एकलिङ्गलक्षण-

---

1. 'योग-' A. 2. '-स्थान-' B. 3. 'मन-' A, 'सम-' B. 4. 'संग्रामे' A-B.

नदीतीरे विल्वमूले पूजयेत् [1]परमेश्वरीम् ॥४९॥

[ एकलिङ्गलक्षणम् ]

पञ्चक्रोशान्तरे यत्र न लिङ्गान्तरमीक्ष्यते ।
[2]तदेकलिङ्गमाख्यातं तत्र सिद्धिरनुत्तमा ॥५०॥

[ अथ द्वारपूजा, तत्र प्रथमं हस्तपादप्रक्षालनम् ]

ततः पूजागृहद्वारि क्षालयेत् पाणिपादकौ[3] ॥५१॥

[ दूर्वाचयनम् ]

विना वै दूर्वया देवीपूजा नास्तीह कर्हिचित् ।
तस्माद्दूर्वा ग्रहीतव्या [4]सर्वपुष्पमयी शुभा ॥५२॥

[ आचमनम् ]

हस्ते दूर्वाङ्कुरं दत्त्वा आचामेद् विधिपूर्वकम् ॥५३॥

[ दिक्पालपूजा ]

पूर्णचन्द्रान्तराले च ध्यात्वा श्रीगुरुपादुकाम् ।
पूर्वादिक्रमयोगेण सर्वदिक्पाल[5]मर्चयेत् ॥५४॥

---

मग्रे वक्ष्यति । पितृभूमौ श्मशाने । सङ्गमे नदीसङ्गमे । संग्राम इति पाठे तु संग्रामभूमावित्यर्थः । व्यक्तमाह श्यामारहस्यधृतमुण्डमालातन्त्रे—

नदीतीरे विल्वमूले श्मशाने शून्यवेश्मनि ।
एकलिङ्गे पर्वते वा देवागारे चतुष्पथे ।
शवस्योपरि मुण्डे च जले वाकण्ठपूरिते ।
संग्रामभूमौ योनौ वा स्थले वा विजने वने ।
यत्र कुत्र स्थले रम्ये यत्र वा स्यान्मनोलयः ॥ इति ।

विशेषस्तु गन्धर्वतन्त्रे पञ्चविंशपटले द्रष्टव्यः ।

५० । पूर्वमेकलिङ्गे पर्वते वेत्याद्युक्तम्, तदेकलिङ्गलक्षणमाह पञ्चक्रोशान्तर इत्यादिना ।

५३ । आचामेदिति । अत्र तन्त्रसारकृता आत्मतत्त्वादिनाचमनमुक्तम् ।

५४ । पूर्णेति । पूर्णचन्द्रान्तराले सहस्रारकर्णिकास्थितस्य पूर्णचन्द्रस्यान्तराले

---

1. 'त्रिपुरे-' B-C. 2. 'तदेकं' C. 3. '-पादुकौ' B. 4. 'यतः सिद्धि-' A-B. 5. '-मुच्चरेत्' A.

[ तत्र क्रमान्तरम् ]

सामान्यार्घ्यं विधायाथ क्रमेण साधकोऽथवा ।
इन्द्रं स्वशक्तिसहितं पूर्वद्वारे समर्चयेत् ॥५५॥
यमश्च दक्षिणद्वारि पश्चिमे वरुणं तथा ।
कुबेरमुत्तरद्वारि [1]वह्निं वह्नौ च निर्ऋतिम् ॥५६॥
नैर्ऋत्यां पूजयेन्मन्त्री तथैव वायुकोणके ।
[2]वायुमीशे तथेशानमूर्द्ध्वे प्रजापतिं तथा ॥५७॥
अनन्तं गन्धपुष्पाद्यैरधश्च परिपूजयेत् ॥५८॥

[ अस्त्रपूजा ]

पूर्वादिक्रमयोगेण वज्राद्यस्त्रं यजेद् बुधः ॥५९॥

[ पूजनीयान्यस्त्राणि ]

वज्रं शक्तिं तथा दण्डं खड्गं पाशाङ्कुशे ततः ।
[3]गदात्रिशूलपद्मञ्च चक्रमाराधयेत् क्रमात् ॥६०॥

---

श्रीगुरुपादुकां ध्यात्वेत्यर्थः । सर्वेति । पूर्वादिक्रमयोगेण निरुक्तपूर्णचन्द्रान्तराले सर्वदिक्पालमर्चयेदित्यर्थः । सहस्रारे दिक्पालानामिन्द्रादीनामवस्थितिमाह निर्वाणतन्त्रे दशमपटले, सहस्रारं प्रकृत्य—

एवं ब्रह्मादयो देवा इन्द्राद्यास्त्रिदशेश्वराः ।
स्तुतिभक्तिपराः सर्वे दिव्यभावैः सदा स्थिताः ॥ इति ।

५५-५८ । दिक्पालपूजायां क्रमान्तरमाह सामान्यार्घ्यमित्यादिना । कल्पेऽस्मिन् सामान्यार्घ्यं विधाय मण्डपस्य पूर्वादिद्वारचतुष्टये क्रमेणेन्द्र-यम-वरुण-कुबेरान् कोणचतुष्टये वह्नि-निर्ऋति-वाय्वीशानान् ऊर्द्ध्वे प्रजापतिमधश्चानन्तं पूजयेदिति ।

५९-६० । पूर्वादीति । वज्राद्यस्त्रमिन्द्रादीनामिति शेषः । अत्र पूर्वादिक्रमयोगेणेत्यनेन प्रथमकल्पे पूर्वादिक्रमेणास्त्रपूजनं द्वितीयकल्पे तु पूजाक्रमानुसारेण प्रथममिन्द्रादिदिक्पतीनां ततश्चाग्न्यादिकोणाधिपतीनामस्त्राणि पूजयेत् । प्रधानपूजाक्रममुलङ्घ्य तदङ्गभूतास्त्रपूजायामन्यथाकरणे प्रमाणाभावादिति ध्येयम् ।

---

1. 'बह्वा वह्निं' C. 2. 'ऐशान्याञ्च' A. 3. 'गदादीनाञ्च शूलञ्च क्रमाद्धारयते क्रमात्' A.

[ पूर्वादिक्रमेण गणेशादिपूजा ]

गणेशञ्चैव क्षेत्रेशं द्वारश्रियञ्च देहलीम् ।
पूर्वद्वारे यजेत् पश्चाद्दक्षिणे गणनायकम् ॥६१॥
दुर्गाञ्च वटुकं क्षेत्रपालं कामरतिन्तथा ।
[1]प्रीत्या सह वसन्तञ्च शङ्खपद्मनिधी तथा[2] ॥६२॥
रत्नसोपानमिष्ट्वा तु[3] पश्चिमे परिपूजयेत् ।
सरस्वतीं महालक्ष्मीं मायां दुर्गां तथोत्तरे ॥६३॥
भद्रकालीं तथा [4]स्वस्तिं स्वाहां शुभकरीं तथा ।
गौरीञ्च लोकधात्रीञ्च वागीश्वरीं प्रपूजयेत् ॥६४॥

[ अथ मण्डपप्रवेशः ]

[5]मण्डपान्तः प्रविश्याथ सव्यपादपुरःसरम् ।
पूजाद्रव्याणि वै पश्येन्मूलमन्त्रेण साधकः ॥६५॥

[ पुष्पशोधनम् ]

पुष्पे पुष्पे महापुष्पे पुष्पावकीर्ण इत्यपि ।
स्वाहेति शोधयेत् पुष्पं वाराहीतन्त्र[6]सम्मतम् ॥६६॥

---

६२ । कामरतिं कामं रतिञ्चेत्यर्थः । प्रीत्या सह वसन्तं प्रीतिं वसन्तञ्चेत्यर्थः ।

६५ । मण्डपान्तरिति । सव्यपादपुरःसरं दक्षिणपादपूर्वकम् । अत्र विप्रतिपद्यमानानां मतं पूर्वमेव ( ५।२८ श्लो० टी० ) निराकृतमिति तत एव सर्वमवगन्तव्यम् ।

६६ । अथ पुष्पशोधनमन्त्रमाह पुष्प इति । तथा च 'पुष्पे पुष्पे महापुष्पे पुष्पावकीर्णे स्वाहा' इति श्रीविद्याविषये पुष्पशोधनमन्त्रः । यत्तु कुमारीतन्त्रे द्वितीयपटले—

अधिष्ठाने च पुष्पस्य प्रणवं पूर्वमुद्धरेत् ।
शताभिषेकेति पदं शताभीति ततः परम् ।

---

1. 'रत्या' A-B. 2. 'ततः' C. 3. 'च' C. 4. 'स्वातीं' A. 5. 'मण्डपान्तं' A-B. 6. '-सम्मतात्' B.

[ जलशोधनपूर्वकं प्रोक्षणम् ]

जलसंशोधनं मन्त्वं न्यस्य [1]वस्तुषु प्रोक्षणम् ।

[ अमृतीकरणादि ]

ततोऽमृतीकृत्य तालं त्रिधा ऽवगुण्ठ्य चेक्षणम् ॥६७॥

---

पेकेति च ततः प्रोक्तं हूं फट् स्वाहा ततः परम् ।
प्रणवं पुष्पकेतुश्च तथा राजार्हतेऽपि च ।
शताय सम्यगित्युक्त्वा जपेच्चैव च हूमिति ।
पुष्पे पुष्पे महापुष्पे सुपुष्पे पुष्पसम्भवे ।
पुष्पचयावकीर्णे हूं फट् स्वाहा च ततः परम् ।
विशोध्य पुष्पमेतेन जलं पूर्ववदाहरेत् ॥

इति पुष्पशोधनमुक्तं तच्छ्रीविद्येतरविषयम्, श्रीविद्यायां विशेषविधानात् । अत एव हरतत्त्वदीधितौ निरुक्तकुमारीतन्त्रोक्तपुष्पशोधनक्रममभिधाय, श्रीविद्यायान्तु वाराहीतन्त्रे षष्ठपटले—

पुष्पे पुष्पे महापुष्पे पुष्पावकीर्ण इत्यपि ।
स्वाहेति शोधयेत् पुष्पं तेन पुष्पेण पूजयेत् ॥

इत्युक्तम् । प्रकृतेऽपि निरुक्तवाराहीतन्त्रसम्मतक्रमदर्शनाय वाराहीतन्त्रसम्मतमिति विशिष्योक्तमिति निष्कर्षः ।

६७ । जलेति । जलशोधनमन्त्रः पूर्वमेव प्रदर्शितः । तत इति । जलशोधनमन्त्रजपानन्तरम् अमृतीकृत्य तज्जलममृतरूपतां प्रापय्य धेनुमुद्रयेति शेषः । धेनुमुद्रां तयाऽमृतीकरणञ्चाऽऽह तन्त्रसारे—

अन्योऽन्याभिमुखाश्लिष्टा कनिष्ठानामिका पुनः ।
तथैव तर्जनीमध्या धेनुमुद्रा प्रकीर्त्तिता ।
अमृतीकरणं कुर्यात्तया साधकसत्तमः ॥ इति ।

तालत्रयमग्रे वक्ष्यति । अवगुण्ठ्येति । अवगुण्ठनमुद्रामाह तन्त्रसारे—

सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्जनी ।
अवगुण्ठनमुद्रेयमभितो भ्रामिता मता ॥ इति ।

---

1. 'वस्त्रस्य' ? A. 2. 'विन्यस्य' A-B.

[ मण्डपपूजा ]

त्रिपुरार्चनमण्डपाय नमोऽन्तेन गृहं यजेत् ।
अस्त्रेण प्रोक्षणं कृत्वा त्रिकोणं तत्र संलिखेत् ॥६८॥

[ पृथिवीपूजा ]

प्रणवं शक्रबीजन्तु पृथिव्यै नम इत्यपि ।
अनेन मनुना तत्र पृथिवीं पूजयेदपि ॥६९॥

[ पृथिवीसम्प्रदानकमर्घ्यदानम् ]

अथवाऽर्घ्यं समादाय मूलमन्त्रपुरःसरम् ।

[ तत्र प्रार्थनमन्त्रः ]

वसुधे हेमगर्भाऽसि शेषस्योपरिशायिनि[1] ।
स्थानं मे देहि पूजार्थं गृहाणार्घ्यं धरित्रि मे ॥७०॥

[ अर्घ्यदानमन्त्रः ]

ॐ नमो भगवत्यै धरण्यै धरणीति च ।
धरे स्वाहेति मन्त्रेण दद्यादर्घ्यमनुत्तमम् ॥७१॥

---

६८। त्रिपुरेति। 'ॐ त्रिपुरार्चनमण्डपाय नमः' इति प्रयोगः। अत्र विशिष्यानुक्ता-वपि प्रणवपूर्वक एव मन्त्रः प्रयोज्यः—

ॐकारादिसमायुक्तं नमस्कारान्तकीर्त्तितम् ।
स्वनाम सर्वदेवानां मन्त्र इत्यभिधीयते ॥

इत्यनेन प्रणवादिनमोऽन्तसाध्यनाम्नो मन्त्रत्वविधानात्, त्रिपुरार्चनरहस्ये 'ॐ त्रिपुरायागमण्डपाय नमः' इति स्फुटमभिधानाच्च। अस्त्रेण फडित्यनेन।

६९। तत्र त्रिकोणे पृथिवीपूजनमाह प्रणवमित्यादिना। प्रणवः ॐ, शक्रबीजं लं ततः पृथिव्यै नम इति। एवञ्च 'ॐ लं पृथिव्यै नमः' इति मन्त्रः पर्यवस्यति।

७०। अर्घ्यदानरूपं पृथिवीपूजाकल्पान्तरमाह अथवेति। अत्र कल्पे अर्घ्यं गृहीत्वा प्रथमं मूलमन्त्रं ततो वसुधे हेमगर्भासीति मन्त्रं पठेत्। ततश्च ॐ नमो भगवत्यै धरण्यै धरणीधरे स्वाहा इत्यनेन मन्त्रेणार्घ्यं दद्यात्। पूर्वकल्पे पूजनमात्रम्। अत्र तु पूजनमकृत्वा पृथिवीसम्प्रदानकमर्घ्यदानमात्रमित्येव सूचितमथवेत्यनेन।

---

1. '-शायिनी' A-B.

[ करशुद्धिः ]

करशुद्धिं गन्धपुष्पैर्विदध्यान्मनुनाऽमुना[1] ॥७२॥
[2]आद्यस्वरयुगं सेन्दुखण्डं मनुयुतो[3] भृगुः ।
[4]सर्गीति मनुराख्यात-

[ भूतापसारणम् ]

स्ततो भूतान्निवारयेत् ॥७३॥

---

७२। अथ करशुद्धिप्रक्रियामाह करेत्यादिना। अमुना वक्ष्यमाणेन मन्त्रेण गन्धपुष्पैः करशुद्धिं विदध्यादिति सम्बन्धः। अत्र पुष्पैरित्यनेन रक्तपुष्पैरिति बोध्यम्। व्यक्तमाह गन्धर्वतन्त्रेऽष्टमपटले—

गृहीत्वा रक्तपुष्पञ्च सगन्धं साधकस्ततः।
अनेनैव तु मन्त्रेण पुष्पं हस्ततलस्थितम्।
सम्मार्ज्य सव्यहस्तेन वामेन पाणिना ततः।
निर्मञ्छ्य कामबीजेन चाघ्राय वाग्भवेन तु।
ऐशान्यां निक्षिपेदेतच्छेष( च्छर )बीजेन पार्वति।

इति। अनेन करशुद्धेः क्रमोऽपि व्याख्यातः।

७३। पूर्ववचने विदध्यान्मनुनाऽमुनेत्युक्तम्, तं मनुमाह आद्येत्यादिना आख्यात इत्यन्तेन। आद्यस्वरयुगम् अकार आकारश्च। सेन्दुखण्डं सानुस्वारम्। एतेन अं आं इति प्राप्तम्। मनुयुत इति। मनुश्चतुर्दशस्वर औकारस्तद्युतो भृगुः सकारः। स च सर्गी विसर्गयुक्तः, एतेन सौः इति लब्धम्। एवञ्च अं आं सौः इति करशोधनमन्त्रः पर्यवस्यति। गन्धर्वतन्त्रेऽष्टमपटलेऽप्ययमेव पुष्पशोधनमन्त्र उक्तः। यथा—

मातृकाद्यं समुद्धृत्य द्वितीयञ्च सबिन्दुकम्।
शान्तान्त-कादिसंयुक्तमैकारान्तान्तयोजितम्।
एवमेषा महाविद्या करशुद्धिकरी मता॥

एवञ्च प्रागुक्त-गन्धर्वतन्त्रवचनपर्यालोचनया सगन्धं रक्तपुष्पं दक्षिणहस्तेनाऽऽदाय

---

1. इतः परं B-पुस्तके 'अङ्गुलीषु द्विरावृत्त्या ततो भूतान्निवारयेत्' इति पादटीकाधृतोऽधिकः पाठो दृश्यते। 2. 'आयु-' A-B. 3. '-स्मृतो' A-B. 4. 'स्वर्गाति-' ? A, 'सगीति' ? B.

[ तत्र मन्त्रः ]

अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया ॥७४॥

[ भौमविघ्नोत्सारणम् ]

दूर्वाक्षतं क्षिपेद्दिक्षु मूलमन्त्रास्त्रमुच्चरेत् ।
ततः कुमारिकां व्योमवह्नि[1]सर्गान्वितां बुधः ॥७५॥
अस्त्राय फट्-पदञ्चैव [2]भूमिश्चामृतया स्पृशन् ।
पार्ष्णिघातत्रयं भूमौ [3]कुर्याद्दक्षेतरस्य च ॥७६॥

[ दिव्यविघ्नोत्सारणम् ]

समुदञ्चितवक्त्रेण दिव्यान् विघ्नान् निवारयेत् ॥७७॥

[ आन्तरिक्षविघ्नोत्सारणम् ]

कुमार्या त्रितयं[4] तालं दद्यादूर्ध्वोर्ध्व योगतः ।
सशब्दं पादहृन्मस्त[5]प्रदेशेषु यथाक्रमम्[6] ॥७८॥

[ दिग्बन्धनं वह्निप्राकारचिन्तनञ्च ]

दशदिग्बन्धनं [7]कृत्वा छोटिकाभिस्तु हस्तयोः ।
वह्निप्राकारकं ध्यायेद्दिक्षु साधकसत्तमः ॥७९॥

---

वामहस्तेन क्लीमिति कामबीजेन निर्मञ्छ्य ऐँ इति वाग्भवेनाऽऽघ्राय फडित्यस्त्रबीजेन पैशान्यां निक्षिपेदिति करशोधनक्रमः प्रतीयते । निरुक्तकरशुद्धेः फलमाह तत्रैव—

अङ्गुल्यग्राणि शुद्धानि पुष्पस्य ग्रहणाद् भवेत् ।
मर्दनात् करयोः शुद्धिर्निर्मञ्छनात्तु पृष्ठयोः ।
घ्राणाद्देवाश्च तुष्यन्ति तीर्थानाञ्च समागमः ।
प्रक्षेपात् सर्वविघ्नानां दूरसंस्थानमेव च ।
दुर्गन्धोत्सृष्टसंस्पर्शदूषणं करयोस्तु यत् ।
अज्ञातरूपं तत् सर्वं नाशयेद् विधिनाऽमुना ॥ इति ।

७९ । छोटिकाभिरिति । छोटिका तर्जन्यङ्गुष्ठाङ्गुलिध्वनिः ।

---

1. 'स्वर्गा-' A-B. 2. 'भूमिं त्व-' C ; 'भूमिश्चामृतमा-' B. 3. 'दद्या-' C. 4. 'त्रितयं' C. 5. '-न्मन्त्रं' ? -B. 6. '-क्रमात्' A-B. 7. 'कुर्यात्' C.

[ दिग्बन्धनमन्त्रः ]

ऐन्द्रीं चक्रेण बध्नामि[1] [2]नमश्चक्राय ठ-द्वयम् ।
मन्त्रेणानेन कुर्वीत दिशां प्रागादिबन्धनम् ॥८०॥

[ दिग्बन्धने प्रयोज्याऽस्त्रमुद्रा ]

आच्छाद्य दिक्षु तर्जन्या ज्येष्ठाग्रस्तनिताग्रया[3] ।
अस्त्रमुद्रेयमाख्याता दिशां प्रागादिबन्धने ॥८१॥

[ वह्निप्राकारमन्त्रः ]

त्रैलोक्यं रक्ष रक्षेति हुं फट् स्वाहेति कीर्त्तितः ।
तारादि[4]कोऽयं मन्त्रः स्यादग्नि[5]प्राकारसंज्ञकः ॥८२॥

[ अस्त्रमुद्रा ]

त्रिशूलाग्रौ[6] करौ कृत्वा व्यत्यस्तावभितो नयेत् ।
अस्त्रमुद्रेयमाख्याता वह्निप्राकारलक्षणा ।
परद्रोहोपशमनी [7]नागाशनिभयापहा ॥८३॥

---

८० । पूर्वं दशदिग्बन्धनं कृत्वेत्युक्तम्, तत्र मन्त्रमाह ऐन्द्रीमित्यादिना । तथा च ऐन्द्रीं चक्रेण बध्नामि नमश्चक्राय स्वाहेति दिग्बन्धनमन्त्रः ।

८१ । निरुक्तदिग्बन्धने प्रयोज्यामस्त्रमुद्रामाह—आच्छाद्येत्यादिना । ज्येष्ठाग्रस्तनिताग्रया ज्येष्ठाया अग्रे स्तनितमग्रं यस्यास्तथाभूतया तर्जन्या दिक्षु आच्छाद्य बन्धनं कुर्वीत । दिशां प्रागादिबन्धने इयमस्त्रमुद्रा ख्यातेति सम्बन्धः । एवञ्च पूर्वं यत् छोटिकाभिस्तु हस्तयोरित्युक्तं तत्राप्येतदस्त्रमुद्रकृतच्छोटिकाभिरित्यर्थो बोध्यः ।

८२ । पूर्वं वह्निप्राकारकं ध्यायेदित्युक्तम्, तत्र मन्त्रमाह—त्रैलोक्यमित्यादिना । तारादिकः प्रणवाद्यः । तथा च ॐ त्रैलोक्यं रक्ष रक्ष हुँ फट् स्वाहेति अग्निप्राकारमन्त्रः । एतन्मन्त्रोच्चारणपूर्वकमग्निप्राकारं चिन्तयेदिति तात्पर्यम् ।

८३ । वह्निप्राकारस्वरूपनिरूपणायास्त्रमुद्रामाह—त्रिशूलेति । उभावेव करौ त्रिशूलाग्रौ त्रिशूलवत् अग्रं ययोस्तथाभूतौ कृत्वा, एतेन हस्तयोस्तर्जनीमध्यमानामिका-

---

1. '-ति' A-B. 2. 'मन-' A-B. 3. '-मूलादितारका' A-B. 4. '-कोर्णं' A. 5. '-प्रकार-' C. 6. '-लाभौ' B. 7. 'नानाशक्तिभयावहा' ? A-B.

[ जपविघ्नापनोदनम् ]

अद्भिः पुष्पाक्षतैश्चैव वह्निबीजास्त्र[1]मन्त्रितैः ।
प्रक्षिपेत् प्रयतो मन्त्री [2]जपविघ्नापनुत्तये ॥८४॥

[ ब्रह्म-वास्तुपुरुषयोरर्चा ]

नैरृत्यां वास्तुपुरुषान् ब्रह्माणञ्च ततो यजेत् ।

[ त्रिकोणमण्डलम् ]

भूमौ त्रिकोणमालिख्याऽऽधारशक्त्यादिपूजनम् ॥८५॥

[ तत्राऽऽसनस्थापनम् ]

मनोहरमृदुश्लक्ष्णमासनं तत्र निक्षिपेत् ।
आसनञ्चार्घ्यपात्रञ्च भग्नमेव विवर्जयेत् ॥८६॥

[ आसनारोपणे ऋष्यादि ]

मेरुपृष्ठ ऋषिः प्रोक्तः सुतलं छन्द ईरितम् ।
कूर्मोऽत्र देवता प्रोक्ता आसना[3]रोपणे ततः ॥८७॥
विनियोगस्तु कथित-

[ प्रार्थनमन्त्रः ]

स्ततो धृत्वा पठेदिमम् ।
पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वञ्च धारय मां नित्यं पवित्रं कुरु चासनम् ॥८८॥

---

त्रिशूलाग्रवदूर्ध्वं विस्फार्येत्युक्तं भवति । तादृशौ करौ व्यत्यस्तौ विपरीतौ अभितो नयेत् एकहस्तस्य निरुक्ताङ्गुलित्रयान्तरालेनापरहस्तस्य निरुक्तमङ्गुलित्रयं प्रवेशयेदित्यर्थः । इयं वह्निप्राकारलक्षणाऽस्त्रमुद्रा । यथा परे वह्निप्राकारमतिक्रम्य पुरमभिद्रोग्धुं न क्षमन्ते तथैतन्मुद्राविरचनशीलं साधकं साधनद्वेषिणो भूतहिंसादयो लेशतोऽपि नेशते हिंसितुमिति तात्पर्यम् । एतदेव फलाभिधानमुखेनाह—परेत्यादिना ।

८४ । अद्भिरिति । वह्निबीजास्त्रमन्त्रितैः रं फट् इत्यनेन मन्त्रेण मन्त्रितैरित्यर्थः ।

---

1. 'मण्डितैः' A-B. 2. 'जपादिप्रतिपत्तये' A-B. 3. '-नि प्रकल्पयेत्' A.

[ आसनार्चनमन्त्रः ]

[1]कूर्चत्रयं तत्र दत्त्वा मायाबीजं ततो वदेत् ।
आधारशक्तिशब्दान्ते कमलासनमालिखेत् ।
ङेऽन्तं नम-पदं दत्त्वा [2]स्वासनं परिपूजयेत् ॥८९॥

[ मन्त्राचमनम् ]

यथोक्तविधिनाचम्य त्रिभिः कूटैर्यथाविधि ।

[ आसनारोहणं गुरुपङ्क्तिपूजा च ]

[3]तद्धि चासनमारुह्य गुरुपूजां समा[4]चरेत् ॥९०॥

---

८९। कूर्चेति। कूर्चत्रयं पञ्चमप्रकाशोक्तं [ ३२ श्लो० ] पारिभाषिककूर्चाख्य-कुशत्रयम्। अत्रासने कुशस्थापनं श्यामारहस्यधृतस्वतन्त्रतन्त्रेऽप्युक्तम्, यथा—

इति धृत्वा तु देवेशि कुशांस्तत्रैव दापयेत् ।
मायाबीजं समुच्चार्य आधारशक्तिमुच्चरेत् ।
कमलासनमालिख्य ङेनमोऽन्तं प्रपूजयेत् ॥ इति ।

मायाबीजमित्यादि। तथा च ह्रीं आधारशक्तिकमलासनाय नम इत्यासनपूजा-मन्त्रः पर्यवस्यति। तन्त्रसारकारस्तु ऐँ ह्रीं श्रीमिति बीजत्रयपूर्वकमेतन्मन्त्रमाह। निरुक्तासनशुद्धेः फलमाह गन्धर्वतन्त्रे सप्तमपटले—

दुःशिल्पिरचितत्वादि यदन्यासनदूषणम् ।
अज्ञातरूपकं याति विलयं विधिना प्रिये ॥ इति ।

९०। त्रिभिः कूटैः ऐँ क्लीं सौरिति बालाकूटत्रयेण। श्रीविद्यामधिकृत्य बालाबीजैस्त्रिभिः पीत्वेत्यादिभैरवतन्त्रवचनदर्शनात्।

प्रथमं वाग्भवं देवि कामराजं द्वितीयकम् ।
तृतीयं शक्तिबीजन्तु शिवयुक्तं सदा भवेत् ॥

इति हरतत्त्वदीधितिधृतरुद्रयामलवचने निरुक्तबालामन्त्रस्य कूटत्रयात्मकत्वश्रवणाच्च। अयमाचमनक्रमस्तु पञ्चमप्रकाशीयपञ्चविंशश्लोकटीकायां स्फुटमुपपादितः। गुरु-पूजां समाचरेदिति। अत्र पूजा प्रणामरूपा वक्ष्यमाणा। व्यक्तमाह गन्धर्वतन्त्रे सप्तमपटले—

---

1. 'कुश-' C. 2. 'आसनं' A-B. 3. 'तन्वाचमनमन्त्रेण' A-B. 4. '-रभेत्' A-B.

वामक[1]र्णोर्द्ध्व देशे तु संपूर्णे शशिमण्डले ।
दक्षकर्णोर्द्ध्व भागे तु गणेशं पूजयेत्ततः ।
मस्तकोपरिभागे तु दुर्गां देवीं स्मरेत्ततः[2] ॥६१॥

[ तत्र साधकस्य वेशादिपारिपाट्यम् ]

[3]रक्तचन्दनसंयुक्तो रक्तमाल्येन संवृतः ।
ताम्बूलरागवदनो रक्ताम्बरविराजितः ॥ ६२ ॥
[4]कर्पूरक्षोददिग्धाङ्गः कारणानन्दमानसः ।
कर्पूरसकलोन्मिश्रधूपदीपैर्विराजितः ॥ ६३ ॥
नानारक्तसमायुक्तो लाक्षारुणगृहे स्थितः ।
मनःसङ्कल्परक्तो वा साधकः स्थिरमानसः ॥ ६४ ॥

[ आत्मरक्षा ]

बालामन्त्रेण वा तस्या आद्यशेषेण वा सुधीः ।
[5]वक्ष्यमाणक्रमेणैव त्रिपुरसुन्दरि शब्दतः ॥ ६५ ॥
आत्मानं रक्ष रक्षेति हृदि हस्तं निधाय च ।
कृत्वात्मरक्षणं मन्त्री

[ करशुद्धिः ]

करशुद्धिं समाचरेत् ॥६६॥

---

कृताञ्जलिपुटो भूत्वा मन्दस्मितमुखाम्बुजः ।
वामकर्णोर्द्ध्वभागे तु गुरुञ्च प्रणमेत् ततः ॥
दक्षकर्णोर्द्ध्वभागे तु गणेशं प्रणमेद् बुधः ।
दुर्गां नमेत् पुरोभागे पृष्ठतः क्षेत्रनायकम् ॥ इति ।

६२-६४ । कीदृशः साधको गुरुप्रणामादीनि कर्माणि कुर्यादित्याह—रक्तेत्यादि ।

६५-६६ । अथाऽऽत्मरक्षाक्रममाह—बालेत्यादिना कृत्वात्मरक्षणमित्यन्तेन ।

---

1. 'वामकर्णस्योर्द्ध्व देशे' C. 2. '-द्बुधः' C. 3. अत्र 'रक्तालङ्कारसंयुक्तो रक्तमालाविभूषितः' इति B-पुस्तकटिप्पनीधृतं पाठान्तरम् । 4. 'कर्पूरक्षोदे'त्यादिपादचतुष्टयं A-पुस्तके नास्ति ।
5. 'वक्ष्यमाणे'त्यादिपादाष्टकं A-पुस्तके नास्ति ।

पूर्वोक्तेनैव मन्त्रेण द्विरावृत्त्याऽथवा सुधीः।
बालाबीजत्रयादूर्द्ध्वं ततस्त्रिपुरसुन्दरि ॥ ६७ ॥
नम [1]इत्यनुनाऽङ्गुष्ठाद्यङ्गुलिभ्यां नमोऽन्तिकाः।
[2]न्यस्तव्या नाममन्त्राढ्यास्तलपृष्ठक्रमावधि ॥ ६८ ॥

---

बालामन्त्रेण ऐँ क्लीँ सौः इत्यनेन। तस्या बालाया आद्यशेषेण आद्यावशिष्टेन क्लीँ सौः इत्यनेन वेत्यर्थः। एवञ्च हृदये हस्तं दत्वा ऐँ क्लीं सौरित्यनन्तरं क्लीं सौरित्यनन्तरं वा त्रिपुरसुन्दरि आत्मानं रक्ष रक्षेति समुच्चरेदित्यात्मरक्षाक्रमः। त्रिपुरार्चनरहस्ये तु ऐं क्लीं सौः त्रिपुरेश्वरि मां रक्ष रक्षेति प्रयोगो दृश्यते।

६६-६८। अथ करशुद्धिक्रममाह—करशुद्धिमित्यादिना। पूर्वोक्तेन आद्यस्वरयुगं सेन्दुखण्डं मनुयुतो भृगुः। सर्गीति मनुराख्यातः [ १५।७१ ] इति वचनप्राप्तेन अं आं सौः इति मन्त्रेणैव द्विरावृत्त्या करशुद्धिं कुर्यादिति सम्बन्धः।

अत्रैतदवधेयम्—इयं करशुद्धिः करन्यासरूपा, अवसरप्राप्तत्वादितः परमेवाङ्गन्यासस्य वक्ष्यमाणत्वात् तन्त्रसारादिषु तथैव प्रतिपादितत्वाच्च। अत्र अं आं सौरिति बीजत्रयात्मकमन्त्रस्य द्विरावृत्त्या षडक्षरलाभात् अङ्गुष्ठादिकरतलपृष्ठान्तेष्वेकैकबीजयोग उक्तः। तथा चात्र कल्पे अं त्रिपुरसुन्दरि अङ्गुष्ठाभ्यां नमः। आं त्रिपुरसुन्दरि तर्जनीभ्यां नमः। सौः त्रिपुरसुन्दरि मध्यमाभ्यां नमः। अं त्रिपुरसुन्दरि अनामिकाभ्यां नमः। आं त्रिपुरसुन्दरि कनिष्ठाभ्यां नमः। सौः त्रिपुरसुन्दरि करतलपृष्ठाभ्यां नमः। इति प्रयोगः पर्यवस्यति। द्वितीयं कल्पमाह—अथवेत्यादिना। अत्रापि द्विरावृत्त्येति सम्बध्यते बाधकाभावात् मूलविद्याद्विरावृत्त्येत्यादिवक्ष्यमाणगन्धर्वतन्त्रद्वितीयपटलवचनस्वरसाच्च। तथा च ऐँ त्रिपुरसुन्दरि अङ्गुष्ठाभ्यां नमः, क्लीँ त्रिपुरसुन्दरि तर्जनीभ्यां नमः, सौः त्रिपुरसुन्दरि मध्यमाभ्यां नमः, ततश्च ऐँ त्रिपुरसुन्दरि अनामिकाभ्यां नमः।—इत्यादिरूपः प्रयोगः कर्त्तव्यः। तन्त्रसारे तु श्रीविद्याप्रकरणे अनयोः प्रथम एव क्रमोऽन्यादृशरीत्या प्रदर्शितो यथा—

एतद्बीजं द्विरावृत्त्या मध्यमाद्यङ्गुलीषु च।
शुद्धिं करस्य कुर्वीत तलयोः पृष्ठयोरपि।
चतुर्थीनतिसंयुक्तनाममन्त्रैः पृथक् पृथक् ॥ इति।

एतेन प्रथमतोऽनामिकादिकरतलपृष्ठान्तं ततोऽङ्गुष्ठादिमध्यमान्तं करन्यासमाह।

---

1. 'इत्यमुनाऽभ्यर्च्य' A-B. 2. 'न्यस्तव्या' इत्यादिपादचतुष्टयं A-पुस्तके नास्ति।

[ बालामन्त्रः ]

**वाक् कामं शम्भुपूर्वन्तु[1] शक्रस्वरविसर्गवत् ।**

[ अङ्गन्यासः ]

**अनया बालया मन्त्री षडङ्गन्तु समाचरेत् ॥ ६६ ॥**

---

एतन्मते त्रिपुरसुन्दरिपदस्योल्लेखो न विहितः । एतत्प्रमाणानुसारेणैव तन्त्रसारकारैः अं अङ्गुष्ठाभ्यां नमः । आं तर्जनीभ्यां नमः । सौः कनिष्ठाभ्यां नमः । अं अङ्गुष्ठाभ्यां नमः ।—इत्येवं प्रयोगक्रमः प्रदर्शितः । त्रिपुरार्चनरहस्येऽप्ययमेव क्रमो दृश्यते, परन्तु तत्र निरुक्तनमोऽन्तत्वमनादृत्य अं मध्यमाभ्यां वषट् आं अनामिकाभ्यां हुँ, सौः कनिष्ठाभ्यां वौषट्, अं अङ्गुष्ठाभ्यां नम इत्यादिप्रयोग इति विशेषः । गन्धर्वतन्त्रे नवमपटले तु—

मूलविद्याद्विरावृत्त्या सर्वाङ्गुलितलेषु च ।
ङेऽन्तेषु परमेशानि न्यसेदङ्गानि षट् क्रमात् ।
नमः स्वाहा वषड् वौषट् हुँ फडिति षडङ्गकम् ।
करयोरथ विन्यस्य षडङ्गेषु तथा न्यसेत् ।

इत्यनेन करन्यासे प्रागुक्तनमोऽन्तत्वमनङ्गीकृत्य नमः स्वाहा वौषडाद्यन्तत्वमुक्तमिति प्रकारान्तरं दृश्यते । अत्र गन्धर्वतन्त्रवचने मूलविद्याद्विरावृत्त्येत्यस्यायमभिप्रायः—हर-तत्त्वदीधितिधृतविश्वसारतन्त्रे द्वितीयपटले—

यस्य लोकस्य यं मन्त्रं दद्याच्च विधिना गुरुः ।
तन्मूलमन्त्रं विज्ञेयं सर्वतन्त्रसमन्वितम् ॥

इति मूलविद्यालक्षणं कृतम् । एवञ्च प्रागुक्तगन्धर्वतन्त्रवचने मूलविद्याद्विरावृत्त्येत्यनेन न केवलं श्रीतत्त्वचिन्तामण्युक्तबालाबीजमात्रमभिप्रेतम्, परन्तु प्रागुक्तासु सर्वास्वेव त्रिकूटात्मकविद्यासु श्रीगुरुदत्त-स्वस्वेष्टमन्त्राणां संग्रह इति बोध्यम् । स्वयमप्येतदङ्गन्यास-निरूपणावसरे व्यक्तीकरिष्यति ग्रन्थकारः । एवञ्चात्र बहुधा मतभेददर्शनात् स्वस्वगुरु-सम्प्रदायानुसारेणैकतमः क्रमः समादरणीय इति दिक् ।

६६ । ननु पूर्वं करन्यासे बालामन्त्रेणेत्युक्तम् । अङ्गन्यासेऽपि बालाबीजपूर्वकत्वं वक्ष्यति तत् किमिदं बालाबीजं नामेत्यत आह—वागिति । वाक् वाग्भवबीजं ऐँ, कामं कामबीजं क्लीं, शम्भुपूर्वं शम्भुर्हकारस्तत्पूर्वं सकारः, तच्च शम्भुपूर्वं शक्रस्वरविसर्गवत् शक्रस्वरश्चतुर्दशस्वर औकारः विसर्गश्च । शक्रस्वरविसर्गवदिति शम्भुपूर्वमित्यस्य विशेषणम् । एवञ्च ऐँ क्लीँ सौरिति बालाविद्येति फलितम् । अनयेति निरुक्तया बालाविद्ययेत्यर्थः ।

---

1. '-ञ्च' C.

अस्यास्त्रिबीजमुच्चार्य मन्त्री त्रिपुरसुन्दरि ।
नम इत्यादितो[1] वाच्यं षडङ्गानि ततः परम् ॥ १०० ॥

[ तत्र क्रमान्तरम् ]

वक्ष्यमाणक्रमान्मूलद्विरावृत्त्याऽथवा पुनः[2] ।
हृदयाय नमः पूर्वं[3] शिरसे वह्निवल्लभा ॥ १०१ ॥
शिखायै वषडित्युक्तं कवचाय हूमोरितम् ।
नेत्रत्रयाय वौषट् स्या[4]दस्त्राय फट् प्रकीर्त्तितम् ॥ १०२ ॥

[ तत्राङ्गुलिनियमः ]

तर्जनीमध्यमानामाङ्गुलिभिस्तिसृभिर्न्यसेत् ।
तर्जनीमध्यमाभ्याञ्च ततोऽङ्गुष्ठेन मन्त्रवित् ।

१०० । अत्राङ्गन्यासेऽपि क्रमद्वयमभिदधानः प्रथममाह—अस्या इत्यादिना । अस्या बालायाः । त्रिबीजं ऐँ क्लीं सौरिति । ततस्त्रिपुरसुन्दरीति । ततो नम इत्यतः पूर्वं हृदयादीनि षडङ्गानि प्रयुञ्जीतेति शेषः । एवञ्च ऐँ क्लीं सौः त्रिपुरसुन्दरि हृदयाय नमः, ऐँ क्लीं सौः त्रिपुरसुन्दरि शिरसे नमः इत्येवं रीत्या सर्वत्र बालादिनमोऽन्तोऽयं न्यासः ।

१०१-१०२ । क्रमान्तरमाह—वक्ष्यमाणेत्यादिना । अथवेति पक्षान्तरसूचनाय । वक्ष्यमाणक्रमाद् हृदयाय नम इत्यादिक्रमादित्यर्थः । मूलेति । मूलस्य उपास्यमन्त्रस्य द्विरावृत्त्या अनेन त्रिकूटात्मकविद्यानां द्विगुणीकरणेन षट्संख्यानिर्वाहात् हृदयादिषडङ्गेषु षण्णां योजनमुपपद्यते । एवञ्च प्रथमं वाग्भवकूटं ततो हृदयाय नमः, ततः कामराजकूटानन्तरं त्रिपुरसुन्दरि शिरसे स्वाहा । ततः शक्तिकूटानन्तरं शिखायै वषट् पुनर्वाग्भवानन्तरं कवचाय हूँ, पुनः कामराजकूटानन्तरं नेत्रत्रयाय वौषट्, पुनः शक्तिकूटानन्तरं करतलपृष्ठाभ्यां फडिति क्रमः । वह्निवल्लभा स्वाहा ।

१०३ । तत्राङ्गुलिनियममाह—तर्जनीत्यादिना । अयमङ्गुलिनियमश्च पूर्वोद्दिष्टहृदयादिक्रमेण बोध्यः । तथा च तर्जनीमध्यमानामाभिर्हृदये न्यसेत्, एवं तर्जनी-

1. 'बाह्यं' A ; 'वाद्यं' C. 2. 'बुधः' C. 3. 'प्रोक्तं' C. 4. 'अस्त्रायेत्यतः पूर्ववदित्यन्तोऽशः' A-पुस्तके नास्ति ।

दशकाङ्गुलिभिः पश्चात्त्रिभिर्द्वाभ्याश्च पूर्ववत् ।

[ संकल्पः ]

देवताप्रीतये चाऽऽदौ संकल्पेत् प्रागुदङ्मुखः ॥ १०३ ॥

[ भूतशुद्धिः ]

भूतशुद्धिं ततः कुर्यात् स्थिरचि[1]त्तश्च साधकः ।

[ तत्र क्रमः ]

विनिधाय निजाङ्के तु [2]समुत्तानौ करौ स्वयम् ॥ १०४ ॥

---

मध्यमाभ्यां शिरः अङ्गुष्ठेन शिखाम् । एवं क्रमेणान्येष्वपि । व्यक्तमाह गन्धर्वतन्त्रे प्रथमपटले—

हृदयं मध्यमानामातर्जनीभिः स्मृतं शिरः ।
मध्यमातर्जनीभ्यां स्यादङ्गुष्ठेन शिखा प्रिये ।
दशभिः कवचं प्रोक्तं तिसृभिर्नेत्रमीरितम् ।
तथैवोक्ताङ्गुलिभ्याश्च सशब्दमस्त्रमीरितम् ॥ इति ।

अङ्गन्यासाननुष्ठाने दोषमाह तत्रैव—

पूजा तपोऽर्चना होमः सिद्धमन्त्रकृता अपि ।
अङ्गविन्यासविधुरा न दास्यन्ति फलान्यमी ॥ इति ।
१०४ । भूतशुद्धिविहीनेन कृता पूजाऽभिचारवत् ।
विपरीतं फलं दद्यादभक्त्या पूजनं यथा ॥

इति हरतत्त्वदीधितिधृतागस्त्यसंहितावचनेन,

भूतशुद्धिं विना कर्म जपहोमार्चनादिकम् ।
तावत्तद् विफलं सर्वं प्रकाशेनाप्यनुष्ठितम् ॥
भूतशुद्धिं विना यस्तु न्यासपूजां करोति हि ।
न्यासजालं वृथा तस्य पूजा सा विफला भवेत् ॥
तस्मात्तु साधकश्रेष्ठो भूतशुद्धिं समाचरेत् ।

इति कौलावलीनिर्णयद्वितीयपटलवचनेन च भूतशुद्धेर्नित्यत्वाभिधानात् अनन्तरकरणीयां भूतशुद्धिमुपदिशति--भूतशुद्धिं ततः कुर्यादित्यादिना । स्थिरचित्त इति चञ्चलचित्तस्य तदनुष्ठानासम्भवादित्यर्थः । निजाङ्के स्वक्रोडदेशे ।

---

1. '-त्तः सु-' C. 2. 'समुत्तानकरः' A-B.

मूलाधारे मूल[1]विद्या-स्वरूपां कुलकुण्डलीम् ।
प्रसुप्तभुजगाकारां सार्द्धत्रिवलयान्विताम् ॥ १०५ ॥
नीवारशूकवत् तन्वीं सर्वदेवस्वरूपिणीम् ।
विद्युत्कोटिप्रतीकाशां स्वयम्भूलिङ्गवेष्टिनीम् ॥ १०६ ॥
ध्यात्वा [2]तां हंसमन्त्रेण प्रणवेनाथ [3]वा सुधीः ।
कूर्चबीजेन वा देवीं [4]दृढं [5]विद्रावयेद् बुधः ॥ १०७ ॥
एकीभावं तयोः कृत्वा जीवात्म-परमात्मनोः ।
विचिन्त्य शून्यं परमं पार्थिवांशं जले गतम् ॥ १०८ ॥

---

१०५-१०६ । मूलाधार इति । स्वयम्भूलिङ्गस्य कुण्डलिन्याश्च स्वरूपं षष्ठे प्रकाशे [ १०-१२ श्लो० ] विशिष्याभिहितपूर्वमिति नात्र पुनरुक्तौ रुचिं निबध्नीमः ।

१०७ । ध्यात्वेति । निरुक्तरूपां कुण्डलिनीं ध्यात्वेत्यर्थः । हंसः इति मन्त्रेण, प्रणवेन, हूँ इति कूर्चबीजेन वा तां देवीं प्रसुप्तभुजगाकारां दृढं विद्रावयेत् प्रबोधयेदित्यर्थः ।

येन मार्गेण गन्तव्यं ब्रह्मद्वारं निरामयम् ।
मुखेनाऽऽच्छाद्य तद् द्वारं प्रसुप्ता परमेश्वरी ॥

इति शाक्तानन्दतरङ्गिणीचतुर्थोल्लासवचनेन प्रसुप्तत्वाभिधानात् तस्याः प्रबोधनमुपदिष्टं विद्रावयेदित्यनेन । व्यक्तमाह पिच्छिलातन्त्रे त्रयोदशपटले—

हंसेन मनुना देवि कूर्चबीजेन वा प्रिये ।
तां चैतन्यवतीं कृत्वा पृथिव्या सार्द्धमानयेत् ॥ इति ।

१०८ । ततः करणीयमाह एकीभावमित्यादिना । तयोः प्रसिद्धयोर्जीवात्म-परमात्मनोः अनाहतावस्थितस्य जीवात्मनः परमात्मस्वरूपायाः कुण्डलिन्याश्चेत्यर्थः । एकीभावं कृत्वा अनयोरभेदं विचिन्त्येत्यर्थः । हंसमन्त्रेण जीवात्मानमनाहतकमल-कर्णिकान्तरालस्थं मूलाधारकमलकर्णिकान्तरालस्थायां परमात्मस्वरूपायां कुण्डलिन्यां नीत्वा तयोरेकीभावं विचिन्त्येत्यर्थः । विवृतमेतदस्माभिः षष्ठप्रकाशे 'हुङ्कारेणैव देवीम्' इत्याद्येकपञ्चाशश्लोकटीकायाम्—'हृदयाद्धंसमनुना नीत्वा जीवं मुखाम्बुजे'

---

1. '-विद्यां' C. 2. 'तु' A-B. 3. 'साधकः' C. 4. 'दृढां' A-B. 5. 'निद्रा-' A-B.

जलञ्च तेजसाकृष्टं तेजोरूपं विचिन्तयेत् ।
[1]निर्वाणं [2]वायुना वह्निं [3]वायुरूपं विभावयेत् ॥ १०९ ॥
आकाशेनाऽऽहृतं वायुं खं वै मनसि लीयते ।
मनोऽहङ्कारवशगं महत्त्वे महताहृतम् ॥ ११० ॥
[4]प्रकृतौ च महत्तत्त्वं [5]प्रकृतिं चिन्तयेदथ ।
[6]प्रकाशरूपिणीं[7] [8]नित्यां ब्रह्मविद्यास्वरूपिणी[9]म् ॥ १११ ॥

[ सप्रकृतिकायाः कुण्डलिन्याः परशिवे गमनम् ]

कैवल्या केवला शान्ता निर्गुणा परमात्मिका ।
[10]सैषा च [11]परमे याति

[ परमशिवस्वरूपम् ]

परमञ्च निरामयम् ।
सहस्रदलमध्यस्थं शून्यरूपं परं पदम् ॥ ११२ ॥

---

इत्यादिना । पार्थिवांशमिति । अत्रेदमवधेयम्—मूलाधारादीनि विशुद्धान्तानि पञ्च पद्मानि क्रमेण क्षित्यप्तेजोमरुद्व्योमरूपस्य भूतपञ्चकस्य स्थानानि । षष्ठञ्चाऽऽज्ञापद्मं मनसः । तत्र च निरुक्तरूपां कुण्डलिनीं पृथिव्या सह स्वाधिष्ठानपद्मे नीत्वा पृथिवीं तत्र स्थिते जले विलीनां विचिन्त्य तज्जलेन सह कुण्डलिनीं मणिपूराख्ये पद्मे नीत्वा तज्जलं तत्र स्थिते तेजसि विलीनं विभाव्य पुनस्तेन तेजसा सह कुण्डलिनीमनाहतपद्मे समुन्नीय तत्तेजस्तत्रत्ये वायौ विलाप्य पुनश्च तेन वायुना समं कुण्डलिनीं विशुद्धाख्ये पद्मे समुत्थाप्य तं वायुं तत्रावस्थिते व्योम्नि विलापयेत् । ततश्च तां तेन व्योम्ना सह आज्ञाचक्रस्थिते मनसि नीत्वा तद् व्योम तत्र विलीनं विचिन्त्य जीवात्मसहितया तया सह मनोऽहङ्कारेऽहङ्कारञ्च महत्तत्त्वे महत्तत्त्वञ्च प्रकृतौ विलापयेदिति विलापनक्रमः पर्यवस्यति । विशेषस्तु षष्ठप्रकाश-[५१—५३ श्लो०]-टीकायां द्रष्टव्यः ।

१११ । प्रकृतिमिति । अथ प्रकृतौ महत्तत्त्वविलापनानन्तरं प्रकृतिं प्रकाशस्वरूपां नित्यां ब्रह्मविद्यास्वरूपिणीञ्च चिन्तयेत् प्रकाशादिस्वारूप्यवत्कुण्डलिन्यभिन्नरूपत्वादिति भावः ।

११२ । अथ जीवात्मकुण्डलिनीसहितायाः प्रकृतेः परमशिवे समुन्नयनमाह

---

1. 'निर्वाणमि'त्यादिपादद्वयं A-पुस्तके नास्ति । 2. 'वामना ?' C. 3. 'रात्रिरूपं' C. 4. 'प्रकृत्या' C. 5. 'प्राकृतं' A-B. 6. 'आकाश-' A-B. 7. '-णी' C. 8. 'नित्या' C. 9. '-णी' C. 10. 'सोमा' A. 'परमायेति' C.

[ तस्य परबिन्दुस्वरूपत्वम् ]

शून्यश्च प्रतिविम्बचन्द्रसदृशं सूक्ष्मातिसूक्ष्मं [1]पदं
सर्वं[2] व्याप्य तमोमयन्तु विदितं [3]शून्ये प्रकाशं परम्।
दृश्यादृश्य-विवादभागसकलं ज्योतिर्मयं सर्वतो
ज्ञात्वा तत् पदकन्तु साधकवरैर्दूरीकृतश्चान्तकः ॥११३॥
नाभिदेशे तु यं-कारं पूर्वं [4]वायुं विचिन्तयेत्।
तेनैव शोषयेल्लिङ्गं तत्त्वं षोडशमात्रया ॥ ११४ ॥

---

कैवल्येत्यादिना। सैवेति। उक्तलक्षणा सा कुण्डलिनी एवा प्रकृतिश्च। एतेन कुण्डलिनीप्रकृत्योरभिन्नरूपता सूचिता। परमे—शिरःस्थितसहस्रदलकमलकर्णिकान्तरालस्थ-चन्द्रमण्डलमध्यगत्रिकोणान्तर्वर्त्तिनि परमशिवे याति इत्यर्थः।

अथ परमशिवस्य स्वरूपं निरूपयति परमश्चेत्यादिना। निरामयं जन्मजरामरणादिनिखिलदुःखविनिर्मुक्तं परं शून्यरूपं परबिन्दुस्वरूपं परब्रह्मात्मकं पदमित्यर्थः। तदुक्तं षष्ठप्रकाशे—'तदन्तःशून्यं तत् सकलसुरगणैः सेवितश्चातिगुह्यम्' [४२ श्लो०] इत्यादिना।

११३। निरुक्तशून्यं विशिनष्टि शून्यश्चेति। एतच्च षष्ठप्रकाशेऽर्थादुक्तमिति न पुनर्व्याख्यायते।

११४। एवं परमात्मनि परमशिवे कुण्डलिनीयोगपर्यन्तमभिधाय प्राणायाममुपदिशति—नाभीत्यादिना। नाभिदेशे पूर्वं पूरकं वायुं यमिति वायुबीजं विचिन्तयेदित्यर्थः। अत्र पूर्वमिति पूर्व-पर्व-मर्व-पूरणे इत्यनेनोक्तस्य पूर्वधातो रूपम्। पूर्वति पूरयतीति पूर्वं पूरकमिति तदर्थः। इतः परं कुम्भकरेचकयोरभिधास्यमानत्वादत्र पूर्वशब्दस्य पूरकमित्येवार्थः। तेनैवेति प्रागुक्तवायुबीजेनैव लिङ्गं तत्त्वं लिङ्गशरीरं शोषयेत्। अत्र शोषणादिकं वामकुक्षिस्थितपापपुरुषसहकृतस्यैव लिङ्गशरीरस्येति बोध्यम्। ज्ञानार्णवे द्वितीयपटले—

वामकुक्षिस्थितं पापपुरुषं कज्जलप्रभम्

इत्यादि-पापपुरुषस्वरूपनिरूपणानन्तरम्—

शोषयेद् वायुबीजेन देहञ्च परमेश्वरि।
पापेन सहितं शुष्कं कृत्वा तेन क्रमेण हि।
वह्निबीजेन संदग्धं पापेन सहितं शिवे॥

---

1. 'परम्' C. 2. 'सर्व-'C, 'सर्वां' A. 3. 'शून्यं' B. 4. 'वामं' ? C.

[1]कामात्मकं चतुःषष्ट्या कुम्भकञ्च समाचरेत् ।
द्वात्रिंशन्मात्रया दक्षे रेचयेत्तेन वै ततः ॥ ११५ ॥
रक्तवर्णं [2]वह्निबीजं [3]मेढ्रमूले विचिन्तयेत् ।
[4]सवासनात्मकं लिङ्गं शरीरं तेन दाहयेत् ॥ ११६ ॥
[5]पूर्वोक्तक्रमयोगेण दक्षनासाक्रमेण तु ।
देशिकश्च तथा संख्यां वामहस्तेन कल्पयेत् ॥ ११७ ॥

---

इत्यादिना तथा व्यक्तमभिधानात्, तन्त्रसारादौ तथा दर्शनात्, श्यामारहस्ये ग्रन्थकृता पापपुरुषेण सह शरीरं संशोष्येति स्वयमेवाभिहितत्वाच्च । यत्तु गुप्तसाधनतन्त्रे षष्ठपटले—

वामकुक्षौ स्थितं पापं पुरुषं कज्जलप्रभम् ।
तस्य संहरणार्थाय महती प्रकटी कृता ।
लिङ्गदेहो महेशानि तस्य देहो न संशयः ।
पापदेहं भवेद्दग्धं स्वदेहं नैव नाशयेत् ।

इत्यादिना पापपुरुषस्यैव लिङ्गशरीरत्वं तस्यैव च शोषणादिकमभिहितम्, तत् क्रमान्तरमिति ध्येयम् । षोडशमात्रयेति । मात्रालक्षणमाह फेत्कारिणीतन्त्रे तृतीयपटले—

जानू प्रदक्षिणीकृत्य न द्रुतं न विलम्बितम् ।
क्रियते चाङ्गुलिस्फोटः सा मात्रा परिकीर्त्तिता ॥ इति ।

११५ । कामात्मकमिति । कामात्मकं वासनात्मकं लिङ्गं शोषयेदिति पूर्वेण सम्बन्धः । अनेन वासनात्मकलिङ्गशोषणादेर्वासनानामप्युच्छेदो भवतीति सूचितम् । चतुःषष्ट्येति, निरुक्तवायुबीजस्य चतुःषष्टिवारजपेन कुम्भकं समाचरेदित्यर्थः । द्वात्रिंशदिति । वामनासापुटं धृत्वा वायुबीजस्यैव द्वात्रिंशद्वारजपेन दक्षनासया वायुं रेचयेदित्यर्थः ।

११६ । एवं शोषणक्रममुक्त्वा दाहक्रममाह रक्तवर्णमित्यादिना । तेन वह्निबीजेन । स्पष्टमन्यत् ।

११७ । बीजजपक्रममाह पूर्वेति । तथा च दक्षनासया पूरकमुभाभ्यां कुम्भकं वामया रेचकम् । जपसंख्या तु वामहस्ताङ्गुलिभिः कुर्यादित्यर्थः ।

---

1. 'कर्मात्मकं' C. 2. 'हृदि बीजं रंकारन्तु' A-B. 3. 'मेढ्रदेशे' B-पुस्तकपादटीकायां पाठः । 4. 'शरासनात्मकं' A-B. 5. 'ततः पूर्वोक्तयोगेन' B-पुस्तकपादटीका ।

वं-कारं [1]वारुणं शुक्लं घण्टिकायां विभाव्य च।
तेनामृतं समुत्पाद्य सहस्रदलपङ्कजात्॥ ११८॥
प्लावयेत् पूरकादीनि कृत्वा पादतलावधि।
लं-कारं पृथिवीबीजं गुदमूले विभाव्य च॥ ११९॥
तेनैव क्रमयोगेण धिया सम्पादयेद् बुधः।
पापपुण्यविनिर्मुक्तं शरीरं शाम्भवं परम्॥ १२०॥
सोऽहंमन्त्रेण जीवञ्च सकाशात् परमात्मनः।
पुनस्तां कुण्डलीं देवीं परमामृतलोलिताम्॥ १२१॥
पञ्चभूतानि मन्त्रज्ञः स्वस्वस्थाने [2]नियोजयेत्।

[ स्वस्य देवीरूपत्वभावना ]

आत्मानं [3]भावयेन्मन्त्री महाश्रीत्रिपुरामयम्॥ १२२॥

---

११८—१२०। वं-कारमिति। तथा च वमिति वरुणबीजं शुक्लवर्णं घण्टिकायां विभाव्य तेन बीजेन पूरकादीनि कृत्वा तेनैवामृतमुत्पाद्य सहस्रारात् पादतलपर्यन्तं प्लावयेदित्यर्थः। लं-कारमिति। ततश्च प्रागुक्तक्रमेण लमिति पृथ्वीबीजं मूलाधारे विभाव्य परं पूर्वतो विलक्षणं पापपुण्याननुविद्धं शाम्भवं शरीरं सम्पादयेद् विरचयेदित्यर्थः। अत एव तन्त्रसारकारैरपि 'वमिति वरुणबीजस्य चतुःषष्टिवारजपेन तस्माल्ललाटचन्द्राद् गलितसुधया मातृकावर्णात्मिकया समस्तदेहं विरचय्ये'त्युक्तम्।

१२१-१२२। पूर्वं संहारक्रमेणोत्थापितानां पुनः सृष्टिक्रमेण स्वस्वस्थाने समानयनमाह सोऽहमित्यादिना। तथा च परमात्मनः सकाशात् सोऽहमिति मन्त्रेण जीवात्मानम् अनाहते, परमामृतलोलितां परमशिवसामरस्यामृतास्वादनपरितृप्तां कुण्डलिनीं मूलाधारे, पञ्च भूतानि च व्योमादिक्षित्यन्तानि विशुद्धादिमूलाधारान्तेषु समानयेदित्येवोक्तं स्वस्वस्थाने नियोजयेदित्यनेन। एतेन मनोऽहङ्कारमहत्तत्त्वान्यपि व्याख्यातानि। आत्मानमिति, निरुक्तानुष्ठानपवित्रीकृतात्मा स्वेष्टदेवीरूपमात्मानं भावयेदित्यर्थः।

---

1. 'वरुणं' C. 2. 'समानयेत्' B-C-पादटीका। 3. 'पावयेन्म-' A-B.

[ श्रीमहात्रिपुरसुन्दरीस्वरूपम् ]

ईषत्[1]कुन्द-सुचारु[2]दन्तसुमुखीं नेत्रत्रयोद्भासितां
पीनोत्तुङ्गपयोधरां प्रविलसद्रक्तारविन्दश्रियम् ।
नानाभूषणभूषितां भगवतीं बन्धूकपट्टांशुकां
पाशञ्चाङ्कुशचापबाणनिवहान् संबिभ्रतीं भावयेत् ॥१२३॥

[ जीवन्यासः ]

हृदि हस्तं समादाय जीवन्यासं समाचरेत् ।

[ प्राणप्रतिष्ठामन्त्रः ]

विपरीतं प्राणमन्त्रमुद्धरेत् पाशपूर्वकम् ॥ १२४ ॥
प्राणप्रतिष्ठामन्त्रोऽयं सर्वकर्मणि कीर्तितः ।

[ निरुक्तभूतशुद्धेः प्रामाणिकतन्त्रसंवादित्वम् ]

ज्ञानार्णवे शिवेनैव प्रकार ईदृशः स्मृतः ॥ १२५ ॥

---

१२३। पूर्ववचने 'महाश्रीत्रिपुरामयम्' इत्युक्तम्, तद्भावनार्थं तस्याः स्वरूपमाह—ईषदित्यादिना ।

१२४-१२५। एवं भूतशुद्धिं निरूप्य ज्ञानार्णवोपदिष्टं जीवन्यासक्रमं दर्शयति हृदीत्यादिना। जीवन्यासमिति वक्ष्यमाणप्राणप्रतिष्ठामन्त्रेण जीवन्यासं समाचरेदित्यर्थः। प्राणप्रतिष्ठामन्त्रमाह विपरीतमिति । प्राणमन्त्रो हंस इति, तस्य वैपरीत्ये सोऽहमिति, तच्च विपरीतं प्राणमन्त्रं पाशपूर्वकं पाशबीजम् आं तत्पूर्वकम्; एतेन आं सोऽहमिति प्राणप्रतिष्ठामन्त्रः पर्यवस्यति । ज्ञानार्णव इति । तदुक्तं ज्ञानार्णवे द्वितीयपटले—

प्राणप्रतिष्ठामन्त्रेण जीवं देहे निधापयेत् ।
मुखवृत्तं समुच्चार्य हंसन्तु विपरीतकम् ।
उद्धरेत् परमेशानि विद्येयं त्र्यक्षरी मता ।
प्राणप्रतिष्ठामन्त्रोऽयं सर्वकर्माणि साधयेत् ।
तेनैव विधिना देवि स्थिरीकुर्यान्निजां तनुम् ॥

इति । मुखवृत्तम् आं ।

---

1. '-फुल्ल-' B-C-पादटीका । 2. '-पद्म-' B-C-पादटीका ।

[ अन्यादृशो भूतशुद्धिक्रमः ]

अथवाऽन्यप्रकारेण भूतशुद्धिं समाचरेत् ।
संहारक्रमयोगेण तत् सर्वं परमात्मनि ॥ १२६ ॥
संयोज्य वायुबीजेन [1]धातून् पापसमन्वितान् ।
प्राणायामक्रमेणैव [2]संशोष्य वह्निना ततः ॥ १२७ ॥
तानेव सन्दहेत् पश्चात् कुम्भकेन समाहितः ।
जलबीजामृतेनैव तद्भस्मप्लावनं चरेत् ॥ १२८ ॥
रेचकक्रमयोगेण भूबीजेन च मन्त्रवित् ।
शरीरं सुदृढीकृत्य शेषं पूर्ववदाचरेत् ॥ १२९ ॥

[ भूतशुद्धेः क्रमान्तरम् ]

अथवा कुण्डलीं देवीं पञ्चभूतादिना सह ।
परमात्मनि संयोज्य तयोरैक्यं विभावयेत् ॥ १३० ॥

---

१२६-१२९ । क्रमान्तरेण भूतशुद्धिमाह अथवेत्यादिना पूर्ववदाचरेदित्यन्तेन । संहारेति । संहारक्रमस्तु क्षितेर्जले जलस्य तेजसि तेजसश्च वायौ वायोराकाशे इत्येवंक्रमेण बोध्यः । "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाशाद्वायुर्वायोरग्निरग्नेरापः अद्भ्यः पृथिवी"त्यादिश्रुत्या आकाशादिक्रमेण सृष्टेरभिधानात् पृथिव्यादिक्रमोऽयं संहारक्रम इत्याशयेनैवाऽऽह संहारक्रमयोगेणेति । तत् सर्वं प्रागुक्तक्रमप्राप्तं पृथिव्याद्याकाशान्तं सकलं परमात्मनि सहस्रारस्थे कारणरूपे संयोज्येत्यर्थः । एतेन गन्धरसादिभूतगुणनासिकादीन्द्रियबुद्ध्यहङ्काराणामपि लयो बोध्यः । अथ प्राणायाममुपदिशति—वायुबीजेनेत्यादिना । इतः परं कुम्भकरेचकक्रमयोरभिधास्यमानत्वात् पूरकक्रमोऽयमिति ज्ञेयम् । पापसमन्वितान् पूर्वोपदर्शितपापपुरुषयुतान् धातून् शरीरधातून् प्राणायामरीत्या वायुबीजेन संशोष्येति सम्बन्धः । स्पष्टमन्यत् ।

१३० । भूतशुद्धेः क्रमान्तरं दर्शयति अथवेत्यादिना । अत्र क्रमे कुण्डलिनीं पञ्चभूतादिना मूलाधारादिविशुद्धचक्रान्तःस्थितैः क्षित्यादिपञ्चभूतैः आदिशब्दोपात्तै-

---

1. 'त्रिधा' B. 2. 'संशोष्ये'त्यादि पादचतुष्टयं A-पुस्तके नास्ति ; 'संशोष्य' B.

ध्यानयोगेन मनसा ततः सोऽहं विभावयेत्[1] ।
चन्द्रामृतेन संप्लाव्य मूले ताञ्च समानयेत् ॥ १३१ ॥
भूतादिकं निजस्थाने तत्प्रभापटलामलः[2] ।
अद्वैतरूपभावेन सोऽहं [3]साहं विभावयन्[4] ॥ १३२ ॥

[ प्राणायामः ]

प्राणायामत्रयं कुर्यान्मूलेन प्रणवेन वा ।
अथवा बालया कुर्याच्च श्रीविद्याप्राणसंयमम्[5] ॥ १३३ ॥

[ भूतशुद्धेः क्रमान्तरम् ]

मूलाधारे परां देवीं ध्यात्वा चैतन्यरूपिणीम् ।
हूङ्कारोच्चारणेनैव तामुत्थाप्य समाहितः ॥ १३४ ॥

---

गन्धादिभूतगुण-ज्ञानकर्मेन्द्रियादिभिश्च सह सहस्रारस्थिते परमात्मनि संयोज्य तयोः कुण्डलिनीपरमात्मनोरैक्यं विभावयेदित्यर्थः ।

१३१ । ततः करणीयमुपदिशति—ध्यानेति । ततो मनसा ध्यानयोगमाश्रित्य सोऽहं विभावयेत् । निरुक्तपरमात्मजीवात्मनोरभेदं चिन्तयेदित्यर्थः । पुनः कुण्डलिन्याः सहस्रारान्मूलाधारे समानयनमाह—चन्द्रेति । चन्द्रामृतेन सहस्रारस्थितचन्द्रमण्डलगलितामृतधारया तां कुण्डलिनीं संप्लाव्य मूले मूलाधारपद्मान्तःस्थितस्वयम्भूलिङ्गोर्द्ध्वे समानयेदित्यर्थः ।

१३२ । भूतादिकमिति । पूर्वं कुण्डलिन्या सह सहस्रारे नीतं भूतादिकमपि स्वस्वस्थाने प्रागुक्तक्रमेण समानयेदिति सम्बन्धः । तत्प्रभापटलामलः तयोः कुण्डलिनीपरमात्मनोः प्रभाराशिभिर्निर्मलीकृतात्मा सोऽहं साहं परमात्मना कुण्डलिन्या च सह स्वाभेदं विभावयेदित्यर्थः ।

१३३ । अत्र प्राणायामस्य कल्पत्रयं दर्शयति—मूलेनेत्यादिना ।

१३४ । भूतशुद्धेः क्रमान्तरमाह—मूलाधार इति । तामुत्थाप्येति सहस्रार इति शेषः । स्पष्टमन्यत् ।

---

1. 'विभावयन्' C. 2. '-सनः' B. 3. 'सोऽहं' C. 4. 'विभावयेत्' A-B. 5. '-यमः' C.

[ प्राणायामः ]

इडया पूरयेद् वायुं [1]बाह्यं षोडशमात्रया ।
चतुःषष्ट्या कुम्भकञ्च तदर्द्धेन विरेचयेत् ॥ १३५ ॥
कनिष्ठानामिकाङ्गुष्ठैर्नासापुटं विधृत्य च ।
एवं क्रमोत्क्रमेणैव प्राणायामत्रयं चरेत् ॥ १३६ ॥

[ प्राणायामपदव्युत्पत्तिः ]

प्राणाः शरीरपवन[2] आयामो दैर्घ्यमुच्यते ।
प्राणायाम इति प्रोक्तो[3] मुनिभिः [4]पापनाशनः ॥ १३७ ॥

[ प्राणायामभूतशुद्धिस्वस्वकल्पविहितन्यासानकुर्वतो देवार्चनेऽनधिकारिता ]

प्राणायाम[5]मकृत्वा तु भूतशुद्धिमथापि वा ।
अकृत्वा विधिवन्न्यासान् नार्चायामधिकारवान् ॥१३८॥

[ न्यासपदव्युत्पत्तिः ]

पञ्च[6]भूताङ्गदेवानां न्यसनान्न्यास उच्यते ॥ १३९ ॥

[ भूतशुद्धिपदव्युत्पत्तिः ]

समस्तान्यपि भूतानि ब्रह्मांशत्वाद् विशेषतः ।
सदैव परशुद्धिः स्यान्मातृकाभिः कलादिभिः ॥१४०॥
तत्र [7]जीवाभिमानेन दोषजालेन चैव हि ।
ब्रह्मणः [8]स्वेच्छया वेति दोषाः [9]स्वात्मनि निश्चिताः ।
देहाभि[10]मानिता चैव [11]दोषाश्च समुदाहृताः ॥ १४१ ॥

---

१३७। प्राणा इत्यादि। स्पष्टम्। प्राणायामक्रममाह ज्ञानार्णवे द्वितीयपटले—

कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम् ।
प्राणायामः स विज्ञेयस्तर्जनीमध्यमे विना । इति ।

---

1. 'बाह्यात्' A-B. 2. '-पवना' C. 3. '-क्तः सूरिभिः' C. 4. 'परिकीर्तितः' C. 5. '-त्रयं कृत्वा' A. 6. '-भूतार्ण-' C. 7. 'बीजा-' B. 8. 'स्वेच्छयै-' C. 9. 'स्नात्वा न' C. 10. '-मानता' C. 11. 'ते दोषाः' C.

तेषामात्मपरिज्ञानाद् विज्ञाय स्वस्य ब्रह्मताम्।
अहङ्कारपरित्यागः शुद्धिरित्यवगम्यताम्॥ १४२ ॥

[ ऋष्यादिन्यासः ]

अथ ऋष्यादिकन्यासं कुर्यात् साधकसत्तमः।
[1]ऋषिः स्याद्दक्षिणामूर्त्तिः पङ्क्तिश्छन्द उदाहृतम्॥१४३॥
देवता ब्रह्मरूपा श्रीमहात्रिपुरसुन्दरी।
बीजन्तु वाग्भवं कूटं शक्तिकूटञ्च शक्तिका॥ १४४ ॥
कीलकं कामराजं स्याद् विन्यसेत् साधकोत्तमः।
शिरोवदनहृद्गुह्यपादाङ्गेषु क्रमात् सुधीः॥ १४५ ॥

---

१४३—१४५। ऋष्यादिन्यासमुपदिशति—अथेत्यादिना। तत्र श्रीमत्त्रिपुरसुन्दरीमन्त्रस्य ऋष्यादिकं निर्वक्ति—ऋषिः स्यादित्यादिना। तथा चास्य दक्षिणामूर्त्तिर्ऋषिः पङ्क्तिश्छन्दः श्रीमहात्रिपुरसुन्दरी देवता, वाग्भवकूटं बीजं शक्तिकूटं शक्तिः कामराजकूटञ्च कीलकमिति ज्ञेयम्। अस्य विनियोगस्तु गन्धर्वतन्त्रे सप्तमपटले—

विनियोगः समाख्यातो भुक्तिमुक्तिप्रसाधने। इति।

शिर इति। शिर-आद्यङ्गान्तेषु प्रागुक्तान् ऋष्यादीन् क्रमान्न्यसेदिति सम्बन्धः। एवञ्च शिरसि—दक्षिणामूर्त्तये ऋषये नमः। मुखे—पङ्क्तिच्छन्दसे नमः। हृदि—श्रीमहात्रिपुरसुन्दर्यै देवतायै नमः। गुह्ये—वाग्भवाय बीजाय नमः। पादयोः—शक्तिकूटाय शक्तये नमः। सर्वाङ्गे—कामराजाय कीलकाय नमः, इति प्रयोगः। ऋष्यादिन्यासाननुष्ठाने दोषमाह गन्धर्वतन्त्रेऽष्टमपटले—

ऋषिश्छन्दोदैवतानां विन्यासेन विना यदा।
जप्यते साधितेऽप्येष न तत्र तत्फलं लभेत्॥ इति।

---

1. 'ऋषिरि'त्यादिपादाष्टकं C-पुस्तके नास्ति।

[ षडङ्गन्यासोपदेशो मातृकान्यासस्य कर्त्तव्यत्वञ्च ]

अङ्गषट्कं ततः कृत्वा मातृकान्यासमाचरेत् ।

[ तत्र मातृकाया ऋष्यादिन्यासः ]

ऋषिर्ब्रह्मा भवेच्छन्दो [1]गायत्री मातृका पुनः ॥१४६॥
देवता व्यञ्जनं बीजं शक्तयश्च[2] स्वरा मताः ।
अव्यक्तं कीलकं ज्ञेयं न्यसेदुक्तक्रमेण तु ॥ १४७ ॥

[ मातृकायाः करन्यासः ]

स्वराणां क्लीवहीनानां सबिन्दूनां क्रमाल्लिखेत् ।
युग्मयुग्मान्तराले च पञ्चवर्गं सबिन्दुकम् ॥ १४८ ॥

---

१४६-१४७। अत्राङ्गन्यासस्य कर्त्तव्यत्वमाह—अङ्गषट्कमिति। षडङ्गन्यासं कृत्वेत्यर्थः। त्रिपुराविषयेऽङ्गन्यासस्य विशिष्टः क्रमस्तु पूर्वमेवोपदर्शित इति नात्र पुनः प्रदर्श्यते।

अथ मातृकान्यासमभिदधानः प्रथमम् ऋष्यादिकमुपदिशति—ऋषिरित्यादिना। एवञ्चास्य मातृकामन्त्रस्य ब्रह्म ऋषिर्गायत्री छन्दो मातृका (सरस्वती) देवता व्यञ्जनानि बीजानि स्वराः शक्तयः अव्यक्तं कीलकं लिपिन्यासे विनियोगः। अस्य मातृकान्यासाङ्गमन्त्ररूपेणाधुना व्यवहारो दृश्यते। तन्त्रसारकृता अथ मातृकान्यास इति प्रक्रम्य 'अस्य मातृकामन्त्रस्ये'त्यादिकमभिधाय 'शिरसि ॐ ब्रह्मणे ऋषये नमः' इत्यादिना मातृकान्यास उक्तः। त्रिपुरार्चनरहस्ये तु श्रीमद्ब्रह्मानन्दैः 'अस्य मातृकामन्त्रस्य ब्रह्म ऋषिर्गायत्री छन्द' इत्याद्यनभिधाय 'अस्य मातृकामन्त्रस्य ब्रह्मणे ऋषये नम इति शिरसि। गायत्र्यै छन्दसे नम इति मुखे', इत्येवंक्रमेण शिर-आदिषु न्यासमात्रमभिहितम्। एवञ्च तन्त्रसारादौ यद् 'अस्य मन्त्रस्ये'त्याद्युक्तं तद्दृषिच्छन्दोदेवतादिज्ञानपुरःसरमेव न्यासः कर्त्तव्य इत्यभिप्रायेण, न तु न्यासाङ्गतया तदुच्चार्यत्वाभिप्रायेणापि, तथात्वेन 'अस्य मन्त्रस्ये'त्यादिपाठे प्रमाणानुपलम्भात्। अत एव प्रकृतेऽपि 'अव्यक्तं कीलकं ज्ञेयं न्यसेदुक्तक्रमेण तु' इत्यत्र ज्ञेयमित्यनेनैतज्ज्ञानपूर्वकं न्यासोऽनुष्ठेय इत्येवोक्तमिति दिक्।

१४८। मातृकायाः कराङ्गन्यासयोः क्रममुपदिशति—स्वराणामित्यादिना। क्लीब-

---

1. 'गायत्री' C. 2. '-स्त' C.

[1]शेषवर्णा[2]न्तराले च यादिवर्गं ततः परम्।

[ अङ्गन्यासः ]

पूर्ववद् विन्यसेन्मन्त्री मातृकायाः षडङ्गकम् ॥ १४६ ॥

[ मातृकाध्यानम् ]

[3]शरत्पूर्णेन्दुशुभ्रां सकललिपिमयीं [4]लोलरक्तत्रिनेत्रां

शुक्लालङ्कारभासां[5] शशिमुकुटजटा[6]भारहारप्रदीप्ताम्।

---

हीनानाम् ऋॠलॢलॣवर्जितानां सबिन्दूनां सानुस्वाराणां स्वराणामकाराद्यौकारान्तानां युग्मयुग्मान्तराले द्विद्विवर्णमध्ये क्रमात् सबिन्दुकं वर्गपञ्चकं लिखेदित्यर्थः। अनेन अं कं खं गं घं आं अङ्गुष्ठाभ्यां नमः, इं चं छं जं झं ञं ईं तर्जनीभ्यां स्वाहा। उं टं ठं डं ढं णं ऊं मध्यमाभ्यां वषट्। एं तं थं दं धं नं ऐं अनामिकाभ्यां हुँ। ओं पं फं बं भं मं औं कनिष्ठाभ्यां वौषट् इत्यन्तं प्राप्तम्।

१४६। शेषेति। शेषवर्णान्तराले पूर्वोदितस्वरावशिष्टयोरनुस्वारविसर्गयोर्वर्णयोरन्तराले यादिवर्गं यकारादिक्षकारान्तवर्णान् लिखेदित्यर्थः। एवञ्च अं यं रं लं वं शं षं सं हं ळं क्षं अः करतलपृष्ठाभ्यां फडिति करन्यासः। व्यक्तमाह ज्ञानार्णवे द्वितीयपटले—

अं आं-मध्ये कवर्गञ्च इं ईं-मध्ये चवर्गकम्।
उं ऊं-मध्ये टवर्गञ्च एं ऐं-मध्ये तवर्गकम्।
ओं औं-मध्ये पवर्गञ्च क्रमेण परमेश्वरि।
अनुस्वारविसर्गान्ते य-शवर्गौ सलक्षकौ॥ इति।

पूर्ववदिति। ततः परं करन्यासानन्तरं पूर्ववत् करन्यासक्रमेणैवाङ्गन्यासं कुर्यादित्यर्थः। अत्राङ्गशब्देनाङ्गुष्ठादीनां हृदयादीनाञ्च परिग्रहः। तथा च पूर्ववत् प्रागुक्तमूलदेवताकराङ्गन्यासवत् अङ्गुष्ठाभ्यां नमः इत्यादिक्रमेण कराङ्गन्यासौ कुर्वीतेति पूर्ववदित्यनेन सूच्यते। अङ्गन्यासे न्यासयोग्यान्यङ्गान्याह ज्ञानार्णवे द्वितीयपटले—

हृदयञ्च शिरो देवि शिखाञ्च कवचं ततः।
नेत्रमस्त्रं न्यसेद् ङेऽन्तं नमः स्वाहा क्रमेण तु॥
वषड् हुं वौषडन्तञ्च फडन्तं योजयेत् प्रिये।
षडङ्गोऽयं मातृकायाः सर्वपापहरः स्मृतः॥ इति।

---

1. 'अशेष-' C. 2. 'कवर्णा-' A-B. 3. 'सारत्-' C. 4. 'लोलवक्त्रां' A-B. 5. '-माला-' C. 6. '-हारभाव-' C.

विद्यास्रक्पूर्णकुम्भान् वरमपि[1] दधतीं शुद्धपट्टाम्बराढ्यां
वाग्देवीं पद्मवक्त्रां कुचभरनमितां चिन्तयेत् साधकेन्द्रः ॥१५०॥

[ अन्तर्मातृकान्यासपरिपाटी ]

एवं ध्यात्वा न्यसेदादौ षट्चक्रक्रमसंस्थितान् ।
अकारादिक्षकारान्ता[2]नेकैकक्रमयोगतः ॥ १५१ ॥

[ बाह्यमातृकान्यासः ]

इत्यन्तर्मातृकां[3] ध्यात्वा विन्यसेद् बाह्यमातृकाम् ।

[ तत्र बीजपूर्वकताविकल्पः ]

केवलां [4]वा न्यसेद्देहे श्रीकण्ठाद्यां न्यसेदपि ॥ १५२ ॥

---

१५१। एवं ध्यानानन्तरमन्तर्मातृकान्यासमाह—न्यसेदित्यादिना। षडिति विशुद्धादिमूलाधाराज्ञाचक्रक्रमेणावस्थितान् अकारादिक्षकारान्तवर्णान्। एकैकेति, पद्मानां प्रतिपत्रमेकमेकं वर्णं न्यसेदित्यर्थः। व्यक्तमाह गन्धर्वतन्त्रेऽष्टमपटले, ज्ञानार्णवे द्वितीयपटले च—

षोडशपत्राम्बुजे कण्ठे स्वरान् षोडश विन्यसेत् ।
द्वादशच्छदहृत्पद्मे कादीन् द्वादश विन्यसेत् ॥
दशपत्राम्बुजे नाभौ डकारादीन् न्यसेद्दश ।
षट्पत्रे लिङ्गसंस्थे च बकारादीन् न्यसेच्च षट् ॥
आधारे चतुरो वर्णान् न्यसेद् वादींश्चतुर्दले ।
ह-क्षौ भ्रूमध्यगे पद्मे द्विदले विन्यसेत् प्रिये ॥ इति ।

विन्यसेत् प्रिये इत्यत्र परिचिन्तयेदिति गन्धर्वतन्त्रपाठः। पूर्वं 'सबिन्दूनां क्रमालिखेत्' तथा 'पञ्चवर्गं सबिन्दुक'मित्यनेन कराङ्गन्यासयोः सबिन्दुकमातृकावर्णोपादानात् तत्क्रमपरित्यागे प्रमाणाभावात् प्रकृतेऽपि सबिन्दुकानामेव वर्णानां न्यासः कर्त्तव्यः। अत एव तन्त्रसारकारैरपि 'अकारादिषोडशस्वरान् सबिन्दून् षोडशदलकमले कण्ठमूले न्यसे'दित्यादिना सानुस्वाराणामेव वर्णानां न्यासोऽभिहितः।

१५२। एवमन्तर्मातृकान्यासमभिधाय बाह्यमातृकान्यासमाह—विन्यसेद् बाह्य-

---

1. '-मभि-' C. 2. '-नेकैकं' C. 3. '-का' C. 4. 'विन्यसे-' C.

[ प्रत्यङ्गमेकैकाक्षरन्यासोपदेशः ]

एकैकाक्षरभेदेन क्रमेण साधकोत्तमः ।

[ अङ्गभेदेनाङ्गुलिनियमः ]

मध्यमानामिकाभ्यान्तु ललाटे मुखवृत्तके ॥ १५३ ॥
मध्यानामातर्जनीभिर्लोचने विन्यसेत्ततः ।
अनामाङ्गुष्ठयोगेन वृद्धया श्रुतिमूलके ॥ १५४ ॥
कनिष्ठाङ्गुष्ठयोगेन नासापुटद्वये ततः[1] ॥ १५५ ॥
तर्जनीमध्यमानामायोगैर्गण्डद्वये[2] न्यसेत् ।
ओष्ठाधरयुगे मन्त्री मध्यमाङ्गुलिना क्रमात् ॥ १५६ ॥
अनामाङ्गुलिना दन्तपङ्क्तिद्वये प्रविन्यसेत् ।
मध्यमया शिरोदेशे विन्यसेत् साधकोत्तमः ॥ १५७ ॥
अनामया तु वदने मध्याभिर्हस्तपादयोः ।
सन्ध्यग्रेषु कनिष्ठादि-तिसृभिर्विन्यसेद् बुधः[3] ॥ १५८ ॥
पार्श्वयोः पृष्ठदेशे तु[4] नाभिदेशे तदन्तरम् ।
मध्यानामाकनिष्ठाभिः साङ्गुष्ठाभिः प्रविन्यसेत् ॥१५९॥
सकलाङ्गुलिभिः कुक्षौ यादीन् [5]सधातुकानपि ।
त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः ॥ १६० ॥
प्राणात्मा चैव जीवात्मा परमात्मेति विन्यसेत् ।
हृदये तु तलेनैव [6]सकलाङ्गुलिभिस्ततः ॥ १६१ ॥

---

मातृकामित्यादिना । केवलाम् आद्यावयोजितबीजान्तराम् । श्रीकण्ठाद्याम् अमिति श्रीकण्ठबीजं तदाद्यां वा मातृकां न्यसेदिति सम्बन्धः ।

१५३—१६२ । इदानीं यत्र यत्र यद्यदङ्गुलियोगेनाकारादीनां वर्णानां न्यासः

---

1. '-न तु' C. 2. '-द्वयं' B. 3. 'सुधीः' C. 4. '-षु' C. 5. 'साधुतु-' ? C. 6. 'समस्ता-' C.

स्कन्ध परगले[1] स्कन्धे क्रमेणैव प्रविन्यसेत् ।
हृत्पूर्वं हस्तपत्कुक्षिमुखे पाणितलेन वै ॥ १६२ ॥

[ प्रणवादिनमोऽन्तत्वयोः सबिन्दु-निर्बिन्दुत्वयोश्च विकल्पः ]

एवमेव विधानेन पञ्चाशद्वर्णसञ्चयः ।
ओमाद्यन्तो नमोऽन्तो वा सबिन्दुर्बिन्दुवर्जितः ॥ १६३ ॥

[ सविसर्गबिन्दुविसर्गोभयवत्तयोर्विकल्पः ]

सविसर्गः सोभयश्च

[ सबिन्दुकत्वादेः फलम् ]

रहस्यं [2]तत्त्वमुच्यते ।
[3]वित्तप्रदो बिन्दुयुतो[4] विद्यादो बिन्दुवर्जितः ।
[5]पुत्रदः सविसर्गश्च सोभयो भुक्तिदायकः ॥ १६४ ॥

[ न्यासे मायादिबीजपूर्वकताविकल्पः ]

मायालक्ष्मीबीजपूर्वो[6] वाग्भवाद्योऽथ वा क्रमात् ।
[7]त्रितयाद्यो रमाद्यो वा न्यस्तव्यः साधकोत्तमैः ॥१६५॥

---

कर्त्तव्यस्तत् सर्वं विशिष्याभिधत्ते—एकैकेत्यादिना । एकैकाक्षरभेदेन अकारादिक्षकारान्तानामेकैकाक्षरभेदेन ललाटादिषु न्यसेदित्यर्थः । तथा च मध्यमानामिकाभ्यां ललाटे अं नम इति न्यसेत् । मध्यानामातर्जनीभिर्मुखवृत्ते आं नम इति न्यसेत् । एवं नेत्रादिष्वपि तत्तदङ्गुलियोगेन इकारादिवर्णानां न्यासो मूलोक्तरीत्या कर्त्तव्यः । हृदिति । हस्तपत्कुक्षिमुखे हृत्पूर्वं विन्यसेदिति सम्बन्धः । अनेन हृदादिहस्तयोः हृदादिपादयोः हृदादिकुक्षौ हृदादिमुखे चेत्युक्तं भवति ।

१६३—१६४ । एवमेवेति । निरुक्तक्रमेण ओमाद्यन्तः प्रणवपुटितः अथवा नमोऽन्तः, बिन्दुयुक्तो बिन्दुरहितो वा । सविसर्गः अन्ते विसर्गयुक्तः, सोभयः बिन्दुविसर्गोभयसहितो वा पञ्चाशद्वर्णसञ्चयो न्यस्तव्य इति सम्बन्धः । निरुक्तबिन्द्वाद्यन्तवर्णन्यासे फलमाह—रहस्यमित्यादिना । स्पष्टम् ।

१६५—१६६ । मायेति । न्यासेऽस्मिन् अकारादिमातृकाणां पूर्वतो बीजयोगे

---

1. '-गल-' C. 2. 'तत्त्व उ-' C. 3. 'चित्त-' A-B. 4. '-युक्तो' C. 5. 'पुत्रप्रदः सविसर्गः' A-B. 6. '-पूर्वां वाग्भवाद्यां प्रविन्यसेत्' A-B. 7. 'त्रिताराद्यो रमाद्यो वा' C.

[ निरुक्ताङ्गुलिभिर्न्यासासम्भवे कर्त्तव्यम् ]

मनसा वा न्यसेन्न्यासान् पुष्पैर्वाऽनामयाऽथवा ।
अङ्गुष्ठानामिकायोगान्न्यसेद् वा सर्वकर्मसु ॥
एवमेव विधानेन [1]वर्णन्यासान् समाचरेत् ॥ १६६ ॥

[ सूर्यादिदेवतापूजा ]

[2]सूर्यं संपूजयेदादौ गणेशं विष्णुदैवतम् ।
शिवपूजां ततः कुर्यात् स्वैः स्वैर्मन्त्रैर्यथाविधि ॥१६७॥

[ करन्यासः ]

करशुद्धिकरी विद्या मध्यमादितलान्तिकम् ।
अङ्गुलीषु द्विरावृत्त्या करशुद्धिं समाचरेत् ॥ १६८ ॥

---

न्यासचतुष्टयमाह—मायेत्यादिना । तत्र ह्रीं श्रीमिति मायारमाबीजे पूर्वतो योजयित्वा न्यासः कर्त्तव्य इत्येकः । ऐं इति वाग्भवबीजपूर्वः पञ्चाशद्वर्णसञ्चयो न्यस्तव्य इत्यपरः, त्रितयाद्य इति, निरुक्तमायालक्ष्मीवाग्भवलक्षणबीजत्रयाद्य इत्यन्यः । रमाद्य इति, श्रीमिति लक्ष्मीबीजाद्य इतरः । एवञ्च अं नमः आं नम इत्यादेः पूर्वतो निरुक्तक्रमेण बीजयोगे ह्रीं श्रीं आं नमः इत्यादिरूपो वा, ऐं आं नमः इत्यादिरूपो वा, ह्रीं श्रीं ऐं आं नमः इत्यादिरूपो वा, श्रीं आं नम इत्यादिरूपो वा प्रयोगः पर्यवस्यति । अत्र रमाद्य इति पृथगभिधानान्मायालक्ष्मीबीजपूर्व इत्यत्र मायालक्ष्म्योर्युगपत्प्रयोग इति ज्ञेयम् । क्रमादित्यनेन बीजानां पौर्वापर्यविपर्ययः प्रतिषिद्धः ।

१६६ । प्रागुक्तरूपेण तत्तदङ्गुलिभिर्न्यासस्यासम्भवे कर्त्तव्यमाह—मनसेत्यादिना । स्पष्टम् ।

१६७ । अथ सूर्यादीनां पूजनमभिधत्ते—सूर्यमित्यादिना । सूर्यं गणेशं विष्णुं शिवञ्च क्रमेण पूजयेदित्यर्थः । स्वैः स्वैर्मन्त्रैरिति तत्तद्देवताकल्पोक्तैः प्रणवादिनमोऽन्तैर्वा ।

१६८ । करन्यासमाह—करशुद्धीत्यादिना । क्रमोऽयं पूर्वमेव प्रदर्शितः ।

---

1. 'सर्वान् न्या-' C. । 2. 'सूर्यसंस्थजयेदादौ' ? ।

[ षडासनन्यासः ]

ततः षडासनन्यासं कुर्यात् साधकसत्तमः ।
त्रिपुरेशीति मन्त्रेणामृतासनन्तु पादयोः ॥ १६९ ॥
कुमारिकां समुच्चार्य त्रिपुरसुन्दरी ततः[1] ।
पोताम्बुजासनं जानुद्वये बालादि संत्यजेत् ॥ १७० ॥
तत्र मायां समारोप्य त्रिपुरवासिनीति च ।
[2]आत्मासनमूरुद्वन्द्वे त्रिपुरश्र्याद्ययुग्मके ॥ १७१ ॥
[3]शिवं [4]चन्द्रं नियोज्यैव तृतीये शिवमुत्क्षिपेत् ।
त्रिपुराश्रीतिचक्रस्य आसनं स्फिचि देशके ॥ १७२ ॥

---

१६९—१७२ । अथ षडासनन्यासमाह—तत इत्यादिना । तत्र प्रथमासनन्यासमाह—त्रिपुरेशीति । अत्र त्रिपुरेशी बालाबीजत्रयम् । व्यक्तमुक्तं तन्त्रसारकृता—बालान्ते अमृतार्णवासनाय नमः इति पादयोरित्यनेन । नमः पदान्तोऽयं न्यासः सर्वत्र तथा दर्शनात् । एवञ्च ऐँ क्लीँ सौः अमृतासनाय नम इति पादयोर्न्यसेत् ।

अमृतार्णवशब्दपूर्व आसनाय महामनुः ।
पादयोर्विन्यसेत् * * * * * ॥

इति यामलवचनानुसारेण तु ऐँ क्लीं सौः अमृतार्णवासनाय नम इति तन्त्रसारपरिगृहीत एव मन्त्रः पर्यवस्यति । तन्त्रसारकृताऽपि तथैव लिखितम् ।

द्वितीयमाह—कुमारिकामिति । कुमारिकां बालां समुच्चार्य त्रिपुरसुन्दरीति, ततश्च पोताम्बुजासनमिति । एवञ्च ऐँ क्लीं सौः त्रिपुरसुन्दरी-पोताम्बुजासनाय नम इति जानुद्वये न्यसेदित्यर्थः । तदुक्तं तत्रैव—

* * * पश्चाद् बालान्ते परमेश्वरि ।
पोताम्बुजासनायान्ते नमो जानुनि विन्यसेत् ॥ इति ।

तृतीयमाह—बालादीत्यादिना । बालादि ऐं क्लीं सौरिति बालाबीजत्रयस्यादि ऐं इति बीजं त्यक्त्वा तत्र मायां समारोप्य वाग्भवबीजस्थाने मायाबीजं दत्त्वेत्यर्थः । ततस्त्रिपुरवासिनीति ततश्चात्मासनायेति, ततो नमःपदं पूर्ववत् प्रयुञ्जीत । एवञ्च

---

1. 'ततपरं' C. 2. 'आत्मागणमुरुद्वन्द्वे' ? A-B. 3. 'शिव-' A-B. 4. '-चक्रं' A.

[1]बालाबीजद्वये मन्त्री शिवचन्द्रद्वयं क्षिपेत् ।
तार्तीये शिवबीजन्तु ततस्त्रिपुरमालिनी[2] ।
[3]सर्वमन्त्रासनं लिङ्गे देव्या आसनकान्तिकम्[4] ॥१७३॥
हित्वा ब्रूमात्मकं बीजं त्रिपुरान्ते समालिखेत् ।
ततः सिद्धेश्वरी चैव [5]साध्यसिद्धासनं गुदे ॥ १७४ ॥

---

ह्रीं क्लीं सौः त्रिपुरवासिन्यात्मासनाय नमः इति ऊरुद्वये न्यसेदिति फलितार्थः। व्यक्तमाह तन्त्रसारधृतयामले—

ह्रीं क्लीं सौस्त्रिपुरेत्युक्त्वा सुन्दरीति पदं ततः ।
ङेन्तं देव्यासनञ्चान्ते नम ऊरुद्वये न्यसेत् ॥

इति। अत्र त्रिपुरसुन्दरीदेव्यासनाय नम इति विशेषः ।

चतुर्थमाह शिवमित्यादिना । प्रागुक्ते ऐँ क्लीं सौरिति बालाबीजत्रये प्रथमे शिवं हकारं द्वितीये चन्द्रं हकारं नियोज्य तृतीये शिवम् उत्क्षिपेत् उद्धरेदित्यर्थः। एवञ्च ऐँ इत्यनेन हकारयोगे हैँ द्वितीयेन क्लीं इत्यनेन तद्योगे हक्लीं, तृतीये सौरित्यनेन तद्योगे हसौरिति लभ्यते। अत्र चन्द्रमित्यनेन चन्द्रशेखरपदप्रतिपाद्यं शिवबीजं बोध्यम्। व्यक्तमाह तन्त्रसारधृतयामले—

हैँ हक्लीं हसौरन्ते त्रिपुरवासिनीति च ।
चक्रासनाय नम इत्यनुना स्फिगद्वये न्यसेत् ॥

इति। एवञ्च हैँ हक्लीं हसौः त्रिपुराश्रीचक्रासनाय नम इति प्रयोगः। निरुक्तयामलानुसारेण तु त्रिपुरवासिनीति विशेषः। स्फिक्स्त्रि देशके नितम्बे ।

१७३-१७४। पञ्चममाह—बालेत्यादिना। अत्रापि प्रागुक्तबालाबीजानां मध्ये प्रथमे ऐँ क्लीं इति बालाबीजद्वये प्रत्येकेन शिवबीजं हकारं चन्द्रबीजं सकारञ्च क्षिपेदित्यर्थः। एवञ्च ऐँ इत्यनेन हकारसकारयोर्योगे हसैँ इति, क्लीं इत्यनेन च तद्योगे ह स क्लीं इति लभ्यते। तार्त्तीये क्लीं इति तृतीयबीजे शिवबीजमात्रयोगे हसौरित्येव स्यात्। ततस्त्रिपुरमालिनीति ततश्च सर्वमन्त्रासनायेति। एवञ्च हसैँ हसक्लीं हसौः त्रिपुरमालिनी-सर्वमन्त्रासनाय नमः इति लिङ्गे न्यसेदित्यर्थः।

---

1. 'रमा-' A. 2. '-वासिनी' C. 3. 'सर्वं' A-B. 4. '-न्तिमम्' C. 5. 'सिद्धा-सिद्धा-' A-B.

[ षडङ्गन्यासोपदेशो वशिन्याद्यष्टकन्यासक्रमश्च ]

षडङ्गं पूर्ववत् कृत्वा वशिन्याद्यष्टकं न्यसेत् ।
[1]अष्टवर्गैः क्रमेणैव [2]वलूमात्मकमुद्धरेत् ॥ १७५ ॥
वशिनीं विन्यसेन्मूर्ध्नि कामेशीं कलह्रींयुताम् ।
कपाले तु तवर्गान्तं [3]लान्तभूमायया युतम् ॥ १७६ ॥
भ्रूमध्ये मोदिनीं वाचां देवतान्तु [4]विनिन्यसेत् ।
वायुं भूवामकर्णाभ्यां नादबिन्दुसमन्वितम् ॥ १७७ ॥
विमलां विन्यसेत् कण्ठे चवर्गस्य तृतीयकम् ।
कालक्ष्मान्तवामनेत्र[5]मरुणां हृदये न्यसेत् ॥ १७८ ॥

---

षष्ठमाह—देव्या इत्यादिना । तथा च ह्रीं क्लीं सौरित्यतः आसनकान्तिमं सौरिति हित्वा तत्र ब्लूं इति समालिखेत् । एवञ्च ह्रीं क्लीं ब्लूं त्रिपुरसुन्दरीसाध्यसिद्धासनाय नम इति गुदे न्यसेदिति फलितम् । एवमेव त्रिपुरार्चनरहस्यकाराः ।

१७५-१७८ । षडङ्गमिति । पूर्ववत् षडङ्गन्यासं कृत्वेत्यनेन 'अनया बालया मन्त्री'त्यादिना 'वक्ष्यमाणक्रमान्मूलद्विरावृत्त्याऽथवा सुधी'रित्यादिना च प्रागभिहितं षडङ्गन्यासं कृत्वेति ज्ञेयम् । तन्त्रसारकृता तु—

सर्वज्ञता नित्यसुतृप्तता च अनादिबोधश्च स्वतन्त्रता च ।
अलुप्तशक्तित्वमनन्तता च षडाहुरङ्गानि शिवयोः शिवाद्याः ॥
'बीजान्ते नाम संयोज्य जातियुक्तं षडङ्गकम्' ।

इति नवरत्नेश्वरप्रमाणानुसारेण ऐं सर्वज्ञाशक्तिश्रीमहात्रिपुरसुन्दरीहृदयाय नमः । क्लीं नित्यसुतृप्तिशक्तिश्रीमहात्रिपुरसुन्दरीशिरसे स्वाहा इत्येवं क्रमेण षडङ्गन्यासोऽभिहितः । परन्त्वत्र पूर्ववत् कृत्वेत्यभिधानान्नवरत्नेश्वरोक्तादन्य एवायं क्रम इति ज्ञेयम् ।

अथ वशिन्यादिन्यासमाह—वशिन्याद्यष्टकमित्यादिना । ब्रह्मरन्ध्रादिषु सर्वाङ्गान्तेष्वष्टसु स्थानेष्वष्टवर्गैः सह क्रमेण वशिन्याद्यष्टकं न्यसेदिति सम्बन्धः । वशिन्याद्यष्टकञ्च वशिनी-कामेशी-मोदिनी-विमलारुणा-जयिनी-सर्वेशी-कौलिनीत्याख्यं वक्ष्यमाणम् । तत्र प्रथमं न्यासमाह—वलूमात्मकमित्यादिना मूर्ध्नीत्यन्तेन । अनेन अं इत्यतः अः इत्यन्तं

---

1. 'अष्टाङ्गेषु' B. 2. '-मुद्धरेत् प्रासवादितः' A-B. 3. 'नान्त-' C.
4. 'प्रविन्यसेत्' C. 5. '-स्वरूपां' B.

स्वरवर्गं ततो बलूं ततो वशिनीवाग्देवतायै नमः इति मूर्द्ध्नि ब्रह्मरन्ध्रे न्यसेदित्यर्थः। अत्र गन्धर्वतन्त्रे नवमपटले—

वह्निर्वरुणशक्रश्च षष्ठस्वरविभूषितम्।
नादबिन्दुकलायुक्तं वशिनीति पदन्ततः।
वाग्देवता चतुर्थ्यन्ता नमः स्वरैः प्रविन्यसेत्।

इत्यभिधानात्, ज्ञानार्णवे चतुर्दशपटले—

अवर्गान्ते लिखेद् बीजं वह्निफान्तं क्षमान्वितम्।
वामकर्णविशोभाढ्यं बिन्दुनादाङ्कितं प्रिये।
वशिनीं पूजयेद् वाचां देवतां देवि सुव्रते।

इत्युक्तन्यासक्रमदर्शनाच्च अकारादि-विसर्गान्तस्वरोच्चारणानन्तरं रब्लूमित्युच्चार्य वशिनी-वाग्देवतायै नम इत्युच्चरेदिति सुस्पष्टं प्रतिभाति। तन्त्रसारेऽपि रब्लूमित्येव दृश्यते। तन्मूले बलूमात्मकमिति पाठः प्रामादिको वा तन्त्रान्तरसम्मतो वेति सन्दि-हानैरप्यस्माभिरगत्या मूलानुगत एव मन्त्रोद्धारः कृत इति क्षमन्तां तन्त्ररसिकाः।

द्वितीयमाह—कामेशीमित्यादिना कपाले त्वित्यन्तेन। तथा च प्रथमं सानुस्वारं कवर्गं ततः कलह्रीमिति ततश्च कामेश्वरीवाग्देवतायै नमः इति ललाटे न्यसेत्। व्यक्तमाह गन्धर्वतन्त्रे नवमपटले—

मादनं शक्रमारूढं महामाया ततः परम्।
इयं कामेश्वरी ज्ञेया कवर्गेण ललाटके॥ इति।

तृतीयमाह—तवर्गान्तमित्यादिना विनिन्यसेदित्यन्तेन। अत्रापि सानुस्वारं चवर्गं ततस्तवर्गान्तं नकारं तच्च लान्तेन वकारेण भूमायया भुवा लकारेण मायया दीर्घेकारेणा-र्घेन्दु बिन्दुनाऽपि युतम्, एतेन नव्लींमिति प्राप्तम्। ततश्च मोदिनीवाग्देवतायै नम इति भ्रूमध्ये विनिन्यसेदिति सम्बन्धः। व्यक्तमाह ज्ञानार्णवे चतुर्दशपटले—

चवर्गान्ते धान्तलान्तं क्षमातुर्यस्वरान्वितम्।
मोदिनीं पूजयेद् वाचां देवतां तदनन्तरम्॥ इति।

गन्धर्वतन्त्रे नवमपटलेऽपि—

धान्तं वरुणमिन्द्रश्च चतुर्थस्वरबिन्दुकम्।
एषैव मोदिनी देवी भ्रुवोर्मध्ये चवर्गकैः॥ इति।

चतुर्थमाह—वायुमित्यादिना कण्ठ इत्यन्तेन। अत्र प्रथमं सानुस्वारं टवर्गं ततो वायुं यकारं भूवामकर्णाभ्यां भूर्लकारः वामकर्ण ऊकारस्ताभ्यां युक्तं तन्नादबिन्दुसमन्वितं ततो विमलावाग्देवतायै नमः इति कण्ठे न्यसेत्। तदुक्तं गन्धर्वतन्त्रे नवमपटले—

[1]शिवसोममहीतोयवह्निभूमात्मकं तथा ।
जयिनीं विन्यसेन्नाभौ चवर्गस्य तृतीयकम् (?) ॥१७९॥
काम(?)वह्निमरुद्वामकर्णबिन्दुसमन्वितम् ।
मूलाधारे च सर्वेशीं नृसिंहकालवह्निना ।
वामनेत्रेण संयुक्तं कौलिनीं श्रवणे न्यसेत् ॥ १८० ॥

---

वायुं पुरन्दरं देवि षष्ठस्वरविभूषितम् ।
नादबिन्दुकलायुक्तं विमलेयं समीरिता ।
न्यस्तव्या कण्ठदेशे तु टवर्गेणैव पार्वति ॥ इति ।

पञ्चममाह—चवर्गस्येत्यादिना हृदये न्यसेदित्यन्तेन । अत्र प्रथमं सानुस्वारं तवर्गम्, ततश्चवर्गस्य तृतीयकं जकारम्, ततः कालक्ष्मान्तवामनेत्रं कालो मकारः, क्ष्मा अन्ते यस्य स क्ष्मान्तो रकारः वामनेत्रमीकारः, एतेन जमरीं इति प्राप्तम् । ततश्चारुणा-वाग्देवतायै नम इति हृदये न्यसेत् । यत्तु तन्त्रसारे जमलीमित्यनन्तरमरुणायै इत्यादि दृश्यते तत् प्रामादिकमिति प्रतिभाति । गन्धर्वतन्त्रे नवमपटले—

क्रान्तं भान्तश्च ज्वलनं तुरीयस्वरबिन्दुकम् ।
अरुणेयन्तु वाग्देवी तवर्गेण हृदि स्थिता ॥

इत्यत्र ज्वलनमितिपदेन वह्निबीजस्य रकारस्यैव स्फुटमभिधानात् । ज्ञानार्णवे चतुर्दश-पटलेऽपि—

तवर्गान्ते जमक्ष्माद्यं वामनेत्रविभूषितम् ।
बिन्दुनादाङ्कितं बीजं वाग्देवीमरुणां यजेत् ॥

इति वचने क्ष्माद्यमित्यनेन पृथ्वीबीजलकारादिभूतरकारस्यैव बोधः । न तु क्ष्माद्य-मित्यनेन पृथ्वीबीजग्रहः कथमपि सम्भवति । यत्तु आधुनिकमुद्रिततन्त्रसारेषु जम-क्ष्मान्तमिति ज्ञानार्णववचनस्य पाठो दृश्यते तत्र बहुव्रीह्याश्रयणमेव साधु ।

१७९-१८० । षष्ठमाह—शिवेत्यादिना नाभावित्यन्तेन । अत्र प्रथमं सानुस्वारं पवर्गं ततश्च शिवेत्यादि । शिवो हकारः, सोमः सकारः, मही लकारः, तोयं वकारः, वह्नि-भूर्यकारः, आकाशाद् वायुर्वायोरग्निरित्यादिश्रुतेः । तत ऊं इति । अनेन ह स ल व यूमिति प्राप्तम् । ततश्च जयिनीवाग्देवतायै नम इति नाभौ न्यसेत् । व्यक्तमाह गन्धर्वतन्त्रे नवमपटले--

---

1. 'शिवे'त्यादि 'श्रवणे न्यसेदि'त्यन्तं पाददशकं C-पुस्तके नास्ति ।

जयिनी च ततो देवि नकुलिः सोमशक्रकम्।
वारुणं वायुबीजञ्च षष्ठस्वरविभूषितम्।
नाभिदेशे समाख्याता पवर्गेण वरानने॥ इति।

सप्तममाह—चवर्गस्येत्यादिना सर्वेशीमित्यन्तेन। अत्र प्रथमं यवर्गम्, ततश्च चवर्गस्य तृतीयकं जकारः, कामः ककारः, वह्नी रकारः, मरुद् यकारः, स च वामकर्ण-बिन्दुभ्यामूकारानुस्वाराभ्यां विभूषितः, एतेन यवर्गानन्तरं जकर्यूमित्यापतति। परन्तु गन्धर्वज्ञानार्णवतन्त्रानुसारेण झमर्यूमिति प्रयोगसम्भवात् श्रीमत्तन्त्रसारकारै-स्तथैवाभिहितत्वाच्च 'चवर्गस्य चतुर्थकमि'ति 'काले'ति च पाठौ लेखकप्रमादत'स्तृतीयकं' 'कामे'ति चावस्थान्तरमापन्नाविति प्रतीमः। तथा च गन्धर्वतन्त्रे नवमपटले—

जान्तं भान्तं ततो रेफं वायुबीजसमन्वितम्।
षष्ठस्वरसमायुक्तं नादबिन्दुकलायुतम्।
सर्वेश्वरी यवर्गेण स्वाधिष्ठानाख्यपङ्कजे॥ इति।

ज्ञानार्णवे चतुर्दशपटले च—

यवर्गान्ते जान्तकालरेफवायुसमन्वितम्।
ऊमाढ्यं देवतां वाचां सर्वेशीं परिपूजयेत्॥

इत्यभिहितम्। एवञ्च यं रं लं वं झ म र यूं सर्वेश्वरीवाग्देवतायै नमः इत्येव गन्धर्वज्ञानार्णवानुसारेण पर्यवस्यतीति ध्येयम्।

अष्टममाह—नृसिंहेत्यादिना श्रवणे न्यसेदित्यन्तेन। संयुक्तमिति क्रियाविशेषणम्। संयुक्तामिति वा समीचीनः पाठः। अत्र प्रथमं शादिवर्गं ततश्च नृसिंहेत्यादि, नृसिंहः क्षकारः, कालो मकारः, वह्नी रकारः, वामनेत्रेण चतुर्थस्वरेण। एतेन क्षमरीमिति प्राप्तम्। ततश्च कौलिनीवाग्देवतायै नम इति श्रवणे न्यसेदित्यर्थः। न्यासोऽयं मूलाधार इति गन्धर्वतन्त्रोपदेशः। तदुक्तं तत्रैव नवमपटले—

संवर्त्तकं महेशानि कालबीजोपरि स्थितम्।
वह्निबीजं ततो माया नादबिन्दुकलान्विता।
मूलाधारे शवर्गेण कौलिनी परिकीर्तिता॥

इति। ज्ञानार्णवे तु सर्वाङ्गे न्यासोऽयमुपदिष्टः। तथा च तत्र न्यासस्वरूपनिरूपणानन्तरं स्थाननिरूपणावसरे—

शिरोललाटभ्रूमध्यकण्ठहृन्नाभिगोचरे।
आधारे व्यूहकं यावन्न्यसेद्देवीः क्रमात् प्रिये॥ इति।

[ षोढान्यासोपदेशः ]

षोढान्यासं ततः कुर्याद् येन तन्मयतामियात् ।

[ षोढान्यासप्रशस्तिः ]

[1]शिवाद्याश्च प्रजेशान्ता येन स्युरपराजिताः ॥ १८१ ॥
येन रामो[2]ऽजयत् संख्ये कार्तवीर्यार्जुनादिकम् ।
एकविंशतिवारं हि दुर्वासा येन विप्रराट् ॥ १८२ ॥
दुर्द्धर्षवाक् शायकभृद् येन रामो निशाचरान् ।
वरद्दताञ् जघानैव येन कृष्णो रणेऽजयः ॥ १८३ ॥
[3]वदामि तत्तुल्यमेनमापराजित्यकारणम् ।
महाप्रभावं यत् कृत्वा सान्निध्यं त्रैपुरं भवेत् ॥ १८४ ॥
विषादिदमनश्चैव सर्वशस्त्रास्त्रवारणम् ।
नमस्कारप्रयोगेण मारयेत् साधको रिपून् ॥ १८५ ॥
वृत्तांश्च [4]प्रतिमाः शैलान् नमस्कारेण दारयेत् ।
तत्[5]प्रणामं [6]न सोढाऽस्ति विना विष्णुं विना शिवम् ॥१८६
[7]विनाऽब्जेशं गणेशञ्च विना श्रीपरमेश्वरीम् ।
न्यसन्तं साधकं दृष्ट्वा पलायन्ते द्रुतं ग्रहाः ॥ १८७ ॥
प्रकम्पन्ते च शैलाद्या [8]यतोऽन्या देवमूर्तयः ।
भूतप्रेतपिशाचाद्या[9] दानवा राक्षसाः [10]खगाः ॥ १८८ ॥
दैत्यगन्धर्वसिद्धाश्च पलायन्ते भयातुराः ।
डाकिन्याद्या महौषध्यः पलायन्ते महोरगाः ॥ १८९ ॥

---

1. 'शिवादिश्च' C. 2. 'जयेत्' B, 'यजेत्' C. 3. 'वदामि तत्तु न्यसन् शैलान् नमस्कारेण दारयेत्' C. 4. 'प्रतिमाञ्' C. 5. '-प्रमाणं' C. 6. 'न षोढन्ति' B. 7. 'विनाऽजेशं' C. 8. 'या अन्या' C. 9. '-श्च' C. 10. 'तथा' C.

सूर्यचन्द्रादयः सर्वे कम्पन्ते नतिभीषिताः ।
व्याधयो रोगिणस्त्यक्त्वा पलायन्ते च सत्वरम्[1] ॥१६०॥
तत्पाणिस्पर्श[2]तृप्त्याऽपि प्रेतभूताः[2]* सुदारुणाः ।
अग्नयः शीततां यान्ति तद्गात्रस्पर्शमात्रतः ॥ १६१ ॥
ब्रह्मास्त्रादीनि [3]सर्वाणि यं दृष्ट्वा यान्ति सौम्यताम् ।
अजरामरतां याति लक्ष्मीर्देहं न मुञ्चति ॥ १६२ ॥
अपि घोराणि पापानि शान्तिमायान्ति तत्क्षणात् ।
षोढान्यासं साधयित्वा किमसाध्यं जगत्त्रये ॥ १६३ ॥
आकर्षणस्तम्भनाद्याः [4]सिद्धास्तस्य हि चिन्तनात् ।
तस्मात् षोढां प्रवक्ष्यामि सारात् सारतरामिह ॥ १६४ ॥

[ षोढान्यासघटकषड्विधन्यासोद्देशः ]

गणेशैः प्रथमो न्यासो द्वितीयस्तु ग्रहैर्मतः ।
नक्षत्रै[5]स्तु तृतीयः स्याद् योगिनीभिश्चतुर्थकः ।
राशिभिः पञ्चमो न्यासः षष्ठः पीठैर्निगद्यते ॥ १६५ ॥

[ षोढायास्त्रैविध्यम् ]

षोढा सा त्रिविधा प्रोक्ता[6] स्वल्पा मध्या तथोत्तमा ।
अल्पा तु निष्फला प्रोक्ता मध्यमा सफला भवेत् ॥१६६॥

---

१६५। एवं साधकानामाभिमुख्यार्थं षोढान्यासस्य प्रशस्तिमभिधाय तद्घटकान् गणेशादिषड्विधन्यासानुद्दिशति—गणेशैरित्यादिना ।

१६६—१६७। अथ कुलोड्डीशमतानुसारेण षोढायास्त्रैविध्यं दर्शयति—षोढेत्यादिना। तत्र महाषोढास्वरूपमाह—लक्ष्मीः श्रीमिति बीजं तदग्रतो यदि माया-

---

1. 'सर्वदा' A-B. 2. 'दृष्ट्यादिपातभीताः' C. 3. 'यं दृष्ट्वा दृष्ट्वा यान्ति सौम्यताम्' C. 4. 'सिध्यन्त्यस्य' C. 5. '-श्च' C. 6. 'ज्ञेया' C.

महाषोढोत्तमा लक्ष्मीर्माया[1]कामोऽग्रतो यदि ।

[ अस्य प्रामाणिकतन्त्रसंवादित्वम् ]

कुलोड्डीशाभिधाने तु प्रकार ईदृशः स्मृतः ॥ १९७ ॥

[ पूर्वतो बीजयोगे कल्पभेदाः ]

वाङ्मायाकमलाभिर्वा तत्पुटैर्वा समाहितः ।
रमामायान्वितैः पूर्वैर्मदनैर्वा तनौ न्यसेत् ॥ १९८ ॥

[ न्यसनीयानां गणेशानां ध्यानम् ]

तरुणारुणसङ्काशान् गजवक्त्रांस्त्रिलोचनान् ।
पाशाङ्कुशवराभीतिकराञ् शक्तिसमन्वितान् ।
एतांस्तु विन्यसेद्देहे मातृकान्यासवत् सुधीः ॥ १९९ ॥

---

बीजं ह्रीं कामबीजं क्लीमिति च स्याताम् । एतेनात्र ह्रीं क्लीं श्रीमिति पूर्वमुच्चार्य विघ्नेश्वरादिभिर्न्यासः कर्त्तव्य इत्युक्तं भवति । इदमेव कुलोड्डीशमतम् । षट्स्वपि गणेशादिन्यासेष्वयं बीजयोगो बोध्यः ।

१९८ । क्रमान्तराण्याह—वागित्यादिना । वाक् वाग्भवबीजम् ऐँ, माया ह्रीं, कमला श्रीं । एवञ्च ऐँ ह्रीं श्रीमित्युच्चार्य वक्ष्यमाणक्रमेण न्यसेदित्यपरः कल्पः । अयमेव परिगृहीतस्तन्त्रसारकारैः । तत्पुटैर्वेति । तथा च ऐँ ह्रीं श्रीमित्युच्चार्य अं विघ्नेश्वरश्रीभ्यां नम इत्यादिक्रमेण न्यसनीयवर्णदेवताश्च समुच्चार्य पुनः ऐँ ह्रीं श्रीमित्युच्चरेदित्यन्यः कल्पः । कल्पान्तरमाह—रमेति । पूर्वैः पूर्वं योजितैः रमामायान्वितैर्मदनैः कामबीजैर्वा न्यसेदिति सम्बन्धः । एवञ्चात्र कल्पे श्रीं ह्रीं क्लीमिति पूर्वं नियोज्य न्यसेदित्युक्तं भवति । एतेऽपि बीजयोगक्रमभेदाः षट्स्वपि गणेशादिन्यासेषु साधकैरुपादेयाः ।

१९९ । न्यसनीया गणेशाः किमाकारा इत्यत आह—तरुणेति । अत्रारुणादित्यसङ्काशानिति ज्ञानार्णवे द्वितीयपटले, तरुणादित्यसङ्काशानिति च त्रिपुरार्चनरहस्ये पाठो दृश्यते । तथा चैवंस्वरूपान् गणपतीन् ध्यात्वा वक्ष्यमाणक्रमेण न्यसेदिति तात्पर्यम् । अत एव ज्ञानार्णवे चतुर्दशपटले तरुणादित्येत्यभिधाय—

---

1. 'काम-युता' A-B.

[ अस्य ऋष्यादिन्यासः ]

ऋषिः स्याद्दक्षिणामूर्त्तिर्गायत्री च्छन्द उच्यते ।
महागणपतिर्देवो विराड्रूपे नियोजयेत् ॥ २०० ॥

[ गणेशन्यासः (१) ]

विघ्नेश्वरः श्रिया युक्तो विघ्नराजस्तथा ह्रिया ।
विनायकस्तथा तुष्टिः शान्तियुक्तः शिवोत्तमः ॥ २०१ ॥

---

ध्यात्वा प्रविन्यसेद्देवि मातृकान्यासवत्ततः ।

इत्युक्तम् । एतेन मूलोक्तं 'मातृकान्यासवत् सुधीरि'त्यपि द्रढीकृतम् । मातृकान्यासवदित्यनेन मातृकान्यासनिर्दिष्टेषु शिरोवदनाद्यङ्गेषु क्रमेण न्यासः कर्त्तव्य इत्युक्तम् ।

२०० । तत्र प्रथममृष्यादिन्यासमाह—ऋषिरित्यादिना । तथा च दक्षिणामूर्त्तिऋंषिर्गायत्री च्छन्दो महागणपतिर्देवता विराड्रूपे चास्य विनियोग इति ज्ञेयम् । गन्धर्वतन्त्रेऽष्टमपटले तु—

नारायणोऽस्य ऋषिः प्रोक्तश्छन्दोऽनुष्टुबुदाहृतम् ।

इत्यादिना ऋष्यादिनिरूपणे क्रमभेदो दृश्यते । तन्त्रसारेऽपि बृहदारण्यक ऋषिरनुष्टुपछन्द इत्यादिनाऽन्यथा ऋष्यादि निरूपितमस्ति । एवमत्र मतभेददर्शनात् स्वस्वगुरुसम्प्रदायानुसारेणैकतमः पक्षः समाश्रयणीय इति दिक् ।

२०१ । एवं पूर्वतो बीजयोगमृष्यादिन्यासञ्चोपदर्श्य न्यासपरिपाटीं निरूपयति—विघ्नेश्वर इत्यादिना गणेशन्यास उद्दिष्ट इत्यन्तेन । अत्र 'अकारादिक्षकारान्तैः सचन्द्रैर्विन्यसेद् बुधः' इति वक्ष्यमाणत्वाद् 'मातृकान्यासवत् सुधीरि'ति पूर्वमभिहितत्वाच्च मातृकान्यासरीत्या शिरोमुखादिक्रमेण अं आं इत्याद्येकैकं वर्णमुच्चार्य वक्ष्यमाणान् विघ्नेश्वरादीन् न्यसेदित्यर्थः । एवं च—

( १ ) ह्रीं क्लीं श्रीं अं विघ्नेश्वरश्रीभ्यां नमः इत्यादिरूप एकः क्रमः ।

( २ ) ऐँ ह्रीं श्रीं अं विघ्नेश्वरश्रीभ्यां नमः इत्यादिरूपो द्वितीयः ।

( ३ ) ऐँ ह्रीं श्रीं अं विघ्नेश्वरश्रीभ्यां नमः ऐँ ह्रीं श्रीं इत्यादिरूपस्तृतीयः ।

( ४ ) श्रीं ह्रीं क्लीं विघ्नेश्वरश्रीभ्यां नमः इत्यादिरूपश्चतुर्थः । इति ज्ञेयम् ।

गन्धर्वतन्त्रेऽष्टमपटले तु—

विघ्नराजाय देवेशि श्रियै नमस्ततः परम् ।
विनायकाय तुष्ट्यै च शान्त्यै शिवोत्तमाय च ॥

विघ्नकृत् सृष्टियुक्तश्च विघ्नकर्त्ता सरस्वती ।
विघ्नराड् रतियुक्तश्च मेधया गणनायकः ॥ २०२ ॥
एकदन्तश्च [1]शान्तिश्च द्विदन्तः कामिनीयुतः ।
गजवक्त्रो मोहिनी च निरञ्जनो जटायुतः ॥ २०३ ॥
कपर्दी तु तथा [2]नित्यं दीर्घवक्त्रश्च [3]मालिनी ।
सङ्कर्षणस्तथा नन्दा सुरसा च वृषध्वजः ॥ २०४ ॥
गणनाथः कामरूपा गजेन्द्रः सुभ्रुवा युतः ॥ २०५ ॥
शूर्पकर्णश्च जयिनी त्रिलोचनश्च सत्यया[4] ।
लम्बोदरश्च विघ्नेशी महा[5]नादस्वरूपिणी ॥ २०६ ॥
चतुर्मूर्त्तिः कामदा च सदाशिवेन संयुता[6] ।
मदविह्वलनाम्नी च आमोदो विकटायुतः ॥ २०७ ॥
दुर्मुखेन युता घूर्णा सुमुखो भूतिसंयुतः ।
प्रमोदश्च तथा भूमिरेका पादयुता सती ॥ २०८ ॥
द्विजिह्वो रमया युक्तः सुरयुक्ता च मानुषी ।
[7]वीरेश्वरेण संयुक्तो मकरध्वजसंज्ञिका ॥ २०९ ॥

---

इत्यादिना तत्र तत्र पृथक् चतुर्थ्यन्तनिर्देशात्; तन्मते विघ्नराजाय श्रियै नमः, विनायकाय तुष्ट्यै नमः इत्यादिरूपः प्रयोगक्रम इति प्रतिभाति । अत्र गन्धर्वतन्त्रवचने प्रथमं न्यसनीययोर्विघ्नेश्वरश्रियोर्नाम न दृश्यते, त्रिपुरार्चनरहस्येऽप्येवमेव । ज्ञानार्णवे चतुर्दशपटले तु—

विघ्नेश्वरस्तथा श्रीश्च विघ्नराजस्तथा ह्रिया ।

इत्यादिना विघ्नेश्वरश्रियोर्न्यासः प्रथमतोऽभिहित इति तन्मतानुसारेणैव प्रकृते विघ्नेश्वरश्रियोः प्रथममुल्लेखः । तन्त्रसारेऽप्येवमेव । स्पष्टमन्यत् ।

---

1. 'कान्ति-' C. 2. 'तीव्रा' C. 3. 'ज्वालिनी' C. 4. 'मोदया' B. 5. '-मोद-' B. 6. '-संयुतः' C, 'मानसी' A. 7. 'वीरेण सहिता ज्ञेया' C.

[1]मन्मथः पिङ्गलायुक्तो वरदो भृकुटीयुतः ।
वामदेवस्तथा लज्जा रक्त[2]तुण्डस्तदन्तरम् ॥ २१० ॥
दीर्घघोणान्वितः पश्चाद् द्विरण्डको धनुर्धरः ।
सेनानीर्यामिनीयुक्तो ग्रामणी रात्रिसंयुतः ॥ २११ ॥
तमश्चन्द्रिकया युक्तो [3]विमलश्च शशिप्रभा ।
मत्तवाहनलोले च जटी तु चपलेक्षणा ॥ २१२ ॥
मुण्डी [4]ऋद्धिसमायुक्तः खड्गी दुर्भगयाऽन्वितः ।
वरेण्यः सुभगायुक्तो वृषस्कन्धान्वितः शिवा ॥ २१३ ॥
भक्ष्यप्रिययुता दुर्गा गणश्च गृहकान्तया ।
मेघनादः कालिका च गणेशोऽनलजिह्वया ॥ २१४ ॥
अकारादिक्षकारान्तैः सचन्द्रैर्विन्यसेद् बुधः ।
गणेशन्यास उद्दिष्टो

[ ग्रहन्यासप्रतिज्ञा (२) ]

ग्रहन्यासश्च कथ्यते ॥ २१५ ॥

[ तत्र ग्रहाणां वर्णनिर्देशः ]

रक्तं सूर्यं सितं चन्द्रं रक्तवर्णन्तु मङ्गलम् ।
श्यामं बुधं गुरुं पीतं पाण्डरं भृगुनन्दनम् ।
शनिं कृष्णं [5]तमो धूम्रं भावयेद्रविपूर्वकम् ॥ २१६ ॥

---

२१५ । एवं षोढान्यासाङ्गभूतानां षण्णां न्यासानां प्रथमं गणेशन्यासमुपदिश्य द्वितीयं ग्रहन्यासमभिधत्ते—ग्रहेत्यादिना ।

२१६ । तम इति । तमो राहुं, 'तमस्तु राहुरि'त्यमरः । कृष्णमित्यस्य शनिना तमसा च सम्बन्धः । शनेः कृष्णवर्णत्वम्—

'कृष्णं कृष्णाम्बरं गृध्रगतं सौरिं चतुर्भुजम्' ।

---

1. 'षण्मुखः' C. 2. '-दन्त-' C. 3. 'विमला च' A. 4. 'सिद्धि-' C.
5. 'तथा' A-B.

[ स्वरूपम् ]

कामरूपधरा एते दिव्याम्बरविभूषिताः ।
वामोरून्यस्तहस्ताश्च दक्षिणेनाभयप्रदाः[1] ॥ २१७ ॥

[ न्यासपरिपाटी ]

अर्कं हृत्परतः स्वरैरथ विधुं कोदण्डमध्ये न्यसेत्
याद्यैर्वर्णचतुष्टयैरथ कुजं नेत्रारविन्दद्वये ।
काद्येनैव बुधं स्वकीयहृदये चाद्येन वर्गेण वै
टाद्यैः पञ्चभिरर्णकैः सुरगुरुं हृत्पूर्वदेशे क्रमात् ॥२१८॥

---

इत्यनेन, राहोश्च कृष्णवर्णत्वम्—

राहुं मलयजं शूद्रं पैठीनं द्वादशाङ्गुलम् ।
कृष्णं कृष्णाम्बरं सिंहासनं ध्यात्वा तथाऽऽह्वयेत् ॥

इत्यनेन, केतोर्धूम्रवर्णत्वञ्च—

कौशद्वीपं केतुगणं जैमिनीयं षडङ्गुलम् ।
धूम्रं गृध्रगतं शूद्रमाह्वयेद् विकृताननम् ॥

इत्यनेन ग्रहयागतत्त्वे प्रमाणितम् । अत्र रविपूर्वकमिति । रविः ककारः पूर्वो यस्येत्यर्थबलात् ककारस्य नाम्न आद्यावयवत्वाद् रविपूर्वकशब्देन केतुपरिग्रहः । ज्ञानार्णवे चतुर्दशपटले तु ग्रहाणां वर्णनिरूपणे विशेषो दृश्यते—

पद्मरागं सितं रक्तं श्यामं पीतञ्च पाण्डुरम् ।
धूम्रकृष्णं कृष्णधूम्रं धूम्रधूम्रं विचिन्तयेत् ।
रविमुख्यान् कामरूपान् सर्वाभरणभूषितान् । इत्यादि ।

२१८ । अथ ग्रहन्यासपरिपाटीमुपदिशति—अर्कमित्यादिना । हृत्परतः हृदधोदेशे स्वरैरर्कं विन्यसेदिति सम्बन्धः । अत्रापि पूर्ववन्मायादिबीजयोगस्ततः सानुस्वारा अकारादिविसर्गान्ताः स्वरास्ततश्च सूर्याय नमः इति । एवञ्च ह्रीं क्लीं श्रीं अं आं इं ईं उं ऊं ऋं ॠं लं ॡं एं ऐं ओं औं अं अः सूर्याय नमः इति मन्त्रः पर्यवस्यति । तदुक्तं गन्धर्वतन्त्रे नवमपटले—

---

1. '-भाः' B.

शुक्रं तादिशरार्णकैरथ गले, पाद्येन वर्गेण वै
वीरेन्द्रो मणिपूरके[1]ऽथ वदने राहुं शवर्गेण च।
लत्नाभ्यां पददेशके [2]च नवमं केतुं क्रमाद् विन्यसेत्

[ तारान्यासोपदेशप्रतिज्ञा ]

तारान्यासमथोच्यते शुभकरं सर्वार्थसिद्धिप्रदम् ॥ २१६॥

[ तत्र ताराध्यानम् ]

ज्वलत्कालाग्निसङ्काशा वरदाभयपाणयः।
नतिपाण्योऽश्विनीमुख्याः[3] सर्वाभरणभूषिताः ॥ २२० ॥

---

स्वरान् पूर्वं समुद्धृत्य चन्द्रबिन्दुसमन्वितान्।
सूर्याय नम उच्चार्य हृदये च प्रविन्यसेत् ॥

इत्यादि। एवं वक्ष्यमाणेष्वपि बोध्यम्। यत्तु तन्त्रसारे आदित्यरुचिभ्यां नमः इत्यादिरूपः प्रयोगक्रमो दृश्यते, स तु तत्समर्थकैः—

स्वरैरर्कं हृदि न्यस्येद् यवर्गेण शशी युतः।

इत्यादि-ज्ञानार्णवचतुर्दशपटलवचनैरप्यप्राप्तत्वान्नास्माभिरत्र निवेशितः। तन्त्रसार-कारैस्तु प्रस्थानान्तरमाश्रित्य प्रयोगोऽयं परिकल्पित इति प्रतीमः।

अथेति। कोदण्डमध्ये भ्रूमध्ये। याद्यैर्वर्णचतुष्टयैः यं रं लं वं इत्येतैः विधुं न्यसे-दिति सम्बन्धः। अत्रापि ह्रीं क्लीं श्रीं यं रं लं वं सोमाय नमः इत्यादिरूपः क्रमः। एवं वक्ष्यमाणेष्वप्युन्नेयम्। अथेति। काद्येनैव वर्णपञ्चकेन नेत्रारविन्दद्वये विधुं न्यसे-दिति सम्बन्धः। चाद्येनेति चवर्गेण पूर्ववत् स्वकीयहृदये बुधं टवर्गेण हृत्पूर्वदेशे हृदयोपरीत्यर्थः, सुरगुरुं बृहस्पतिं न्यसेदित्यर्थः।

२१६। शुक्रमिति। तादिशरार्णकैः शुक्रं गलदेशे तथा पाद्येन वर्गेण पवर्गेण मणिपूरके नाभिपद्मे शनैश्चरमिति शेषः, तथा वदने शवर्गेण राहुं तथा ल-त्नाभ्यां लं त्नमिति वर्णद्वयेन नवमं केतुं पददेशके वीरेन्द्रो विन्यसेदिति सम्बन्धः। अत्र शने-रनुक्तावपि मणिपूरके शनैश्चरस्य न्यासो बोध्यः। व्यक्तमाह ज्ञानार्णवे चतुर्दशपटले—

पवर्गेण शनिर्नाभौ राहुर्वक्त्रे शवर्गकः।

इति। अथ तारान्यासं वक्तुं प्रतिजानीते—तारेत्यादिना चतुर्थपादेन।

२२०। तत्र प्रथममश्विन्यादीनां ध्यानमेकेनैवाह—ज्वलदित्यादिना। नतिपाण्य इति नत्यर्थं विनियुक्ता पाणयो याभिस्ताः।

---

1. 'च' B. 2. 'तु' C. 3. '-पूर्वाः' C.

[ न्यासपरिपाटी ]

अ-आ स्यादश्विनी पूर्वं भरण्या इयुगं तथा ।
उ-ऊ स्यात् कृत्तिकायाश्च ऋ-ॠ ऌ-ॡ च रोहिणी ॥२२१॥
ए स्यान्मृगशिराः पूर्वं ऐ आर्द्रा च तथा ओ-औ ।
पुनर्वसुस्तथा अं अः कं पुष्या च तथा [1]ख-गः ॥ २२२ ॥
अश्लेषा स्यात् घ ङ मघा च पूर्वा छ-ज उत्तरा ।
झ हस्ता स्यात् ञ चित्राख्या ट-ठ स्वाती प्रकीर्त्तिता ॥२२३॥
ड विशाखा ढ-णौ स्या[2]च्चानुराधा त-थ-दाः पुनः ।
ज्येष्ठा ध-नौ भवेन्मूला पूर्वाषाढा प-फौ भवेत् ॥ २२४ ॥
[3]ब उत्तरा भ-मौ स्यातामभिजिच् श्रवणा य-रौ ।
ल धनिष्ठा व-शौ स्याच्च तथा [4]शतभिषा पुनः ॥ २२५ ॥
ष-स [5]पूर्वभाद्रपदा चोत्तरा ह भवेत्तथा ।
[6]ल-क्षौ रेवतावर्णौ च क्रमाद् वर्णा इमेऽथ वा ॥ २२६ ॥

२२१-२२६ । अथ नक्षत्रन्यासपरिपाटीं दर्शयति—अ-आ स्यादित्यादिना इमे इत्यन्तेन । अत्रापि पूर्ववत् 'लक्ष्मीर्माया कामोऽग्रतो यदि' इत्यनेन 'वाङ्माया-कमलाभिर्वा' इत्यादिना चाभिहितानां बीजानामादौ योगः कर्त्तव्यः, सामान्यतोऽभि-हितत्वात् तन्त्रसार-त्रिपुरार्चनरहस्यादौ तथा दर्शनाच्च । न्यासस्य स्थानानि तु—'ललाटे नेत्रयोः कर्णयुगे नासापुटद्वये ।' इत्यादिना निरूपयिष्यति । तथा च ह्रीं क्लीं श्रीं इति वा ऐँ ह्रीं श्रीमित्यादीनामन्यतमं वा पूर्वमुच्चार्य अं आं इत्यादिक्रमेण स्वर-व्यञ्जनानि च यथा प्राप्तमुच्चार्य नमोऽन्तान्यश्विन्यादिनक्षत्राणि न्यसेत् । साधकानां सुखबोधाय दिङ्मात्रं प्रदर्श्यते—

(१) ह्रीं क्लीं श्रीं अं आं अश्विन्यै नमः ( ललाटे ) इत्येकः क्रमः ।
(२) ऐँ ह्रीं श्रीं अं आं अश्विन्यै नमः ( ललाटे ) इत्यादिरूपो द्वितीयः ।

1. 'खग' B. 2. '-च्चाप्यनुराधा तथा पुनः' B. 3. 'उत्तरा च' A-B. 4. 'पुष्या भवेत् पुनः' C. 5. 'पूर्वा' C. 6. 'ल-क्षौ च रेवतीवर्णौ' C.

[ तत्र क्रमान्तरम् ]

आद्ययुग्मं तथा चैकं तथा त्रीणि चतुष्टयम् ।
एकमेकं द्वयञ्चैवं[1] चतुर्दशस्वरं क्रमात् ॥ २२७ ॥
व्यञ्जनैकं द्वयं युग्मं विन्यसेत् साधकोत्तमः ।
एकं युग्मं द्वयं द्वन्द्वमेकं द्वन्द्वं [2]त्रयात्मकम् ॥ २२८ ॥
एकं त्रिकं तथा चैक[3]मेकमेकं द्वयं ततः ।
पुनरेकं द्वयं रामं ल क्षं अं अ[4]श्चतुष्टयम् ॥ २२९ ॥
अश्विन्यादेः पुरोभागे दत्त्वा च क्रमतो न्यसेत् ।

[ न्यासयोग्यस्थानानि ]

ललाटे नेत्रयोः कर्णयुगे नासापुटद्वये ॥ २३० ॥
कण्ठे स्कन्धद्वये चैव कूर्परद्वितये तथा ।
मणिबन्धयुगे हस्तद्वये नाभौ कटीद्वये ॥ २३१ ॥

---

(३) ऐँ ह्रीं श्रीं अं आं अश्विन्यै नमः ऐँ ह्रीं श्रीं ( ललाटे ) इत्यादिरूपस्तृतीयः ।

(४) श्रीं ह्रीं क्लीं अं आं अश्विन्यै नमः ( ललाटे ) इत्यादिरूपश्चतुर्थः ।

एवमेतेषामन्यतमं क्रमं स्वस्वगुरुसम्प्रदायानुगतमुररीकृत्य भरण्यादीन्यपि न्यसेत् । तत्र तत्र विशेषन्तु इ-युगमित्यादिना ग्रन्थकृतः स्वयमेवाभिधास्यन्ति । स्पष्टमन्यत् । अथ तारान्यासस्य परिपाटीमन्यादृशीं दर्शयति—अथवेत्यादिना ।

२२७—२२९ । अत्र तारान्यासे पूर्ववदेव सर्वम्, नक्षत्रनाम्नामादौ तत्तत्स्वर-व्यञ्जनयोजनायां यो विशेषस्तमाह—आद्ययुग्ममित्यादिना । तथा च अश्विन्याः पूर्वं अं आं इति द्वयम्, भरण्याः पूर्वम् इं इत्येकम्, कृत्तिकाया ईं उं ऊं इति त्रीणि, रोहिण्याः ऋं ॠं ऌं ॡं इति चतुष्टयम्, मृगशिरसः एं इत्येकम् । इत्येवं क्रमेण औकारान्तान् चतुर्दश स्वरान् पूर्वतो योजयेत्; अं अः इत्येतयोस्तु व्यञ्जनान्ते रेवत्यां योगः स्वयमेव वक्ष्यते । एवञ्च ह्रीं क्लीं श्रीं अं आं अश्विन्यै नमः इत्यादिरूपः प्रयोगक्रमः । एवं व्यञ्जनेष्वप्यवगन्तव्यम्, राममिति षं सं हमिति वर्णत्रयमित्यर्थः । स्पष्टमन्यत् । द्वितीयं कल्पमुपसंहरति अश्विन्यादेरिति । स्पष्टम् ।

२३०—२३१ । अथ पूर्वोदितस्य द्विविधस्यापि नक्षत्रन्यासस्य स्थानानि निरूपयति—

---

1. '-श्चैकं' B-C. 2. 'क्रमात्मकं' A-B. 3. '-मेकं द्वयं ततः परम्' A-B. 4. '-चतु-' A-B.

ऊरुद्वये जानुयुगे जङ्घायुग्मे पदद्वये।
[1]अष्टाविंशतिपत्रे तु कण्ठे गण्डद्वयं भवेत् ॥ २३२॥

[ तारान्यासोपसंहारः, योगिनीन्यासोपदेशश्च ( ४ ) ]

ऋक्षन्यासं समासाद्य योगिनीन्यासमाचरेत् ॥ २३३ ॥

[ तत्र डाकिनीध्यानम् ]

रक्ताक्षीं रक्तवर्णां पशुजनभयकृच्छूलखट्वाङ्गहस्तां
वामे खड्गं दधानां चषकमपि सुधापूरितं चैकवक्त्राम्।
अत्युग्रामुग्रदंष्ट्रामरिकुलमथनीं [2]पायसान्न[3]प्रसक्तां
कण्ठस्थाने[4]ऽमृताज्यैः परिवृतवपुषं भावयेड्डाकिनीं ताम् ॥२३४॥

[ डाकिनीन्यासः ]

स्वरैः पूर्वं ठान्तयुग्मं [5]पाशतुरीयभेदितम्।
नादबिन्दुकलायुक्तं बीजद्वयमुदाहृतम् ॥ २३५ ॥

---

ललाट इत्यादिना। तथा च ललाटेऽश्विनीं दक्षवामनेत्रयोर्भरणीं कृत्तिकाञ्च, दक्षिण-वामकर्णयो रोहिणीं मृगशिरसञ्च, दक्षिणवामनासिकयोरार्द्रां पुनर्वसुञ्चेत्येवं क्रमेण सप्तविंशतिं नक्षत्राणि न्यसेदित्यर्थः। अष्टेति। अभिजितो द्वित्वादत्र पक्षे नक्षत्राणामष्टाविंशतित्वमिति ज्ञेयम्। स्पष्टमन्यत्। एवं नक्षत्रन्यासमभिधाय योगिनी-न्यासस्य कर्त्तव्यत्वमुपदिशति—योगिनीत्यादिना।

२३५। एवं कण्ठे डाकिन्या ध्यानं निरूप्य तत्रैव तन्न्यासमभिधत्ते—स्वरैरित्यादिना। पूर्वं स्वरैरकारादिभिश्चतुर्दशभिरुपलक्षितं ठान्तयुग्मं ठान्तो डकारस्तद्युग्मं डकारद्वयमित्यर्थः। तच्च पाश-तुरीयभेदितं पाश आकारस्तुरीयश्चतुर्थस्वर ईकारस्ताभ्यां भेदितं रूपभेदं प्राप्तम्, तथा नादबिन्दुकलायुक्तं बीजद्वयं डां डीमिति बीजद्वयमित्यर्थः। अत्रापि पूर्ववद् बीजयोग इति स्मर्त्तव्यम्। अनेन प्रथमं ह्रीं क्लीं श्रीं ततः अं इत्यतः औं इत्यन्ताः स्वराः ततश्च डां डीम् इति प्राप्तम्।

---

1. 'अष्टेत्यादिपादद्वयं' B-पुस्तके नास्ति। 2. 'पायसान्नैः' C. 3. '-प्रयुक्तां' B.
4. '-ऽमृताद्यैः' ? B. 5. 'पाशं' B.

ततो डमलवरया वामकर्णविभूषिताः ।
नादबिन्दुकलायुक्ता डाकिन्यै नम इत्यपि ॥ २३६ ॥
डाकिनीति समुच्चार्य त्वग्धातुतो गते ततः ।
चतुःषष्टिलक्षकोटियोगिनी-[1]स्वामिनीति च ॥ २३७॥
सर्वसत्त्ववशङ्करि आज्ञाञ्च देहि मां वदेत् ।
रक्षद्वयं डाकिनीति पादुकां कण्ठतो न्यसेत् ॥ २३८ ॥

२३६। अथावशिष्टमाह तत इत्यादिना। वामकर्णविभूषितत्वं नादबिन्दुकलायुक्तत्वञ्चान्त्यावच्छेदेन, तेन ड म ल व र यूं इति प्राप्तम्। ततो डाकिन्यै नम इति।

एवञ्च ह्रीं क्लीं श्रीं इत्यादीनां प्रागुक्तानामेकतमं ततश्च अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः डां डीं ड म ल व र यूं डाकिन्यै नम इति पर्यवस्यति।

२३७—२३८। अथ डाकिनीपादुकान्यासमाह—डाकिनीति। तथा च डाकिनि त्वग्धातुगते चतुःषष्टिलक्षकोटियोगिनी-स्वामिनि सर्वसत्त्ववशङ्करि आज्ञां देहि मां रक्ष रक्ष डाकिनीपादुकायै नम इति पर्यवस्यति। कण्ठत इति कण्ठ इत्यर्थः। न्यसेदिति डाकिनीं तत्पादुकाञ्चेत्युभयमेवेत्यर्थः। गन्धर्वतन्त्रे नवमपटले तु—

स्वरान् पूर्वं समुद्धृत्य चन्द्रबिन्दुसमन्वितान् ।
ठान्तद्वयं ततः पश्चात् पाशतुरीयभेदितम् ।
नादबिन्दुकलायुक्तं बीजद्वयमुदीरितम् ।
ठान्तं भान्तं महीबीजं वारुणं वह्निवायवौ ।
वामकर्णस्ततो देवि नादबिन्दुकलायुतः ।
डाकिन्यै नम इत्यन्ते सम्बोध्य डाकिनीं ततः ।
दुंग्धा(त्वग्धा)तुगत इत्युक्त्वा चतुःषष्टिपदं ततः ।
लक्षकोटिपदस्यान्ते योगिनी-स्वामिनीति च ।
सर्वसत्त्ववशं ब्रूयात् करिशब्दपदं ततः ।
आज्ञां मे देहि तत्पश्चान्मम विक्रि(रक्ष)पदद्वयम् ;

इत्यादौ प्रायस्तुल्य एव क्रमो दृश्यते। परन्त्वत्र पादुकां कण्ठतो न्यसेदिति

1. '-कामिनी-' A-B.

[ डाकिनीपरिवारदेवतान्यासः ]

अमृताकर्षिणीन्द्राणी ईशानो[1]मोर्द्ध्व केशिनी ।
ऋद्धिदा ऋषिका चैव लृका लृकैकपादिका ।
ऐश्वर्यदात्मिका नाम ओङ्कारिणी ततः परम् ॥ २३९ ॥
[2]औषधात्मिका समात्मिका व्वरान्विता स्वरान्विता ।
परितो विन्यसेन्मन्त्री डाकिनीवद् विभाव्य च ॥२४०॥

[ राकिणीध्यानम् ]

श्यामां [3]शूलाब्जहस्तां डमरुकरयुतां तीक्ष्णवज्रं वहन्तीं
देवीं रक्तत्रिनेत्रां भृकुटिवलिलस[4]द्दन्तदंष्ट्रप्रभाभिः ।
दीप्तां तां देवदेवीं हृदयकमलगां रक्तधात्वेकनाथां
[5]शुक्लान्ने सक्तचित्तामभिमतफलदां [6]राकिणीं चिन्तयेत्ताम् ॥२४१॥

[ राकिणीन्यासः ]

क-ठवर्णैस्ततो रेफं पूर्ववत् स्वरभेदतः ।
[7]रमलवरयान् वामकर्णेन्दुभूषितान् वदेत् ॥ २४२ ॥

---

दर्शनाद् डाकिन्यै नम इति पूर्वमुक्तत्वाच्च डाकिनीन्यासानन्तरं डाकिनीपादुकान्यासो ग्रन्थकृतामभिमत इति प्रतिभाति । ज्ञानार्णवानुमतस्तन्त्रसारोक्तडाकिनीन्यासक्रमस्तु पृथगेवास्मादिति ज्ञेयम् ।

२३९-२४० । अथास्याः परिवारयोगिनीनां न्यासमुपदिशति—अमृतेत्यादिना । अत्र स्वरान्विता इति वक्ष्यमाणत्वाद् विशुद्धाख्यपद्मस्य षोडशदलस्थितानामकारादि-षोडशस्वराणामेकैकमादौ योजयित्वा अमृतादीनामेकैकामेकैकस्मिन् पत्रे न्यसेदित्यभिप्रायेण परितो विन्यसेदित्युक्तम् ।

२४१-२४४ । श्यामामित्यादिना राकिण्या ध्यानमुक्त्वा न्यासमाह—क-ठ-वर्णैरित्यादिना । क-ठ-वर्णैः ककारादिठकारान्तवर्णैः । एवञ्च ह्रीं क्लीं श्रीमित्याद्यन्यतमानन्तरं कं

---

1 '-मार्द्ध-' C. 2. 'औषधात्मिकानामाम्बिकाक्षराः स्वरात्मिकाः' C. 3. 'शुक्लाब्ज-' C. 4. '-द्दंष्ट्रदन्त-' C. 5. 'शुक्लात्वे' ? C. 6. '-भेदितां' B. 7. 'वमयववयान्' C.

राकिणीं ङेयुतां प्रोच्य हृन्मन्त्रञ्च ततः परम्।
राकिण्यसृग्धातुगते द्वात्रिंशल्लक्षकोटितः॥ २४३॥
योगिनी-स्वामिनीत्युक्त्वा सर्वसत्त्ववशङ्करि।
आज्ञाञ्च देहि मां पश्चाद्रक्षद्वन्द्वञ्च [1]राकिणीम्॥ २४४॥

[ राकिणीपरिवारदेवतान्यासः ]

अनाहते न्यसेत् पश्चात् परितः [2]क-ठ-वर्णकैः।
कालरात्रिः [3]खातिता च गायत्री घण्टिका ततः॥२४५॥
ङा वृश्चिका च चामुण्डा छाया जया तथैव च।
झङ्कारिणी तथा ज्ञाना टङ्कहस्ता च विन्यसेत्॥२४६॥
[4]ठङ्कारी च क्रमादेता ध्यात्वा [5]वीरञ्च पूर्ववत्।
द्वादशारे [6]ततो मन्त्री ध्यायेद्देवीञ्च लाकिनीम्॥ २४७॥

---

खं गं घं ङं चं छं जं झं ञं टं ठं रां रीं र म ल व र यूं राकिण्यै नमः इति। ततः परञ्च—राकिण्यसृग्धातुगते द्वात्रिंशल्लक्षकोटियोगिनी-स्वामिनि सर्वसत्त्ववशङ्करि आज्ञां देहि मां रक्ष रक्ष राकिणीपादुकायै नमः इति न्यसेदिति फलितम्। अत्र राकिणीमित्येतन्मात्राभिधानेऽपि पादुकापदप्रयोगः पूर्वोक्तक्रमादवगन्तव्यः।

२४५-२४७। अथ राकिणीपरिवारदेवतान्यासमाह—अनाहत इत्यादिना। अनाहते न्यसेदित्यस्य पूर्वेणापि सम्बन्धः। अनाहते द्वादशारे हृत्पद्मे। क-ठ-वर्णैरिति। प्रागुक्तक्रमेण पद्मकर्णिकायां राकिणीं न्यस्य परितो द्वादशदलेष्वित्यर्थः, क-ठ-वर्णकैः ककारादिठकारान्तद्वादशवर्णैः पूर्वयोजितैः कालरात्र्यादिद्वादशदेवता न्यसेदित्यर्थः। एवञ्च कं कालरात्र्यै नमः, खं खातितायै नमः, गं गायत्र्यै नमः, घं घण्टिकायै नमः, ङं वृश्चिकायै नमः इत्यादिक्रमेण ठङ्कार्यन्ता न्यसेदिति ज्ञेयम्। कुत्रेत्याह—द्वादशार इति। अनाहत इत्यर्थः। अथ लाकिनीध्यानमुद्दिशति—ध्यायेद्देवीञ्च लाकिनीमित्यन्तेन।

---

1. 'डाकिनीम्' A-B. 2. 'कण्ठ-' A. 3. 'खाजिता' A. 4. 'टङ्कारी' B. 5. 'धीरस्तु' B. 6. 'तथा' C

[ लाकिनीध्यानम् ]

क्रूष्णां देवीं त्रिवक्त्रां त्रिनयन[1]ललितां दंष्ट्रिणीमुग्ररूपां
[2]वज्रं शक्तिं [3]सुदण्डामभयवरकरां दक्षवामे दधानाम् ।
ध्यात्वा नाभिस्थपद्मे दशदलविलसत्कर्णिके लाकिनीं तां
मांसस्थां गौडभक्तोत्सुकहृदयवतीं चिन्तयेत् साधकेन्द्रः ॥२४८॥

[ लाकिनीन्यासः ]

डादिफान्तं[4] ततो लां लीं लमलवरयांस्ततः ।
[5]वामकर्ण-समायुक्ताँल्लाकिन्यै नम इत्यपि ॥ २४९ ॥
लाकिनीति वदेन्मन्त्री मांसधातु[6]गते ततः ।
षोडशालक्षकोटिश्च[7] पूर्ववन्मणिपूरके ॥ २५० ॥

[ लाकिनीपरिवारदेवतान्यासः काकिनीध्यानोपदेशश्च ]

डाकिनी चैव [8]ढङ्कारी [9]णाकिनी च तपस्विनी ।
[10]थानवी दक्षिणा धात्री नादा च पार्वती तथा ॥२५१॥
[11]फट्कारिणी क्रमादेता ध्यात्वा न्यसेत् समाहितः ।
डादिफान्तेन संयुक्ता[12] अथ ध्यायेच्च काकिनीम् ॥२५२॥

२४८। वज्रमिति दक्षवामे क्रमेण वज्रं शक्तिं दधानामिति सम्बन्धः। दशदलविलसत्कर्णिके इति विशेषणेन मणिपूरकमल-कर्णिकायां लाकिन्या ध्येयत्वं सूचितम्। गौडेति। गुडमिश्रितभक्ष्यभक्षणोत्कण्ठितचित्तामित्यर्थः।

२४९—२५०। डादिफान्तमित्यादि। तथा च पूर्ववत् ह्रीं श्रीमित्याद्यन्यतममुच्चार्य डं ढं णं तं थं दं धं नं पं फं लां लीं ल म ल व र यूं लाकिन्यै नमः इति। ततश्च लाकिनि मांसधातुगते षोडशलक्षकोटियोगिनी-स्वामिनि सर्वसत्त्ववशङ्करि आज्ञां देहि मां रक्ष रक्ष लाकिनीपादुकायै नमः इति मणिपूरे न्यसेदित्यापतति।

२५१—२५२। अथ मणिपूरदशदलेषु लाकिनीपरिवाराणां दशानां न्यासमाह—

1. '-लसितां' C. 2. 'वज्रां' C. 3. 'छदन्ता-' A-B. 4. '-दान्तां' C. 5. 'वामकर्णे' B. 6. 'वदेत्ततः' A-B. 7. '-टी च' C. 8. 'टङ्कारी' A-B. 9. 'राकिणी' B. 10. 'शरदी' A-B. 11. 'फक्कारिणी' C. 12. '-क्ताम्' A-B.

[ काकिनीध्यानम् ]

स्वाधिष्ठानाख्यपद्मे रसदलविलसत्काकिनीं मेदसंस्थां
पाशं शूलं वहन्तीं डमरुकमभयं धारिणीं पीतवर्णाम् ।
[1]दध्यन्नासक्तचित्तां सुरवरनमितां [2]काकिनीं मत्तचित्तां
षट्पत्रैर्बादिलान्तैः परिवृतवपुषं भावयेद् योगिनीं ताम् ॥२५३॥

[ काकिनीन्यासः ]

बादिलान्तं तथा कां कीं कमलवरयूमथ ।
काकिन्यै नम इत्यन्ते मेदोधातुगते ततः[3] ॥ २५४ ॥
अष्टलक्षयोगिनीभिः स्वाधिष्ठाने प्रविन्यसेत् ।
शेषं पूर्ववदुद्धृत्य

[ काकिनीपरिवारदेवतान्यासः ]

बादिलान्तैः क्रमेण तु ॥ २५५ ॥
बज्रिणी भद्रकाली च महामाया यशस्विनी ।
[4]रामा लम्बोदरीत्येताः काकिनीवत् प्रविन्यसेत् ॥२५६॥

---

डाकिनीत्यादिना । डादिफान्तेन संयुक्ता डाकिन्याद्या न्यसेदित्यर्थः । एवञ्च डं डाकिन्यै नमः, ढं ढङ्कार्यै नमः, णं णाकिन्यै नमः इत्यादिरूपः प्रयोगक्रमः पर्यवस्यति ।

२५४—२५६ । एवं काकिन्या ध्यानमुक्त्वा न्यासमाह—बादिलान्तमित्यादिना । एवञ्च ह्रीं क्लीं श्रीमित्याद्यन्यतमानन्तरं बं भं मं यं रं लं कां कीं कमलवरयूं काकिन्यै नमः इति । ततश्च काकिनि मेदोधातुगतेऽष्टलक्षयोगिनी-स्वामिनि सर्वसत्त्व-वशङ्करि आज्ञां देहि मां रक्ष रक्ष काकिनीपादुकायै नमः इति स्वाधिष्ठाने न्यसेत् । अत्राष्टलक्षयोगिनीभिरित्यन्तमभिधाय शेषं पूर्ववदुद्धृत्येत्यनेनावशिष्टांशस्य संग्रह उक्त इति । अथास्याः परिवारदेवतान्यासमाह—बादिलान्तैरित्यादिना । तथा च बं बज्रिण्यै नमः, भं भद्रकाल्यै नमः इत्यादिक्रमेण स्वाधिष्ठानकमलषड्दलेषु न्यसेदित्यर्थः ।

---

1. 'दध्यन्ने' C. 2. 'कामिनीं' A-B 3. 'गतः' A-B. 4. 'वामा' B.

[ साकिनीध्यानम् ]

देवीं ज्योतिःस्वरूपां त्रिनयनविलसत्पञ्चवक्त्राभिरामां
हस्तैश्चापेषुपाशान्[1] सृणिमपि[2] दधतीं पुस्तकं ज्ञानमुद्राम् ।
मूलाधारस्थपद्मे निखिलपशुजनोन्माथिनीमस्थिसंस्थां
दुग्धान्ने प्रीतियुक्तां मधुमदमुदितां [3]साकिनीं भावयेत्ताम् ॥२५७॥

[ साकिनीन्यासः ]

एवं ध्यात्वा तु मन्त्रज्ञो वादिवर्णं समुद्धरेत् ।
सां सीं स म ल व र यूं शाकिनीं ङेयुतां वदेत् ॥२५८॥
हृन्मन्त्रञ्च समुच्चार्य अस्थिधातुगते ततः ।
चतुर्लक्षयोगिनी च कोट्याधारे च पूर्ववत् ॥ २५९ ॥

[ शाकिनीपरिवारदेवतान्यासः ]

वरदा श्रीः [4]षण्डिका च सरस्वतीति विन्यसेत् ।
वादिवर्णसमायुक्ता ध्यात्वैताः पूर्ववद् बुधः ॥ २६० ॥

[ हाकिनीध्यानम् ]

बिन्दुस्थां शुक्लवर्णां डमरुकरयुतामक्षसूत्रं कपालं
विद्यां मुद्रां दधानां त्रिनयनविलसद्वक्त्रषट्केन युक्ताम् ।

---

२५८—२५९ । शाकिन्या ध्यानमुक्त्वा न्यासमाह—वादिवर्णमित्यादिना । अत्रापि पूर्ववत् ह्रीं क्लीं श्रीं इत्यनन्तरं वं शं षं सं सां सीं श म ल व र यूं शाकिन्यै नमः इति । ततश्च शाकिन्यस्थिधातुगते चतुर्लक्षकोटियोगिनी-स्वामिनि सर्वसत्त्ववशङ्करि आज्ञां देहि मां रक्ष रक्ष शाकिनीपादुकायै नमः इति मूलाधारे पूर्ववन्न्यसेत् । पूर्ववदित्यनेनावशिष्टांशस्य संग्रह उक्तः ।

२६० । अथास्याः परिवारदेवतान्यासमाह—वरदेत्यादिना । वादिवर्णसमायुक्ता वरदाद्याश्चतस्रो मूलाधारपद्मे पूर्ववन्न्यसेदिति सम्बन्धः । एवञ्च वं वरदायै नमः, शं श्रियै नमः इत्यादिरूपः प्रयोगक्रमः ।

---

1. '-पाशं' C. 2. 'शूलमपि' ? C. 3. 'शाकिनीं' B. 4. 'चण्डिका' A-B.

हारिद्रान्न प्रसक्तां मधुमदमुदितां शुक्लमज्जास्वरूपां
देवीं देवेन्द्ररत्नाकर[1]नतिमुदितां भावयेत्तां विशुद्धाम् ॥२६१॥

[ हाकिनीन्यासः ]

हं क्षं [2]हां हीं च ह म ल वरयूंश्च समुद्धरेत् ।
हाकिनीं ङेयुतां प्रोच्य नमःकारं वदेद् बुधः ॥ २६२ ॥
मज्जाधातुगते चैव द्विलक्षकोटियोगिनी ।
स्वामिनीति पदं पश्चात् सर्वसत्त्वादिकांस्ततः ॥ २६३ ॥

[ परिवारन्यासः ]

पूर्ववद् विन्यसेन्मन्त्री ह-क्षाभ्यान्तु क्रमेण तु ।
सरस्वतीं क्षमाश्चैव [3]हाकिनीवद् विभावयन् ॥ २६४ ॥

---

२६१। बिन्दुस्थामिति। भावयेद् भ्रूमध्ये आज्ञाचक्रे द्विदले इत्यर्थः।

२६२-२६३। अथ न्यासमाह—हं क्षमित्यादिना। तथा चात्रापि पूर्ववद् ह्रीं क्लीं श्रीमित्याद्यन्यतमानन्तरं हं क्षं हां हीं ह म ल व र यूं हाकिन्यै नमः इति। ततश्च हाकिनि मज्जाधातुगते द्विलक्षकोटियोगिनी-स्वामिनि सर्वसत्त्ववशङ्करि आज्ञां देहि मां रक्ष रक्ष हाकिनीपादुकायै नम इत्याज्ञाचक्रे न्यसेदिति फलितम्।

२६४। अथैतत्परिवारदेवतान्यासमाह—ह-क्षाभ्यामित्यादिना। तथा च हं सरस्वत्यै नमः, क्षं क्षमायै नमः इति भ्रूमध्ये द्विदले न्यसेत्। हाकिनीवद् विभावयन्निति। एतेन तत्तद्देवतापरिवारयोगिनीनामपि तत्तत्प्रधानयोगिनीरूपत्वमुन्नेयम्।

अत्रेदमवधेयम्—विशुद्धादितो मूलाधारक्रमेणाऽऽज्ञाचक्रपर्यन्तं तत्तच्चक्रदलपरिमाणेनाकारादिक्षकारान्तमातृकावर्णानामवस्थितया दलसंख्यकमातृकावर्णपूर्वको डाकिन्यादीनां प्रधानयोगिनीनां न्यासः। तत्र तत्र पद्मे पत्रसमसंख्याकानां तत्तत्परिवारयोगिनीनान्तु पत्रेष्वेकैकाक्षरपूर्वक इति। पूर्वं षष्ठे प्रकाशे 'वसेदत्र देवी च डाकिन्यभिख्ये'त्यादिना डाकिन्यादीनां मूलाधारादिस्थानानि निरूपितानि। न्यासे तु ततः क्रमभेद इति सुधीभिरवधेयम्।

---

1. '-मति-' C. 2. 'हीं' C. 3. 'हाकिनी'त्यादिपादचतुष्टयं C-पुस्तके नास्ति।

[ योगिनीन्यासस्य प्रस्थानान्तरम् ]

अथापरः प्रकारश्च कुलामृतमये(ते) तथा ।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥ २६५ ॥
वाराही च तथेन्द्राणी चामुण्डा सप्तमी भवेत् ।
अष्टमी च महालक्ष्मीर्वर्गा[1]ष्टाद्याः क्रमोदिताः ॥ २६६ ॥

[ एतन्न्यासयोग्यान्यङ्गानि ]

शिरोवदनकण्ठेषु हृदि नाभौ तथैव च ।
लिङ्गे गुदे पादयोश्च क्रमादेता न्यसेदिति ।
योगिनीन्यास उद्दिष्टः सर्वपापनिकृन्तनः ॥ २६७ ॥

[ राशिन्यासस्य कर्तव्यतोपदेशः ( ९ ) ]

राशिन्यासं ततः कुर्यात् सर्वरक्षाकरं सदा ॥ २६८ ॥

[ राशीनां वर्णाः ]

रक्तश्वेतहरिद्राभपाण्डु[2]चित्रासितान् स्मरेत् ।
पिशङ्गपिङ्गलौ [3]बभ्रुकर्चूरसित[4]धूम्रभाः ॥ २६९ ॥

---

२६५-२६६ । अथ कुलामृतानुसारेण योगिनीन्यासस्य क्रमान्तरं दर्शयितुमुपक्रमते—अथेत्यादिना । ब्राह्मीति । अत्र कल्पे ब्राह्म्याद्यानां महालक्ष्म्यन्तानां योगिनीनामष्टानां पूर्वं क्रमेणाष्टौ वर्गान् संयोज्य न्यसेदिति वक्ष्यमाणेन सम्बन्धः ।

२६७ । एतन्न्यासयोग्यान्यङ्गान्याह—शिर इत्यादिना । क्रमात् शिर-आदिषु पदान्तेष्वङ्गेषु एता ब्राह्म्यादियोगिनीर्न्यसेदित्यर्थः । एवञ्च अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः ब्राह्म्यै नम इति शिरसि, कं खं गं घं ङं माहेश्वर्यै नम इति वदने, इत्यादिरूपो न्यासक्रमः पर्यवस्यति । उपसंहरति—योगिनीत्यादिना ।

२६८ । राशिन्यासमवतारयति—राशीत्यादिना । तत इति निरुक्तयोगिनीन्यासानन्तरम् ।

२६९ । मेषादिराशीनां वर्णभेदानाह—रक्तेत्यादिना । एवञ्च मेषो रक्तः, वृषः श्वेतः । एवं क्रमेण मेषादिवर्णभेदा अवगन्तव्याः ।

---

1. '-न्ताभ्यां' A. 2. '-चित्रान्' C. 3. 'रक्त-कर्पूर-' B. 4. '-धूसराः' C.

[ न्यासपरिपाटी ]

अकारादिचतुर्वर्णैर्मेषं दक्षिणगुल्फके ।
द्वन्द्वेन जानुनि वृषं वेदैर्मिथुन[1]मण्डके ॥ २७० ॥
द्वाभ्यां कर्कटकं कुक्षौ द्वन्द्वेनांसे [2]च सिंहकम् ।
बिन्दु-सर्ग-शवर्गैस्तु कन्यकां दक्षमस्तके ॥ २७१ ॥
वाम[3]मस्ते कवर्गेण तुलाख्यं वृश्चिकं ततः ।
चवर्गेण तथा स्कन्धे कुक्षौ [4]टाद्यैश्च धन्विनम् ॥२७२॥

२७०। न्यासस्य क्रमं दर्शयति—अकारेत्यादिना । अत्रापि पूर्वं ह्रीं क्लीं श्रीमित्याद्यन्यतमबीजयोगः पूर्ववदुन्नेयः । एवञ्च दक्षिणगुल्फे—

(१) ह्रीं क्लीं श्रीं अं आं इं ईं मेषराशये नमः ।
(२) ऐँ ह्रीं श्रीं अं आं इं ईं मेषराशये नमः ।
(३) ऐँ ह्रीं श्रीं अं आं इं ईं मेषराशये नमः ऐँ ह्रीं श्रीं ।
(४) क्लीं ह्रीं श्रीं अं आं इं ईं मेषराशये नमः ।

इत्यन्यतमरूपो न्यासक्रमो बोध्यः । एवं वृषादिष्वपि ज्ञेयम् । यथा—एषामन्यतममुच्चार्य उं ऊं वृषराशये नम इति दक्षजानुनि । ऋं ॠं लं ॡं मिथुनराशये नम इति दक्षवृषणे ।

२७१। द्वाभ्यामिति । एं ऐं कर्कटराशये नम इति दक्षकुक्षौ । ओं औं सिंहराशये नम इति दक्षस्कन्धे । बिन्द्विति । बिन्दुरनुस्वारः, सर्गो विसर्गः, शवर्गः श ष स ह ल क्षेति वर्णषट्कम् । एवञ्च अं अः शं षं सं हं लं क्षं कन्याराशये नम इति दक्षमस्तके, मस्तकस्य दक्षिणांशे इत्यर्थः ।

२७२। वाममस्त इति । एवञ्च कं खं गं घं ङं तुलाराशये नम इति वाममस्तके । चवर्गेणेति । चं छं जं झं ञं वृश्चिकराशये नम इति वामस्कन्धे । टाद्यैरिति । टं ठं डं ढं णं धनूराशये नम इति वामकुक्षावित्यर्थः ।

1. '-मस्तके' A-B. 2. '-न' B. 3. '-कर्णे' A-B. 4. 'टाद्याश्च' C.

[1]मकरन्तु तवर्गेण [2]वृषणे विन्यसे[3]त्ततः ।
पवर्गेण तथा कुम्भं वामजानुनि विन्यसेत् ॥ २७३ ॥
[4]यवर्गश्च सवर्णे तु मीनाख्यं वामगुल्फके ॥ २७४ ॥

[ राशीनां वर्णनिरूपणे क्रमान्तरम् ]

चाप-[5]नीरज-युक्-कन्याः पीताः स्युरुभयोस्त्वमी ।
[6]तुलामकरमेषाख्यकुलीरा रक्तरोचिषः ।
चराः [7]शेषाश्च चत्वारः [8]स्थिराः श्वेताः पृथङ् मताः ॥२७५

[ न्यासस्थाननिरूपणे क्रमभेदः ]

दक्षपादे तथा लिङ्गे दक्षकुक्षौ तथा हृदि ।
दक्षपाणौ दक्षशिरःपार्श्वे वामे तथैव च ॥ २७६ ॥
शिरःपार्श्वे तथा वामे भुजे च हृदि वामतः ।
वामकुक्षौ तथा लिङ्गे वामपादे न्यसे[9]च्च वा ॥ २७७ ॥

२७३। मकरमिति। तं थं दं धं नं मकरराशये नम इति वामवृषणे। पवर्गेणेति। पं फं बं भं मं कुम्भराशये नम इति वामजानुनि ।

२७४। यवर्गश्चेति। अत्र ज्ञानार्णवे चतुर्दशपटले, गन्धर्वतन्त्रे नवमपटले च—

यवर्गेण क्षकारेण मीनं वामेऽथ गुल्फके ।

इत्यभिधानात् यं रं लं वं क्षं मीनराशये नम इति वामगुल्फे न्यसेदिति लभ्यते। तन्त्रसारे यं रं लं वमित्येतावन्मात्रमातृकायोगो दृश्यते। अत्र 'यवर्गश्च सवर्णे तु' 'चवर्गचरमार्णैस्तु' इत्येतत् पादद्वयमेव प्रामादिकमिति प्रतिभाति ।

२७५। राशीनां वर्णभेदस्य न्यासस्थानानाञ्च प्रस्थानान्तरं प्रदर्शयन् आदौ वर्णभेदानाह—चापेत्यादिना ।

२७६-२७७। दक्षपाद इति। कल्पेऽस्मिन् पूर्वोक्तक्रमेणैव बीजानि वर्गांश्च संयोज्य दक्षपादे मेषम्, लिङ्गदक्षांशे वृषम्, दक्षकुक्षौ मिथुनम्, हृदो दक्षांशे कर्कटम्,

1. 'मकरस्तु' ? C. 2. 'भूषणे' B. 3. '-द् बुधः' C. 4. 'चवर्गचरमार्णैस्तु' C. 5. '-मीन-नृ-युक्-' C. 'मीन-धनुः-' A. 6. 'बाल-' C. 7. 'शिष्टाश्च' C. 8. 'स्थिताः' C. 9. '-च्चेति' C.

[ पीठन्यासः ( ६ ) ]

पीठानि विन्यसेत् [1]पश्चात् सर्व[2]कर्ममयाणि च ।

तत्र पीठानां वर्णनिर्णयः ]

[3]सितारुणश्यामहरित्पीतान्यनुपमा क्रमात् ॥ २७८ ॥
पुनः पुनः क्रमेणैव पञ्चाशत्पीठसञ्चयः ।
पीठानि संस्मरेन्मन्त्री सर्वकामार्थसिद्धये ॥ २७९ ॥

[ पीठानां नामानि ]

कामरूपं महापीठं पीठं वाराणसीं ततः ।
नेपालञ्च महापीठं पीठं वै पौण्ड्रवर्द्धनम् ॥ २८० ॥

---

दक्षपाणौ सिंहम्, शिरसो दक्षपार्श्वे कन्याम् , वामपार्श्वे तुलाम् , वामपाणौ वृश्चिकम् । हृदो वामांशे धनुषम् , वामकुक्षौ मकरम् , लिङ्गस्य वामांशे कुम्भम् , वामपादे च मीनं न्यसेदिति पूर्वतो भेदः ।

२७८-२७९ । एवं षोढान्यासाङ्गभूतं गणेशादिन्यासपञ्चकमभिधाय चरमं पीठन्यासमाह—पीठानीत्यादिना । तत्र प्रथमं पीठानां वर्णभेदान् निर्वक्ति—सितेत्यादिना । पुनः पुनः सितारुणेत्याद्यावृत्त्या पीठानां वर्णा निर्णेया इत्यर्थः । तत्र तन्त्रसारे—

सितासितारुणश्यामहरित्पीतान्यनुक्रमात् ।
पुनः पुनः क्रमाद्देवि पञ्चाशत्स्थानसञ्चयः ।
श्यामान् वराभयकरान् सर्वालङ्कारभूषितान् ॥

इति पीठध्यानमुक्तम् । मूले अनुपमेत्यनेन पीठानीत्यस्यान्वयानुपपत्तेरनुपमालक्षणवर्णाभावाच्चानुपमेति पाठश्चिन्त्यः ।

२८० । पीठानां संज्ञाभेदानाह—कामरूपमित्यादिना । अत्र पञ्चाशन्मातृकार्णं न्यसेत् क्रमादित्यभिधानाद् एकैकमातृकापूर्वकम् एकैकपीठं न्यसेदिति बोध्यम् । अत्रापि पूर्ववद् बीजयोगः । एवञ्च—

( १ ) ह्रीं क्लीं श्रीं अं कामरूपपीठाय नमः इत्येकः क्रमः ।

---

1. 'मन्त्री' C. 2. '-कामार्थसिद्धये' C. 3. 'सिते'त्यादिपादषट्कं C-पुस्तके नास्ति ।

पुरस्थितं महापीठं [1]चरस्थिरमतः परम् ।
पूर्णशैलं महापीठम् [2]अर्बुदश्च तथाऽपरम् ॥ २८१ ॥
आम्रातकेश्वरं पीठम् [3]एकाम्रश्च तथाऽपरम् ।
त्रिस्रोतः[4]पीठममलं कामकोट्टमतः परम् ॥ २८२ ॥
कैलासं भृगुपीठञ्च केदारं [5]चन्द्रपीठकम् ।
श्रीपीठञ्च तथोङ्कारं जालन्धरमतः परम् ॥ २८३ ॥
मालवञ्च तथा पीठं [6]कुलान्तं देविकोट्टकम् ।
गोकर्णाख्यं महापीठं मारुतेश्वरमेव च ॥ २८४ ॥
अट्टहासञ्च विरजं राजगृहं महापथम् ।
कोल्लगिर्यभिधं पीठमेलापुरमतः परम् ॥ २८५ ॥
कामेश्वरं महापीठं [7]महापीठं जयन्तिका ।
पीठमुज्जयिनी चैव विचित्रं क्षीरिकाभिधम् ॥ २८६ ॥
हस्तिनापुरकं पीठमुड्डीशाख्यं प्रयागकम् ।
[8]कान्यकुब्जं महापीठं [9]मायापुरजलेश्वरौ ॥ २८७ ॥

---

(२) ऐँ ह्रीं श्रीं अं कामरूपपीठाय नमः इति द्वितीयः ।
(३) ऐँ ह्रीं श्रीं अं कामरूपपीठाय नमः ऐँ ह्रीं श्रीं इति तृतीयः ।
(४) श्रीं ह्रीं क्लीं अं कामरूपपीठाय नमः इति चतुर्थः ।

एवं वाराणस्यादिपीठानामपि पूर्वमेवक्रमेणैव ह्रीं क्लीं श्रीमित्याद्यन्यतमबीजयोगं विधाय आं वाराणसीपीठाय नमः, इं नेपालपीठाय नम इत्यादिक्रमेण एकैकसबिन्दुमातृकापूर्वकं मातृकास्थानेषु न्यसेत् । तदुक्तं ज्ञानार्णवे चतुर्दशपटले—

पञ्चाशत्पीठविन्यासं मातृकावन्न्यसेत् सदा । इति ।

अत्र योगिनीहृदय-ज्ञानार्णव-गन्धर्वादितन्त्रेषु पीठानां नामनिरूपणे परस्परं वैरूप्यं दृश्यते, तच्च तत्तदाकरेभ्योऽवगन्तव्यम् ।

---

1. 'कान्यकुब्जं तथाऽ-' A. B. 2. 'मादनं पीठमुत्तमम्' C. 3. 'एकाम्राख्यमतः परम्' C. 4. 'कामकोट्टञ्च कैलासं भृगुपीठकम्' C. 5. 'चन्द्रपूरकम्' C. 6. 'ज्वालान्तं' B. 7. 'प्रणवञ्च' C. 8. 'षष्ठीप(श)श्च' A-B. 9. 'महा-' C.

मलयञ्च महापीठं [1]श्रीशैलाह्वयमेव च ।
मेरुगिर्याख्यपीठञ्च पीठं गिरिवरं ततः ॥ २८८ ॥
महेन्द्रं वामनं पीठं हिरण्यपुरमेव च ।
महालक्ष्मीपुरं पीठमुड्डीयानाख्यमुत्तमम् ॥ २८९ ॥
छायाच्छत्र[2]ञ्च पञ्चाशन्मातृकार्णं न्यसेत् क्रमात् ।

[ षोढान्यासोपसंहारः ]

षोढान्यासमिमं मन्त्री न्यसेत् साक्षात् स्वयं शिवः ॥२९०

[ पीठन्यासप्रशस्तिः ]

नास्त्यस्य पूज्यो लोकेऽस्मिन् पितृमातृमुखो जनः ।
एवं ये न्यस्तदेहास्ते संपूज्याः सर्वयोगिभिः ॥ २९१ ॥

[ पीठन्यासाकरणे दोषः ]

षोढान्यासविही[3]नो यः प्रणमेद् यदि [4]साधकः ।
सोऽचिरान्मृत्युमाप्नोति नरकञ्च प्रपद्यते ॥ २९२ ॥

[ अथ सशक्तिककामन्यासः ]

कामन्यासमथो वक्ष्ये त्रैलोक्यक्षोभकारकम् ॥ २९३ ॥

---

२९० । पञ्चाशदिति । पञ्चाशन्मातृकावर्णस्वरूपं पञ्चाशत्पीठकं न्यसेदित्यर्थः । एवञ्च मातृकाणां कामरूपादितत्तत्पीठस्वरूपत्वादेव तत्र तत्र योग उपदिष्टः । योगिनीहृदयेऽपि पूजासङ्केतप्रतिपादके तृतीयपटले—कामरूपादिच्छायाच्छत्रान्तपीठनिरूपणानन्तरम्—

एते पीठाः समुद्दिष्टा मातृकारूपकाः स्थिताः ।

इत्यनेन मातृकारूपत्वं पीठानां व्यक्तमभिहितम् । एतेन गणेशादीनां पूर्वं प्रयोज्या मातृका अपि व्याख्याताः । षोढेति । यदि न्यसेत्तदा साक्षात् शिवो भवेदिति सम्बन्धः ।

२९२ । साधकः षोढान्याससाधको यदि प्रणमेत् तदा षोढान्यासविहीनो यः सोऽचिरान्मृत्युमाप्नोतीति सम्बन्धः ।

२९३—२९६ । एवं गणेशादिपीठान्तषोढान्यासमभिधाय कामन्यासं वक्तुमुप-

---

1. 'श्रीशैलं क्षेत्र-' A-B. 2. '-पदं पीठं तथैव परमेश्वरि । पञ्चाशत्पीठविन्यासं मातृका विन्यसेत् क्रमात्' C. 3. '-नं यत्' B. 4. 'पार्वती' A-B.

[ तत्र कामध्यानम् ]

दाडिमीकुसुमाकारान् [1]कामान् मोहनरूपकान् ।
पुष्पबाणे[2]षुकोदण्डशोभिताञ्छक्तिसंयुतान् ॥ २६४ ॥

[ कामशक्तिध्यानम् ]

सर्वालङ्कारसंयुक्ताः शक्तीः [3]कुसुम्भसन्निभाः ।
नीलोत्पलकराश्चैव त्रैलोक्याकर्षणक्षमाः ॥ २६५ ॥

[ पूर्वतो बीजयोगः ]

काम-माया-रमाबीजैर्मातृकार्णैस्तनौ न्यसेत् ॥ २६६ ॥

[ न्यसनीयदेवतानामानि ]

कामयुक्ता [4]रतिश्चैव [5]कामः प्रीतिश्च कान्तकः ।
कामिनी सह वै [6]भ्रान्तो मोहिन्या सहितस्ततः ॥२६७॥
कामधुक् कमलायुक्तः कामचारो विलासिनी ।
कर्णकल्पलते[7] चैव कोमलः श्यामलान्वितः ॥ २६८ ॥
शुचिस्मिता कामयुक्तः कामवर्द्धनसंज्ञकः ।
[8]विस्मयासहितो [9]रामो विशालाक्षीयुतो [10]रसः ॥२६९॥

---

क्रमते—कामेत्यादिना । तत्र प्रथममेव साधकानामभिमुखीकरणाय प्रशस्तिमाह—त्रैलोक्येति । न्यासादौ न्यसनीयानां कामानां ध्यानमाह—दाडिमीत्यादिना शक्तिसंयुतानित्यन्तेन । शक्तीनामपि रत्यादीनां ध्यानमाह—सर्वेत्यादिना । एतेन वक्ष्यमाणक्रमेण सशक्तिकानामेव कामानां न्यासः कर्त्तव्य इति सूचितम् । कामेति । पूर्वोक्ततत्तद्विशेषणविशिष्टवक्ष्यमाणकामतच्छक्तीः काममायारमाबीजैर्मातृकार्णैश्च तनौ न्यसेदिति सम्बन्धः । तत्र कामः क्लीं, माया ह्रीं, रमा च श्रीमिति तैः । मातृकार्णैः अकारादिक्षकारान्तैर्मातृकावर्णैः पूर्वं नियोजितैरित्यर्थः ।

२६७—३१० । निरुक्तक्रमपूर्वकं न्यसनीयानां कामतच्छक्तीनां नामानि निर्वक्ति—

---

1. 'तथा' A-B. 2. '-क्षु-' A-B. 3. 'कुसुम-' C. 4. 'रती' C, 5 'कामिनी-चन्द्रकान्तकः' B. 6. 'भ्रान्तो' A-B. 7. '-लता' A-B 8. 'विद्यया' A-B. 9. 'वासो' B. 10. 'रमः' C.

विमलो [1]लोहिता-युक्तो रतिनाथदिगम्बरे ।
रतिप्रियश्च रामा च रात्रिनायक[2]कुब्जिके ॥ ३०० ॥
स्मरेण सहिता कान्ता रम[3]णो नित्यया युतः ।
निशाचरश्च कल्याणी [4]नन्दनो भोगिनीयुतः[5] ॥ ३०१ ॥
[6]नन्दीशः कामदायुक्तो मदनश्च सुलोचना ।
[7]सुलावण्यायुतश्चैव तथानन्दयिताभिधः ॥ ३०२ ॥
निशाचरश्च मर्दिन्या रतिहंस[8]स्तु तत्परम् ।
कलहः प्रियया युक्तः पुष्पधन्वा च [9]काङ्क्षिणी ॥३०३॥
[10]महाधनुश्च सुमुखी भ्रामणीर्नलिनीयुतः ।
[11]भीमश्च जटिनीयुक्तो भ्राम[12]णः पालिनीयुतः ॥ ३०४ ॥
[13]भ्रमणः [14]शिखिनीयुक्तः श्यामदुग्धे ततः परम् ।
[15]भ्रामणो रमया युक्तो [16]भृगुर्भूमिसुसंवृतः ॥ ३०५ ॥
भ्रान्त[17]श्चासवलोला च भ्रमावहसु[18]चञ्चले ।
मोहनो दीर्घजिह्वा च [19]मेचकेन युता [20]मतिः ॥ ३०६ ॥

---

कामयुक्तेत्यादिना । एवञ्च क्लीं ह्रीं श्रीं अं कामरतिभ्यां नमः । क्लीं ह्रीं श्रीं आं कामप्रीतिभ्यां नमः । क्लीं ह्रीं श्रीं इं कान्तकामिनीभ्यां नमः । इत्येवं क्रमेण न्यसेदिति पर्यवस्यति । न्यासस्तु पूर्ववन्मातृकास्थानेषु कर्त्तव्यः । तदुक्तं ज्ञानार्णवे चतुर्दशपटले—

मातृकार्णैर्न्यसेद्देवि मातृकावत् सदाऽनघे । इति ।

स्पष्टमन्यत् ।

---

1. 'लेलिहा-' C. 2. '-नाथक-' B. 3. '-णः सत्यया' C. 4. 'नकुलो भागिनी-' B. 5. '-सुतः' C. 6. 'नकुली' B. 'नन्दीशश्च' C. 7. 'मूलारण्ययुता-' B. 8. '-स्ततः' C. 9. 'काङ्क्षिणी' B. 10. 'माया-' A-B. 11. 'भीमश्चे'त्यादिपादद्वयं A-B-पुस्तकयोर्नास्ति । 12. '-णो ज्वालिनीयुतः' इति ज्ञानार्णवे । 13. 'भ्रामणः' C. 14. 'शङ्क्षिणी-' C. 15. 'भ्रामणी' C. 16. 'भृगुर्भूमे'ति ज्ञानार्णवे । 17. '-श्चामर-' C. 18. '-लोचने' C. 19. 'मोचकेन' 20. 'सती'ति ज्ञानार्णवे ।

लोलाक्षीसहितो गुह्यो मोहवर्द्धन[1]भृङ्गिणी ।
मोहकश्च[2]चपेटा च मन्मथो नाथया युतः ॥ ३०७ ॥
मातङ्गो मालिनीयुक्तो भृङ्गिणा कलहंसिनी ।
गायकेन समायुक्ता तथा वै विश्वतोमुखी ॥ ३०८ ॥
[3]गजनन्दिकया युक्तो गीतश्च तदनन्तरम् ।
नर्त्तकः सह [4]रञ्जन्या लेखः कान्तिसमन्वितः ॥३०९॥
उन्मत्तः [5]कलकण्ठी च कनकश्च वृकोदरी ।
श्यामया सहितो मेघो विमलश्च श्रिया सह ॥ ३१० ॥

[ एतन्न्यासोपसंहारः ]

अनेन न्यासयोगेन त्रैलोक्यक्षोभको भवेत् ॥ ३११ ॥

[ अथ नवयोनिन्यासोपदेशः ]

बालाबीजत्रयावृत्त्या नवयोनिं न्यसेत्ततः ।
श्रोत्रयोश्चिबुके शङ्खद्वये वदनके दृशोः ॥ ३१२ ॥

---

३१२ । अथ नवयोनिन्यासमाह—बालेत्यादिना । अत्र श्रोत्रादिकण्ठान्तेषु सप्तविंशतिस्थानेषु बालाबीजानाम् ऐँ क्लीं सौरित्येतल्लक्षणानां त्रयावृत्त्या त्रिरावृत्त्येत्यर्थः । यद्वा बालाबीजत्रयस्य आवृत्त्या त्रिरावृत्त्येत्यर्थः । नवयोनिं न्यसेदिति सम्बन्धः । अनेनैतदुक्तं भवति—निरुक्तानि श्रोत्रादीनि कण्ठान्तानि नवयोनिस्थानानि सप्तविंशतिसंख्याकानि । बालाबीजत्रयस्य च त्रिरावृत्तौ सप्तविंशतिर्बीजानि भवन्ति । तेषु च क्रमेणैकैकं बीजं निरुक्त एकैकस्मिन् स्थाने न्यसेदिति । एवञ्च दक्षकर्णे ऐँ नमः, वामकर्णे क्लीं नमः, चिबुके सौः नमः । पुनर्दक्षगण्डे ऐँ नमः, वामगण्डे क्लीं नमः । मुखे सौः नमः । एवंक्रमेणान्येष्वपि स्थानेष्वेकैकं बीजं न्यसेदिति फलितम् । न च बालाबीजत्रयावृत्त्येत्यनेन प्रत्यङ्गं बीजत्रयेण न्यास उपदिष्ट इति वाच्यम्,

नवयोन्यात्मकं न्यासं कुर्याद् बीजैस्त्रिभिः क्रमात् ।

---

1. '-भूषिणी' C. 2. 'सपेटा' C. 3. 'शुभनन्दीकरा' B. 4. 'भञ्जिन्या' । 5. 'कलकण्ठा' C.

नासायामंसयुगले हृदये कूर्परद्वये ।
उदरे जानुयुगले लिङ्गमूले पदद्वये ॥ ३१३ ॥
गुह्ये पार्श्वद्वये चैव [1]उरसि स्तनयुग्मके ।
कण्ठे च नवयोन्याख्यं [2]न्यसेत् साधकसत्तमः ॥३१४॥
बालाबीजत्रयेणैव चतुरस्रं विभाव्य च ।
गोलकन्यासयोगेन श्रीचक्रं परिचिन्तयेत् ॥ ३१५ ॥
षट्चक्रे च ललाटे च सीमन्ते तच्छिरोबिले ।
नव स्थानानि सङ्कल्प्य विन्यसेत् साधकोत्तमः ॥ ३१६ ॥

---

इत्यादितन्त्रसारधृतनिबन्धतन्त्रवचने क्रमादित्यनेन एकैकबीजयोगस्योक्तत्वात् । अत एव तन्त्रसारकारैरपि 'आद्यबीजं दक्षकर्णे द्वितीयबीजं वामकर्णे तृतीयबीजं चिबुके' इत्यादिना एकैकबीजयोगः स्पष्टमभिहितः । त्रिपुरार्चनरहस्येऽप्येवमेव । शङ्खद्वये गण्डद्वय इत्यर्थः ।

३१५—३१६ । ततः करणीयमाह—बालेति । एवं नवयोनिन्यासं विधाय बालाबीजत्रयेण श्रीचक्रं चतुरस्रं विभाव्य पुनर्बालयैव गोलकत्वेन श्रीचक्रं परिचिन्तयेदिति सम्बन्धः । अत एव तन्त्रसारकारैरपि—

बालया त्रिपुरेशान्या नवयोन्यात्मकं न्यसेत् ।

इति प्रक्रम्य "प्रयोगस्तु भैरवीप्रकरणे उक्त" इत्यभिधाय च—

पुनर्बालां समुच्चार्य गोलकत्वेन विन्यसेत् ।
पुनर्बालां समुच्चार्य चतुरस्रं विचिन्तयेत् ॥

इत्यनेन निरुक्तचतुरस्रादिचिन्ताया नवयोनिन्यासाङ्गत्वमुक्तम् । षट्चक्रेति । प्रागुक्तक्रमानुष्ठानानन्तरं बालबीजत्रयेण मूलाधारादिषु न्यसेदिति ज्ञेयम् । एवञ्च मूलाधारे ऐं क्लीं सौः नमः । पुनः स्वाधिष्ठाने ऐं क्लीं सौः नमः । एवंक्रमेण मणिपूरादिचक्रचतुष्टये ललाट-सीमन्त-शिरोबिलेषु च न्यसेदिति फलितम् ।

---

1. 'हृदये' C. 2. 'विन्यसेत् साधकोत्तमः' C.

[ श्रीविद्यान्यासः ]

श्रीविद्यां ब्रह्मरन्ध्रे तु पृष्ठतो [1]गुह्यतः क्रमात् ।
मन्त्रवर्णं न्यसेत् पश्चादेकैकक्रमभेदतः ॥ ३१७ ॥
मस्तके गुह्यदेशे च हृदि नेत्रत्रयेऽपि च ।
कर्णयोर्वदने हस्तद्वये पृष्ठे ततः परम् ।
जानुद्वये नाभिदेशे [2]संपूर्णं ब्रह्मरन्ध्रके ॥ ३१८ ॥

[ तिथिनित्यान्यासः ]

तिथिनित्या न्यसेत् पश्चान्मातृकास्वरसंयुताः ।
एकैकक्रमयोगेण साधकः स्थिरमानसः ॥ ३१९ ॥

---

३१७-३१८ । श्रीविद्यामिति । ब्रह्मरन्ध्रे पृष्ठे गुह्ये च, क ए ई ल ह्रीमित्यादिपञ्चदशाक्षरश्रीविद्यां न्यसेदित्यर्थः । मन्त्रवर्णमिति । मस्तकादिषु नाभ्यन्तेषु पञ्चदशस्थानेषु निरुक्तपञ्चदशाक्षरश्रीविद्याया एकैकं वर्णं न्यसेदित्यर्थः । एवञ्च मस्तके कं नमः, गुह्ये एं नमः, हृदि ईं नमः इत्यादिरूपः प्रयोगक्रमः । संपूर्णमिति । ब्रह्मरन्ध्रे संपूर्णं निरुक्तपञ्चदशाक्षरमन्त्रं न्यसेदित्यर्थः ।

३१९ । अथ षोडशनित्यान्यासमाह—तिथिनित्या इत्यादिना । तिथिनित्याश्च—

प्रथमा सुन्दरी नित्या महात्रिपुरसुन्दरी ।
कामेश्वरी समाख्याता तथैव भगमालिनी ॥

इत्याद्युक्तलक्षणाः कामेश्वरी-भगमालिनी-नित्यक्लिन्ना-भेरुण्डाद्याः । नित्यानामेतासां प्रतिपदादिपञ्चदश्यन्तासु तिथिषु क्रमेणोपास्यतया तिथिनित्यात्वम् । यत्तु तन्त्रसारादौ 'षोडशनित्यान्यास' इत्युक्तं तन्निरुक्तपञ्चदशनित्यान्ते न्यसनीयायाः पञ्चदशतिथिगामिन्याः श्रीविद्याया अन्तर्निवेशेनेति बोध्यम् । वक्ष्यति च स्वयमेव ग्रन्थकारः—'श्रीविद्यां विन्यसेन्मूर्ध्नि त्रिपञ्चतिथिगामिनीम्' इति । अत एव तन्त्रराजे सप्तमपटले—

षोडशानान्तु नित्यानां प्रत्येकं तिथिषु क्रमात् ।
तत्तत्तिथौ तद्भजनं जपहोमार्चनादिना ॥
घृतञ्च शर्करा दुग्धमपूपं कदलीफलम् ।
क्षौद्रं गुडं नारिकेलं फलं लाजां तिलं दधि ।

---

1. 'गुरवः' B. 2. 'संपूर्ण-' B.

[ तत्र कामेश्वरीन्यासः (१) ]

[1]तत्र च प्रथमा नित्या कामेश्वरी वशङ्करी ।
बालां वर्तुल[2]हृत्प्रान्ते कामेश्वरिपदं [3]ततः ॥ ३२० ॥
इच्छाकाम[4]फलप्रान्ते प्रदे सर्वपदं लिखेत् ।
सत्त्ववशङ्करि प्रोच्य ततः सर्वजगत्पदम् ॥ ३२१ ॥
क्षोभप्रान्ते करि ब्रूयात् कूर्चबीजत्रयं लिखेत् ।
[5]पञ्चबाणान् समालिख्य विलोमेन कुमारिकाम् ॥ ३२२ ॥

---

पृथुकं चणकं मुद्गं पायसञ्च निवेदयेत् ।
प्रतिपत्तिथिमारभ्य क्रमात् पञ्चदशस्वपि ॥
कामेश्वर्यादिशक्तीनां सर्वासामपि चोदिताम् ।
आद्याया ललितायास्तु सर्वाण्येतानि सर्वदा ॥

इत्यादिना कामेश्वर्यादीनां तत्तत्तिथिषु, ललितायाः पुनः सर्वतिथिषु घृताद्युपचार-करणकपूजनोपदेशेन नित्यानां षोडशसंख्याकत्वं व्यक्तमुक्तम् । एकैकेति । एकैक-क्रमयोगेणाकारादिविसर्गान्तमातृकायोगेनेत्यर्थः ।

३२० । तत्र प्रथमां नित्यां निर्वक्ति—कामेश्वरीत्यादिना । वशङ्करीति कामेश्वरी-विशेषणम् । तदुक्तं ज्ञानार्णवतन्त्रे पञ्चदशपटले—

कामेश्वरी महाविद्या सर्वलोकवशङ्करी ॥ इति ।

न्यासार्थमस्या मन्त्रोद्धारमाह—तत्रेत्यादिना । बालाम् ऐँ क्लीं सौरिति बीज-त्रयम् । वर्तुलं प्रणवः । कूर्चबीजत्रयं हुं हुं हुं । पञ्चबाणानिति । द्रां द्रीं क्लीं ब्लूं सः इति पञ्चबाणमन्त्रस्त्वग्रे स्वयमेव वक्ष्यते । विलोमेनेति । एतेन सौः क्लीं ऐँ इति प्राप्तम् । स्पष्टमन्यत् । एवञ्च अं ऐँ क्लीं सौः ॐ नमः कामेश्वरि इच्छाकाम-फलप्रदे सर्वसत्त्ववशङ्करि सर्वजगत्क्षोभकरि हुं हुं हुं द्रां द्रीं क्लीं ब्लूं सः सौः क्लीं ऐँ कामेश्वरीनित्याकलायै नमः इति पादाङ्गुष्ठे न्यसेदिति फलितम् । प्रतिपदिति । प्रतिपदः पञ्चदश्यन्तं प्रविन्यसेदिति पूर्वेण सम्बन्धः ।

---

1. 'तत्रादौ' C. 2. '-प्रान्ते च' B. 3. 'लिखेत्' C. 4. '-कला-' B.
5. पञ्चेत्यादिपाददशकं A-पुस्तके नास्ति ।

एषा कामेश्वरी नित्या पादाङ्गुष्ठे प्रविन्यसेत् ।
प्रतिपत्तिथि[1]मारभ्य यावत् पूर्णावसानकम् ॥ ३२३ ॥

[ भगमालान्यासः (२) ]

दक्षगुल्फे न्यसेद्देवीं भगमालां भगेश्वरीम् ।
वाग्भवं भगशब्दान्ते भगे[2]भगिनि संलिखेत् ॥ ३२४ ॥
भगोदरि[3]भगाङ्गे च भगमाले भगावहे ।
भगगुह्ये भगप्रान्ते योनि[4]भगनिपातिनि ॥ ३२५ ॥
सर्वभगे भगवशङ्कर्यन्ते भगशब्दकम् ।
रूपे नित्यपदस्यान्ते क्लिन्ने भगपदं ततः ॥ ३२६ ॥
स्वरूपे सर्वशब्दान्ते भगानीति समुद्धरेत् ।
मे ह्यानय स्वरूपान्ते वरदेऽथ समालिखेत् ॥ ३२७ ॥
रेते पदात् सुरेते च भगक्लिन्ने ततो वदेत् ।
क्लिन्नद्रवे तदन्ते च क्लेदय द्रावयेति च ॥ ३२८ ॥
अमोघे भगविच्चे च क्षुभ क्षोभय सर्वतः ।
[5]सत्त्वान् भगेश्वरि ब्रूयाद् वाग्भवं [6]ब्लूंज मित्यपि ॥३२९॥

३२४। द्वितीयां भगमालिनीमाह—दक्षेत्यादिना। दक्षगुल्फे भगमालां न्यसेदित्यर्थः। न्यासस्वरूपमाह—वाग्भवमिति। एवञ्च आं ऐँ भगभगे भगिनि भगोदरि भगाङ्गे भगमाले भगावहे भगगुह्ये भगयोनि भगनिपातिनि सर्वभगे भगवशङ्करि भगरूपे नित्यक्लिन्ने भगस्वरूपे सर्वभगानि मे ह्यानय वरदे रेते सुरेते भगक्लिन्ने क्लिन्नद्रवे क्लेदय द्रावयामोघे भगविच्चे क्षुभ क्षोभय सर्वसत्त्वान् भगेश्वरि ऐँ ब्लूं जं ब्लूं भें मों ब्लूं हें ब्लूं ऐँ ब्लूं क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं ब्लूं ह्रीं भगमालिनी-नित्याकलायै नमः। इति मन्त्रो निरुक्तप्रमाणानुसारेण पर्यवस्यति। भगाङ्गे इत्यत्र भगान्त इति पाठे भगभगमाले इति स्यात्। एतन्मन्त्रस्य क्रमभेदस्तु ज्ञानार्णव-तन्त्रसारादावनुसन्धेयः।

1. '-मासाद्य' C. 2. 'भागिनि' B. 3. 'भगान्ते' C. 4. 'भगि-' C. 5. 'तन्नो' B. 6. 'बीजमित्यपि' B.

ब्लूं भें मों ब्लूं स्वरूपान्ते ब्लूं हें ब्लूं च वाग्भवम् ।
ब्लूँ क्लिन्ने च पदस्यान्ते [1]सर्वाणि च भगानि च ॥३३०॥
मे वशमानय शब्दान्ते स्त्रीं ब्लूं च भुवनेश्वरीम् ।
भगमाला महाविद्या योषित्क्लेदनकारिणी ॥ ३३१ ॥

[ नित्यक्लिन्नान्यासः (३) ]

[2]तारो मायावाग्भवान्ते नित्यक्लिन्ने मदद्रवे ।
वह्निजायान्वितो मन्त्रो [3]नित्यक्लिन्नेयमीरिता ॥ ३३२ ॥
[4]तृतीयां तिथिमासाद्य न्यसेत्तनौ समाहितः ॥ ३३३ ॥

[ भेरुण्डा (४) ]

[5]प्रणवं चाङ्कुशद्वन्द्वमध्ये भ्रोङ्कारमालिखेत् ॥ ३३४ ॥
चवर्गमन्त्यहीनन्तु वह्नियुक्तं पृथग् लिखेत् ।
चतुर्दशस्वरोपेतं नादबिन्दुसमन्वितम् ।
वह्निजायान्वितो मन्त्रो भेरुण्डायाः प्रकाशितः ॥३३५॥

---

३३२। अथ तृतीयां नित्यक्लिन्नामाह—तार इत्यादिना। एवञ्च ऐं ॐ ह्रीं ऐं नित्यक्लिन्ने मदद्रवे स्वाहा नित्यक्लिन्नानित्याकलायै नम इति मन्त्रः पर्यवस्यति ।

परबीजं समुच्चार्य नित्यक्लिन्ने मदद्रवे ।
अग्निजायान्वितो मन्त्रो नित्यक्लिन्नेयमीरिता ॥

इति ज्ञानार्णवपञ्चदशपटलवचनानुसारेण तु ऐं ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहेति मन्त्रो भवति । तत् प्रकारद्वयमिदमिति ज्ञेयम् ।

३३३। निरुक्तन्यासस्य कालं स्थानञ्चाह—तृतीयामिति ।

३३४—३३६। चतुर्थीं भेरुण्डामाह—प्रणवमित्यादिना। आदौ प्रणवं लिखेत् । ततश्चाङ्कुशद्वन्द्वस्य क्रों क्रोमिति बीजद्वयस्य मध्ये भ्रोङ्कारं भ्रों इति बीजं लिखेत् ।

---

1. 'सत्त्वानि च' B. 2. 'सरो'? B. 3. 'भेरुण्डायाः प्रकाशितः' B. 4. 'तृतीयामि'त्यादिपादद्वयं A-B-पुस्तकयोर्नास्ति । 5. प्रणवमित्यादिपादाष्टकं A-B-पुस्तकयोर्नास्ति ।

चतुर्थ्यां योनि[1]भागे तु विन्यसेत् साधकोत्तमः ॥३३६॥

[ वह्निवासिनी (५) ]

भुवनेशीं समुद्धृत्य ङेयुतां वह्निवासिनीम् ।
हृदन्तां विन्यसेन्नाभौ पञ्चम्यां देशिकाग्रणीः ॥ ३३७ ॥

[ महानित्येश्वरी (६) ]

प्रणवं [2]शम्भुवनितां फरेमात्मकमक्षरम् ।
सविसर्गः शशी पश्चान्नित्यक्लिन्ने मदद्रवे ।
अग्निजाया महानित्येश्वरीं [3]षष्ठ्यां [4]कुचे न्यसेत् ॥३३८॥

[ शिवदूती (७) ]

मायाबीजं समुच्चार्य शिवदूत्यै नमो वदेत् ।
सप्तम्यां विन्यसेदेनां शिवदूतीं स्वयं [5]हृदि ॥ ३३९ ॥

---

आदौ च चतुर्थस्वरयोगः, अनेन ईं ॐ क्रों भ्रों क्रोमित्यन्तं प्राप्तम् । ततश्च अन्त्यहीनं ञकाररहितं चवर्गं तच्च वह्नियुक्तं रकारयुतम्, तथा चतुर्दशस्वरेण औकारेणोपेतं तथा नादबिन्दुसमन्वितं नादबिन्दू प्रसिद्धौ ताभ्यामन्वितम् । वह्निजाया स्वाहा । पूर्ववदन्यत् । एवञ्च ईं ॐ क्रों भ्रों क्रों च्रौं छ्रौं ज्रौं झ्रौं स्वाहा भेरुण्डानित्याकलायै नमः इति मन्त्रः पर्यवस्यति ।

३३७ । पञ्चमीं वह्निवासिनीमाह—भुवनेशीमित्यादिना । भुवनेशी ह्रीं । एवञ्च उं ह्रीं वह्निवासिन्यै नमः वह्निवासिनीनित्याकलायै नमः इति नाभौ न्यसेदिति फलितम् ।

३३८ । षष्ठीं महानित्येश्वरीमाह—प्रणवमित्यादिना । अत्र प्रथमं प्रणवः, ततः शम्भुवनिता ह्रीं, ततः फरेमात्मकं फ्रें इति बीजम्, ततश्च विसर्गयुक्तः शशी सकारः, ततो नित्यक्लिन्न इत्यादि । सर्वादौ षष्ठस्वरयोगः । एवञ्च ऊं ॐ ह्रीं फ्रें सः नित्यक्लिन्ने मदद्रवे स्वाहा महानित्येश्वरी-नित्याकलायै नमः इति कुचे न्यसेदिति फलितम् । अत्र महावज्रेश्वरीति तन्त्रसारकाराः । ज्ञानार्णवे पञ्चदशपटले तु—

महाविद्येश्वरी नित्या प्रसङ्गेन मयेरिता ।

इत्यनेन महाविद्येश्वरीति षष्ठ्या नित्यायाः संज्ञाभिहितेति दृश्यते ।

३३९ । अथ सप्तमीं शिवदूतीं नित्यामाह—मायाबीजमित्यादिना । अत्र प्रथमं

---

1. '-भाण्डे' B. 2. 'वह्नि-' B. 3. 'मायां' B. 4. 'कुजे' C. 5. 'कृतिः' C.

[ त्वरिता (८) ]

तारं पराञ्च कवचं [1]खे च ब्ले (छे ?) क्षः पदं लिखेत् ।
स्त्रीं हुमात्मकमालिख्य क्षेपरा[2]बीजमस्त्रकम् ।
अष्टम्यां विन्यसेत् कण्ठे त्वरितां द्वादशाक्षरीम् ॥ ३४० ॥

[ कुलसुन्दरी (९) ]

सर्वसिंहासनमयी बालेव कुलसुन्दरी ।
नवम्यां शुक्लपक्षे तु गले तां परितो न्यसेत् ॥ ३४१ ॥

[ महानित्या (१०) ]

[3]पञ्चबाणं महानित्यां दशम्यामधरे न्यसेत् ॥ ३४२ ॥

सप्तमस्वरस्ततो मायाबीजं ह्रीं । एवञ्च ऋं ह्रीं शिवदूत्यै नमः शिवदूतीनित्याकलायै नमः इति हृदि न्यसेदिति फलितम् ।

३४० । अथाष्टमीं त्वरितामाह—तारमित्यादिना । अत्र प्रथममष्टमस्वरस्ततस्तारमित्यादि । एवञ्च—ॠं ॐ ह्रीं हुं खे च ब्ले (छे ?) क्षः स्त्रीं हुं क्षे ह्रीं फट् त्वरितानित्याकलायै नमः इत्यष्टम्यां कण्ठदेशे न्यसेदिति पर्यवस्यति । परन्तु ज्ञानार्णवे पञ्चदशपटले—

ॐकारबीजमुच्चार्य परां कवचमालिखेत् ।
खे च छे क्षः समालिख्य स्त्रीबीजञ्च समालिखेत् ।
हुंकारं क्षे परा चास्त्रं विद्येयं द्वादशाक्षरी ॥

इति वचने खे च छे क्ष इत्युपादानात् तन्त्रसारेऽपि तथैव दर्शनाच्च मूलोक्तः खे च ब्ले क्ष इति पाठश्चिन्त्यः ।

३४१ । अथ नवमीं कुलसुन्दरीमाह—सर्वेत्यादिना । एवञ्च लृं ऐं क्लीं सौः कुलसुन्दरीनित्याकलायै नम इति शुक्लनवम्यां गले न्यसेदिति फलितम् ।

३४२ । अथ दशमीं महानित्यामाह—पञ्चबाणमित्यादिना । अत्रापि प्रथमं यथाश्रुतं लृमिति, ततः पञ्चबाणबीजपञ्चकम्, ततो महानित्याकलायै नम इति ।

1. 'खेचरेन्दु-' B. 2. '-मन्त्र-' B. 3. 'पञ्चे'त्यादिपादद्वयं B-पुस्तके नास्ति ।

[ पञ्चबाणमन्त्रः ]

[1]थान्तद्वयं रेफयुक्तं [2]पूर्वदीर्घद्वयान्वितम् ।
नादबिन्दु[3]कलायुक्तं कामं ब-ल-ऊमात्मकम् ।
[4]सविसर्गः शशी पश्चात् पञ्चबाणा उदाहृताः ॥ ३४३ ॥

[ नीलपताकिनी (११)]

वर्त्तुलं भुवनेशानीं फरेमात्मकमक्षरम् ।
श्रुङ्मायामङ्कुशं नित्यमदद्रवे हुमङ्कुशम् ।
एकादश्यां न्यसेद् दण्डे विद्यां नीलपताकिनीम् ॥ ३४४ ॥

---

३४३। अथ कोऽयं पञ्चबाणमन्त्रो नामेत्याकाङ्क्षायामाह—थान्तद्वयमिति। दकारद्वयमित्यर्थः, तच्च रेफयुक्तं तथा पूर्वदीर्घद्वयान्वितं द्वितीयचतुर्थस्वरयुक्तमित्यर्थः, तथा नादबिन्दुकलायुक्तम्, एतेन द्रां द्रीमिति प्राप्तम्। काममिति क्लीमिति कामबीजम्। तथा ब-ल-ऊमात्मकं ब्लूमिति बीजम्। ततश्च सविसर्गः शशी चन्द्रबीजं सकारः। एवञ्च द्रां द्रीं क्लीं ब्लूं सः इति पञ्चबाणमन्त्रः। ज्ञानार्णवे पञ्चदशपटलेऽपि—

थान्तद्वयं समालिख्य वह्निसंस्थं क्रमेण हि।
मुखवृत्तेन नेत्रेण वामेन परिमण्डितम् ॥
बाणद्वयमिदं प्रोक्तं, मादनं भूमिसंस्थितम्।
चतुर्थस्वरबिन्द्वाढ्यं नादरूपं वरानने ॥
फान्तं क्रमसमायुक्तं वामकर्णविभूषितम्।
बिन्दुनादसमायुक्तं सर्गवांश्चन्द्रमाः प्रिये ॥
पञ्चबाणा महेशानि नामानि शृणु तान्यपि।
क्षोभणद्रावणौ देवि तथाकर्षणसंज्ञकः।
वश्योन्मादौ क्रमेणैव नामानि परमेश्वरि ॥

इति। एवञ्च ऌं द्रां द्रीं क्लीं ब्लूं सः महानित्यानित्याकलायै नम इति फलितम्।

३४४। अथैकादशीं नित्यां नीलपताकिनीमाह— वर्त्तुलमित्यादिना। अत्र प्रथमं प्रागुक्तरीत्यैकादशस्वरयोगः। वर्त्तुलं प्रणवम्। भुवनेशानीं ह्रीमिति। ततः

---

1. 'स्वान्त-' B. 2. 'सर्व-' B. 3. '-समा-' C. 4. 'सविसर्ग' इत्यादि पादनवकं B-पुस्तके नास्ति।

[ विजया (१२) ]

कालाद्यं कालसंयुक्तं शेषदण्डे सुसंयुतम्।
विजयां विन्यसेदेनां द्वादश्याञ्च श्रुतौ बुधः॥ ३४५॥

[ सर्वमङ्गला (१३) ]

[1]चन्द्रं वारुणसंयुक्तं तारबीजञ्च [2]सर्वतः।
मङ्गलायै नमः प्रोच्य नेत्रे तु सर्वमङ्गलाम्॥ ३४६॥

---

फें मिति। अत्र फ्रें मिति वक्तव्ये छन्दोऽनुरोधात् फरेमित्युक्तम्। ज्ञानार्णवेऽप्येवमेव। श्रुङिति। ज्ञानार्णवे पञ्चदशपटले—

प्रणवं भुवनेशानीं फरेमात्मकमक्षरम्।
ब्लूमात्मकं द्वितीयन्तु भुवनेश्यङ्कुशं ततः।

इत्यादि—नीलपताकामन्त्रोद्धारप्रतिपादकवचने फ्रें इत्यनन्तरं ब्लूमात्मकं द्वितीयन्तु इत्यनेन ब्लूं आं इति बीजद्वयं लभ्यते। तन्त्रसारकृताऽपि तथैव मन्त्रोद्धारक्रमो दर्शितः। तन्मूले श्रुङ्मायेति पाठे तादृशमन्त्रोद्धारासम्भवाद् ब्लवां मायेति पाठो लेखकप्रमादविकृतः श्रुङ्मायेत्याकारमापन्न इति प्रतिभाति। ब्लवां मायेति पाठे तु ब्लूं आं इति बीजद्वयस्य सुघटत्वेन ज्ञानार्णव-तन्त्रसारादिभिर्विरोधः सर्वथा परिहियेत। एवञ्च ए' ॐ ह्रीं फ्रें ब्लूं आं ह्रीं क्रों नित्यमदद्रवे हुं क्रों नीलपताकिनीनित्याकलायै नमः इति पञ्चदशाक्षरो मन्त्रः पर्यवस्यति। तदुक्तं ज्ञानार्णवे पञ्चदशपटले—

नित्यशब्दं समुच्चार्य सम्बुद्ध्या च मदद्रवाम्।
कवचं चाङ्कुशं पञ्चदशैर्नीलपताकिनीम्॥ इति।

३४५। अथ द्वादशीं विजयामाह—कालाद्यमित्यादिना। अत्र प्रथमं द्वादशस्वरयोगः। ततः कालाद्यो भकारः, कालो मकारस्तत्संयुक्तम्, शेषो रकारः, दण्ड औकारः। एवञ्च ऐं भ्मरौं विजयानित्याकलायै नम इति प्रयोगः। तदुक्तं तन्त्रसारधृतज्ञानार्णवे—

वान्तं कालसमायुक्तं रेफं शक्रस्वरान्वितम्।
बिन्दुनादाङ्कितं देवि विद्येयं विजया भवेत्॥ इति।

३४६। त्रयोदशीं नित्यां सर्वमङ्गलामाह—चन्द्रमित्यादिना। अत्र प्रथमं त्रयोदशस्वरयोगः। ततश्चन्द्रः सकारस्तम्, वारुणसंयुक्तं वकारयुक्तं तारबीजं प्रणवञ्च

---

1. 'चन्द्रावरुण-' A-B. 2. 'शब्दतः' B.

[ ज्वालामालिनी (१४) ]

तारं हृद्भगवत्यन्ते ज्वालामालिनि [1]देवि च।
देवि सर्वपदान्ते च [2]भूतसंहारकारिके ॥ ३४७ ॥
जातवेदसि शब्दान्ते ज्वलन्ति-पदयुग्मकम्।
ज्वलेति प्रज्वलद्वन्द्वं हुं-कारत्रितयं लिखेत् ॥ ३४८ ॥
वह्निबीज[3]त्रयं हुञ्च शरस्वाहान्वितो मनुः।
कपाले दक्षिणे भागे ज्वालामालां प्रविन्यसेत् ॥ ३४९ ॥

[ विचित्रा (१५) ]

[4]कवर्गान्तं स्वरान्तञ्च शक्रस्वरेन्दुमण्डितम्।
विचित्रा नाम विद्येयं विन्यसेद् ब्रह्मरन्ध्रके ॥ ३५० ॥

---

प्रोच्येति सम्बन्धः। ततः सर्वतः सर्वपदान्ते मङ्गलायै नम इति। एवञ्च ओं स्वौं सर्वमङ्गलायै नम इति नेत्रे न्यसेत्। व्यक्तमाह ज्ञानार्णवे पञ्चदशपटले—

चन्द्रवारुणसंयुक्तं तारबीजं समालिखेत्।
चतुर्थ्या तु ततो देवि विलिखेत् सर्वमङ्गलाम्।
हृदन्तोऽयं मनुर्देवि नित्येयं सर्वमङ्गला ॥ इति।

३४७—३४९। अथ चतुर्दशीं ज्वालामालिनीमाह—तारमित्यादिना। अत्र प्रथमं चतुर्दशस्वरयोगः। ततस्तारः प्रणवः, हृत् नमः, ततो भगवति, ततो ज्वालामालिनि देवि, ततोऽपि देवीति। स्पष्टमन्यत्। एवञ्च ओं ॐ नमो भगवति ज्वालामालिनि देवि देवि सर्वभूतसंहारकारिके जातवेदसि ज्वलन्ति ज्वलन्ति ज्वल प्रज्वल प्रज्वल हुं हुं हुं रं रं रं हुं फट् स्वाहा ज्वालामालिनीनित्याकलायै नमः इति कपालस्य दक्षिणांशे न्यसेदिति फलितम्।

३५०। अथ पञ्चदशीं नित्यां विचित्रामाह—कवर्गान्तमित्यादिना। अत्र प्रथमं पञ्चदशस्वरयोगः, ततः कवर्गान्तश्चकारः, स्वरान्तः ककारः, शक्रस्वर औकारः। एवञ्च अं चक्रौं विचित्रानित्याकलायै नम इति ब्रह्मरन्ध्रे न्यसेदिति फलितम्।

---

1. 'देवि' B. 2. 'भूतं महति कारके' B. 3. '-त्रयार्णञ्च' B. 4. 'कवर्गान्तञ्च स्वाहान्तं शक्रमेवेन्दुमण्डितम्' B.

[ निरुक्तन्यासे विशेषः ]

शुक्लपक्षे न्यसेद्दक्षे सव्ये कृष्णे क्रमाद् बुधः ॥ ३५१ ॥

[ श्रीविद्या (१६) ]

श्रीविद्यां विन्यसेन्मूर्ध्नि त्रिपञ्चतिथिगामिनीम् ॥ ३५२ ॥

[ स्थितिन्यासः ]

स्थितिन्यासं ततः कुर्याच्च श्रीविद्याषोडशाक्षरैः ।
पञ्चाङ्गुलीषु करयोर्ब्रह्मरन्ध्रे मुखे हृदि ॥ ३५३ ॥
नाभ्यादिपादपर्यन्तं गलादानाभि चापरम् ।
ब्रह्मरन्ध्रादिकण्ठान्तं पादद्वये ततः परम् ।
[1]अङ्गुलीषु ततः पश्चादेकैकाक्षरभेदतः ॥ ३५४ ॥

[ सृष्टिन्यासः ]

श्रीविद्याषोडशार्णैस्तु सृष्टिन्यासं समाचरेत् ।
ब्रह्मरन्ध्रेऽलके नेत्रे श्रुतिघ्राणांसकेषु च ॥ ३५५ ॥

---

३५१। पक्षभेदेन निरुक्तन्यासे विशेषमाह--शुक्लेति ।

३५२। अथ षोडशीं नित्यां श्रीविद्यामाह--श्रीत्यादिना। त्रिपञ्चतिथिगामिनीमित्यनेन प्रतिपदादिपञ्चदश्यन्तासु सर्वास्वेव तिथिष्वेतन्न्यासस्य कर्त्तव्यत्वमुक्तम् । अत्र प्रथमं षोडशस्वरयोगः । ततो मूलं ततश्च श्रीमहात्रिपुरसुन्दरीनित्याकलायै नम इति मूर्ध्नि न्यसेत् । इति षोडशनित्यान्यासः ।

३५३—३५४ । अथ स्थितिन्यासमाह—स्थितिन्यासमित्यादिना । श्रीविद्याषोडशाक्षरैः कराङ्गुल्यादिषोडशस्थानेष्वेकैकाक्षरभेदतः स्थितिन्यासं कुर्यादिति सम्बन्धः । पादद्वये, ततः परम् अङ्गुलीष्विति पादाङ्गुलिष्वित्यर्थः । एवञ्च कराङ्गुलिषु पञ्च ब्रह्मरन्ध्रादिषु त्रय इत्यष्टौ नाभ्यादिपादपर्यन्तमेकः गलान्नाभिपर्यन्तमेकः ब्रह्मरन्ध्रादिकण्ठान्तमेक इत्येकादश । पादाङ्गुलिषु पञ्चेति षोडशाक्षरन्यासक्रमः ।

३५५—३५६ । अथ सृष्टिन्यासमाह—श्रीविद्येत्यादिना । अत्रापि एकैकाक्षरभेदत

---

1. 'अङ्गुष्ठेषु' B.

दन्तयोरोष्ठयोश्चैव रसनागलकूपके ।
[1]पृष्ठ-सर्वाङ्ग[2]हृदयस्तनकुक्षिषु लिङ्गके ॥ ३५६ ॥

[ संहारन्यासः ]

श्रीविद्याषोडशार्णैस्तु संहारन्यासमाचरेत् ॥ ३५७ ॥
पादयोर्जङ्घयो[3]र्जान्वोः कट्यो[4]रन्धुनि पृष्ठके ।
नाभौ पार्श्वद्वये चैव स्तनयोरंसयोस्तथा ॥ ३५८ ॥
कर्णयो(?)र्ब्रह्मरन्ध्रे [5]च वदने बिन्दु विन्यसेत् ।
ततः कर्णप्रदेशे [6]च करे वै [7]तदनुक्रमात् ॥ ३५९ ॥

[ निरुक्तन्यासत्रयस्याधिकारिभेदः ]

[8]उत्पत्तिसंज्ञको न्यासः [9]प्रथमाश्रमवासिनाम् ।
गृहस्थानां स्थितिन्यासः संहाराख्यो [10]यतेर्भवेत् ॥३६०॥

---

इति सम्बध्यते । तथा च ब्रह्मरन्ध्रादिषु षोडशस्थानेषु प्रागुक्तषोडशीविद्याया एकैकाक्षरं न्यसेदित्यर्थः ।

३५७—३५९ । अथ संहारन्यासमाह—श्रीविद्येत्यादिना । तथा च पादादिकरपृष्ठान्तेषु षोडशस्थानेषु प्रागुक्तश्रीविद्याषोडशवर्णान् न्यसेदित्यर्थः । अन्धुनि पायुस्थाने । अत्र कर्णयोरिति पाठः प्रामादिक इति प्रतिभाति ।

करयोर्जङ्घयोर्जान्वोः कट्यामङ्गुलि (?) पृष्ठके ।
नाभौ पार्श्वद्वये चापि स्तनयोरंसयोस्तथा ।
करयोर्ब्रह्मरन्ध्रे च वदने भ्रुवि पार्वति ।
ततः कर्णप्रदेशे च करवेष्टनयोः क्रमात् ।

इति तन्त्रसारधृतवचने करयोरित्यभिधानाद् वक्ष्यमाणकर्णप्रदेशपदेन पौनरुक्त्यसम्भवाच्चेति ध्येयम् ।

---

1. 'पृष्ठे' B. 2. '-हृदये' B. 3. '-र्जानोः' C. 4. '-रन्ध्रणि' C. 5. 'तु' C. 6. 'तु' C. 7. 'तदहः-' C. 8. 'तत्परि-' C. 9. 'प्रथमप्रसवासिनाम्' B. 10. 'यति-' B.

[ चक्रेश्वरीन्यासः ]

[1]अथ चक्रेश्वरीन्यासं कुर्यात् साधकसत्तमः ।

[ तत्र स्थाननिरूपणम् ]

शिरो[2]ललाटभ्रू[3]मध्य-कण्ठहृन्नाभिगोचरे ॥ ३६१ ॥
लिङ्गमूले तथाधारे सर्वाङ्गे च प्रविन्यसेत् ।

[ न्यासपरिपाटी ]

करशुद्धिकरीं विद्यामुच्चार्य त्रिपुरां ततः ॥ ३६२ ॥
[4]बालाबीजत्रयेणैव त्रिपुरेशीं न्यसेद् बुधः ।
मूलमन्त्रेण मन्त्रज्ञः श्रीमत्त्रिपुरसुन्दरीम् ॥ ३६३ ॥
पूर्वोक्तेनैव मन्त्रेण त्रिपुरावासिनीं न्यसेत् ।
त्रिपुराश्रियश्च मन्त्रज्ञस्त्रिपुरामालिनीं ततः ॥ ३६४ ॥
तथा च त्रिपुरासिद्धां ततश्च त्रिपुरात्मिकाम् ।
बालामन्त्रं समुच्चार्य [5]ततस्त्रिपुरभैरवीम् ॥ ३६५ ॥

---

३६१-३६२ । ततश्चक्रेश्वरीन्यासमाह—अथेत्यादिना । तत्र प्रथमं न्यासयोग्यानि स्थानानि निरूपयति—शिर इत्यादिना । तत्र न्यासस्य क्रममभिधत्ते—करेत्यादिना । करशुद्धिकरी विद्या तु अं आं सौरिति बीजत्रयमिति पूर्वमेव ( १५।७० श्लो० ) प्रदर्शितम् । आदौ निरुक्तां करशुद्धिकरीं विद्यामुच्चार्य त्रिपुरां न्यसेदिति सम्बन्धः । एवञ्च अं आं सौस्त्रिपुरायै नम इति शिरसि न्यसेदिति पर्यवस्यति ।

३६३ । द्वितीयं चक्रेश्वरीन्यासमाह—बालेत्यादिना । एवञ्च ऐं क्लीं सौः त्रिपुरेश्वर्यै नम इति ललाटे न्यसेदिति पर्यवस्यति । तृतीयं चक्रेश्वरीन्यासमाह—मूलमन्त्रेणेति । तथा च मूलमुच्चार्य श्रीमत्त्रिपुरसुन्दर्यै नम इति भ्रूमध्ये न्यसेदिति पर्यवसितम् ।

३६४-३६५ । अथ त्रिपुरावासिन्यादित्रिपुरात्मिकान्तचक्रेश्वरीपञ्चकन्यासमाह—पूर्वोक्तेनेत्यादिना त्रिपुरात्मिकामित्यन्तेन । पूर्वोक्तेन मूलेन, तस्यैवाव्यवहितपूर्वमभिधानात् । विशेषानभिधानात् त्रिपुराश्रीप्रभृतीनां त्रिपुरात्मिकान्तानां पुरतोऽपि

---

1. 'तथा' B. 2. '-ललाटे' B. 3. '-मध्ये' B. 4. 'रमा-' B. 5. 'तत्र त्रि' C.

शिवसोमवह्नि[1]बीजं वाग्भवेन समन्वितम्।
विय[2]दिन्दुकामशक्रवह्निमाये[3]ति बिन्दुमत्॥ ३६६॥
आकाशचन्द्र[4]वह्निश्च शक्रस्वरविभूषितम्।
विसर्गेन्दुसमायुक्तं विद्या त्रिपुरभैरवी॥ ३६७॥

[ पीठन्यासः ]

पीठन्यासमथो वक्ष्ये तत्त्व[5]विमर्षणीक्रमात्।
[6]मूलवाग्भवमुच्चार्य [7]अग्निचक्रे पदं ततः॥ ३६८॥

---

मूलयोगो बोध्यः। एवञ्च मूलमुच्चार्य त्रिपुरावासिन्यै नम इति कण्ठे, त्रिपुराश्रियै नम इति हृदि, त्रिपुरामालिन्यै नम इति नाभौ, त्रिपुरासिद्धायै नम इति लिङ्गमूले, त्रिपुरात्मिकायै नम इति मूलाधारे न्यसेदिति पर्यवसितम्।

३६६—३६७। अथ नवमचक्रेश्वरीन्यासमाह—बालेत्यादिना आदौ ऐँ क्लीं सौरिति बालामन्त्रं समुच्चार्य ततस्त्रिपुरभैरवीमन्त्रमुच्चारयेदित्यर्थः। त्रिपुरभैरवी-मन्त्रं त्रिकूटात्मकमाह—शिवेत्यादिना। शिवो हकारः, सोमः सकारः, वह्निबीजं रकारः, वाग्भवेन ऐकारेण। एवञ्च हसरैं इति वाग्भवकूटं प्राप्तम्। वियदिति। वियत् हकारः, इन्दुः सकारः, कामः ककारः, शक्रो लकारः, वह्नी रकारः, बिन्दुरनुस्वारः। अनेन ह स क ल रीमिति कामराजकूटं प्राप्तम्। आकाशेति। आकाशो हकारः, चन्द्रः सकारः, वह्नी रकारः, शक्रस्वर औकारः, विसर्गो बिन्दुश्च प्रसिद्धौ। एवञ्च हसरैं ह स क ल रीं ह स रौः इति त्रिपुरभैरवीमन्त्रः। व्यक्तमाह सारदायां द्वादशपटले—

वियद्भृगुहुताशस्थो भौतिको बिन्दुशेखरः।
वियत्तदादिकेन्द्राग्निस्थितं वामाक्षिबिन्दुमत्।
आकाशभृगुवह्निस्थो मनुः सर्गेन्दुखण्डवान्॥

इति। एवञ्च ऐँ क्लीं सौः हसरैं ह स क ल रीं ह स रौः त्रिपुरभैरव्यै नम इति सर्वाङ्गे न्यसेदिति फलितम्।

३६८—३७६। अथ पीठन्यासं वक्तुं प्रतिजानीते—पीठमित्यादिना। मूलेति

---

1. '-वर्णं' C. 2. '-द्विष्णु-' C. 3. '-न्दु-' A-B. 4. '-बिन्दुश्च' A-B. 5. '-विमर्षिणी' B. 6. 'मूलं' B. 7. 'स्वाहा अग्निपदं' A-B.

[1]कामगिर्यालये मित्रीशनाथ-पदात्मके ।
कामेश्वरीतिशब्दान्ते देवी रुद्रात्मशक्तितः ॥ ३६९ ॥
पादुकामन्त्रमुच्चार्य [2]मूलाधारे प्रविन्यसेत् ।
मूलद्वितीयमुच्चार्य सूर्यचक्रे पदं ततः ॥ ३७० ॥
[3]जालन्धरपदात् पीठे षष्ठीनाथात्मके पदम् ।
वक्रे्श्वरीतिशब्दान्ते देवी विष्ण्वात्मशक्तितः ॥३७१॥
पादुकाख्येन मनुना हृदये विन्यसेद् बुधः ।
शक्तिबीजं समुच्चार्य सोमचक्रे पदं ततः ॥ ३७२ ॥
पूर्णगिरिपदस्यान्ते गह्वरे पदमुद्धरेत् ।
उड्डीशनाथात्मके शब्दाद् भग[4]पूर्वा च मालिनी ॥३७३॥
देवी ब्रह्मात्मशक्तिश्रीपादुकामनुमुच्चरन् ।
भ्रूमध्ये विन्यसेत्तुर्यबीजमुच्चार्य तत्परम् ॥ ३७४ ॥
ब्रह्म[5]चक्रे पदा[6]दुड्डीयानपीठे तदन्तरम् ।
चर्यानाथात्मके पश्चान्महात्रिपुरसुन्दरीम् ॥ ३७५ ॥
परंब्रह्मपदादात्म-शक्तिपदं वदेत्ततः ।
पादुकामनुमुच्चार्य ब्रह्मरन्ध्रे प्रविन्यसेत् ॥ ३७६ ॥

---

वाग्भवकामराजशक्तिकूटरूपकूटत्रयात्मकाः श्रीमत्त्रिपुरसुन्दरीमन्त्राः पूर्वमुपदर्शिताः । अत्र मूलवाग्भवपदेन निरुक्तकूटघटितमन्त्राणां प्रथमकूटं ग्राह्यम् । एवञ्च ई ए क ल ह्रीमित्याद्यन्यतमं स्वेष्टमन्त्रस्य वाग्भवकूटमुच्चार्य अग्निचक्रे कामगिर्यालये मित्रीश-नाथात्मके कामेश्वरीरुद्रात्मशक्तिदेवीश्रीपादुकायै नम इति मूलाधारे न्यसेदिति पर्यवस्यति । तदुक्तं गन्धर्वतन्त्रे दशमपटले—

---

1. 'कामाग्निज्वालयः सिद्धगिरीशपदमात्मने' A-B. 2. 'मूलाधार' इत्यादि पादद्वयं A-B-पुस्तकयोर्नास्ति । 3. 'जालन्धन-' C. 4. '-दूर्वा' B. 5. '-वक्रे' A-B. 6. '-द्धस्ति-' B.

[ तत्त्वन्यासः ]

तत्त्वन्यासमथो वक्ष्ये सर्वपापनिकृन्तनम् ॥ ३७७ ॥
वाग्भवान्ते चात्म[1]तत्त्वव्यापिकायै [2]पदं ततः ।
महात्रिपुरसुन्दर्यै नम इत्यनुना[3] न्यसेत् ॥ ३७८ ॥

---

मूलवाग्भवमुच्चार्य अग्निचक्रे पदं ततः ।
कामगिर्यालये पश्चान्मित्रीशपदमुद्धरेत् ॥
नाथात्मके पदं पश्चात् कामेश्वरीपदं ततः ।
रुद्रात्मशक्तिशब्दाच्छ्रीपादुकायै नमो न्यसेत् ।
आधारे परमेशानि हृदये च ततः परम् ॥ इति ।

मूलद्वितीयमिति । तथा च, ह स क ह ल ह्रीमित्याद्यन्यतमं कामराजकूटमुच्चार्य सूर्यचक्रे जालन्धरपीठे षष्ठीनाथात्मके वज्रेश्वरीदेवीविष्णवात्मकशक्तिश्रीपादुकायै नम इति हृदये न्यसेदिति पर्यवसितम् ।

शक्तिबीजमिति । तथा च, स क ल ह्रीमित्याद्यन्यतमं स्वेष्टमन्त्रशक्तिकूटमुच्चार्य सोमचक्रे पूर्णगिरिगह्वरे उड्डीशनाथात्मके भगमालिनीदेवीब्रह्मात्मशक्तिश्रीपादुकायै नम इति भ्रूमध्ये विन्यसेदिति पर्यवसितम् ।

तुर्येति । एकैकशः कूटत्रयोच्चारणानन्तरं समष्ट्या तदुच्चारणस्य तुर्यत्वेन तुर्यबीजपदेन कूटत्रयात्मको मन्त्र उच्यते । तथा च, ई ए क ल ह्रीं । ह स क ह ल ह्रीं । स क ल ह्रीमित्याद्यन्यतममन्त्रमुच्चार्य ब्रह्मचक्रे उड्डीयानपीठे चर्यानाथात्मके महात्रिपुरसुन्दरीदेवीपरब्रह्मात्मशक्तिश्रीपादुकायै नम इति ब्रह्मरन्ध्रे न्यसेदित्यर्थः । व्यक्तमाह तन्त्रसारधृतकुलामृते—

* * समस्तञ्च मन्त्रमुच्चार्य पार्वति ।
परं ब्रह्मपदं चक्र उड्डीयानपदं ततः ॥
पीठे पदं योजयित्वा चर्यानाथात्मके पदम् ।
महात्रिपुरशब्दान्ते सुन्दरीति पदं ततः ।
देवीब्रह्मपदात्मान्ते शक्तिश्रीपादुकां ततः ॥ इति ।

इति पीठन्यासः ।

३७७—३८२ । एवं पीठन्यासमभिधाय तत्त्वन्यासं वक्तुं प्रतिजानीते—तत्त्व-

---

1. '-तत्त्वे' A-B. 2. 'पदात्' B. 3. '-मुना' B.

मूलादिब्रह्मरन्ध्रान्तं तदादिभ्रूलतावधि ।
कामराजं समुच्चार्य विद्यातत्त्वादि पूर्ववत् ॥ ३७९ ॥
नाभ्यादिभ्रूलतान्तञ्च तदादिहृदयावधि ।
शक्तिबीजं समुच्चार्य शिवतत्त्वादिकं तथा ॥ ३८० ॥
मूलादिहृदयान्तञ्च तदादिलिङ्गमूलकम् ।
अमुना विन्यसेत्तुर्य-बीजान्ते सर्वतत्त्वतः ॥ ३८१ ॥
व्यापिकायै ङेनमोऽन्तो महात्रिपुरसुन्दरी ।
मूलादिब्रह्मरन्ध्रान्तं तदादिचरणं न्यसेत् ॥ ३८२ ॥

[ अस्त्रन्यासः ]

अस्त्रन्यासं ततः कुर्याद्देव्याः प्रीतिकरं [1]क्रमात् ।
[2]पञ्चबाणं समुच्चार्य [3]कामेशी[4]बाणमुच्चरेत् ॥ ३८३ ॥

---

न्यासमित्यादिना । तत्त्वन्यासपरिपाटीं दर्शयति—वाग्भवान्त इति । अत्रापि पूर्ववत् क्रमेण समष्ट्या च कूटत्रययोगः । तथा च मूलमन्त्रस्य वाग्भवकूटमुच्चार्य आत्मतत्त्व-व्यापिकायै महात्रिपुरसुन्दर्यै नम इति मूलाधाराद् ब्रह्मरन्ध्रान्तं ब्रह्मरन्ध्राच्च भ्रूलतापर्यन्तं न्यसेत् । कामराजमिति । ततश्च कामराजकूटमुच्चार्य विद्यातत्त्व-व्यापिकायै महात्रिपुरसुन्दर्यै नम इति नाभिदेशतो भ्रूलतापर्यन्तं भ्रूलताया हृदयपर्यन्तं न्यसेत् । शक्तिबीजमिति । शक्तिकूटमित्यर्थः । तथा च, पूर्ववच्छक्तिकूटमुच्चार्य शिवतत्त्वव्यापिकायै महात्रिपुरसुन्दर्यै नम इति मूलाधारतो हृदयान्तं हृदयाच्च लिङ्गमूलान्तं न्यसेत् । अनुनेति । तथा च, पूर्ववत्तुर्यबीजान्ते त्रिकूटात्मकं मन्त्र-मुच्चार्येत्यर्थः, सर्वतत्त्वव्यापिकायै महात्रिपुरसुन्दर्यै नम इति मूलाधारतो ब्रह्मरन्ध्रपर्यन्तं पुनर्ब्रह्मरन्ध्रादाचरणं न्यसेदिति तत्त्वन्यासक्रमः पर्यवस्यति ।

३८३ । अथास्त्रन्यासमुपदिशति—अस्त्रन्यासमित्यादिना । पञ्चबाणमिति । द्रां द्रीं क्लीं ब्लूं स इति पञ्चबाणमन्त्रः पूर्वमेव ग्रन्थकारैरुपदिष्टः । एवं पञ्चबाणमुच्चार्य कामेश्वरीपञ्चबाणमुच्चरेदित्यर्थः ।

---

1. 'महत्' C. 2. 'पञ्चरागं' B. 3. 'बामेशी-' B. 4. '-बाम-' B.

त्वगादिपञ्चवर्णन्तु क्रमेण विलिखेत् सुधीः।
अनन्तेन समायुक्तं विन्दु-नाद-कलान्वितम्॥ ३८४॥
कामेश्वरीपञ्चबा[1]णाः कथि[2]ताः कामदाय[3]काः॥३८५॥

[ न्यासपरिपाटी तत्र बाणन्यासः ]

मणिरन्ध्रं ततो बाणं [4]जम्भलेभ्यः समालिखेत्।
कामेश्वरेति बाणेभ्यो हृद्दत्ताधः [5]करे निजे॥ ३८६॥
यादिद्रादीनि जं बीजं जम्भलेभ्यः समालिखेत्।
कामेश्वरीति बाणेभ्यो नमोऽन्तश्च समालिखेत्॥३८७॥
देव्याः प्रविन्यसेद् बाणान् [6]पौष्पान् साधकसत्तमः।

[ धनुर्न्यासः ]

[7]द्रादियादीनि धं ङेऽन्तं संमोहनपदं ततः॥ ३८८॥

---

३८४। कामेश्वरीबाणपञ्चकमाह—त्वगादीत्यादिना। य-र-ल-व-शाः पञ्चवर्णाः क्रमेण त्वगसृङ्मांसमेदोऽस्थिरूपा इति श्रीकण्ठन्यासादेरवगन्तव्यम्। मूले त्वगादिपञ्चवर्णन्त्वित्यनेन निरुक्तयकारादिवर्णपञ्चकमुक्तम्। तच्च अनन्तेन आकारेण समन्वितं तथा बिन्दुनादकलायुक्तम्। एतेन यां रां लां वां शामिति कामेश्वरीबाणपञ्चकमित्युक्तं भवति। व्यक्तमाह तन्त्रसारधृतगुप्तार्णवे—

द्रां द्रीं क्लीं ब्लूं स इत्येते कामबाणाः प्रकीर्त्तिताः।
यां रां लां वां शामिदं कामेश्वरीबाणपञ्चकम्॥ इत्यनेन।

३८६-३८८। न्यासपरिपाटीमाह—मणीत्यादिना साधकसत्तम इत्यन्तेन। तथा च, द्रां द्रीं क्लीं ब्लूं सः यां रां लां वां शां जं जम्भलेभ्यः कामेश्वरबाणेभ्यो नम इति प्रयोगः। न्यासस्थानमाह—हृदिति। यादीति। तथा च यां रां लां वां शां द्रां द्रीं क्लीं ब्लूं सः जं जम्भलेभ्यः कामेश्वरीबाणेभ्यो नम इति प्रयोगः। न्यासस्थानन्तु पूर्ववत्।

३८८—३८६। अथ कामेश्वरसम्मोहनधनुर्न्यासमाह—द्रादीति। तथा च, द्रां

---

1. '-णं' C. 2. '-तं' C. 3. '-कम्' C. 4. 'स्तम्भनेभ्यः' B. 5. 'करयोर्निजे' A. 6. 'पौष्टान्' ? C. 7. 'द्राद्यीयादिविधं' A-B.

ङेऽन्तं कामेश्वरधनुर्नमोऽन्तश्च प्रविन्यसेत् ।
अनेन मनुना मन्त्री वामाधश्च करे निजे ।
यादिद्रादीनि [1]थं ङेऽन्तं संमोहनपदं ततः ॥ ३८९ ॥
कामेश्वरीधनुर्ङेऽन्तं नमोऽन्तेन तु साधकः ।
वामदेव्या वामहस्ते विन्यसेदैन्तवं धनुः ॥ ३९० ॥

[ पाशन्यासः ]

द्रादियादीनि बीजानि मुखवृत्तं सबिन्दुकम् ।
स्याद्वशीकरणायेति कामेश्वरपदं ततः ॥ ३९१ ॥
पाशाय नम इत्येवं वामोर्द्ध्वे विन्यसेत् करे ।
यादिद्रादीनि गगनं वह्निमायेन्दुबिन्दुमत् ॥ ३९२ ॥
स्याद् वशीकरणायेति कामेश्वरीपदं ततः ।
पाशाय नम इत्येवं देव्या वामोर्द्ध्वगे न्यसेत् ॥ ३९३ ॥

[ अङ्कुशन्यासः ]

द्राद्रियादीनि बीजानि क्रों ङेऽन्तं स्तम्भनं ततः ।
कामेश्वराङ्कुशायान्ते नमोर्द्ध्व वामहस्तके ॥ ३९४ ॥

---

द्रीं क्लीं ब्लूं सः यां रां लां वां शां धं सम्मोहनाय कामेश्वरधनुषे नम इति प्रयोगः । निरुक्तमन्त्रकरणकन्यासस्य स्थानमाह—अनेनेत्यादिना । अथ कामेश्वरीसम्मोहन-धनुर्न्यासमाह—यादीत्यादिना । तथा च, यां रां लां वां शां द्रां द्रीं क्लीं ब्लूं सः थं सम्मोहनाय कामेश्वरीधनुषे नम इति प्रयोगः ।

३९१—३९२ । अथ पाशन्यासमाह—द्रादीति । तथा च, द्रां द्रीं क्लीं ब्लूं सः यां रां लां वां शां आं वशीकरणाय कामेश्वरपाशाय नम इति प्रयोगः ।

यादीत्यादि । एवञ्च यां रां लां वां शां द्रां द्रीं क्लीं ब्लूं सः ह्रीं वशीकरणाय कामेश्वरीपाशाय नम इति प्रयोगः ।

३९४ । अथानयोरङ्कुशन्यासमाह—द्रादीत्यादिना । तथा च, द्रां द्रीं क्लीं ब्लूं सः यां रां लां वां शां क्रों स्तम्भनाय कामेश्वराङ्कुशाय नम इति प्रयोगः पर्यवस्यति ।

---

1. 'सं' B.

याद्द्रिद्रादीनि बीजानि क्रों ङेऽन्तं स्तम्भनं पदम् ।
कामेश्वर्यङ्कुशायान्ते देव्या दक्षोर्ध्वगे न्यसेत् ॥ ३६५॥

[ कूटन्यासः ]

कूटन्यासं ततः कुर्यात् क्रमेण साधकोत्तमः ।
करयोर्मूलमध्या[1]ग्रे मूलहृद्भ्रूयुगान्तरम् ॥ ३६६ ॥
मूलखण्ड[2]त्रयावृत्त्या स्थानेष्वेषु प्रविन्यसेत् ।
ब्रह्मरन्ध्रे [3]तुरीयञ्च तेनैव व्यापकं न्यसेत् ॥ ३६७ ॥

[ त्रिपुरान्यासः * ]

पश्चात्त्रिपुरान्यासं मातृकार्णै[4]र्न्यसेदथ ।

---

३६५। यादीत्यादि। तथा च, यां रां लां वां शां द्रां द्रीं क्लीं ब्लूं सः क्रों स्तम्भनाय कामेश्वर्यङ्कुशाय नम इति प्रयोगः पर्यवस्यति। इत्यस्त्रन्यासः। अयं न्यासस्तत्त्वमुद्रया कार्य इति त्रिपुरार्चनरहस्ये।

३६६—३६७। एवमस्त्रन्यासमभिधाय कूटन्यासमाह—कूटन्यासं ततः कुर्यादित्यादिना। अत्र क्रमेण मूलखण्डत्रयावृत्त्या करयोर्मूलमध्याग्रेषु तथा मूलाधारो हृदयं भ्रुवोर्मध्यमित्येषु स्थानेषु च प्रविन्यसेदिति सम्बन्धः। अत्रेदमवधेयम्—पूर्वोदितानां वाग्भवकामराजशक्त्यात्मककूटत्रयात्मकानां स्वस्वेष्टमन्त्राणां वाग्भवकूटमुच्चार्य दक्षिणकरस्य मूले, कामराजकूटमुच्चार्य मध्ये, शक्तिकूटमुच्चार्याग्रे न्यसेत्। ततो वामकरस्य मूलमध्याग्रेष्वप्यनयैव रीत्या न्यासः कर्त्तव्यः। ततः पुनर्वाग्भवकूटमुच्चार्य मूलाधारे, कामराजकूटमुच्चार्य हृदि, शक्तिकूटमुच्चार्य च भ्रुवोर्मध्ये न्यसेदिति बोध्यम्। ब्रह्मरन्ध्र इति, तुरीयं बीजं कूटत्रयसमष्टिरूपं मन्त्रम्। तुरीयत्वञ्चास्य त्रिरावृत्त्या प्रयुक्तं मन्त्रमपेक्ष्येति बोध्यम्।

एवञ्च ए ई क ल ह्रीं नम इति दक्षकरस्य मूले, ह स क ह ल ह्रीं नम इति मध्ये, स क ल ह्रीं नम इत्यग्रे न्यसेत्। एवमन्येष्वपि निरुक्तेष्वङ्गेषु बोध्यम्। तेनैवेति, कूटत्रयसमष्टिरूपेण तुरीयेणेत्यर्थः।

---

1. '-ग्रे' A-B. 2. 'त्रिरावृत्य' ? A-B. 3. 'तु नीलञ्च' B. * त्रिपुरान्यासोऽयं A-पुस्तके नास्ति। 4. '-र्णं न्य-' B.

[ तत्र पञ्चाशत्त्रिपुरानिर्णयः ]

कामिनी [1]मोदिनीनाम्नी मदनोन्मादिनी भुवि[2] ॥३९८॥
खेचरी [3]कामिनीनाम्नी [4]घण्टिका क्लेदिनी ततः ।
शिवदूती च सुभगा भगा [5]विद्येश्वरी ततः ॥ ३९९ ॥
महालक्ष्मीः [6]कौलिनी स्यात् [7]कामेशी कुलमालिनी ।
[8]अन्या स्याद् व्यापिनीनाम्नी [9]भगावहाभिधा ततः ॥४००
वागीश्वर्यभिधा कामा पिङ्गला भगसर्पिणी ।
अथ स्यात् सुन्दरीनाम्नी नीलपूर्वा पताकिनी ॥४०१॥
सिद्धेश्वरी [10]ह्यमोघा च मोघा तद्रक्तमालिनी ।
मङ्गला भगमालिन्यथा रौद्री योगेश्वरीति च ॥४०२॥
अम्बिका स्यादट्टहासा व्योमतो व्यापिनीपदम् ।
[11]वज्रेश्वरी क्षोभिणी च शाम्भवी स्यात्तथाऽणिमा[12] ॥४०३
लोकेश्वर्यभिधा रक्ता सूक्ष्मा[13]श्वेताऽपराजिता ।
सम्वर्त्ता विमला मोघा भैरवी [14]घोरसंज्ञका ॥ ४०४ ॥
ततः सर्वाकर्षिणी च त्रिपुरान्त इमाः स्मृताः ।

[ मातृकास्थानेष्वेतन्न्यासोपदेशः ]

मातृकावन्न्यसेदेतास्त्रिपुराप्रीतिहेतवे ॥ ४०५ ॥

---

३९८—४०५ । अथ त्रिपुरान्यासमाह—पञ्चाशदित्यादिना त्रिपुराप्रीतिहेतवे इत्यन्तेन । पञ्चाशत्त्रिपुरास्तु कामिन्यादिसर्वाकर्षिण्यन्ताः । मातृकार्णै रकारादिक्षकारान्तैर्मातृकावर्णैर्निरुक्तास्त्रिपुरास्त्रिपुराशब्दान्ता न्यसेदिति सम्बन्धः । अत्र मातृकावन्न्यसेदेता इत्यभिधानाल्ललाटादिमातृकास्थानेष्वयं न्यासः कर्त्तव्य इति बोध्यम्, एवञ्च अं कामिन्यै

---

1. 'मेदिनी-' B. 2. इतः परं 'भगावहाभिधा तथा' इति C-पुस्तके बन्धनीपाठः । 3. 'घटिका-' B. 4. 'घटिका' B. 5. 'विश्वेश्वरीति च' 6. 'कौलिकी' 7. 'कालेशी' B. 8. 'अन्यासीद' B. 9. 'भगलेहा-' B. 10. 'इसिद्धेशी' C. 11. 'वक्रे-' C. 12. '-मिसा' B. 13. '-स्तेभा-' C. 14. 'योनि-' C.

[ चक्रन्यासः, तत्र सप्रशस्तिकन्यासप्रतिज्ञा ]

चक्रन्यासं प्रवक्ष्यामि सर्वोत्कृष्टं शुभप्रदम् ।
देहशुद्धिकरं [1]नित्यं सिद्धिदं पापनाशनम् ॥ ४०६ ॥

[ न्यासपरिपाटी, तत्र प्रथमावरणन्यासः ]

चतुरस्राद्यरेखायै नमोऽन्ते व्यापकं न्यसेत् ।
मायाश्रीबीजपूर्वञ्च कृत्वा साधकसत्तमः ॥ ४०७ ॥
दक्षांसपृष्ठपाण्यग्रे[2] स्फिचि पादाङ्गुलीषु च ।
वामपादाङ्गुलिकटौ पाण्यग्रे [3]पृष्ठ अंशके ॥ ४०८ ॥
[4]अत्रैव स्थानदशकेष्वणिमाद्या न्यसेद्दश ।
चतुरस्रमध्यरेखां विन्यसेत् पूर्ववत् पुनः ॥ ४०९ ॥

---

नम इति ललाटे, आं मोदिन्यै नम इति मुखवृत्ते न्यसेत् । एवमन्येष्वपि मातृकान्यासक्रमोक्तेष्वङ्गेषु मदनादीनां सर्वाकर्षिण्यन्तानां न्यासः कर्त्तव्य इति ज्ञेयम् । स्पष्टमन्यत् ।

४०६ । अथ फलप्रदर्शनपूर्वकं चक्रन्यासं वक्तुं प्रतिजानीते--चक्रेत्यादिना ।

४०७ । तत्र न्यासपरिपाटीं दर्शयति—चतुरित्यादिना । माया-श्रीबीजपूर्वञ्चेत्यस्य चतुरस्रेत्यादिना अणिमाद्या इत्यादिना च सम्बन्धः । एवं दक्षांसेत्यादेरपि । तथा चामृतानन्दनाथेनापि योगिनीहृदयटीकायां "चतुरस्राद्यरेखायै नम इति मन्त्रेणाऽऽदितो दक्षांसपृष्ठादिचूलिपृष्ठान्तस्थानेषु दशसु व्यापकत्वेन न्यासे"ऽत्युक्तम् । एवञ्च ह्रीं श्रीं चतुरस्राद्यरेखायै नम इति व्यापकत्वेन दक्षांसादिस्थानदशके न्यसेदित्यर्थः ।

४०९ । अथ निरुक्तदक्षांसादिष्वणिमादीनां न्यासमाह—अत्रैवेति । अत्रैव स्थानदशके दक्षांसादिरूपे अणिमाद्या दश न्यसेदिति सम्बन्धः । अणिमाद्यास्तु अणिमा-लघिमा-महिमेशित्व-वशित्व-प्राकाम्यभुक्तीच्छा-प्राप्ति-सर्वकामाख्यास्त्रिपुरार्चन-रहस्यादिभ्योऽवगन्तव्याः ।

ननु दक्षांसपृष्ठेत्यादिपूर्ववचने दक्षांसपृष्ठ-दक्षपाण्यग्र-दक्षस्फिग्-दक्षपादाङ्गुलि-

---

1. 'पुंसां' C. 2. '-म्र-' C. 3. 'हंसपृष्ठके' C. 4. 'अत्रापि' C.

वामपादाङ्गुलि-वामकटि-वामपाण्यग्र-वामांसपृष्ठरूपस्थानाष्टकमात्रलाभात् "अत्रैव स्थान-दशक" इति कथमुपपद्यते ? उच्यते। योगिनीहृदये तृतीयपटले—

दक्षांसपृष्ठपाण्यग्रस्फिक्पादाङ्गुलीष्वथ।
वामाङ्घ्र्यङ्गुलिषु स्फिक्के पाण्यग्रे चांसपृष्ठके॥
सचूलीमूलपृष्ठेषु व्यापकत्वेन सुन्दरि।
अत्रैव स्थानदशके अणिमाद्यास्तु विन्यसेत्॥

इत्येतद्वचनस्थसचूलीमूलपृष्ठेष्वित्यनेन शिरःपुरोभागपश्चाद्भागयोः संग्रहात् स्थानानां दशसंख्याकत्वमुपपन्नम्। त्रिपुरार्चनरहस्येऽप्येवमेव स्थानदशकनिरूपणक्रमो दृश्यते। तन्नूनं लेखकप्रमादतः शिरःपुरःपश्चाद्भागप्रतिपादकोऽंशो मूलात् प्रच्युत इति प्रतिभाति। कल्पनेयं समीचीना न वेति साभिनिवेशं विमृशन्तु सुधियः साधकाः। अथ प्रकृतमनुसरामः—एवञ्च ह्रीं श्रीं अणिमासिद्ध्यै नम इति दक्षांसपृष्ठे। ह्रीं श्रीं लघिमासिद्ध्यै नम इति दक्षपाण्यग्रे। एवमन्येष्वपि निरुक्तेष्वङ्गेषु यथायोगमूहनीयम्।

एवं बहिस्त्रिरेखात्मकचतुरस्रस्य प्रथमरेखान्यासमभिधाय मध्यमरेखान्यास-माह—चतुरस्रेति। पूर्ववदिति व्यापकत्वेनेत्यर्थः। एवञ्च ह्रीं श्रीं चतुरस्रमध्यरेखायै नम इति देहव्यापकत्वेन पादाङ्गुष्ठादिष्वष्टसु स्थानेषु विन्यस्य तास्वेव ब्रह्माण्याद्या अष्टशक्तीः क्रमेण विन्यसेदिति बोध्यम्। ब्रह्माण्याद्याश्च ब्रह्माणी माहेश्वरी कौमारी वैष्णवी वाराहीन्द्राणी चामुण्डा महालक्ष्मीश्चेत्यष्टौ। एवञ्च ह्रीं श्रीं ब्रह्माण्यै नम इति दक्ष-पादाङ्गुष्ठे, ह्रीं श्रीं माहेश्वर्यै नम इति वामपादाङ्गुष्ठे इत्येवं क्रमेण पार्श्वादिष्वपि कौमार्यादीनां न्यासः कर्त्तव्यः।

अत्रास्मदुपजीव्ये पुस्तकत्रयेऽपि चतुरस्रान्त्यरेखान्यासप्रक्रिया न दृश्यते। तदिदं लेखकप्रमादस्खलितमिति बुद्ध्वा योगिनीहृदय-त्रिपुरार्चनरहस्यसंवादेनेयं प्रक्रिया यथायथं प्रदर्श्यते। यथा योगिनीहृदये तृतीयपटले—

न्यस्तव्याश्चतुरस्रान्त्यरेखायै नम इत्यपि।
विन्यसेद् व्यापकत्वेन पूर्वोक्तान्तश्च विग्रहे।
तस्याः स्थानेषु दशसु मुद्राणां दशकं न्यसेत्।
ब्रह्माण्याद्यष्टस्थानान्तस्तासामष्टौ न्यसेत्ततः।
शिष्टे द्वे द्वादशान्ते च पादाङ्गुष्ठे च विन्यसेत्। इति।

एवञ्च ह्रीं श्रीं चतुरस्रान्त्यरेखायै नम इति व्यापकत्वेन पूर्वोक्तान्तः पूर्वोक्तानां ब्रह्माण्यादिस्थानानामन्तर्न्यस्तव्या इत्यर्थः। तस्या इति। तस्या निरुक्तचतुरस्रान्त्य-

पादाङ्गुष्ठद्वये पार्श्वद्वये जानुद्वये बुधः ।
[1]बहिरंसद्वये पश्चाद् ब्रह्माण्याद्याः प्रविन्यसेत्[2] ॥ ४१० ॥
[3]शिष्टे द्वे द्वादशान्ते तु पादाङ्गुष्ठे प्रविन्यसेत् ।
एताः सर्वास्तु योगिन्यो रक्षन्तु सर्वभूतले ॥ ४११ ॥
[4]ब्रह्माण्याद्यष्टकस्थाने तासामष्टौ न्यसेद् बुधः ।
अनेन व्यापकं कृत्वा चक्रेशीं विन्यसेत्ततः ॥ ४१२ ॥
[5]आधारे त्रिपुरां देवीं श्रीचक्रनायिकां पराम् ।
सर्वसंक्षोभिणीं मुद्रां तथा वै [6]बौद्धदर्शनम् ॥ ४१३ ॥

---

रेखायां दशसु स्थानेषु मुद्राणां सर्वसंक्षोभिण्यादीनां दशकं न्यसेदित्यर्थः । सर्वसंक्षोभिण्यादयश्च—-सर्वसंक्षोभिणी-सर्वविद्राविणी-सर्वाकर्षणी-सर्ववशङ्करी-सर्वोन्मादिनी-सर्वमहाङ्कुशा-सर्वखेचरी-सर्वबीजाख्या अष्टौ सर्वयोनिः सर्वत्रिखण्डेति द्वे । मिलित्वा दश इति त्रिपुरार्चनरहस्ये । न्यासस्थानमेतासां निर्वक्ति—ब्रह्मेत्यादिना । ब्रह्माण्याद्यष्टकस्थाने दक्षांसादौ सर्वसंक्षोभिण्यादिसर्वबीजान्ता अष्टौ न्यसेदिति सम्बन्धः । शिष्टे इति । प्रागुक्ताद्यशिष्टे द्वे सर्वयोनि-सर्वत्रिखण्डे क्रमेण द्वादशान्ते ललाटोर्ध्वदेशे तथा पादाङ्गुष्ठद्वये च प्रविन्यसेदित्यर्थः । एवञ्च ह्रीं श्रीं सर्वसंक्षोभिणीमुद्रायै नम इति दक्षपादाङ्गुष्ठे । ह्रीं श्रीं सर्वविद्राविणीमुद्रायै नम इति वामपादाङ्गुष्ठे, इत्येवं क्रमेणावशिष्टाः षड् वामांसावधि न्यस्य सर्वयोनिमुद्रायै नम इति ललाटोर्ध्वे सर्वत्रिखण्डामुद्रायै नम इति पादाङ्गुष्ठद्वये न्यसेदिति पर्यवस्यति । त्रिपुरार्चनरहस्ये तु पूर्वतो बीजयोगे क्रमान्तरं दृश्यते । निरुक्तयोगिनीहृदयवचनस्थद्वादशान्तशब्देन ललाटोर्ध्वदेशो बोध्यः । तदुक्तं तट्टीकाधृतश्रीस्वच्छन्दसंग्रहे—

षोडशान्तमिति ख्यातं व्योमस्थानेन्दुमण्डलम् ।
तदधःस्थानगं सूर्यबिम्बं द्वादशशक्तिकम् ।
द्वादशान्तमिति ख्यातं स्थितं व्योमप्रदेशकम् । इति ।

४१२-४१३ । अथ चक्रेश्वर्यास्त्रिपुराया न्यासमाह—चक्रेशीमित्यादिना ।

---

1. 'बहि'रित्यादिपादद्वयं C-पुस्तके नास्ति । 2. इतः परं 'विलोमेनैषु पादेषु'? इति B-पुस्तकेऽधिकः पाठः । 3. 'शिष्ट' इत्यादिपादद्वयं A-B-पुस्तकयोर्नास्ति । 4. 'ब्रह्मे'त्यादिपादद्वयं A-B-पुस्तकयोर्नास्ति । 5. 'आधारात्' A-B. 6. 'वेद्य-' B.

[ द्वितीयावरणन्यासः ]

ततः षोडशपत्राय नमोऽन्ते व्यापकं [1]न्यसेत् ।
कामा[2]कर्षिणिकाद्याश्च विन्यसेदेषु साधकः ॥ ४१४ ॥
दक्षकर्णे दक्षपृष्ठे कूर्परे करपृष्ठके ।
दक्षोरुजानु[3]गुल्फेषु पादतले क्रमेण तु ॥ ४१५ ॥
विलोमेनैषु देशेषु वामेषु च प्रविन्यसेत् ।
[4]सर्वाशापूरके सृष्टिचक्रे षोडशपत्रके ॥ ४१६ ॥

---

तथा च ह्रीं श्रीं त्रिपुराचक्रेश्वर्यै नमः, सर्वसंक्षोभिणीमुद्रायै नमः, बौद्धदर्शनाय नम इति मूलाधारे न्यसेत् ।

४१४-४१६ । अथ वृत्तान्तः षोडशदले सर्वाशापरिपूरके सृष्टिचक्रे न्यासमाह—तत इत्यादिना । तथा च, ह्रीं श्रीं षोडशदलपद्माय नम इति वक्ष्यमाणदक्षकर्णादिषु व्यापकत्वेन विन्यसेदित्यर्थः । कामाकर्षिणिकाद्याश्चेति । दक्षकर्णादिपादतलान्तेष्वष्टस्वङ्गेषु, विलोमेनैषु देशेष्वित्याद्यभिधानात् पादतलादिवामकर्णान्तेषु चाष्टस्वङ्गेष्विति षोडशाङ्गेषु षोडशपत्ररूपेषु कामाकर्षिणीप्रभृतयः षोडश गुप्तयोगिन्यो न्यस्तव्या इत्यर्थः । व्यक्तमाह योगिनीहृदये तृतीयपटले—

तदन्तः षोडशदल-पद्माय नम इत्यपि ।
विन्यस्य तद्दले कामाकर्षिण्याद्याश्च विन्यसेत् ।
दलानि दक्षिणश्रोत्रपृष्ठमंसश्च कूर्परम् ।
करपृष्ठं चोरुजानुगुल्फपादतलं तथा ।
वामपादतलाद्येवमेतदेवाष्टकं मतम् । इति ।

कामाकर्षिण्याद्यास्तु—-कामाकर्षिणी-बुद्ध्याकर्षिण्यहङ्काराकर्षिणी-शब्दाकर्षिणी-स्पर्शाकर्षिणी-रूपा-कर्षिणी-रसा-कर्षिणी-गन्धा-कर्षिणी-चित्ताकर्षिणी-धैर्या-कर्षिणी -स्मृत्या-कर्षिणी-नामाकर्षिणी-बीजाकर्षिण्यात्माकर्षिण्यमृताकर्षिणीशरीराकर्षिण्यः षोडश । एतत्-प्रमाणाद्यस्त्वष्टादशप्रकाशे पूजाप्रकरणे वक्ष्यन्ते । तत्र च

बीजद्वयस्वराद्याश्च आकर्षिण्यन्तकाः क्रमात् ।
नित्याकलेति च ततः सम्प्रदायाऽर्चयेत् क्रमात् ॥

---

1 'चरेत्' C. 2. '-कर्षणिका-' C. 3. '-पृष्ठेषु' A-B. 4. 'सर्वासां' B.

एताः सर्वास्तु योगिन्यो गुप्ता रक्षन्तु भूतले।
अनेन व्यापकं कृत्वा नायिकां त्रिपुरेश्वरीम्॥ ४१७॥
सर्वविद्राविणीं [1]मुद्रां तथा [2]वै ब्रह्मदर्शनम्।
एतत्त्रयं न्यसेल्लिङ्गे गुरु[3]णोक्तविधानतः॥ ४१८॥

[ तृतीयावरणन्यासः ]

ततोऽष्टदलपद्माय नमोऽन्ते व्यापकं न्यसेत्।
अनङ्गकुसुमादीनि दैवतानि न्यसेत्ततः॥ ४१९॥
दक्षगण्डे स्तनोर्द्ध्वे च [4]दक्षोरौ [5]दक्षगुल्फके।
[6]वामगुल्फादिकं कृत्वा विलोमेनैषु साधकः॥ ४२०॥

---

इति तन्त्रराजचतुर्थपटलोक्तेः पूर्ववद् ह्रीं श्रीमिति बीजद्वयपूर्वकमेकैकस्वरयोगेण न्यासः कर्त्तव्यः। तथा च ह्रीं श्रीं अं कामाकर्षिणीनित्याकलायै नम इति दक्षकर्णे। ह्रीं श्रीं आं बुद्ध्याकर्षिणीनित्याकलायै नम इति दक्षपृष्ठे। एवं दक्षपादतलावधि गन्धाकर्षिण्यन्ता विन्यस्य पुनर्वामपादतलाद् दक्षकर्णावधि चित्ताकर्षिण्याद्या अष्टौ न्यसेत्। तत्क्रमस्तु ह्रीं श्रीं ॡं चित्ताकर्षिणीनित्याकलायै नम इति वामपदतले। ह्रीं श्रीं ॡं धैर्याकर्षिणीनित्याकलायै नम इति वामगुल्फे। एवमन्येषामपि प्रयोगक्रमो बोध्यः।

४१७-४१८। एता इति। एताः सर्वास्त्वित्यादि निरुक्तसृष्टिचक्रे व्यापकत्वेन विन्यस्य इत्यर्थः। नायिकामिति श्रीचक्रनायिकामित्यर्थः। तथा च पूर्ववद् बीजद्वयमुच्चार्य त्रिपुरेश्वरीचक्रनायिकायै नमः, सर्वविद्राविणीमुद्रायै नमः, तथा ब्रह्मदर्शनाय नम एतत्त्रयं लिङ्गे न्यसेत्। गुरुणोक्तविधानत इति। त्रिपुरार्चनरहस्य-तन्त्रसारीयपूजाप्रकरणयोस्तु चक्रनायिकाया बालाबीजपूर्वकत्वं सर्वविद्राविणीमुद्रायाश्च मायाबीजपूर्वकत्वं दृश्यते। तन्त्रसारे ब्रह्मदर्शनायेत्यत्र बौद्धदर्शनायेति। त्रिपुरार्चनरहस्ये त्वस्य परिग्रहो न कृतः। एवञ्चात्र नानातन्त्रेषु मतभेददर्शनात् स्वस्वगुरूपदेशानुसारेण प्रवर्त्तितव्यमित्येवाऽऽह—गुरुणोक्तविधानत इत्यनेन।

४१९-४२०। एवं द्वितीयावरणे षोडशदले न्यासस्य प्रक्रियामभिधाय तदन्तस्तृतीयावरणेऽष्टदले न्यासस्य प्रक्रियामाह—तत इत्यादिना। अत्रापि विशेषानभिधानात्

---

1. 'विद्यां' B. 2. 'वैष्णवदर्शनम्' C. 3. '-गुप्त-' C. 4. 'दक्षाक्षौ' B. 5. 'मन्त-' 6. 'नमो' B.

तृतीयावरणे सृष्टिचक्रे संक्षोभकारके।
एता गुप्ततराः सर्वाः [1]पान्तु चाष्टदले स्थिताः ॥ ४२१ ॥
अनेन व्यापकं कृत्वा श्रीमत्त्रिपुरसुन्दरीम्।
आकर्षिणीं महामुद्रां तथा वै शैवदर्शनम्।
[2]एतन्न्यासं नाभिदेशे विन्यसेत् साधकोत्तमः ॥ ४२२ ॥

[ चतुर्थावरणन्यासः ]

चतुर्दशारचक्राय नमोऽन्ते व्यापकं न्यसेत्।
सर्वसंक्षोभिणीत्याद्यास्तस्य कोणेषु साधकः ॥ ४२३ ॥

---

पूर्ववन्मायाश्रीबीजपूर्वकत्वमवगन्तव्यम्। तथाऽष्टादशप्रकाशे चक्रपूजाप्रकरणे "अष्टपत्रे यजेन्मन्त्री कादिवर्गान्तकेन च" इति वक्ष्यमाणत्वात् त्रिपुरार्चनरहस्यकारैरपि तथैव न्यासप्रयोगस्याभिधानाच्च वर्गाद्यवर्णपूर्वकमनङ्गकुसुमादीनामष्टानां न्यासः कर्त्तव्य इति तत्त्वम्। तथा च ह्रीं श्रीं अष्टदलपद्माय नम इति व्यापकत्वेन विन्यसेदित्यर्थः। त्रिपुरार्चनरहस्येऽपि—ततोऽनङ्गकुसुमादिस्थानेषु अष्टदलपद्मचक्राय नम इति संव्याप्येत्युक्तम्। अनङ्गेति। ततो दक्षगण्डादिदक्षगुल्फान्ते स्थानचतुष्टये तथा विलोमेन वामगुल्फादि-वामगण्डान्ते स्थानचतुष्टये क्रमेणानङ्गकुसुमाद्या अष्टौ न्यसेदिति सम्बन्धः। अनङ्ग-कुसुमाद्याश्च अनङ्गकुसुमानङ्गमेखलानङ्गमदनानङ्गमदनातुरानङ्गरेखानङ्गवेगिन्यनङ्गाङ्कुशा-नङ्गमालिन्यः। प्रमाणादयस्तु अष्टादशे वक्ष्यन्ते। तथा च ह्रीं श्रीं कं अनङ्गकुसुमायै नम इति दक्षगण्डे। इत्यादिक्रमेण दक्षगुल्फावधि विन्यस्य पुनर्विलोमेन ह्रीं श्रीं पं अनङ्गरेखायै नम इत्यादिक्रमेण वामगुल्फतो वामगण्डावधि अनङ्गमालिन्यन्ता विन्यसेदिति फलितम्। शिष्टं सुगमम्।

४२२। अनेनेति तृतीयावरण इत्यादिनेत्यर्थः। त्रिपुरार्चनरहस्ये तु एता गुप्ततरयोगिन्यः सर्वसंक्षोभणे चक्रे समुद्रा इति चतुष्टयं हृदये विन्यस्येत्युक्तम्। श्रीमदिति। श्रीमत्त्रिपुरसुन्दर्यै नमः सर्वाकर्षिण्यै नमः शैवदर्शनाय नम इति च नाभिदेशे न्यसेदिति फलितम्।

४२३-४२५। अथाष्टदलान्तश्चतुर्दशारचक्रप्रक्रियां निरूपयति—चतुर्दशेत्यादिना। अत्रापि पूर्ववन्मायाश्रीबीजपूर्वकं कादिढान्ताक्षर-योजनया विन्यसेत्। तथा च चतुर्दशार-

---

1. 'पत्रे' A-B. 2. 'एतत्त्रयं' C.

[1]ललाटदक्षिणे भागे [2]गण्डांस-पृष्ठकेषु च।
पार्श्वान्तरूरुजङ्घासु दक्षावर्त्तेन विन्यसेत् ॥ ४२४ ॥
विलोमेनैषु [3]देशेषु पृष्ठे पश्चादि[4]यान् क्रमः।
चक्रे [5]सत्सम्प्रदायिन्यः पान्तु कोणे चतुर्दशे ॥ ४२५ ॥
अनेन व्यापकं कृत्वा त्रिपुरावासिनीं बुधः।
वश्यमुद्रां तथा सूर्यदर्शनं हृदये न्यसेत् ॥ ४२६ ॥

---

चक्रायेति संव्याप्य ललाटदक्षिणभागादिदक्षजङ्घान्तेषु सप्तस्थानेषु सर्वसंक्षोभिण्याद्याः सप्त विन्यस्य, पुनर्विलोमक्रमेण वामजङ्घादिललाटवामभागान्तेषु पृष्ठवर्जं विन्यस्य पश्चादिति सर्वावसाने पृष्ठे योगिनीमन्त्यां विन्यसेदित्यर्थः। योगिनीहृदये तृतीयपटले तु—

ललाटं दक्षभागश्च दक्षगण्डांसमध्यतः।
पार्श्वान्तरूरुजङ्घान्तर्वामजङ्घादि पार्वति ॥
वामोर्वन्तं वामपार्श्वं वामांसं वामगण्डकम्।
ललाटवाममध्ये च तथा वै पृष्ठमित्यपि ॥

इति वचने दक्षपृष्ठे न्यासमनभिधाय ललाट-ललाटदक्षभागभेदेन दक्षांशे स्थानसप्तकमुक्तम्। अत्र तु दक्षपृष्ठोपादानात् ललाटदक्षभाग एव न्यासो न तु ललाटमध्यदेशेऽपीति पूर्णानन्दानामाशयः प्रतिभातीति ध्येयम्। अत्र पृष्ठशब्दः शिरःपृष्ठबोधकः। तदुक्तममृतानन्दनाथेन योगिनीहृदयटीकायाम्—"पृष्ठमिति शिरसः पृष्ठमिति ज्ञेयम्" इति।

सर्वसंक्षोभिण्याद्यास्तु—सर्वसंक्षोभिणी-सर्वविद्राविणी-सर्वाकर्षिणी-सर्वाह्लादिनी-सर्वसम्मोहिनी-सर्वस्तम्भिनी-सर्वजृम्भिणी-सर्ववशङ्करी-सर्वरञ्जनी-सर्वोन्मादिनी-सर्वार्थसाधिनी-सर्वसम्पत्तिपूरणी-सर्वमन्त्रमयी-सर्वद्वन्द्वक्षयङ्कर्यश्चतुर्दश। विशेषोऽष्टादशे द्रष्टव्यः।

एवञ्च ह्रीं श्रीं कं सर्वसंक्षोभिणीशक्त्यै नम इति दक्षललाटे, ह्रीं श्रीं खं सर्वविद्राविण्यै नम इति दक्षगण्डे इत्येवं क्रमेण न्यस्य पुनः ह्रीं श्रीं जं सर्ववशङ्कर्यै नम इत्यादिक्रमेण वामजङ्घादिषु ललाट-दक्षभागान्तेषु न्यसेदिति फलितम्।

४२५-४२६। ततः करणीयमाह—चक्र इत्यादिना। एवञ्च, चक्रे सत्-

---

1. 'ललाटे' B. 2. 'गण्डांशे' C. 3. 'बाणषु' A-B. 4. '-मान् पुनः' A-B. 5. 'मत्सन्द-' B.

[ पञ्चमावरणन्यासः ]

बहिर्दशारचक्राय नमोऽन्ते व्यापकं चरेत् ।
दक्षाद्विनासिकामूलनेत्रेषूदरदक्षिणे ॥ ४२७ ॥
वायुकोणे जानुयुग्मे गुह्यदेशे न्यसे[1]दपि ।
वामकुक्षौ [2]निर्ऋतौ च सर्वसिद्ध्यादि[3]देवताम् ॥ ४२८ ॥

---

सम्प्रदायिन्य इत्यादिव्यापकत्वेन विन्यस्य हृदये प्रथमं त्रिपुरावासिनीं चक्रेश्वरीं ततो वश्यमुद्रां ततः सूर्यदर्शनञ्च विन्यसेदित्यर्थः ।

४२७-४२८ । श्रीयन्त्रे चतुर्दशारचक्रान्तर्दशकोणं चक्रद्वयं भवति । तयोर्बहिःस्थितं बहिर्दशारं तदन्तःस्थितञ्चान्तर्दशारमिति ज्ञेयम् । तत्र प्रथमं बहिर्दशारचक्रे सर्वार्थसाधकाख्ये न्यासस्य प्रक्रियामाह—बहिरित्यादिना । अत्रापि पूर्ववन्माया-श्रीबीजानन्तरं णादिभान्ताक्षरं दत्त्वेति पूजाक्रमे वक्ष्यमाणत्वात् णकारादिभकारान्तमेकैकं वर्णमादौ योजयित्वा सर्वसिद्धिप्रदादिदशकुलकौलिकयोगिनीर्न्यसेत् । न्यासस्य स्थानान्याह—दक्षाद्वीत्यादिना । अत्रामृतानन्दनाथो योगिनीहृदयटीकायामाह—"बाहुद्वयमारभ्योरुद्वयपर्यन्तं कुक्षिशब्देन लक्ष्यते । तेन कुक्षेरुपरिभागः प्राची, अधोभागः प्रतीची, दक्षिणवामपार्श्वे दक्षिणोदीच्यौ । कोणशब्देन बाहू ऊरू च लक्ष्येते । तेन वामबाहुमूलमीशकोणो वामोरुमूलं वायुकोणो दक्षिणोरुमूलम्, नैर्ऋतकोणो दक्षिणबाहुमूलमग्निकोण" इति । एवञ्चात्र वायुकोण इत्यनेन वामोरुमूलम्, नैर्ऋत इत्यनेन च दक्षिणोरुमूलम् इत्यवगम्यते । तथा च दक्षचक्षुषि, नासिकामूले वामचक्षुषि ततश्चोदरदक्षिणे दक्षकुक्षावित्यर्थः, ततो वामोरुमूले दक्षजानुनि वामजानुनि गुह्यदेशे वामकुक्षौ दक्षिणोरुमूले च स्थानदशके क्रमेण सर्वसिद्ध्यादिदेवता न्यसेदिति फलितार्थः । सर्वसिद्ध्यादयश्च—सर्वसिद्धिप्रदा-सर्वसम्पत्प्रदा-सर्वप्रियङ्करी-सर्वमङ्गलकारिणी-सर्वकामप्रदा–सर्वदुःखमोचिनी–-सर्वमृत्युप्रशमनी–सर्वविघ्नविनाशिनी–सर्वाङ्गसुन्दरी–-सर्वसौभाग्यदायिन्योऽष्टादशप्रकाशे वक्ष्यमाणाः । एवञ्च ह्रीं श्रीं णं सर्वसिद्धिप्रदायै नम इति दक्षचक्षुषि, ह्रीं श्रीं तं सर्वसम्पत्प्रदायै नम इति नासिकामूले एवं क्रमेणान्येष्वपि निरुक्तेष्वङ्गेषु न्यसेदिति फलितम् ।

---

1. '-दथ' C 2. 'नैऋ'तौ' B, 'नैऋ'ते' C. 3. 'देवता' ? C.

सर्वार्थ[1]साधके चक्रे पञ्चमा[2]वरणे स्थिताः ।
चक्रे मां कुलयोगिन्यो रक्षन्तु दश देवताः ॥ ४२९ ॥
अनेन व्यापकं कृत्वा त्रिपुराश्रियमप्यथ ।
उन्मादिनीं वैष्णवञ्च दर्शनं गलकूपके ॥ ४३० ॥

[ षष्ठावरणन्यासः ]

अन्तर्दशारचक्राय नमोऽन्ते व्यापकं चरेत् ।
सर्वज्ञाद्यास्ततो मन्त्री न्यसेदेषु [3]समाहितः ॥ ४३१ ॥
नासायामथ सृक्कण्यां तले वै [4]वृषणे गुदे ।
ततो वामक्रमेणैव वृषणे विन्यसेत् स्तने ॥ ४३२ ॥

४२९-४३०। ततः करणीयमाह—सर्वार्थेत्यादिना। तथा च सर्वार्थेत्यादि व्यापकत्वेन विन्यस्य त्रिपुराश्रियं चक्रेश्वरीम् उन्मादिनीं वैष्णवदर्शनञ्च गलकूपे न्यसेदित्यर्थः। इति पञ्चमावरणन्यासः।

४३१। एवं बहिर्दशारचक्रन्यासमभिधायान्तर्दशारचक्रन्यासक्रममाह—अन्तरित्यादिना। अत्रापि पूर्ववन्मायाश्रीबीजयोगः कर्त्तव्यः। एवञ्च ह्रीं श्रीं अन्तर्दशारचक्राय नम इति कोणदशकव्यापकत्वेन विन्यसेदित्यर्थः। तत इति। मन्त्री मन्त्ररहस्यज्ञः समाहितः सन् सर्वज्ञाद्या दश एषु वक्ष्यमाणस्थानेषु विन्यसेत्। सर्वज्ञाद्यास्तु—सर्वज्ञा-सर्वशक्ति-सर्वैश्वर्यप्रदायिनी-सर्वज्ञानमयी-सर्वव्याधिविनाशिनी-सर्वाधारस्वरूपा-सर्वपापहरा--सर्वानन्दमयी--सर्वरक्षास्वरूपिणी--सर्वेप्सितफलप्रदाख्या वक्ष्यमाणाः।

४३२। पूर्ववचने न्यसेदेषु समाहित इत्युक्तम्, तानि न्यासस्थानानि निरूपयति—नासायामित्यादिना। वामक्रमेणैवेति। प्रथमं नासादिगुदान्तेषु सर्वज्ञाद्याः सर्वव्याधिविनाशिन्यन्ताः पञ्च दक्षक्रमेण विन्यस्य पुनः सर्वाधारस्वरूपादिसर्वेप्सितफलप्रदान्ताः पञ्च वामवृषणादिनेत्रान्तेषु विन्यसेदिति फलितम्। योगिनीहृदये तृतीयपटले तु—

1. '-साधकञ्च-' B. 2. '-वरण-' A, '-वहणे' ? C. 3. 'समन्वितः' B. 4. 'भूषणे' C.

सृक्कण्यां नासिकायाञ्च नयने साधकोत्तमः ।
पान्तु नो दश[1]कोणे ताः सर्वरक्षाकरे स्थिताः ॥ ४३३ ॥
चक्रे [2]निगर्भयोगिन्यः षष्ठकावरणे [3]स्थिताः ।
अनेन व्यापकं कृत्वा त्रिपुरामालिनीं तथा ॥ ४३४ ॥
महाङ्कुशां महामुद्रां [4]जिनदर्शनमेव च ।
एतत्त्रयं भ्रुवोर्मध्ये विन्यसेत् साधकोत्तमः ॥ ४३५ ॥

[ सप्तमावरणन्यासः ]

अथाष्टारकचक्राय नमो[5]ऽन्तं व्यापकं न्यसेत् ।
वशिन्याद्यष्ट वागूदेवी[6]रेषु [7]स्थानेषु विन्यसेत् ॥ ४३६ ॥

---

दक्षनासा सृक्किणी च स्तनं वृषणमेव च ।
सांविनी वाममुष्कञ्च स्तनं सृक्किणि नासिके ।
नासाग्रञ्चैव विज्ञेयं कोणानां दशकं तथा ॥

इत्यनेन नयनस्य निरुक्तन्यासयोग्याङ्गत्वेन ग्रहणमकृत्वा तत्र नासाग्रे न्यासोऽभिहितः । एवमेव त्रिपुरार्चनरहस्येऽपि । एवञ्चात्रागमभेदेन न्यासस्य क्रमभेदो वर्त्तत इति बोध्यम् । अत्राष्टादशप्रकाशे 'मादिक्षान्ताक्षरैर्यजेदि'ति वक्ष्यमाणत्वात् मायाश्रीबीजानन्तरं मकारादिक्षकारान्तैकैकाक्षरयोगेण न्यासः कर्त्तव्य इति बोध्यम् । एवञ्च ह्रीं श्रीं मं सर्वज्ञायै नम इति दक्षनासायाम्, ह्रीं श्रीं यं सर्वशक्त्यै नम इति वामनासायाम् । एवंक्रमेण सृक्कण्यादिष्वपि न्यासः कर्त्तव्यः । ततश्च ह्रीं श्रीं शं सर्वाधारस्वरूपायै नम इत्यादिक्रमेण वामवृषणादिषु विन्यसेदिति बोध्यम् ।

४३३-४३५ । पान्त्वित्यादि । ततश्च पान्तु नो दशकोणे ता इत्यादिना संव्याप्य प्रथमं प्रागुक्तक्रमेण चक्रेश्वरीं त्रिपुरामालिनीं ततश्च महाङ्कुशमहामुद्रां जिनदर्शनञ्च भ्रूमध्ये न्यसेदिति षष्ठावरणन्यासः ।

४३६-४३७ । अथ निरुक्तान्तर्दशारचक्रान्तरष्टारचक्रन्यासमाह—अथेति । तथाच ह्रीं श्रीं अष्टारचक्राय नम इति व्यापकत्वेन विन्यस्य वशिन्याद्या अष्टौ वागूदेवता एषु

---

1. '-कोशै-?' B, 2. 'निगर्व-' C. 3. 'सदा' B. 4. 'निज-?' B.
5. '-ऽन्त-' B. 6. '-स्त्रिषु' C. 7. 'स्थाने प्रविन्यसेत्' B.

चिबुके दक्षिणे कण्ठे हृदये नाभिदेशतः ।
विलोमेनैषु देशेषु वामेषु विधिनाऽमुना ॥ ४३७ ॥
एता रहस्ययोगिन्यः पान्तु [1]कोणाष्टके सदा ।
अनेन व्यापकं कृत्वा [2]त्रिपुरां सिद्धि[3]नायिकाम् ॥ ४३८ ॥
खेचर्याख्यां[4] महामुद्रां शक्तिदर्शनमप्यथ ।
एतत्त्रयं ललाटे [5]तु विन्यसेत् [6]साधकाग्रणीः ॥ ४३९ ॥

[ अष्टमावरणन्यासः ]

ततस्त्र्यस्राय चक्राय नमोऽन्तं व्यापकं न्यसेत् ।
हृदयस्थत्रिकोणस्य चतुर्दिक्षु बहिःक्रमात् ॥ ४४० ॥
[7]जृम्भनादिपञ्चबाणं मोहनं धनुषस्ततः ।
वशीकरणपाशञ्च स्तम्भनाङ्कुशमेव च ॥ ४४१ ॥

---

वक्ष्यमाणेषु स्थानेषु प्रविन्यसेदिति सम्बन्धः । तानि स्थानान्याह—चिबुक इत्यादिना । विधिनाऽमुनेति वशिन्यादिन्यासक्रमोक्तविधिनेत्यर्थः । आदौ चिबुकादि-नाभ्यन्तस्थानचतुष्टये दक्षभागे वशिन्यादिचतुष्कं विन्यस्य पुनर्विलोमेन नाभ्यादि-चिबुकान्तवामांशेषु अरुणादिचतुष्कं विन्यसेत् । न्यासस्तु ह्रीं श्रीमिति बीजद्वयपूर्वकं प्रागुक्तवशिन्यादिन्यासक्रमानुसारेणैव कर्त्तव्य इत्यलमत्र विस्तरतस्तत्प्रदर्शनेन । तद्दिङ्मात्रं प्रदर्श्यते—ह्रीं श्रीं ततः अं इत्यतः अः इत्यन्तं ततो ब्लुं वशिनीवाग्देवतायै नम इति वामचिबुके । एवमन्यत्राप्यूह्यम् ।

४३८-४३९ । ततः करणीयमाह—एता इत्यादिना । तथा च एता रहस्ययोगिन्य इत्यादि व्यापकत्वेन विन्यस्य निरुक्तबीजपूर्वकं त्रिपुरासिद्धाचक्रेश्वर्यै नमः, खेचरी-मुद्रायै नमः, शक्तिदर्शनाय नम इत्येतत्त्रयं ललाटे न्यसेदिति फलितम् । इति सप्तमा-वरणन्यासः ।

४४०-४४१ । अथाष्टारचक्रान्तस्त्र्यस्रचक्रन्यासं प्रदर्शयति—तत इत्यादिना । अत्रापि पूर्ववद् बीजयोगो बोध्यः । तथा च त्र्यस्राय चक्राय नमः इति व्यापकत्वेन

---

1. 'कोणे' A-B. 2. 'त्रिपुरा-' C. 3. '-दायिकाम्' C. 4. '-ख्या-' C. 5. 'च' C. 6. 'साधकोत्तमः' C. 7. 'जृम्भणादि-' B.

षडङ्गयुवती तेषु न्यस्तव्या चाङ्गरूपिणी ।
कामपीठञ्चाग्रकोणे जालन्धरन्तु दक्षिणे ॥ ४४२ ॥
पूर्णपीठं तथा वामे वह्न्यर्कसोम[1]संज्ञके ।
कोणत्रये च कामेशीं वज्रेशीं भगमालिनीम् ॥ ४४३ ॥
एताः परातिरहस्ययोगिन्यः सर्वसिद्धिदाः ।
पदे त्रिकोणनिलये चक्रे पदं समुद्धरेत् ॥
[2]श्रीदेव्यः पूजिताः सन्तु व्यापकत्वेन विन्यसेत् ॥ ४४४ ॥
त्रिपुराम्बिकाञ्च चक्रेशीं मुद्रां बीजाभिधां तथा ।
शाक्तन्तु दर्शनं मन्त्री ललाटे क्रमतो न्यसेत् ॥ ४४५ ॥

[ नवमावरणन्यासः ]

ततो बैन्दवचक्राय नमोऽन्ते व्यापकं न्यसेत् ।
अतः परं ब्रह्मरूपां श्रीमत्त्रिपुरसुन्दरीम् ॥ ४४६ ॥

---

विन्यसेदित्यर्थः । त्रिपुरार्चनरहस्ये तु सान्तरालत्रिकोणचक्राय नम इति प्रयोगो दृश्यते । न्यासपरिपाटीं स्थाननिरूपणपुरःसरमाह—हृदयस्थेत्यादिना । अनाहताख्यहृत्पुण्डरीककर्णिकाभ्यन्तरीणत्रिकोणस्य बहिश्चतुर्दिक्षु क्रमेण जम्भनादिपञ्चबाणं सम्मोहनं धनुः वशीकरणपाशं स्तम्भनमङ्कुशञ्च न्यसेदिति सम्बन्धः । अत्र ज्ञानार्णवे षोडशपटले—

पञ्चबाणान् समुच्चार्य कामकामेश्वरीमयान् ।
जम्भनाख्यान् महेशानि पूजयेद् बाणदेवताम् ॥

इत्यभिधानात् कामेश्वरबाणैः कामेश्वरीबाणैश्च न्यासः कर्तव्य इति ध्येयम् । अत एव त्रिपुरार्चनरहस्ये ब्रह्मानन्दपादैः द्रां द्रीं क्लीं ब्लूं सः यां रां लां वां शां जम्भनेभ्यः कामेश्वरकामेश्वरीबाणेभ्यो नम इत्यादिरूपः प्रयोगक्रमः प्रदर्शितः । पञ्चबाणमन्त्रपूर्वकन्यासक्रमस्तु आयुधन्यासावसरे विशेषतः प्रदर्शित इति नात्र पुनरुच्यते । शिष्टं स्पष्टम् ।

४४६-४४८ । अथ त्रिकोणान्तः सर्वानन्दमयबैन्दवचक्रन्यासव्यवस्थामाह—तत

---

1. '-मण्डलम्' A.B. 2. 'श्रीदेव्य' इत्यादि 'संज्ञक' इत्यन्तं पादद्वादशकं A-B-'पुस्तकयोर्नास्ति' ।

सर्वानन्दमये चक्रे त्रिकोणे नयनसंज्ञके ।
[1]श्रीदेव्यः पूजिताः सन्तु परापर[2]रहस्यगाः ॥ ४४७ ॥

अनेन व्यापकं कृत्वा चक्रेशीं भैरवीं न्यसेत् ।
शिरः कण्ठं मुखं श्रोत्रं नेत्रं [4]नासां भुजद्वयम् ॥ ४४८ ॥

[5]हृदि गुह्यं तथा पृष्ठं नाभिश्च जठरं ततः ।
गुह्यं पादश्च गुल्फश्च देव्याः पञ्चदशाक्षरम् ॥ ४४९ ॥

एवं न्यस्तशरीरः सन् [6]भाषा पञ्चतमं न्यसेत् ।
[7]पञ्चकूटं समुच्चार्य पञ्चमीं त्रिपुरेश्वरीम् ॥ ४५० ॥

सौभाग्यां वा तथा लोपां पञ्चविंशा[8]क्षरीं तथा ।
षडाम्नायप्रभेदेन शाक्तं शाम्भवमेव वा ॥ ४५१ ॥

---

इत्यादिना । परंबिन्दुरूपश्रीमत्त्रिपुरसुन्दर्याधिष्ठितत्वादस्य बैन्दवचक्रत्वम् । तथा च बैन्दवचक्राय नम इति व्यापकत्वेन विन्यस्य श्रीमत्त्रिपुरसुन्दरीश्च सर्वानन्दमये चक्रे विन्यस्य श्रीदेव्य इत्यादि व्यापकत्वेन विन्यसेदिति फलितम् । चक्रेशीमिति । त्रिपुरभैरवीचक्रेश्वर्यै नम इति निरुक्तचक्रे न्यसेदित्यर्थः । त्रिपुरार्चनरहस्ये तु बैन्दवचक्राय नम इत्यनन्तरं मूलपूर्वकं श्रीमहात्रिपुरसुन्दर्यै नम इति विन्यस्य मूलमुच्चार्य त्रिपुरभैरवीचक्रेश्वर्यै नम इत्यादि न्यसेदिति क्रमो दृश्यते । शिर इति । श्रीमत्त्रिपुरसुन्दरीदेव्याः पञ्चदशाक्षरमन्त्रस्यैकैकमक्षरं शिर-आदिषु पञ्चदशस्थानेषु न्यसेदित्यर्थः ।

४५०-४५१ । पञ्चकूटमिति पूर्वोपदर्शितमित्यर्थः । पञ्चविंशत्यक्षरीं पञ्चकूटात्मिकां त्रिपुरेश्वरीं त्रिकूटात्मिकां सौभाग्यां लोपामुद्रां वा न्यसेदिति सम्बन्धः । षडाम्नायेति । पूर्वं षडाम्नायभेदेन शाक्तशाम्भवभेदेन च ये विद्याभेदाः प्रदर्शितास्तेषु पञ्चविंशत्यक्षरविद्ययाऽयं न्यासः कर्तव्य इत्यर्थः ।

---

1. 'श्रीदेव्याः' A-B. 2. '-रहस्य च' B. 3. 'श्रीव्यापकं' B. 4. 'नासा' C. 5. 'अति-' B. 6. 'ततः' A-B. 7. 'शब्दं कू-' B. 8. '-क्षरी' A-B.

गणपतिं मूर्ध्नि [1]देशे वटुकं कर्णयोर्न्यसेत् ।
क्षेत्रपालन्तु[2] हृदये योगिनीं विन्यसेद्[3] गुदे ॥ ४५२ ॥
निर्माल्यवासिनीं वक्त्रे बिन्दौ च शेषिकां न्यसेत् ।
योनिमुद्रां मूर्ध्नि देशे परां शक्तिञ्च विन्यसेत् ॥ ४५३ ॥

[ श्रीचक्रन्यासोपसंहारः ]

श्रीचक्रन्यास उद्दिष्टस्त्रैलोक्ये चातिदुर्लभः ।

[ न्यासस्यास्य रहस्यत्वम् ]

यस्मै कस्मै न दातव्यो न दातव्यः कदाचन ॥ ४५४ ॥

[ व्यापकन्यासः ]

पञ्चधा सप्तधा वाऽपि नवधा वाऽपि साधकः ।
मूलेन व्यापकं कृत्वा स्वयं श्रीत्रिपुरा भवेत् ॥ ४५५ ॥

इति श्रीपूर्णानन्दपरमहंसविरचिते श्रीतत्त्वचिन्तामणौ
पञ्चदशः प्रकाशः ॥ १५ ॥

---

४५२-४५३ । अथ मूर्द्धादिषु गणपत्यादीनां न्यासमुपदिशति—गणपति-मित्यादिना । स्पष्टम् ।

---

1. 'भागे' C. 2. '-ञ्च' C. 3. '-त्तदा' A-B.

# षोडशः प्रकाशः

—:०:—

[ अन्तर्यागनिरूपणप्रतिज्ञा ]

अथान्तर्यजनं वक्ष्ये चतुर्वर्ग[1]फलप्रदम् ॥ १ ॥

[ निर्गुणस्यापि परमात्मनः सृष्टिप्रवृत्तिः ]

[2]एकमासीत् परं ब्रह्म सूक्ष्मं नित्यमतीन्द्रियम् ।
जलीयभागे चातीते सिसृक्षा समपद्यत ॥ २ ॥

---

१। एवं पञ्चदशभिः प्रकाशैर्न्यासप्रक्रियान्तमभिधाय अवसरसङ्गत्या पूजाक्रमे वक्तव्ये—

आत्मस्थां देवतां त्यक्त्वा बहिर्देवं विचिन्वते ।
करस्थं कौस्तुभं त्यक्त्वा भ्रमते काचतृष्णया ॥
प्रत्यक्षीकृत्य हृदये बहिस्थां पूजयेच्छिवाम् ।
यस्य यस्य च देवस्य यथा भूषणवाहनम् ॥
तदेव पूजने तस्य चिन्तयेत् परमेश्वरि ।

इत्यादि-शाक्तानन्दतरङ्गिणीषष्ठोल्लासवचनेन,

अन्तर्यागविधिं कृत्वा बहिर्यागं समाचरेत् ।
बहिर्यागे नाधिकारी अन्तर्यागविवर्जितः ॥
बहिर्यागफलं नास्ति विनाऽन्तर्यजनं कदा ।
तस्मात् प्रयत्नतो वीरश्चान्तर्यागं समारभेत् ॥

इति कौलावलीनिर्णयतृतीयोल्लासवचनेन च बहिर्यागस्यान्तर्यागपूर्वकत्वश्रवणात् प्रकाशेऽस्मिन्नन्तर्यागक्रममभिधत्ते—अथेत्यादिना । अथेति पूजाङ्गन्यासनिरूपणानन्तरमित्यर्थः ।

२। एवमन्तर्यागक्रमनिरूपणं प्रतिज्ञाय—

कारणे सर्वभूतानां तत्त्वान्यपि च चिन्तयेत् ।
बीजभावेन लीनानि व्युत्क्रमात् परमात्मनि ॥

---

1. '-प्रसाधनम्' C. 2. 'एव-' B.

[ समासतः सृष्टिप्रक्रिया ]

[1]संहारस्यान्तरं सृष्टं बुद्बुदाकारमुत्तमम् ।
तदन्तर्भुवनानि स्यु[2]स्तदण्डं [3]द्विविधं भवेत् ॥ ३ ॥

एवं विचिन्त्य देवेशि पार्थिवांशं जले गतम् ।
जलञ्च तेजसो रूपं तेजोरूपं विचिन्तयेत् ॥

इत्यादि-गन्धर्वतन्त्रैकादशपटलोक्तदिशा तत्त्वान्तराणां क्रमेण कारणभूतायां प्रकृतौ प्रकृतेश्च परमात्मनि लये तन्मात्रस्वरूपनिर्भासलक्षणामवस्थामभिधत्ते—एकमासीदित्यादिना । तथाच प्रागुक्तलयक्रममभिधाय

महान्तं प्रकृतौ लीनं चिन्तयेत् परमेश्वरि ।
मुमुक्षुश्चिन्तयेल्लीनां प्रकृतिं परमात्मनि ॥

इत्यन्तेन प्रकृत्यन्तानां परमात्मनि लयमुक्त्वा

नाहो न रात्रिर्न सन्ध्या न सूर्यो नैव चन्द्रमाः ।
इदं तमोमयं सर्वमासीद् भुवनवर्जितम् ।
अप्रज्ञातमलक्ष्यञ्च प्रसुप्तमिव सर्वतः ।
चिन्तयित्वा महेशानि न किञ्चिदपि भावयेत् ॥
एकमासीत् परं ब्रह्म नित्यं सूक्ष्ममतीन्द्रियम् ।
नित्यानन्दमयं धाम तेजोरूपं सनातनम् ।

इत्यादिना तात्कालिकी परमात्मनिर्भासमात्रात्मिकाऽवस्था तत्रैवाभिहिता । भगवता मनुनाऽपि—

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥

इत्यादिना महाप्रलयावस्थाऽनयैव दिशोपवर्णिता । सिसृक्षायां हेतुमाह—जलीयभाग इति । जलमन्तरेण सृष्टेः सृष्टानां जीवानां स्थितेश्चासम्भवादित्यर्थः । सिसृक्षेयम् आपो जायन्तां क्षितिर्जायतामित्याद्यभिधानमात्रेण, "तदैक्षत बहु स्यां प्रजायेये"ति छान्दोग्यश्रुतेः ।

३-४ । अथ सृष्टिपरिपाटीं दर्शयति—संहारस्येत्यादिना । एतेन प्रथममेव जलसृष्टिरित्युक्तं भवति । गन्धर्वतन्त्रीयैकादशपटलेऽपि—

1. 'संसार-' A-B. 2. '-स्तदन्तं' A-B. 3. 'द्विविधा' C.

ब्रह्माण्डाभ्यन्तरे [1]तोयं [2]तत्रैव भेकमव्ययम् ।

[ निरुक्तभेकपृष्ठे कालाग्न्यर्चा ]

यजेत् पृष्ठे तस्य मन्त्री कालाग्निरुद्ररूपकम् ॥ ४ ॥

[ आधारशक्त्यादीनां स्वरूपं पूजनोपदेशश्च ]

आधारशक्तिं तत्रैव [3]मूलप्रकृतिरूपिणीम् ।
शरच्चन्द्रनिभां देवीं पङ्कजद्वयधारिणीम् ॥ ५ ॥
कूर्माकारशिलारूढां कूर्मश्च मूर्ध्नि धारिणीम् ।
नीलाभं पूजयेत् कूर्ममनन्तं कुन्दसन्निभम् ॥ ६ ॥
[4]ऊर्द्ध्वं [5]ब्रह्म समासीनं पूजयेत् साधकोत्तमः ॥ ७ ॥

---

तयोर्योगादभूद् वृष्टिः परमामृतरूपिणी ।
परिपूर्णमिदं देवि समस्तं प्लावयेत्तु या ॥
तत्राम्भसि स्वमात्मानं चिन्तयेत् साधकोत्तमः ।
बुद्बुदं चिन्तयेत्तत्र प्रकृतिं चिन्तयेत् पराम् ॥

इत्यादिनाऽयमेवार्थोऽभिहितः । तदन्तरिति । व्यक्तमाह गन्धर्वतन्त्र एकादशपटले—

प्रकृतेर्हि महान्तं वै अहञ्च महतस्तथा ।
अहङ्कारान्मनश्चैव मनसः खं समुत्थितम् ॥
आकाशाद् वायुमाकृष्य वायोस्तेजः समुत्थितम् ।
तेजसो जलमासाद्य जलाच्च पृथिवीं स्मरेत् ॥

इति । द्विविधमिति भागद्वयेन विभक्तमित्यर्थः, विभागश्च प्रणवेन कर्त्तव्यः । तदुक्तं तत्रैव—

प्रणवेन द्विधा कृत्वा जलौघैः परिपूरयेत् । इति ।

---

1. 'तोये' C. 2. 'तत्र भेदकमव्ययम्' A, 'तत्र भेकमनव्ययम्' B. अत्र गन्धर्वतन्त्रे एकादशपटले तुल्ये प्रकरणे 'ब्रह्माण्डाभ्यन्तरे तोयं तदधो भेकमव्ययम्' इति दर्शनात् A-पुस्तकधृतः पाठो न मूले निवेशितः । 3. 'मूलां' C. 4. 'ऊर्द्धं-' A. 5. 'ब्रह्मा' C.

तस्य मूर्द्धि स्थितं [1]देवं श्वेतं [2]वाराहरूपकम् ।
तमाल[3]श्यामलां दन्ते धारयन्तं वसुन्धराम् ॥ ८ ॥
नीलेन्दीवरहस्ताञ्च हारकेयूरभूषि[4]ताम् ।
अभ्यर्चयेद् वसुमतीं स्फुरत्सागरमेखलाम् ॥ ९ ॥
रक्तान्नममृतं दिव्यं शुद्धलाक्षारसोपमम् ॥ १० ॥
[5]हस्ताभ्यां पूजयेदप्सु द्वीपं विद्रुमसन्निभम् ।
नवरत्नसमाकीर्णमष्टसिद्धि[6]समन्वितम् ॥ ११ ॥

[ पीठचतुष्टयार्चा ]

शक्तिनाभिकयोर्मध्ये उड्डीयानं प्रपूजयेत् ।
जालन्धरं तथा [7]वक्त्रे गुदे च कामरूपकम् ॥ १२ ॥
[8]पूर्णगिरिं हृदिमध्ये [9]श्रीहट्टं तालुकोपरि ।
पूर्णगिरौ स्वर्णगिरिपीठं संपूजयेन्नरः[10] ॥ १३ ॥

[ कल्पोद्यानार्चा ]

कल्पोद्यानं यजेत्तस्य परितो गन्धपुष्पकैः ।

[ कल्पवृक्षस्य स्वरूपमर्चनोपदेशश्च ]

मध्ये कल्पतरुं मन्त्री [11]सर्वाशा[12]परिपूरकम् ॥ १४ ॥
सर्वभूताश्रयं वृत्तं [13]नित्यं वर्णमयं परम् ।
पञ्चैव [14]मादनं बीजं बिन्दुनादमहाशिफम् ॥ १५ ॥

---

१२। शक्तिनाभिकयोर्मध्य इति। अनाहतमणिपूरयोर्मध्य इत्यर्थः।
१४। सर्वाशापरिपूरकमिति। शाखाप्रशाखाभिः सर्वदिक्परिव्यापकमित्यर्थः।

---

1. 'श्वेतं देवं' C. 2. 'वराह-' A-B. 3. '-श्यामलं' A-B. 4. '-तम्' C. 5. 'हस्ताढ्य' B, 'इक्षौघं' C. अत्र गन्धर्वतन्त्रे एकादशपटले—प्रायःसमानानुपूर्वीके तुल्ये प्रकरणे 'रक्तान्नमि'त्यादिपादद्वयानन्तरं 'तन्मध्ये चिन्तयेद्देवि द्वीपं विद्रुमसन्निभमि'ति समीचीनतरः पाठो दृश्यते। 6. '-निषेवितम्' C. 7. 'वक्ष्ये' B. 8. 'प्रसविं' B. 9. 'श्रीहट्टञ्च' B. 10. '-बुधः' C. 11. 'सर्वासां' B. 12. '-परिभूषितम्' C. 13. 'नित्य-' A-B. 14. 'मानसं' C.

पृथिव्यन्तरशाखाभिः सर्वाशासु विजृम्भितम्[1] ।
सलिलान्तरपत्रैः स्वैः सञ्छादितजगत्त्रयम् ॥ १६ ॥
[2]वह्निवर्णाङ्कुरैर्दीप्तं प्रवालाङ्कुरसन्निभैः ।
मरुद्वर्णलसत्पुष्पैर्द्योतयन्तं वपुःश्रियम् ॥ १७ ॥
आकाशार्णफलैर्नम्रं सर्वभूताश्रयं परम् ।
[3]परामृताख्यमधुभिः सिञ्चन्तं परमेश्वरीम् ॥ १८ ॥
वेदागमादिभिः क्लृप्तं समुन्नतमनोहरम् ।
[4]शिवशक्तिमयं साक्षादाश्रितञ्च जगत्त्रयम् ॥ १९ ॥

[ पारिजातादिचिन्ता ]

तन्मध्ये भावयेन्मन्त्री पारिजातं मनोहरम् ।
कदम्बनागपुन्नागचम्पकादीन् विभावयेत् ॥ २० ॥
कल्पमूले रत्नभूमिं बालुकां काञ्चनप्रभाम् ।

[ चिन्तामणिगृहादेः स्वरूपं तच्चिन्तनोपदेशश्च ]

चिन्तामणिगृहं मध्ये ज्योतीरूपमनुत्तमम् ॥ २१ ॥
उद्यदादित्यसङ्काशं व्याप्तब्रह्माण्डमण्डलम् ।
शतयोजनविस्तीर्णं नानारत्नोपशोभितम् ॥ २२ ॥
चतुर्द्वारसमायुक्तं हेमप्राकार[5]शोभितम् ।
रत्नसंक्लृप्तसंशोभि[6]कवाटाष्टकशोभितम् ॥ २३ ॥
नवरत्नेन [7]संक्लृप्तं तुङ्गतोरणशोभितम् ।
हेम[8]दण्डशिखालम्बिध्वजावलि[9]परिष्कृतम् ॥ २४ ॥

---

1. '-ताम्' C. 2. 'वह्नी'त्यादिपादषट्कं A-B-पुस्तकयोर्नास्ति । 3. 'परमा-' ? C.
4. 'शिवशक्ती'त्यादिपादचतुष्टयं C-पुस्तके नास्ति । 5. '-संयुतम्' C. 6. '-कराष्टकस्र-' A-B.
7. 'संक्लिष्ट-' C. 8. '-दन्ति-' A-B. 9. '-विराजितम्' C.

[1]मध्यकोणस्थितस्तम्भ-नवरत्नसमन्वितम् ।
महामाणिक्यवैदूर्यरत्नचामरभूषितम् ॥ २५ ॥
मुक्तादामवितानाढ्यं स्वर्णस्तम्भैर्विराजितम् ।
मन्दवायुसमायुक्तं गन्धपुष्पैरलङ्कृतम् ॥ २६ ॥
[2]बहुरत्नशङ्खघण्टा-नानाद्रव्यविभूषितम् ।
मधुमत्तभ्रमत्तुङ्गभ्रमरध्वनिशोभितम् ॥ २७ ॥
गृहप्राकारसंलग्नफलका(शि?लि)विमण्डितम् ।
इन्द्रादिभिर्देवगणैर्विनम्रितदिग[3]न्तरम् ॥ २८ ॥
सुवर्ण[4]रत्नरचितं छत्र[5]न्तु मण्डलोपरि ।
परमोज्ज्वलरूपन्तु तन्मध्ये रत्नमण्डलम् ॥ २९ ॥
[6]नन्दनोद्यानमध्यस्थं

[ रत्नवेदिकादेः स्वरूपं तच्चिन्तनोपदेशश्च ]

वेदिकां रत्ननिर्मिताम् ।
तत्रस्थां चिन्तयेद्रक्तां चतुरस्रोपशोभिताम् ॥ ३० ॥
नानारत्नसमा[7]युक्तं सिंहासनं [8]तदन्तरे ।
तस्य मध्ये महाचक्रं पीयूष[9]पूरपूरितम् ॥ ३१ ॥
तन्मध्ये स्फुरितं ध्यायेत्त्रि[10]शृङ्गं ज्योतिरात्मकम् ।

[ रक्षणादिपरिपाटी ]

अस्त्रेण रक्षणं कुर्याद्रक्षेच्च[11] धेनुमुद्रया ॥ ३२ ॥

[ योनिमुद्रा ]

[12]योनि[13]मुद्रां ततो वक्ष्ये बाह्यमभ्यन्तरं तथा ।
चिन्तयेद् गुदमाकुञ्च्य ब्रह्मसूत्रं तथाऽपरम् ॥ ३३ ॥

---

1. 'मध्ये'त्यादिपादषट्कं C-पुस्तके नास्ति । 2. 'रत्नद्वीप-' C. 3. '-म्बरम्' C. 4. '-सूत्र-' C. 5. '-त्र' C. 6. 'नकुलो-' B. 7. '-युक्त-' C. 8. 'तदन्तरम्' A-B. 9. '-परि-' A-B. 10. '-लिङ्ग-' A. 11. '-च्छेत्रेण मु-' C. 12. 'धेनु-' A. 13. '-मुद्रा' A-B.

ज्वलद्दीपशिखा[1]कारां(?) संक्षोभ्यामृतमण्डलम् ।
सुधाधारामृते भूय आयाति [2]मूलपङ्कजे ॥ ३४ ॥
एवञ्च सप्तधा कुर्या[3]द्देवीसन्निधिहेतवे ।

[ ध्यानक्रमः ]

मूलेन ध्यानयोगेन स्मृत्वा ब्रह्ममयीं पराम् ॥ ३५ ॥
पूरकेण समापूर्य [4]संगोप्य कुम्भकेन च ।
सुन्दरीं तां समाराध्य योगिनीगणवेष्टिताम् ॥ ३६ ॥
[5]स्रवदमृतसंयुक्तां[6] [7]देव्यङ्गकमलान्तरे ।
ब्रह्मविष्णुभवैर्वन्द्यां महात्रिपुरसुन्दरीम् ॥ ३७ ॥

[ सशक्तिकद्वारपालध्यानोपदेशः ]

ततो ध्यायेद्[8] द्वारपालान् प्रतिद्वारे सशक्तिकान् ॥ ३८ ॥

[ सहस्रारे देवीसंस्थापनम् ]

सहस्रदलमध्ये तु स्थापयेत् सुन्दरीं पराम् ।
भैरवानन्दलिङ्गन्तु तन्मध्ये योनिसंस्थितम् ॥ ३९ ॥

[ तयोरेकत्वचिन्ता ]

एकीभावं [9]तयोः कृत्वा [10]श्रावयेदमृतं बुधः ।
[11]जिह्वाननसमायोगात् पिबेत्तदमृतं सदा ॥ ४० ॥

[ देवीपूजा, मानसयाग आवाहननिषेधश्च ]

हृदये तु समानीय सुन्दरीं पूजयेत्ततः ।
अत्रैवाऽऽवाहनं नास्ति हृदये मानसार्चने ॥ ४१ ॥

---

३४। मूलेति। मूलाधारस्थपङ्कज इत्यर्थः ।

४०। एकीभावमिति। तयोः सुन्दरीभैरवानन्दलिङ्गयोः। अमृतं तयोः सामरस्यसम्भूतपरमामृतमित्यर्थः ।

---

1. '-कारा' B. 2. 'शूल-' ? C. 3. '-देवि' C. 4. 'संस्थाप्य' C. 5. 'भवे-' A-B. 6. '-क्ता' B. 7. 'दिव्याङ्ग-' B. 8. 'द्वारपालान् वै' ? B. 9. 'द्वयोः' C. 10. 'भावये-' A-B. 11. 'जिह्वे'त्यादि पाददशकं A-B-पुस्तकयोर्नास्ति ।

उभाभ्याममृतानन्दैः पूजयेद्ग्रहसंक्रमात्।

[ पाद्याद्युपचारपात्रसंख्यानिरूपणम् ]

पाद्यपात्रत्रयं कुर्यादर्घ्यपात्रत्रयं तथा॥ ४२॥
षडा[1]चमनपात्राणि मधुपात्रत्रयं ततः।
एकं सुभोगपात्रन्तु कारयेत् षोडशे दले॥ ४३॥

[ मानसपूजाक्रमः ]

सहस्रदल[2]भृङ्गार[3]लम्बिकानाल[4]विच्युताम्।
परामृतञ्च पानीयं [5]भावपुष्पं सुवासितम्॥ ४४॥
यथाविधि [6]करे कृत्वा स्वर्णपात्रे [7]प्रपूरयेत्।
मानसैरुपचारैस्तु दीयते द्रव्यमुत्तमम्॥ ४५॥
कल्पयामीति मनसा उपचारान् प्रकल्पयेत्॥ ४६॥

[ तत्र पाद्याद्यर्पणनियमः ]

[8]पाद्यं पादाम्बुजे मौलावर्घ्यमाचमनं मुखे।
मधुपर्कं त्रिधा वक्त्रे [9]मधु पानीयमुत्सृजेत्॥ ४७॥
पुनराचमनं दत्त्वा गन्धपुष्पादिकं बुधः॥ ४८॥

[ उपचारदानमन्त्रे विशेषः ]

हृद्वह्निवल्लभातोयमन्त्रं पाद्यादिषु क्रमात्।
नमो वौषड् गन्ध[10]पुष्पे [11]हृदन्तान्यान् निवेदयेत्॥ ४९॥

---

४४। भावेति। भावपुष्पाण्यग्रे वक्ष्यन्ते।

४९। अथोपचारदानमन्त्रे विशेषमाह—हृदिति। हृत् नमः। वह्निवल्लभा स्वाहा। तोयमन्त्रं स्वधा। एवञ्च पाद्यं नमोऽन्तेन, अर्घ्यं स्वाहान्तेन, आचमनीयं स्वधान्तेन, गन्धं नमोऽन्तेन, पुष्पं वौषडन्तेन, उपचारान्तराणि तु नमोऽन्तेन मन्त्रेण दद्यादिति फलितार्थः।

---

1. '-चमनीय-' C, '-सवन-' A. 2. '-श्रृङ्गार-' A. 3. '-मम्बिकानन-' B. 4. '-विस्तृता' A-B. 5. 'भवेत् पुष्पं' A-B. 6. 'विधानेन' C. 7. 'प्रपूजयेत्' A-B. 8. 'पाद्यमि'त्यादि 'योजयेदि'त्यन्तं पादषोडशकं B-पुस्तके नास्ति। 9. 'मधुपाशी स-' A. 10. '-पुष्पैः' C. 11. अत्राऽऽधुनिकमुद्रिततन्त्रसारे अस्य श्रीतत्त्वचिन्तामणिवचनस्य 'हृदाऽन्यानि निवेदयेदि'ति पाठो दृश्यते।

[ अत्राऽऽगमान्तरसम्मतः क्रमभेदः ]

कुलोड्डीशमतेनापि प्रकारान्तरमुच्यते ॥ ५० ॥
[1]धूपे दीपे स्वधा स्वाहा नैवेद्याचमने स्वधा ।
नमः सर्वोपचारेषु प्रथमान्तेषु योजयेत् ॥ ५१ ॥

[ अत्रैव कल्पसूत्रकृतां मतम् ]

उपचारेषु सर्वेषु कल्पसूत्रमते पुनः ।
कल्पयामि नम इति [2]योजनीयमनुर्मतः ॥ ५२

[ स्वयम्भूकुसुमादयो विशिष्टाः पूजोपचाराः ]

स्वयम्भूकुसुमैः कुण्डगोलोत्थैरपि साधकः ।
भावपुष्पैः प्रयत्नेन पूजयेत् परमेश्वरीम् ॥ ५३ ॥

[ तत्र पञ्चदश भावपुष्पाणि ]

[3]अमायमनहङ्कारमरागममदन्तथा ।
अमोहकमदम्भञ्च अद्वेषं क्षोभवर्जितम् ॥ ५४ ॥
अमात्सर्यमलोभञ्च दशपुष्पं विदुर्बुधाः ।
अहिंसा परमं पुष्पं पुष्पमिन्द्रियनिग्रहः ॥ ५५ ॥
दयापुष्पं क्षमापुष्पं ज्ञानपुष्पञ्च पञ्चमम् ।
इति पञ्चदशोक्तानि भावपुष्पाणि पूजने ॥ ५६ ॥

[ अन्ये उपचाराः ]

सुधाम्बुधिं मांसशैलं मत्स्यराशिं निवेदयेत्[4] ।

[ षडङ्गादिपूजा ]

षडङ्गान्यथ[5] नित्याश्च गुरुणा [6]रतिमर्चयेत् ॥ ५७ ॥

---

1. 'धूप-' A. 2. 'योगिनीनां मनुं ततः' ? A-B. 3. 'अमाया-' ? C. 4. अत्र 'निवेदयेदि'त्यनन्तरं 'षडङ्गानि मत्स्यराशिं निवेदयेत् षडङ्गके' इति A-B-पुस्तकयोरधिकः पाठो दृश्यते । परन्तु शाक्तानन्दतरङ्गिणी-कौलावलीनिर्णयादिषु 'सुधाम्बुधिमि'त्यादिनिरुक्तसमानानुपूर्वीकवचनानन्तरमेवम्भूतस्य पाठस्यादर्शनात् C-पुस्तकेऽपरिगृहीतत्वात् पुनरुक्ततया प्रतिभानाच्च नायं पाठो मूले निवेशितः । 5. '-ति-' A-B. 6. 'वृत्तीर-' B.

[ स्नपनाङ्गमुद्वर्त्तनम् ]

स्ववामे मण्डलं कृत्वा तत्र [1]नीत्वा सुरेश्वरीम् ।
उद्वर्त्तनं यथान्यायं विधाय सर्पिषा बुधः ॥ ५८ ॥

[ देव्याः स्नपनम् ]

सुगन्धिदिव्यतैलेन देवकन्यासहस्रकैः ।
[2]सहस्रैः स्वर्णकुम्भैस्तु सुगन्धिजलपूरितैः ॥ ५९ ॥
सिञ्चयेद् भक्तिभावेन भवानीं भक्तवत्सलाम् ।
नानातीर्थोदकैः शुद्धैर्गजराजसहस्रकैः ॥ ६० ॥
नागकन्यासहस्रैस्तु किन्नरैरप्सरो[3]गणैः ।
पञ्चामृतैः पञ्चगव्यैर्दुग्धैर्दध्ना गवामपि ॥ ६१ ॥
नारिकेलोदकैरिक्षुजलैश्च शिशिरोदकैः ।
सप्तमृत्तिकया युक्ततोयेन शीतलेन च ॥ ६२ ॥
शीतलोष्णोदकैः शुद्धैस्तथा रत्नान्वितोदकैः ।
जलैः सर्वौषधीनाञ्च सुवासितजलैरपि ॥ ६३ ॥
सहस्रशीर्षमन्त्रेण पावमान्या समाहितः ।
[4]भृङ्गाराष्टककुम्भैश्च देव्याः स्नानं समाचरेत् ॥ ६४ ॥

---

६३। जलैः सर्वौषधीनामिति। सर्वौषधिगणमाह दीपिकायां तृतीयाध्याये—
मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम् ।
शठी चम्पक-मुस्तञ्च सर्वौषधिगणः स्मृतः ॥ इति ।

६४। सहस्रेत्यादि। "सहस्रशीर्षा पुरुष" इत्यादिपुरुषसूक्तमन्त्रेणेत्यर्थः। पावमान्येति। "पावमानीः स्वस्तयनी सुदुघा हि घृतच्युत" इत्यादि-पावमानी-सूक्तेनेत्यर्थः।

---

1. 'नित्या' C. 2. 'सहस्रैरि'त्यादिपादषट्कं A-B-पुस्तकयोर्नास्ति। 3. '-रणैः' C. 4. 'भृङ्गकाष्टक-' A-B.

[ देवीशरीरालङ्करणक्रमः ]

शरीरं तेजसामृज्य दुकूले परिधापयेत् ।
[1]कङ्कत्या केशसंस्कारं विधिवद् बन्धनं [2]तथा ॥ ६५ ॥
ललाटे तिलकं दद्यात् सिन्दूरं केशमध्यतः ।
रक्तवस्त्रं तथा माल्यं रक्तालङ्करणं तथा ॥ ६६ ॥
[3]रक्तानुलेपनं कार्यं गन्धचन्दन-सिह्लकैः ।
सर्वालङ्करणं दद्याद् यत्र येन विराजते ॥ ६७ ॥

---

६५। विधिवद् बन्धनमिति निरुक्तपरिपाट्या संस्कृतानां केशानामित्यर्थः ।

६७। सिह्लकैरिति स्वार्थे कः। सिह्लको गन्धद्रव्यविशेषः। 'तुरुष्कः पिण्डकः सिह्लो यावनोऽपी'त्यमरः। सर्वालङ्करणमिति। व्यक्तमाह कौलावलीनिर्णये तृतीयोल्लासे—

नागेन्द्रहाररचितं शङ्खं दद्यान्मनोहरम् ।
हस्ते केयूरकञ्चैव कङ्कणं कटकं तथा ।
पादाङ्गुरीयकं दद्यान्नानारत्नोपशोभितम् ।
पादयोर्नूपुरं दद्यात् कट्याञ्च क्षुद्रघण्टिकाम् ।
शिरोरत्नं प्रदद्याच्च मुकुटं रत्ननिर्मितम् ।
ताडङ्ककुण्डलं कर्णभूषणं सुपरिष्कृतम् ।
नयने कज्जलं दद्यान्नासाग्रे गजमौक्तिकम् ।
ग्रीवापत्रं कण्ठभूषां मुक्तामणिविभूषितम् ।
आनन्दहारत्रितयमङ्गुरीयकरत्नकम् ।

इत्यादिना। शाक्तानन्दतरङ्गिणी-गन्धर्वतन्त्रादिष्वपि अलङ्कारभेदाः प्रदर्शिताः। यत्र येन विराजत इति, येषु येष्वङ्गेषु यद् यदलङ्करणं शोभाविशेषमावहति तत्त-दलङ्करणं तत्र तत्र देयमित्यर्थः ।

---

1. 'कङ्कणं वेशसंस्कारं' B. 2. 'यथा' A. 3. 'दत्त्वा-' C. अत्र 'सर्वाङ्गलेपनं कार्यं गन्धचन्दनसिह्लकैरि'ति कौलावल्यां पाठो दृश्यते ।

[ श्रीपादुकान्तोपचारदानानन्तरं नमस्कारोपदेशः ]

रत्नश्रीपादुके दत्त्वा प्रवालदण्डचिह्निते ।
यन्त्रमध्ये समानीय नमस्कुर्यात् समाहितः ॥ ६८ ॥

[ नमस्कारमन्त्रः ]

समायातामहं वन्दे श्रीमत्त्रिपुरसुन्दरीम् ।
सर्वसौभाग्यजननीं सर्वदेवस्वरूपिणीम् ॥ ६९ ॥

[ पुनः पूजनोपदेशस्तत्क्रमश्च ]

पुनः पाद्यादिकं दत्त्वा पूजयेत् परमेश्वरीम् ।
[1]नासारन्ध्रे तु तत्त्वेन गन्धं देव्यै निवेदयेत् ॥ ७० ॥
भावपुष्पैस्तु संपूज्य धूपं दद्यात् समीरणम् ।
[2]परं तेजः प्रदीपञ्च नैवेद्यानि निवेदयेत् ॥ ७१ ॥
पृथ्वीतत्त्वा[3]त्तथा वायो[4]स्तत्त्वेन चामरं शुभम् ।
रविमण्डलमादर्शं छत्रं पूर्णनिशाकरम् ॥ ७२ ॥
पद्मं समेखलां मालामानन्दहारमुज्ज्वलम् ।
पुष्पं नानाविधं [5]दिव्यं सप्तद्वीपसमुद्भवम् ॥ ७३ ॥

---

७०-७२ । अथ यन्त्रारूढाया देव्याः पुनः पूजनमुपदिशति—पुनरित्यादिना । पाद्यादिकमित्यादिपदेनार्घ्याचमनीये बोध्ये । गन्धाद्युपचारानाह—नासेत्यादिना । तत्त्वेन चतुर्विंशतितत्त्वेन । 'चतुर्विंशतितत्त्वेन गन्धं दद्याद्विचक्षणः' इति कौलावलीतृतीयोल्लासवचनसंवादात् । भावपुष्पैरिति । अष्टादश भावपुष्पाणि अमायमनहङ्कारमित्यादिना प्रागस्मिन्नेव प्रकाशे प्रदर्शितानि । नैवेद्यानीति । पृथ्वीतत्त्वान्नैवेद्यानि निवेदयेदिति सम्बन्धः ।

७३ । पुष्पं नानाविधमिति शक्तिपूजायां विहितमिति बोध्यम् । विशिष्याऽऽह कौलावलीनिर्णये तृतीयोल्लासे—

करवीरं जवा द्रोणं चम्पकं नागकेशरम् ।

---

1. 'नासाग्राद् गन्ध-' C. 2. 'परतेजः' C. 3. '-त्ततो' C. 4. '-स्तत्त्वेनाऽऽचमनं' ? A-B. 5. 'द्रव्यं' A-B. अत्र सप्तद्वीपसमुद्भवं द्रव्यम् इत्यर्थे सम्भवत्यपि
'समेखलां पद्ममालां पुष्पं नानाविधन्तथा । सप्तद्वीपसमुद्भूतं दद्याद्देव्यै सुसाधकः ॥'
इति कौलावलीनिर्णयतृतीयोल्लासीयवचनसंवादाद् दिव्यमित्येव पाठो मूले निवेशितः ।

आ मूलाद् ब्रह्मरन्ध्रान्तं [1]सुषुम्णामृतवायुना ।
अनाहतध्वनिमयीं घण्टामेतां निवेदयेत् ॥ ७४ ॥
प्रदीपैर्वन्दनं कृत्वा दत्त्वा च प्रतिबोधयेत् ॥ ७५ ॥

[ दर्शयितव्यासु मुद्रासु सुन्दरीमुद्रा ]

आधारादुत्थितं वायुं षोडशान्ते[2] सुषुम्णया ।
[3]नयने नासिका[4]ग्रस्थे निमेषोन्मेषवर्जिते ॥ ७६ ॥
[5]भ्रुवोर्मध्ये समानीय दन्तैर्दन्तानसंस्पृशन् ।
[6]नोष्ठैर्नोष्ठं न वा तालुं जिह्वया ज्ञानखड्गकः ॥ ७७ ॥
शक्तौ [7]लक्षं बहिः कुर्यान्निमेषोन्मेषवर्जितम् ।
एषा सा सुन्दरी [8]मुद्रा भैरवीमोदकारिणी ॥ ७८ ॥

[ विस्मयमुद्रा ]

दक्षिणा मिलिता मुष्टिर्नासिकार्पिततर्जनी ।
मुद्रा विस्मयसंज्ञा स्याद् विस्मयावेशकारिणी ॥ ७९ ॥

---

अपराश्च कदम्बश्च पारिजातादिकन्तथा ।
दद्याद्देव्यै प्रयत्नेन माल्यं गन्धसमन्वितम् ॥ इति ।

७४ । अथ घण्टादानपरिपाटीमाह—आ मूलादित्यादिना । मूलाधाराद् ब्रह्मरन्ध्रपर्यन्तव्यापिनी सुषुम्णाख्या नाडी वर्त्तते । तदुक्तं गान्धर्वे पञ्चमपटले—

मेरुमध्ये स्थिता या तु मूलादाब्रह्मरन्ध्रगा ।
सर्वतेजोमयी सा तु सुषुम्णा वह्निरूपिणी ॥ इति ।

अनयैव सुषुम्णया मूलाधाराद् ब्रह्मरन्ध्रपर्यन्तं वायुः सञ्चरति । तस्यैव वायोराघातेन अनाहताख्ये शब्दब्रह्ममये हृत्पुण्डरीके कश्चन शब्दोऽविरामः प्रवर्त्तते । स एव शब्दोऽत्रानाहतध्वनिपदेनाभिधीयते । तमेव ध्वनिं घण्टावाद्यत्वेन निवेदयेत् इति फलितार्थः ।

७९ । मिलिता मुष्टिरित्यत्र निविडा मुष्टिरिति तन्त्रसारे पाठः ।

---

1. अत्र 'सुषुम्णाहतवायुने'ति कौलावलीनिर्णये तृतीयपटले पाठो दृश्यते । 2. '-न्तं' C. 3. 'अनेन' A-B. 4. '-द्वन्द्वे' A-B. 5. 'भ्रूमध्ये तु' C. 6. 'ओष्ठेनौष्ठेन वा भानुं जिह्वयोर्ज्ञानकारणम्' A-B. 7. 'लक्षं वह्नि' C. 8. 'विद्या' B.

[ नादमुद्रा ]

मुष्टिरुद्धीकृताङ्गुष्ठा दक्षिणा नादमुद्रिका ।

[ बिन्दुमुद्रा ]

तर्जन्य[1]ङ्गुष्ठ[2]संयोगाद् बिन्द्वाख्या सैव कीर्त्तिता ॥ ८० ॥

[ ज्ञानमुद्रा ]

ज्ञानमुद्रा यदैव स्यान्नाऽऽभिमुख्येन संस्थिता ।

[ योगमुद्रा ]

हृत्प्रदेशे [3]तु [4]सम्बद्धा योगमुद्रेति कथ्यते ॥ ८१ ॥

[ बहिरन्तर्योनिमुद्रे ]

योनिमुद्रां ततः [5]कुर्यात् सैव [6]चान्तर्भवेदपि ।

तन्मांसशोणितस्वादप्रमत्ता मुक्तिहेतवे ॥ ८२ ॥

एषा सा परमा मुक्तिः शृङ्गाररसभाविता ।

तस्याः स्वेच्छा [7]स्वयं भूतं परमानन्दभैरवम् ॥ ८३ ॥

[8]कन्दे स्थिता वायुशक्तिः सुषुम्णाद्वारगामिनी ।

नीवारशूकवत्तन्वी विषतन्तुतनीयसी ॥ ८४ ॥

विद्युत्कोटिप्रतीकाशा सूर्यकोटिसमप्रभा ।

अशेषजगदुत्पत्तिस्थितिसंहारकारिणी ॥ ८५ ॥

---

८० । मुष्टीति । मुष्ट्या रुद्धीकृतोऽङ्गुष्ठो यस्यास्तथाभूता दक्षिणा नादमुद्रेत्यर्थः । अत्र दक्षिणकरस्याङ्गुष्ठमितरेणाङ्गुलिचतुष्टयेन रुद्धं कुर्यादिति फलितार्थः ।

८१ । प्रागुक्ता तर्जन्यङ्गुष्ठसंयोगात्मिका बिन्दुमुद्रैव आभिमुख्येन न संस्थिता चेत् तदा ज्ञानमुद्रेति कथ्यते इत्यर्थः । तथाच कौलावलीनिर्णये सप्तमोल्लासे—

ज्ञानाख्यमुद्रया चैव पूजयेत् परमेश्वरीम् ।
अङ्गुष्ठतर्जनीभ्यान्तु ज्ञानमुद्रेयमीरिता ॥ इति ।

हृदिति । सैव बिन्दुमुद्रा हृदि संयोजिता योगमुद्रेत्युच्यत इत्यर्थः ।

८२ । योनीति । बहिरन्तर्भेदेन योनिमुद्रा द्विविधा भवति । तत्र बहिर्योनिमुद्रा प्रसिद्धा । अन्तर्योनिमुद्रामाह सैवेत्यादिना ।

---

1. '-ङ्गुलि-' B. 2. '-संयोगो' C. 3. '-षु' A-B. 4. 'संरुधा' A. 5. 'कृत्वा' B. 6. 'काले भ-' A-B. 7. '-मयं भूयः' A-B. 8. 'कन्दो' ? C.

हृद्ग्रन्थितालुका[1]ग्रन्थि[2]कपाटास्फोटनाकुलम् ।
बिन्दु[3]लम्बिकयोर्मध्ये त्रिकोणे शाम्भवे नयेत् ॥ ८६ ॥
प्रविश्य रमते गाढं पुरुषेण सहानिशम् ।
स्थिरचित्तः सदा ध्यायेद् यथा स्यान्मानसं[4]स्थिरम् ॥८७॥

[ स्वयंप्रज्ञातासंप्रज्ञातभेदेन समाधेर्द्वैविध्यम् ]

समाधिर्जायते तत्र संज्ञाद्वय[5]विराजितः ।
स्वयंप्रज्ञातनामैको ह्यसंप्रज्ञातनामधृक् ॥ ८८ ॥

[ तत्र स्वयंप्रज्ञातः ]

स्वयंप्रज्ञात[6]संज्ञस्तु शिवाधिक्येन जायते ।

[ असंप्रज्ञातः ]

असंप्रज्ञातनामा तु शिव[7]तत्त्वेन वै भवेत् ॥ ८९ ॥

[ स्वयंप्रज्ञातभेदौ ]

स्वयंप्रज्ञातभेदस्तु तीव्रस्तीव्रतरो भवेत् ।

[ असंप्रज्ञातभेदौ ]

असंप्रज्ञातभेदस्तु मन्दो मन्दतरस्तथा ॥ ९० ॥

[ तत्र प्रथमस्य भेदयोः स्वरूपम् ]

हास्यरोदनरोमाञ्चकम्पस्वेदादिलक्षणः ।
तीव्रस्तीव्रतरश्चैव समाधिरुपलक्षितः ॥ ९१ ॥

[ द्वितीयस्य भेदयोः स्वरूपम् ]

[8]निमेषवर्णि(र्जि)ते नेत्रे वपुस्तल्लक्षणं स्थितम् ।
मन्दो मन्दतरश्चैव समाधिरुपलक्षितः ॥ ९२ ॥

---

८८। समाधिरिति। संप्रज्ञातासंप्रज्ञातभेदेन समाधेर्द्वैविध्यं द्विविधस्य च तस्य तीव्रतीव्रतरत्वादिभेदेन ते ते भेदाः पातञ्जलसूत्रव्यासभाष्ये विशिष्य प्रदर्शिताः।

---

1. '-ग्रन्थेः' B. 2. '-कपाटस्फोटनाङ्कम्' A. 3. '-रम्बि-' A-B. 4. 'स्थितम्' A-B. 5. '-विजृ(जृ)म्भितः' C. 6. '-संज्ञास्तु' A. '-संज्ञान्तु' B. 7. '-तत्त्वे भवं' A-B 8. 'निमेषे'त्यादिपादद्वयं A-B-पुस्तकयोर्नास्ति ।

शाम्भवेन तु योगेन सुखी भूयान्निरन्तरम् ।
तयोः संयोगमाहूय परमामृतगोकुलम् ॥ ६३ ॥
पानीयं मनसा दत्त्वा पुनर्जन्म न विद्यते ।
तदानन्दमयं ज्ञानं प्रीता भवति सुन्दरी ॥ ६४ ॥

[ विश्रामार्थं कुसुमशयने देव्याः स्थापनं प्रीतिसम्पादनञ्च ]

पुष्पशय्यां [1]ततः कृत्वा तत्र नीत्वा सुरेश्वरीम् ।
मनोनर्त्तक[2]तालैश्च [3]शृङ्गारादिरसोद्भवैः ॥ ६५ ॥
[4]नृत्यैर्गीतैश्च वाद्यैश्च तोषयेत् परमेश्वरीम् ।
तस्मात् कामेश्वरी माता [5]पि(प्री)ता कामेश्वरश्च सः ॥६६॥

[ मानसयागफलम् ]

[6]मनसैकां महापूजामन्तरार्चनमुत्तमम् ।
कृत्वा सिद्धिमवाप्नोति न स [7]बन्धेन बध्यते ॥ ६७ ॥

[ ज्ञानहोमनिरूपणोपक्रमः ]

ज्ञानहोमं प्रवक्ष्यामि येन ब्रह्ममयो भवेत् ।

[ तत्र चतुरस्रकुण्डम् ]

ज्ञानेन चतुरस्राख्यं कुण्डं सञ्चिन्त्य मन्त्रवित् ॥ ६८ ॥

---

६८ । एवमन्तरार्चनमभिधाय तदङ्गं ज्ञानहोमं वक्तुमुपक्रमते—ज्ञानहोममित्यादिना । ज्ञानहोमो मानसहोम एव । ज्ञानमात्रेणैव वक्ष्यमाणहोमप्रक्रियासम्पादनादस्य ज्ञानहोमत्वम् । अस्य फलमाह—येनेत्यादिना । ज्ञानेनेति । ज्ञानेन केवलं मनोव्यापारेण चिन्तनमात्रेणेत्यर्थः । चतुरस्राख्यमिति । कुण्डमिदं सप्तमप्रकाशोक्तचतुरस्रकुण्डवत् कल्पनीयम् । एतदभिप्रायेणैव ज्ञानार्णवे द्वाविंशपटले—

ज्ञानेन चतुरस्राख्यं कुण्डं सञ्चिन्त्य पूर्ववत् ।

इत्युक्तम् ।

---

1. 'तत्र' B. 2. '-तौलश्च' C. 3. 'भृङ्गारादि-' B. 4. 'नृत्यैरि'त्यादिपादद्वयं C-पुस्तके नास्ति । 5. अत्र 'पिते'ति पाठः प्रामादिक इति प्रतिभाति ; 'पुष्पशय्यामि'त्यादिसमानानुपूर्वीके कौलावलीनिर्णयतृतीयोल्लासवचने 'तस्मात् कामेश्वरी माता प्रीता कामेश्वरश्च सः' इति पाठदर्शनात् । 'पिते'ति पाठेऽसङ्गतेः 'तस्मादि'ति हेत्वर्थकपदानुपपत्तेश्च । 6. 'मानसैकां' C. 7. 'रन्ध्रेण' B.

[ आत्मनां चातुर्विध्यम् ]

आत्मानो वेदसंख्या हि ज्ञातव्याः साधकोत्तमैः ।

[ निरुक्तात्मज्ञानफलम् ]

एषां विज्ञानमात्रेण पुनर्जन्म न विद्यते ॥ ९९ ॥

[ आत्मनः स्वरूपम् ]

[1]साधारणेन पक्षेण वर्त्तते सर्वजन्तुषु ।

[2]स आत्मा प्राणरूपी तु हृदये परमात्मकः ॥ १०० ॥

[ आत्मनश्चराचरशरीरव्यापकत्वम् ]

शरीरं व्याप्य सकलं चरस्याप्यचरस्य च ।

हंसस्वरूपी विज्ञेयः श्वासोच्छ्वासविलासवान् ॥ १०१ ॥

[ भ्रमवशादस्यैव जीवसंज्ञा ]

जीवस्तस्यैव नाम स्याद् भ्रान्त्या श्वासोपलक्षितः ।

श्वासोच्छ्वासौ[3] देहभावौ[4] भ्रान्तिरेव न संशयः ॥ १०२ ॥

---

९९ । आत्मान इति । वेदसंख्या आत्मान्तरात्मपरमात्मज्ञानात्मभेदेन चतुःसंख्याका इत्यर्थः । इतः प्रभृति प्रकाशान्तं यावज् ज्ञानार्णवीयद्वाविंशपटलेन प्रायः सर्वमेव संवदति । तत्राऽऽत्मान इत्यादिपादद्वयात् पूर्वम्—

आत्मभिश्चतुरस्रं तद् विज्ञेयं वीरवन्दिते ।

इति पादद्वयं दृश्यते । अत्राऽऽत्मभिरित्यादिपादद्वयं लेखकप्रमादात् पतितमिति प्रतिभाति । अन्यथात्मचतुष्टयनिरूपणमसङ्गतिमापद्येत । एवञ्च निरुक्तज्ञानार्णववचनपर्यालोचनया निरुक्तात्मचतुष्केण चतुरस्रकुण्डं विधेयमित्यापतति, वक्ष्यति च स्वयमेव—

आत्मान्तरात्मपरमज्ञानात्मानः प्रकीर्त्तिताः ।

एतद्रूपं हि चित्कुण्डं चतुरस्रं विभावयेत् ॥ इति ।

१००-१०२ । आत्मनश्चातुर्विध्यं निरूप्य तस्य सर्वमूर्त्तसंयोगित्वादिलक्षणं स्वरूपं निरूपयति—साधारणेनेत्यादिना भ्रान्तिरेव न संशय इत्यन्तेन । अनेन जीवात्म-

---

1. 'सर्वाधारेण' A-B. 2. 'आत्मैव प्राणरूपी' A-B. 3. '-सो' C. 4. '-वो' C.

कुलालचक्रभेदेन घटाकाशं यथा घटे।
घटे भवति भिन्नत्वं नाऽऽकाशे भिन्नता भवेत् ॥ १०३ ॥
[1]तथा देहगतो जीवो देहनाशे जगत्स्वयम्।
व्याप्य तिष्ठति सर्वत्र तस्मादात्मपदं महत् ॥ १०४ ॥

परमात्मनोरभेदः प्रतिपादितः। स सर्वप्राणरूपी चराचराखिलशरीरव्यापकः हंसस्वरूपी प्रकृतिपुरुषोभयात्मकश्च। तत्र श्वासोच्छ्वासाद्यखिलविलासवान् प्रतिदेहं व्यवस्थित आत्मैव भ्रान्तेर्जीवात्मत्वेन व्यपदिश्यते। परमार्थतस्तु परमात्मेतरस्य कस्यचिद् जीवात्मनः सत्ता नास्ति। श्वासप्रश्वासादीनां शरीरधर्मप्रतीतिस्तु भ्रमवशादेव। अत एव गन्धर्वतन्त्रे पञ्चमपटले—

नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः।
एकः संभिद्यते भ्रान्त्या मायया न स्वरूपतः।
तस्माद् द्वैतं न मे चास्ति न प्रपञ्चो न संसृतिः॥

इत्यादिना नित्यत्वैकत्वव्यापकत्वादिकमात्मनः प्रतिपादितम्।

१०३-१०४। ननु तत्तद्देहावच्छेदेनाऽऽत्मनो भेदस्यानुभवसिद्धत्वात् कथं तस्यैकत्वादिकं सिध्यतीत्याशङ्क्य दृष्टान्तप्रदर्शनमुखेन परिहरति—कुलालेत्यादिना। यथा आकाशस्यैकत्वेऽपि कुलालचक्रभेदेन समुत्पन्नेषु घटेषु तत्तद्घटावच्छिन्नमाकाशं भिन्नतया प्रतिभाति वस्तुतस्तु घट एव भिन्नत्वं भेदो भवति आकाशे तु भिन्नता न भवेत्; आकाशमेकमेव, उपाधिभेदादेव तस्य भेदव्यवहारः। अत एव विश्वनाथेन "एकः सन्नप्युपाधित" इत्युक्तम्। एवं दृष्टान्तमुपन्यस्य दार्ष्टान्तिकं प्रदर्शयति—तथेत्यादिना। प्रागुपदर्शितघटाद्यवच्छिन्नाकाशवद् देहगतो देहावच्छिन्नः परमात्मा जीव इत्युच्यते परन्तु देहनाशेऽनुपहितोऽयं स्वयं जगद् व्याप्य सर्वत्र तिष्ठति, सर्वत्र जगत्सु अयं व्याप्य सर्वं वस्तुजातमिति शेषः, इति वा सम्बन्धः। यथा तत्तद्घटनाशे तत्तद्घटावच्छिन्नाकाशो महाकाश एव तथा तत्तद्देहनाशे तत्तद्देहावच्छिन्न आत्मा परमात्मैव, न तु जीवत्वेनाऽऽत्मनः काचित् स्वतन्त्रा सत्ताऽस्तीति फलितार्थः। एतदभिप्रायेणैव गन्धर्वतन्त्रे पञ्चमपटले—

यथाकाशो घटाकाशो महाकाश इतीरितः।
तथा भ्रान्तिर्द्विधा प्रोक्ता ह्यात्मा जीवेश्वरात्मना ॥ इति।

1. 'तदा' A-B.

आत्मज्ञानं शिवेनोक्तं द्वितीयञ्च शृणुष्व च ॥ १०५ ॥

[ अन्तरात्मस्वरूपम् ]

अन्तःशब्देन [1]सकलं रहस्यं सूक्ष्मरूपकम् ।
परमात्मस्वरूपेण सर्वं व्याप्य विजृम्भते ॥ १०६ ॥
[2]अन्तरङ्गतया तेन चरं वाऽप्यथवाऽचरम् ।
[3]व्याप्यते सकलं यस्मादन्तरात्मेति गीयते ॥ १०७ ॥

[ परमात्मनः स्वरूपम् ]

स एव हंस आत्मा हि योगि[4]गम्यो यदा भवेत् ।
तावच्चञ्चुर्भवेच्चैव निगमागमपत्त्रवान् ॥ १०८ ॥
[5]शिवशक्तिपदद्वन्द्वो बिन्दुत्रयविलोचनः ।
[6]यश्च परमहंसस्तु यस्मात् सर्वत्र चैव हि ॥ १०९ ॥
तदा भूतानि [7]जायन्ते क्रमेणैव [8]च तच्छृणु ।
आकाशः पवनो ह्यग्निर्जलं पृथ्वी क्रमेण तु ॥ ११० ॥
एतेषां पञ्चभूतानां [9]प्रथमं बीजमुच्यते ।
अविद्याख्यसरोमध्ये मोहपङ्कजपूरिते ॥ १११ ॥
[10]प्रपञ्चकमले भूतपञ्चान्तपरिजृम्भिते ।
विहारोऽस्यैव मोहस्य दृष्ट्वा मायामयो भवेत् ॥ ११२ ॥
अयमेव महाकाले[11] निष्प्रपञ्चो यदा भवेत् ।
संहाररूपी हंसस्तु तदात्मानं प्रदर्शयेत् ॥ ११३ ॥

---

१०८। परमात्मस्वरूपमाह—स एवेत्यादिना। तावदित्यादिना रूपपरिग्रहः सूचितः।

---

1. 'नियतं' C. 2. 'अन्तर्गतं तद्‌घातेन' B. 3. 'व्याप्याऽऽस्ते' A-B. 4. '-गम्यः सदा' A-B. 5. 'शिवे'त्यादि पादद्वयं A-B-पुस्तकयोर्नास्ति। 6. 'यच्च' B. 7. 'दायन्ते' B. 8. 'ततः श्रृणु' A-B. 9. 'प्रथमे' A-B. 10. 'जपञ्च ?' B. 11. '-लो' B.

पन्तित्वमस्य नास्त्येव सोऽहमात्मा प्रतिष्ठितः ।
[1]परमात्मेति जानीहि एवमेतदुदाहृतम् ॥ ११४ ॥

[ ज्ञानात्मनः स्वरूपम् ]

येनेदं ज्ञायते सर्वं समत्वेन च सर्वदा ॥ ११५ ॥
चन्द्रः सूर्यो यथा नित्यं नीरक्षीरेषु दृश्यते ।
तद्वत् [2]क्षीरस्य समता नीरक्षीरविभेदतः ॥ ११६ ॥
कर्दमे चन्दने भिन्नं न भवेदन्त्यजे द्विजे ।
साक्षी [3]तु सर्व[4]भूतानां ज्ञानात्मा परिकीर्त्तितः ॥ ११७ ॥

[ आत्मचतुष्टयनिरूपणोपसंहारः ]

[5]आत्मान्तरात्मपरमज्ञानात्मानः प्रकीर्त्तिताः ।

[ प्रतिज्ञातचतुरस्रकुण्डस्यैतदात्मचतुष्टयात्मकत्वम् ]

एतद्रूपं हि चित्कुण्डं चतुरस्रं विभावयेत् ॥ ११८ ॥

[ कुण्डस्य स्वरूपम् ]

आनन्दमेखलारम्यं बिन्दुत्रिवलयान्वितम् ।
अर्धमात्रायोनिरूपं[6] ब्रह्मानन्दमयं [7]सदा ॥ ११९ ॥

[ तत्र कुण्डे होमः ]

परदेवमये[8] सर्वज्ञानदीपविजृम्भिते ।
जुहुयात् [9]सन्निभे [2]वह्नौ प्रपञ्चाहुतिमुत्कटम् ॥ १२० ॥
[10]शब्दाख्यमातृकारूप[11]मन्त्रवर्णविराजितम् ।
[12]अक्षराणि हुतान्यत्र निःशब्दं ब्रह्म जायते ॥ १२१ ॥

---

११५ । येनेदं ज्ञायत इति स ज्ञानात्मा परिकीर्त्तित इति वक्ष्यमाणेन सम्बन्धः ।
१२० । सन्निभ इति । सती निभा दीप्तिर्यस्य तस्मिन्, सन्दीपित इत्यर्थः ।

---

1. 'परमात्मे'त्यादि पादषट्कं C-पुस्तके नास्ति । 2. 'पिण्डस्य' C. 3. 'स' C. 4. '-जगतां' C. 5. 'आत्मे'त्यादि पादत्रयं A-पुस्तके नास्ति । 6. '-पा' C. 7. 'तथा' B. 8. '-मयः' A-B. 9. 'समीधे ?' B. 10. 'स ब्राह्मचरका' A-B. 11. '-लक्ष-' A-B. 12. 'अथ सा पिण्डिता-' A-B.

[ तत्र हविःकल्पनम् ]

कृत्याकृत्ये पापपुण्ये सङ्कल्पञ्च [1]विकल्पकम् ।
धर्माधर्मैः साधकेन्द्रो हविस्तेन प्रकल्पयेत् ॥ १२२ ॥

[ तेन हविषा होमस्योपदेशः ]

जुहुयाच् चित्स्वरूपाग्नौ मनुभिस्तेन याजकः ।
मूलविद्यां ब्रह्मरूपां ध्यात्वा [2]संविन्मयीं पराम् ॥ १२३ ॥

[ तत्र प्रथमो मन्त्रः ]

धर्माधर्महविर्दीप्त आत्माग्नौ मनसा श्रुचा[3] ।
सुषुम्णा वर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ।
अग्निजायान्वितो मन्त्रो मूलान्ते प्रकटीकृतः ॥ १२४ ॥

[ द्वितीयो मन्त्रः ]

[4]नाभौ चैतन्यरूपाग्नौ हविषा मनसा श्रुचा ।
ज्ञानप्रदीपिते नित्यमक्षवृत्तीर्जुहोम्यहम् ।
वह्निजाया[5]न्वितो मन्त्रो मूलान्ते समुदाहृतः ॥ १२५ ॥

[ तृतीयो मन्त्रः ]

प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीश्रुचा ।
धर्माधर्मकलास्नेहपूर्णमग्नौ जुहोम्यहम् ।
अग्निजाया[6]न्वितो मन्त्रो मूलान्ते च महात्मना ॥ १२६ ॥

---

१२३ । जुहुयादिति । मनुभिः धर्माधर्मेत्यादिवक्ष्यमाणमन्त्रैः । तेन प्राक् प्रकल्पितेन हविषेत्यर्थः । शिष्टं स्पष्टम् ।

१२४ । ज्ञानहोमस्य प्रथमं मन्त्रमाह—धर्मेति । एवञ्चाऽऽदौ मूलं ततो धर्माधर्मेत्यादिजुहोम्यहमित्यन्तं ततः स्वाहेत्युक्त्वा प्रथमाहुतिम् आत्मस्वरूपाग्नौ जुहुयादित्यर्थः । अक्षवृत्तीरिन्द्रियवृत्तीः ।

१२५ । द्वितीयमाह—नाभाविति । अत्रापि पूर्ववन्मूलं ततो नाभावित्यादि जुहोम्यहमित्यन्तं ततः स्वाहेति द्वितीयाहुतिं नाभिस्थे चैतन्यरूपाग्नौ जुहुयादित्यर्थः ।

१२६ । प्रकाशेति । अत्रापि होमक्रमः पूर्ववत् ।

---

1. 'विकल्पितम्' B. 2. 'सत्त-' A-B. 3. इतः परं 'ज्ञानप्रदीपतो नित्यमक्षवृत्तीर्जुहोम्यहम्' इति B-पुस्तकेऽधिकः पाठो दृश्यते । 4. 'नाभि-' C. 5. '-वधिर्मन्त्रो' C. 6. '-वधिर्ज्ञेयो' C.

[ चतुर्थो मन्त्रः ]

अन्तर्निरन्तरनिरिन्धनमेधमाने
मायान्धकारपरिपन्थिनि संविदग्नौ ।
कस्मिंश्चिदद्भुतमरीचिविकाशभूमौ
विश्वं जुहोमि वसुधादिशिवावसानम् ॥ १२७ ॥

जुहुयान्मूल[1]मन्त्रान्ते ब्रह्मप्राप्त्यै [2]च [3]साधकः ॥ १२८ ॥

[ होतुर्ब्रह्मरूपत्वम् ]

[4]निष्प्रपञ्चो यदा काले [5]जायते ब्रह्म[6]विन्नरः ।
तदा संविन्मयः साक्षात् केवलं ब्रह्मरूपकः ॥ १२९ ॥

[ उपसंहारः ]

[7]अन्तर्होममनुः प्रोक्तः सर्वपापनिकृन्तनः ॥ १३० ॥

इति श्रीपूर्णानन्दपरमहंसविरचिते श्रीतत्त्वचिन्तामणौ षोडशः प्रकाशः ॥ १६ ॥

---

१२७। अन्तरिति। अन्तर्देहाभ्यन्तरे निरिन्धनं दाह्यमिन्धनमन्तरेण एधमाने प्रज्वलति तथा मायान्धकारपरिपन्थिनि मायारूपतमःप्रतिबन्धके अद्भुतमरीचिविकाशभूमौ अलौकिकरश्मिप्रकरप्रकाशाकरे कस्मिंश्चिदनिर्वाच्यस्वरूपे संविच्चैतन्यं तद्रूपाग्नौ वसुधादिशिवावसानं पृथ्वीतत्त्वादिशिवतत्त्वान्तात्मकं विश्वं जुहोमीत्यर्थः ; अत्रेदमवधेयम्—शैवागमे शिवादीनि क्षित्यन्तानि षट्त्रिंशत्तत्त्वानि प्रतिपादितानि। तानि च पञ्चमप्रकाशीय-११३-११४-श-श्लोकटीकायां षडध्वनिरूपणप्रसङ्गेन विशिष्य प्रदर्शितानि। तत्र सृष्टिक्रमेण शिवादिक्षित्यन्तषट्त्रिंशत्तत्त्वनिर्णयः कृतः। अत्र तु विश्वविलयार्थं विधेये ज्ञानहोमे लयक्रमेण क्षित्यादिशिवान्तषट्त्रिंशत्तत्त्वोपदेशः। इत्यभिप्रायेणैव वसुधादिशिवावसानमित्युक्तम्। होमक्रमस्तु पूर्ववत्।

---

1. '-मन्त्रेण' C. 2. '-व' C. 3. 'देशिकः' C. 4. 'निष्प्रपञ्चे' A-B. 5. 'जायन्ते' A-B. 6. '-बिन्दवः' B. 7. 'अन्तर्लोम-' ? B.

# सप्तदशः प्रकाशः

——:*:——

[ श्रीचक्रस्वरूपम् , मुद्रास्वरूपम् , यन्त्रनिर्माणोपकरणादिनिर्णयः, रात्रौ यन्त्रनिर्माण-निषेधः, तत्र व्यवस्था, श्रीचक्रोद्धारः, तत्र विशेषः, नवचक्रभेदाः, चक्ररहस्यम्, पीठार्चा ]

[ यन्त्रनिरूपणप्रतिज्ञा ]

[1]यन्त्रोद्धारं प्रवक्ष्यामि सर्वसिद्धिप्रदायकम् ॥ १ ॥

---

१। एवं पूर्वप्रकाशेऽन्तर्यागमभिधाय प्रकाशेऽस्मिन् श्रीमत्त्रिपुरसुन्दरीदेव्याः पूजायन्त्रमभिधातुं प्रतिजानीते—यन्त्रोद्धारमित्यादिना। अत्रेदमवधेयम्—श्रीमत्त्रिपुरायास्त्रिविधः सङ्केतो भवति यन्त्रसङ्केतो मन्त्रसङ्केतः पूजासङ्केतश्चेति। तदुक्तं योगिनीहृदये प्रथमपटले—

चक्रसङ्केतको मन्त्र-पूजासङ्केतकस्तथा।
त्रिविधस्त्रिपुरादेव्याः सङ्केतः परिकीर्त्तितः॥

यावदेतन्न जानाति सङ्केतत्रयमुत्तमम्।
न तावत् त्रिपुराचक्रे परमाज्ञाधरो भवेत्॥

इति। चक्रयन्त्रशब्दावभिन्नार्थकौ। तत्र च मन्त्रसङ्केतः पूर्वमभिहितः। पूजा-सङ्केतश्चाष्टादशप्रकाशे वक्ष्यते। यन्त्रसङ्केतस्य निरूपणार्थमेतत्प्रकाशारम्भः। सङ्केतपदार्थश्च व्याख्यातो योगिनीहृदयटीकायाममृतानन्दनाथेन—"सङ्केतवत् सङ्केतकः, यथा कृतसमयौ कामिनीकामुकौ यत्र क्वापि वसत एवमस्मिन् शिवाविति"। एवञ्च भगवती कामकलात्मिका श्रीमत्त्रिपुरादेवी भगवता कामेश्वरेणात्र चक्रे वसतीति सङ्केतपदादवगम्यते।

---

1. 'मन्त्रो-' ? B.

[ यन्त्रपदव्युत्पत्तिः ]

यमयत्यखिलं [1]पापं त्रायते महतो भयात् ।
साधकं पूजनाद्ध्यानात्तस्मा[2]द् यन्त्रः [3]प्रकीर्त्यते ॥ २ ॥
[4]अतः [5]शरीरं यन्त्रञ्च मन्त्रं ज्ञानमखण्डितम् ॥ ३ ॥

[ शरीरस्य त्रैविध्यम् ]

शरीरं त्रिविधं प्राहुर्भौतिकञ्च मनोमयम् ।
परं ज्ञानमयं नित्यं [6]यदनाशि निरन्तरम् ॥ ४ ॥

---

२ । यन्त्रपदव्युत्पत्तिमाह—यमयतीत्यादिना । एतेन पातकनियन्तृत्वाद् भयत्राणकर्त्तृत्वाच्चास्य यन्त्रसंज्ञा । तन्त्रसारे तु—

कामक्रोधादिदोषोत्थ-सर्वदुःखनियन्त्रणात् ।
यन्त्रमित्याहुरेतस्मिन् देवः प्रीणाति पूजितः ।
तथा—दुःखनियन्त्रणाद् यन्त्रमित्याहुस्तन्त्रवेदिनः ॥

इति यन्त्रपदव्युत्पत्तिः प्रदर्शिता ।

३ । यन्त्रस्य देवीशरीररूपत्वमभिधत्ते—अत इत्यादिना । अतः प्रागुक्ताखिलपापनियन्तृत्वादिगुणकत्वाद् यन्त्रं देव्याः शरीरमित्यर्थः । ननु यन्त्रं देव्याः शरीरं चेत् किं तत्र ज्ञानमित्यत आह—मन्त्रं ज्ञानमिति । जन्यज्ञानव्यावर्त्तनाय अखण्डितमिति, नित्यमित्यर्थः । अत एव गन्धर्वतन्त्रे चतुर्थपटले श्रीचक्रनिर्माणपरिपाटीमभिधाय—

एवमेतन्महाचक्रं महाश्रीत्रिपुरामयम् ।
यन्त्रं शरीरमित्याहुर्मन्त्रं ज्ञानमखण्डितम् ॥

इत्यनेनायमेवार्थो व्यक्तमुक्तः ।

४ । देवीशरीरस्य त्रैविध्यं दर्शयति—शरीरमित्यादिना । भौतिकं मनोमयं ज्ञानमयञ्चेति त्रिविधं शरीरमित्यर्थः । तत्र ज्ञानमयशरीरस्य विशेषमाह—परमिति । निरुक्तशरीरेषु ज्ञानमयं शरीरं परं श्रेष्ठमित्यर्थः । श्रेष्ठत्वे हेतुमाह—नित्यमित्यादिना । नित्यम् उत्पत्तिरहितम् अनाशि विनाशरहितञ्च । नित्यमित्यनेनैवोत्पत्तिविनाश-

---

1. 'पापात्' A-B. 2. '-न्मन्त्रं' A-B. 3. 'प्रकीर्त्तिते' ? C. 4. 'ततः' B. 5. 'शरीर-' C. 6. 'यदशशि' ? A-B.

[ तत्स्वरूपम् ]

[1]मुद्रा भौतिकमित्याहुर्यन्त्वं विद्धि मनोमयम् ।
[2]मन्त्रं ज्ञानमयं [3]प्राहुरेवं त्रिधा वपुर्भवेत् ॥ ५ ॥
अत्रापि मानसध्वंसे भौतिकं नास्ति निश्चितम् ।
विनाशि स्याद्द्वयं तस्मादेकं सत्यमिति स्थितम् ॥ ६ ॥
आद्यन्तमध्यशून्यत्वान्न किञ्चि[4]न्नानुपश्यति ।
केनापि जायते [5]नैतत् सूतो ज्ञानमयं यतः ॥ ७ ॥
न [6]दृष्टं न [7]श्रुतं कश्चित्ततो भावा भवन्ति हि ।
दृश्यन्ते[8] तत्र कायानिवेह नाना पृथग्विधाः ॥ ८ ॥
अधोऽधस्ते स्थूलरूपाः सूक्ष्माश्चैवोत्तरोत्तरम् ।
नानावर्णाकृतिभिदा नानाजातिसमाश्रयाः ।
[9]प्रतिष्ठितार्थाः सर्वेषां लीयन्ते तत्र सर्वशः ॥ ९ ॥

[ पूर्वप्रतिज्ञातमुद्रास्वरूपम् ]

अथ मुद्राशरीरञ्च वक्ष्यामि परमाद्भुतम् ॥ १० ॥
योनिरूपा[10] महामुद्रा[11] शरीरमिति कीर्त्त्यते ।
संक्षोभण्या[12]स्त्रिखण्डान्ता नवाङ्गानि[13] प्रकीर्त्तिताः ॥११ ॥

---

राहित्यार्थावगमसम्भवेऽपि अविनाशीति पुनरुपादानादत्र नित्यपदेनोत्पत्तिरहितत्व-मात्रं विवक्षितमिति बोध्यम् । फलितमाह—निरन्तरमिति । कालत्रयावच्छेदेन वर्त्त-मानमित्यर्थः ।

५ । क्रमेणैतेषां स्वरूपं निर्वक्ति—मुद्रेत्यादिना । तथाच मुद्रा भौतिकं शरीरम्, यन्त्रो मनोमयशरीरम्, मन्त्रं ज्ञानमयशरीरमिति त्रिविधं शरीरमित्यर्थः ।

१० । पूर्वोद्दिष्टेषु मुद्राशरीरं वक्तुं प्रतिजानीते—अथेत्यादिना ।

११ । मुद्राशरीरं निरूपयन् मुद्राणामङ्गाङ्गिभावं दर्शयति—योनिरूपेत्यादिना ।

---

1. 'मुद्रां' C. 2. 'यन्त्रं' B. 3. 'ऐता द्विधानित्यं' B. 4. '-त्वान्न नश्यति' C. 5. 'नो तत्' C. 6. 'दृष्टो' A-B. 7. 'श्रुतः' A-B 8. '-ते त एवेह नानारूपाः' C. 9. 'प्रतिष्ठा तद्धि' C. 10. '-रूपां' C. 11. '-मुद्रां' C. 12. '-ण्यादिखण्डान्ता ?' B. 13. 'वराङ्गाणि ?' A-B.

[ मुद्रापदव्युत्पत्तिः ]

आत्मानं [1]मोदयत्येषा [2]शान्तानन्दमयं [3]द्रवम् ।
जनयत्येव सा यस्मान्मुद्रा भूतमयं वपुः ॥ १२ ॥

[ यन्त्रनिर्माणाधारोपकरणादिनिर्णयः ]

गोमयेन च [4]संलिप्ते भूप्रदेशे मनोरमे ।
सिन्दूररजसा वाऽपि रजोभिः [5]कुङ्कुमस्य वा ॥ १३ ॥

---

तत्र योनिमुद्रायास्त्रैलोक्योत्पत्तिमातृकारूपतया प्राधान्यादङ्गित्वम् अत एव महामुद्रेत्युक्तम् । शरीरमिति अङ्गीत्यर्थः । अथाङ्गभूता मुद्रा उद्दिशति—संक्षोभण्या इत्यादिना । ताश्च सर्वसंक्षोभणी-सर्वविद्राविणी-सर्वाकर्षिणी-सर्ववश्यकरी-सर्वोन्मादिनी-महाङ्कुशा-खेचरी-बीज-त्रिखण्डाख्या नव । एवञ्चाङ्गाङ्गिभावेनावस्थितं मुद्रादशकमेव मुद्राशरीरमिति वक्तुराशयः । मुद्राणामेतासां स्वरूपाणि तु अष्टादशपटले वक्ष्यन्ते ।

१२ । आत्मानमिति । यस्मात् आत्मानं मोदयति शान्तानन्दमयं तमात्मानं द्रवं जनयति तस्माद् भूतमयं वपुर्मुद्रेत्युच्यत इति सम्बन्धः । तन्त्रसारे तु—

मोदनात् सर्वदेवानां द्रावणात् पापसन्ततेः ।
तस्मान्मुद्रेति विख्याता मुनिभिस्तन्त्रवेदिभिः ॥

इत्यन्यथा व्युत्पत्तिक्रम उक्तः ।

१३ । अथ श्रीचक्रनिर्माणाधारोपकरणादिकमभिधत्ते—गोमयेनेत्यादिना 'यन्त्रराजं समुद्धरेदि'त्यन्तेन । अन्यच्चाह गन्धर्वतन्त्रे चतुर्थपटले—

ततः प्राङ्मुख आसीनश्चक्रोद्धारं समारभेत् ।
हेमरूपादिताम्राणां पट्टे वाऽतिमनोहरे ॥
चतुरस्रे समे शुद्धे मध्योच्छूनविभूषिते ।
युग्माङ्गमिलितं देवि पट्टस्येह समीरितम् ॥
अथवा परमेशानि भूमौ चक्रं समालिखेत् ।
हस्तमात्रमिते शुद्धे गोमयेनोपलेपिते ॥

---

1. 'शोध-' A-B. 2. 'सेन्द्रा-' C. 3. 'ध्रुवम्' A-B. 4. 'संलिप्त-' B.
5. 'कुसुमस्य' B.

यन्त्रराजं लिखेन्मन्त्री स्वर्णरत्नशलाकया ।
पुष्पेण [1]विलिखेद् वाऽपि विल्वस्य कण्टकेन वा ॥ १४ ॥

[ तत्र कल्पान्तरम् ]

अथवा हेमरजतताम्रदर्पण[2]भूर्जके ।
श्रीखण्ड[3]सम्भवे पीठे रक्तचन्दनसम्भवे ॥ १५ ॥
गण्डकीभवपाषाणे पटे वा रुचिपीठके ।
रोचनाकुङ्कुमाभ्यान्तु चन्दनेन कुलोद्भवैः ॥ १६ ॥
इन्दुकस्तूरिकामिश्र[3] यन्त्रराजं समुद्धरेत् ।
चतुरस्रं समारभ्य नवचक्राण्यनुक्रमात् ॥ १७ ॥

---

सिन्दूररजसा तत्र कुङ्कुमेनाथवा प्रिये ।
आलिखेच्चक्रराजश्च लेखन्या हैमया तथा ॥
अथवा कुशमूलेन दर्भपाणिः समाहितः ।
नेत्ररम्यं यथा चक्रं तथा कुर्याद् विचक्षणः ॥

इति । ज्ञानार्णवे दशमपटलेऽपि—

श्रीचक्रन्तु वरारोहे श्रीविद्यावर्णसम्भवम् ।
तत्र प्राङ्मुख आसीनश्चक्रराजं समालिखेत् ।
भूप्रदेशे समे वर्ये सिन्दूररजसाऽथवा ।
कुङ्कुमस्य रजोभिस्तु भूमौ चक्रं समालिखेत् ।
ऋजुरेखं नेत्ररम्यं सन्धिभेदसमम् ऋजु ।
अथवा हेमरौप्याभ्यां ताम्रेण बहुधातुभिः ।
पट्टं विरच्य श्रीखण्डरक्तचन्दनसम्भवे ।
पट्टे संस्थाप्य विलिखेल्लेखन्या हैमया प्रिये ।
रोचनाकुङ्कुमाभ्यान्तु कस्तूरीचन्दनेन्दुभिः ।

इति । एवमन्यानि च प्रमाणानि कौलावलीनिर्णयतृतीयपटलादावनुसन्धेयानि । नवचक्राण्यनुक्रमादिति । नवचक्राणि त्रैलोक्यमोहनादीनि सर्वानन्दमयान्तानि । तानि चाग्रे विशिष्य वक्ष्यन्ते ।

---

1. 'वा लि-' B. 2. '-दर्शने' B. 3. '-गह्वरे' A-B.

[ चक्रस्य क्रमेणोन्नतमध्यत्वे फलभेदाः ]

उन्नतादुन्नतं मध्यं चक्रं स्यान्निर्धनो [1]धनी ।
[2]त्रित्रिक्रमादुन्नतं तत् पूजयित्वा श्रियं लभेत् ॥ १८ ॥
एकद्वित्रिक्रमाच्चैव[3] श्रियै कीर्त्यै च [4]कल्पते ।
नवानि समरूपाणि सर्वतोऽभीष्टसिद्धये ॥ १९ ॥

[ श्रीचक्रनिर्माणस्थापनपूजनप्रशस्तिः ]

कृत्वा श्रीचक्रनिर्माणं स्थापयेत् पूजयेदपि ।
लक्ष्मीकान्तियशःपुत्रधनारोग्यादिसिद्धये ॥ २० ॥
सीसकांस्यादि[5]षु कृतं पूर्वोक्त[6]विपरीतकृत् ॥ २१ ॥

[ यन्त्रमन्त्रदेवतानामभेदः ]

यन्त्रं मन्त्रमयं प्रोक्तं मन्त्रात्मा देवतेति च ।
पुरा भगवता [7]प्रोक्तं तन्त्रे सम्मोहनाख्यके ।
देहात्मनोर्यथाऽभेदोऽयन्त्रदेवतयोस्तथा ॥ २२ ॥

---

१८-१९ । उन्नतादुन्नतमिति । त्रैलोक्यमोहनचक्रतः सर्वानन्दमयचक्रं यावत् क्रमेण यथोन्नतिः स्यात्तथा चक्रं रचयेदिति फलितार्थः । तत्फलमाह—निर्धन इति । एवं कृते निर्धनोऽपि साधको धनवान् भवेदित्यर्थः । त्रित्रीति । प्रथमात् त्रैलोक्यमोहनचक्राद् द्वितीयं सर्वाशापरिपूरकं चक्रं त्रिगुणोन्नतम्, सर्वसंक्षोभणाख्यं तृतीयं ततस्त्रिगुणोन्नतम्, सर्वसौभाग्यदायकाख्यं चतुर्थं ततस्त्रिगुणोन्नतमित्येवंक्रमेण यदि औन्नत्यं विदधीत तर्हि तच्चक्रं पूजयित्वा श्रियं लभेदित्यर्थः । एकद्वित्रीति । प्रागुक्तक्रमोन्नतिपरिपाट्यां प्रथमस्यैकगुणत्वं द्वितीयस्य पूर्वतो द्विगुणत्वं ततस्तृतीयस्य पूर्वतस्त्रिगुणत्वं एवं क्रमेण चतुर्थादिचक्राणां क्रमेणौन्नत्ये श्रीकीर्त्तिसाधकत्वं यन्त्रस्येत्यर्थः । नवानीति । नवानां तुल्यौन्नत्येऽभीष्टसम्पादकत्वं चक्रस्येत्यर्थः ।

२१ । पूर्वेति । पूर्वोक्तविपरीतकृत् लक्ष्मीकान्त्यादिविनाशकृदित्यर्थः ।

---

1. 'धनि' ? B. 'धनीः' ? C. 2. 'त्रिक्रि-' ? B. 3. '-त्तच' C. 4. 'कल्प्यते' B. 5. '-सुकृतं' B. 6. '-विपनीकृतम्' A-B. 7. 'प्रोक्तः' C.

[ यन्त्रं विना पूजने दोषः ]

अथ पीठे महायन्त्रं लिखित्वा पूजयेद् बुधः ।
विना यन्त्रेण चेत् पूजा [1]देवता न प्रसीदति ॥ २३ ॥

[ रात्रौ यन्त्रनिर्माणनिषेधः ]

न रात्रावङ्कयेद् यन्त्रं साधकस्तु कदाचन ।
प्रमाददङ्किते यन्त्रे शापो भवति तत्क्षणात् ॥ २४ ॥

[ तत्र यन्त्रपुष्पे पूजनोपदेशः ]

भावचूडामणिमते तत्र पुष्पे प्रपूजयेत् ।

[ यन्त्रपुष्पाणि ]

यत्रापराजितापुष्पं जवापुष्पञ्च भैरव ॥ २५ ॥

---

२३। विना यन्त्रेणेति । स्पष्टम् । अत्रैतदवधेयम्—प्रशस्तमपीदं यन्त्रनिर्माणं देवतायाः पुरतो न कर्त्तव्यम्, 'देहात्मनोर्यथाऽभेदो यन्त्रदेवतयोस्तथे'ति पूर्ववचनेन यन्त्रदेवतयोरभेदोक्तेरुभयोरेव तुल्यतया पूज्यत्वेन देवतापूजया यन्त्रपूजायाः सिद्धेरसम्भवात् । एतदभिप्रायेणैव मातृकाभेदतन्त्रे द्वादशपटले—

शालग्रामे च पूजायां न लिखेद् यन्त्रमुत्तमम् ।
प्रतिमायाञ्च पूजायां न लिखेद् यन्त्रमुत्तमम् ॥

इत्युक्तम् । प्रमादतः कृते तु पूजनादिकं द्विगुणमनुष्ठेयम्, तदुक्तं तत्रैव—

महायन्त्रन्तु देवेशि यदि कुर्याच्च साधकः ।
तत्र मूर्त्तिं न कुर्याच्च कदाचिदपि मोहतः ॥
यदि मूर्त्तिं प्रकुर्यात्तु तत्र यन्त्रं न कारयेत् ।
यदि कुर्यात्तु मोहेन यजेद् वारद्वयं प्रिये ॥
द्विगुणं पूजनं तत्र द्विगुणं बलिदानकम् ।
द्विगुणं प्रजपेन्मन्त्रं द्विगुणं होमयेत् सुधीः ॥
अन्यथा विफला पूजा विफलं बलिदानकम् ।
सर्वं हि विफलं यस्मात्तस्माद् यन्त्रं न कारयेत् ॥ इति ।

---

1. 'पूजने च' B.

करवीरे [1]रक्तशुक्ले द्रोणं वा यत्र तिष्ठति ।
तत्र देवी वसेन्नित्यं तद्यन्त्रे पूजनं मम ॥ २६ ॥

[ श्रीचक्रनिर्माणपरिपाटी तत्र त्रिकोणमष्टकोणञ्च ]

त्रिकोणं विलिखेदादौ तन्मध्याच्च त्रिकोणकम् ॥ २७ ॥
पूर्वशक्त्यग्रभागे तु [2]मानयष्टिवदालिखेत् ॥ २८ ॥
[3]सन्धिभेदक्रमेणैव तयोः शक्त्योस्ततः परम् ।
[4]रेखे आकृष्य कोणाभ्यां [5]तदग्रे पूर्वगे गुरुः ॥ २९ ॥
[6]एतत्त्रयात्मकेनैव नवकोणं प्रजायते ।

२७—३० । अथ श्रीचक्रनिर्माणक्रममुपदिशति—त्रिकोणमित्यादिना चतुर्द्वारं तथैव चेत्यन्तेन । तत्र त्रिकोणान्तर्वर्त्तिनो बिन्दुचक्रस्य सर्वानन्दमयाख्यस्य निर्माणे विशेषाभावात् तदुपेक्ष्य त्रिकोणादिभूपुरान्तानामष्टानां निर्माणपरिपाटीमभिदधानः प्रथमं त्रिकोणस्य सर्वसिद्धिप्रदचक्रस्य तद्बहिरष्टकोणस्य सर्वरोगहरचक्रस्य च निर्माणं युगपदाह—त्रिकोणमित्यादिना नवकोणं प्रजायते इत्यन्तेन । आदौ प्रतीच्यग्रमेकं त्रिकोणं लिखेत् । तन्मध्यात् निरुक्तत्रिकोणमध्यप्रदेशात् त्रिकोणकं प्रतीच्यग्रमन्यत्त्रिकोणमालिखेत् । एतत्त्रिकोणस्याग्रं पूर्वत्रिकोणस्य मध्यदेशे मूलन्तु तद्बहिरिति ज्ञेयम् । अनन्तरकरणीयमाह—पूर्वशक्त्यग्रभाग इति । शक्तिशब्देन त्रिकोणमुच्यते । ततश्च पूर्वशक्त्यग्रभागे मध्यत्रिकोणाग्रे मानयष्टिवत् दक्षिणोत्तरायतमानदण्डवत् दक्षिणोत्तरायतामेकां सरलरेखामालिखेत् । सन्धीति । ततः परं निरुक्तत्रिकोणद्वयमध्यत्रिकोणाग्रसरलरेखानिर्माणानन्तरं गुरुः तयोः शक्त्योः कोणाभ्यां रेखे रेखाद्वयमाकृष्य तदग्रे तयो रेखयोरग्रे अग्रद्वयं पूर्वगे पूर्वदिग्गामिनी कुर्यादिति शेषः । प्रागुक्तसरलरेखाया दक्षोत्तराभ्याम् अग्राभ्यां तत्सम्बद्धं पूर्वत्रिकोणद्वयसन्धिभेदि पूर्वाग्रं रेखाद्वयं विदधीतेत्यर्थः । एतेन प्रागग्रं त्रिकोणान्तरं प्राप्तम् । एवञ्च पश्चिमाग्रं त्रिकोणद्वयं पूर्वाग्रञ्चैकं त्रिकोणमेतेषाञ्च प्रागुक्तरीत्या विन्यासे मध्ये त्रिकोणमेकं सर्वसिद्धि-

1. 'शुक्लरक्ते' C. 2. 'मालयाम्भवमालिखेत् ?' B. 3. 'सिद्धि-' A-B. 4. 'रेखयाकृष्य' B. 5. 'तदग्रात्' C. 6. 'एकत्र-' B.

[ अन्तर्दशारम् ]

पूर्वशक्तीशवह्निभ्यां योनि[1]रूपां लिखेत्ततः ॥ ३० ॥
दक्षिणोत्तरकोणात्तु[2] श्रीकण्ठस्य लिखेद् बुधः ।
रेखां षट्कोणरूपान्तु पूर्वशक्तीशवह्नितः ॥ ३१ ॥
ऊर्द्ध्व रेखे[3] समाकृष्य श्रीकण्ठाग्र[4]विचुम्बिनी ।
श्रीकण्ठस्य दक्षवाम[5]कोणात् पूर्ववदुद्धरेत् ॥ ३२ ॥
दशकोणं भवेत्तत्र

[ बहिर्दशारम् ]

तथाऽन्य[6]द्दशकं लिखेत् ।

प्रदाख्यं तद्‌बहिरष्टकोणञ्च सर्वरोगहराख्यं भवतः । इत्यभिप्रायेणैव मूले नवकोणं प्रजायत इत्युक्तम् । गन्धर्वतन्त्रे पञ्चमपटलेऽपि—

प्रतीच्यग्रं लिखेदेकं त्रिकोणं तदुपर्यथ ।
पूर्वत्रिकोणमध्याग्रं त्रिकोणान्तरमालिखेत् ॥
अथ सन्धिद्वयं भित्त्वा प्रागग्रं विलिखेत् परम् ।
त्रिकोणमध्यगं चक्रमष्टकोणं तथा भवेत् ॥

इति वचने अष्टकोणपदस्य त्रिकोणमध्यगमिति विशेषणेन मध्ये त्रिकोणं तद्‌बहिरष्टकोणमिति स्फुटमवगम्यते ।

३०—३३ । अथाष्टकोणाद् बहिर्लेखनीयमन्तर्दशारं सर्वरक्षाकराख्यं चक्रमाह—पूर्वशक्तीत्यादिना दशकोणं भवेत्तत्रेत्यन्तेन । पूर्वशक्त्या मध्यत्रिकोणस्य ईशवह्निभ्यां ईशानाग्निकोणाभ्यां योनिरूपां योन्याकारां पश्चिमाभिमुखीं त्रिकोणरेखां लिखेत् । त्रिकोणान्तरमाह—दक्षिणेति । श्रीकण्ठस्य दक्षिणोत्तरकोणाभ्यामपि पूर्वाग्रां तथैव योन्याकारां त्रिकोणरेखां लिखेत् । इमे च रेखे प्रागुक्तासु तिसृषु दक्षिणोत्तरायतासु सरलरेखासु पूर्वपश्चिमरेखे वर्द्धयित्वा ततः कर्त्तव्ये इति व्यक्तीकरिष्यामः । एवं कृते षट्कोणरूपा रेखा भवति । ततः करणीयमाह —पूर्वेति । पूर्वशक्तीशवह्नितः पूर्वशक्तेः पूर्वत्रिकोणस्य ईशानाग्निकोणाभ्याम् ऊर्द्ध्व रेखे सन्धिभेदपूर्वकमूर्द्ध्व रेखाद्वय-

1. '-रूपं' B. 2. 'श्रीखण्डस्य' A-B. 3. '-रेखां' B. 4. '-विवृद्धिनी' B. 5. '-कोणे तु' C. 6. '-कुशलं' ? B.

[ चतुर्दशारम् ]

दशारवामदक्षे तु मध्य[1]कोणचतुष्टयम् ॥ ३३ ॥
वर्धयित्वा च षट्[2]कोणं सन्धिभेदेन संलिखेत् ।
कक्षमध्यगता रेखा वर्धयेत् कोणरूपतः ॥ ३४ ॥
शेषं प्रवर्धयेन्मन्त्री दश[3]कोणविधानतः ।
यथा चतुर्दशारन्तु जायते चक्रमुत्तमम् ॥ ३५ ॥

---

माकर्षेत् । श्रीकण्ठाग्रविचुम्बिनीति रेखाविशेषणेन सन्धिभेदपूर्वकं रेखाकर्षणमुक्तम् । विचुम्बिन्याविति वक्तव्ये विचुम्बिनीत्यार्षः प्रयोगः । श्रीकण्ठस्येति पूर्ववत् कोणरेखाकर्षणक्रमेण श्रीकण्ठस्य दक्षवामकोणात् पूर्वोपदर्शितदक्षोत्तरायतपश्चिमसरलरेखां यावत् प्रागुक्तक्रमेण कोणरेखाद्वयं सन्धिभेदपूर्वकमुद्धरेदित्यर्थः । एवं कृते दशकोणं सर्वरक्षाकरचक्रं निष्पद्यते । व्यक्तमाह गन्धर्वतन्त्रे पञ्चमपटले—

ततो दशारचक्रस्य निर्माणं शृणु पार्वति ।
दक्षिणोत्तरगा रेखास्तिस्रो यास्तत्र तास्वपि ;
मध्यरेखां परित्यज्य रेखे द्वे परिवर्धयेत् ।
तेन षट्कोणकं कृत्वा सन्धिभेदे चतुष्टयम् ।
कृत्वा रेखाद्वयं कुर्याद्दशकोणं यथा भवेत् ॥ इति ।

अथ बहिर्दशारं सर्वार्थसाधकं चक्रमाह—तथेति । तथा निरुक्तदशारक्रमेणैवेदं बहिर्दशारं कुर्यात् नात्र कश्चिदपि विशेषोऽस्ति । व्यक्तमाह गन्धर्वतन्त्रे पञ्चमपटले—

तथान्यदशकोणस्य निर्माणं परिकीर्त्यते ।
दक्षिणोत्तरगास्त्वेवं रेखाः पञ्च भवन्ति याः ॥
तासां रेखाद्वयं ( त्रयं ) मध्ये हित्वा पूर्वापरन्ततः ।
बाह्यरेखाद्वयं देवि पूर्ववत् परिवर्धयेत् ॥
तेन षट्कोणकं कृत्वा सन्धिभेदचतुष्टयम् ।
कृत्वा रेखाद्वयं कुर्याद्दशकोणं यथा भवेत् ॥ इति

३३-३५ । अथ चतुर्दशारं सर्वसौभाग्यदायकचक्रमाह—दशारेत्यादिना चक्रमुत्तममित्यन्तेन । प्रागुक्तदशारचक्रस्य वामतो दक्षतश्च मध्यकोणचतुष्टयं वर्धयित्वा,

---

1. '-कोणे' A-B. 2. '-कोणे' C. 3. '-कोणे' A-B.

[ अष्टारादिचक्रत्रयम् ]

वृत्तमष्टदलं वृत्तं षोडशारं त्रिवृत्तकम् ।
भूबिम्बत्रितयं कार्यं चतुर्द्वारं तथैव च ॥ ३६ ॥
तन्त्रचूडामणौ देव्या मतमीदृशमीरितम् ॥ ३७ ॥

---

प्रागुक्तसन्धिभेदक्रमेण षट्कोणं संलिखेत् । एतदुक्तं भवति—दशारचक्रस्य पश्चिमतस्त्रिकोणत्रयस्य पूर्वतश्च त्रिकोणत्रयस्य त्यागे दशारस्य दक्षतः कोणद्वयं वामतश्च कोणद्वयमिति कोणचतुष्टयमवशिष्यते । तत् कोणचतुष्टयं कोणघटकसरलरेखा इत्यर्थः, प्रागुक्तक्रमेण वर्धयित्वा ततः प्रागुक्तसन्धिभेदक्रमेण षट्कोणं संलिखेत् । कक्षमध्यगता रेखाः प्रागुक्तषट्कोणवामदक्षकोणघटकरेखाचतुष्टयमित्यर्थः, कोणरूपेण वर्धयेत् । एवं कृते कोणाष्टकं जायते । शेषमिति । अवशिष्टं कोणषट्कं प्रागुक्तदशकोणरीत्या वर्धयेत् । पूर्वपश्चिमान्त-सरलरेखाद्वयं पूर्ववद् वर्द्धयित्वा दशारस्य पश्चिमतः पूर्वतश्चैकैकां दक्षिणोत्तरायतां सरलरेखामाकृष्य दशारक्रमेण षट् कोणान् वर्धयेदित्येवाऽऽह दशकोणविधानत इत्यनेन । यथेति, तथा प्रवर्धयेद् यथा उत्तमं चतुर्दशारं चक्रं जायत इति सम्बन्धः । व्यक्तमाह गन्धर्वतन्त्रे पञ्चमपटले—

चतुर्दशारचक्रस्य निर्माणं कथ्यतेऽधुना ।
दक्षिणोत्तरगास्त्वेवं रेखाः सप्त भवन्ति याः ॥
तासां रेखाद्वयं हित्वा बाह्ये पूर्वापरन्ततः ।
दीर्घं रेखाद्वयं मन्त्री पूर्ववत् परिवर्धयेत् ॥
तेन षट्कोणकं कृत्वा सन्धिभेदचतुष्टयम् ।
दशारीकृत्य तेनैव सन्धिभेदचतुष्टयात् ॥
रेखाद्वयं बहिः कुर्याद्रेखाः स्युर्नव पञ्च च ॥
कल्पयेदथ तस्याग्रैरन्यकोणचतुष्टयम् ॥
एवं चतुर्दशारं स्याद् विलोचनमनोहरम् ॥ इति

३६-३७ । अथाष्टदलं सर्वसंक्षोभणाख्यं षोडशदलं सर्वाशापरिपूरकाख्यं चतुरस्रं त्रैलोक्यमोहनाख्यं चक्रञ्चाऽऽह—वृत्तमित्यादिना । स्पष्टम् । अत्राष्टदलषोडशदलयोर्मूले वृत्तं सीमार्थमेव । षोडशदलाद् बहिर्वृत्तत्रयमपि न पूजार्थम्—

वृत्तत्रयं महेशानि न पजायां निगद्यते ।

[ अत्र विशेषः ]

कुलोड्डीशमते दिक्षु [1]मूलं पूर्वादितो भवेत् ।

[ बिन्दुचक्रस्य सर्वचक्रमध्यवर्त्तित्वम् ]

सर्वमध्यत्रिकोणे तु बिन्दुचक्रं लिखेद् बुधः ॥ ३८ ॥

इति गन्धर्वतन्त्रपञ्चमपटलवचनात् । चक्रमिदं संक्षिप्याऽऽह तन्त्रसारधृतयामले—

बिन्दुत्रिकोणवसुकोणदशारयुग्म-
मन्वस्रनागदलसङ्गतषोडशारम् ।
वृत्तत्रयञ्च धरणीसदनत्रयञ्च
श्रीचक्रराजमुदितं परदेवतायाः ॥

इति । एतद्यन्त्रघटकपद्मे केशरकल्पननिषेधमाह तन्त्रसारधृतभूतभैरवे—

योऽस्मिन् यन्त्रे महेशानि केशराणि प्रकल्पयेत् ॥
योगिनीसहितास्तस्य हिंसां कुर्वन्ति भैरवाः ॥ इति ।

३८ । एवं तन्त्रचूडामणिसंवादेन श्रीचक्रनिर्माणपरिपाटीमभिधाय कुलोड्डीश-संवादेन नव चक्राणि विभजते—कुलेत्यादिना । नव चक्राणि तेषां नामानि च योगिनी-हृदये प्रथमपटले क्रमेण प्रदर्शितानि यथा—

चक्रस्य नवधात्वञ्च कथयामि तव प्रिये ।
आदिमं भूत्रयेण स्याद् द्वितीयं षोडशारकम् ॥
अन्यदष्टदलं प्रोक्तं मनुकोणमनन्तरम् ।
पञ्चमं दशकोणं स्यात् षष्ठञ्चापि दशारकम् ॥
सप्तमं वसुकोणं स्यान्मध्यत्र्यस्रमथाष्टमम् ।
नवमं त्र्यस्रमध्यं स्यात् तेषां नामान्यतः शृणु ॥
त्रैलोक्यमोहनं चक्रं सर्वाशापरिपूरकम् ।
सर्वसंक्षोभणं देवि सर्वसौभाग्यदायकम् ।
सर्वार्थसाधकं चक्रं सर्वरक्षाकरं परम् ॥
सर्वरोगहरं देवि सर्वसिद्धिमयं तथा ।
सर्वानन्दमयञ्चापि नवमं शृणु सुन्दरि ॥

1. 'दिक्षु' A-B.

[ त्रैलोक्यमोहनचक्रम् ]

त्रैलोक्यमोहनं नाम चतुरस्रं सुखप्रदम् ।
मुक्ताभं चिन्तयेन्मन्त्री मातृकार्णैर्वि[1]मण्डितम् ॥ ३९ ॥

[ सर्वाशापरिपूरकचक्रम् ]

[2]शरदिन्दुप्रतीकाशं षोडशारं मनोरमम् ।
सर्वाशापूरकं नाम षोडशस्वर[3]संयुतम् ॥ ४० ॥

---

इति । एवञ्चात्र नवमं त्र्यस्रमध्यं स्यादित्यनेन यत् सर्वानन्दमयं चक्रमुक्तं तदेव सर्वमध्येत्यादिना मूले समुद्दिष्टम्—

अत्र पूज्या महादेवी महात्रिपुरसुन्दरी ।

इति योगिनीहृदयप्रथमपटलवचनेनास्य प्राधान्यात् प्रथममभिधानम्, विशेषस्त्वग्रे वक्ष्यते । बिन्दुचक्रं शिवात्मकमध्यबिन्दुमित्यर्थः ।

'सर्वानन्दमयं मध्यबिन्दुस्थानं शिवात्मकम् ।' इति तन्त्रराजपञ्चमपटलवचनात् ।

३९। अथ क्रमेण त्रैलोक्यमोहनादिनवचक्राणि विवृणोति—त्रैलोक्येत्यादिना । चतुरस्रं भूपुरम्, तच्च परितो रेखात्रयात्मकम् ; भूबिम्बत्रितयं कार्यमिति प्रागुक्तत्वात्,

भूबिम्बत्रयमेतत् पश्यन्त्यादित्रिमातृविश्रान्तिः ।

इति कामकलाविलासोक्तेश्च । मध्यत्रिकोणादाविर्भूता पश्यन्ती-मध्यमा-वैखरीशक्तयो निरुक्तभूपुरत्रयपर्यन्तं चकासतीत्यर्थः । मुक्ताभं श्वेतवर्णमित्यर्थः ।

त्रैलोक्यमोहने चक्रे बुद्ध्वा परिपूजयेत् ।
ब्रह्मविष्णुशिवाख्यास्तास्तिस्रो रेखाश्च तन्निभाः ॥

इति गन्धर्वतन्त्रचतुर्थपटलवचनेन तु रेखाणां क्रमेण तदधिष्ठातृब्रह्मविष्णुशिववर्णत्वमभिहितम् । तेन क्रमादेतासां रक्तकृष्णश्वेतवर्णत्वं निरुक्तगन्धर्ववचनादवगम्यते । मातृकार्णैरिति अकारादिक्षकारान्तमातृकावर्णैरित्यर्थः । तदुक्तं ज्ञानार्णवे दशमपटले—

चतुरस्रं मातृकार्णैर्मण्डितं सिद्धिहेतवे ।
मुक्तामाणिक्यघटितं समस्थलविराजितम् ॥
त्रैलोक्यमोहनं नाम कल्पद्रुमफलप्रदम् । इति ।

४०। अथ षोडशदलात्मकं सर्वाशापरिपूरकचक्रमाह—शरदिन्द्वित्यादिना । शरदिन्दुप्रतीकाशं शरत्कालीनचन्द्रसदृशवर्णविशिष्टम् । तदुक्तं ज्ञानार्णवे दशमपटले—

---

1. '-मण्डलम्' A-B, 2. 'शशिबिन्दु-' C. 3. '-मण्डितम्' C.

[ सर्वसंक्षोभणचक्रम् ]

जवाकुसुमसङ्काशमष्टपत्रं सुशोभनम् ।
सर्वसंक्षोभणं नाम कादि[1]वर्गाष्टकैर्युतम् ॥ ४१ ॥

[ निरुक्तत्रितयात्मकं सृष्टिचक्रम् ]

एतच्चक्रमयं रम्यं सृष्टिकारकमुत्तमम् ॥ ४२ ॥

[ सर्वसौभाग्यदायकचक्रम् ]

चतुर्दशारकोणन्तु नवीना[2]र्कसमप्रभम् ।
सर्वसौभाग्यदं नाम कादिढान्तैर्वि[3]भूषितम् ॥ ४३ ॥

---

षोडशारं चन्द्रबिम्बरूपन्तु सकलालयम् ।
सर्वाशापूरकं भद्रे स्रवत्पीयूषवर्षणम् ॥

इति । षोडशारं षोडशदलम् । मनोमयम् । अत्र मनःपदं भूतपञ्चकेन्द्रियदशकमनसां देव्याः षोडशविकाराणामुपलक्षकम् । निरुक्तषोडशविकाराः कामाकर्षिण्यादिषोडशशक्त्याकारेण षोडशदलान्यध्यासत इति तात्पर्यम् । व्यक्तमाह कामकलाविलासे—

भूतानीन्द्रियदशकं मनश्च देव्या विकारषोडशकम् ।
कामाकर्षिण्यादिस्वरूपतः षोडशारमध्यास्ते ॥

इति । षोडशस्वरसंयुतम् अकारादिषोडशस्वरविशिष्टम् । षोडशपत्रेषु क्रमेण षोडश स्वरा वर्त्तन्त इत्यर्थः ।

४१ । अथाष्टदलात्मकं सर्वसंक्षोभणचक्रमाह—जवेत्यादिना । जवाकुसुमसङ्काशं जवाकुसुमवद्रक्तवर्णम् । अष्टपत्रमष्टदलम् । कादिवर्गाष्टकैर्युतम्, पञ्चदलेषु कादिपञ्चवर्गाः । षष्ठदले यरलवाः । सप्तमदले शषसहाः । अष्टमदले लक्षाविति वर्गाष्टकावस्थितिक्रमः ।

४२ । एतत्त्रितयस्य सृष्टिचक्रत्वमाह—एतदित्यादिना । एतच्चक्रमयं निरुक्तत्रैलोक्यमोहन-सर्वाशापरिपूरक-सर्वसंक्षोभणाख्यचक्रत्रयमयमित्यर्थः । ज्ञानार्णवे दशमपटलेऽपि—

एतत्त्रयं महेशानि सृष्टिचक्रं सुखप्रदम् ।

इत्युक्तम् । विशेषस्तु कामकलाविलास-योगिनीहृदयादिषु द्रष्टव्यः ।

४३ । एवं सृष्ट्यात्मकचक्रत्रयमुक्त्वा स्थित्यात्मकचक्रत्रये वक्तव्ये क्रमप्राप्तं

---

1. '-वर्णा-' B. 2. '-कैः' A-B. 3. '-मण्डितम्' C.

[ सर्वार्थसाधकचक्रम् ]

[1]तप्तकाञ्चनसिन्दूरसदृशं दशकोणकम्।
सर्वार्थसाधकं नाम णादिभान्तैर्विभूषितम् ॥ ४४ ॥

[ सर्वरक्षाकरचक्रम् ]

[2]तरुणारुणसङ्काशं द्वितीयं दशकोणकम्।
सर्वर[3]क्षाकरं नाम मादिक्षान्ताक्षरैर्युतम् ॥ ४५ ॥

[ निरुक्तत्रितयात्मकं स्थितिचक्रम् ]

स्थितिचक्रं त्रयश्चैतन्महाज्ञानप्रदायकम् ॥ ४६ ॥

---

सर्वसौभाग्यदायकं चक्रमाह—चतुर्दशारेत्यादिना। चतुर्दशारकोणमिति स्पष्टम्। नवोनार्कसमप्रभं भास्वररक्तवर्णम्। तदुक्तं ज्ञानार्णवे दशमपटले—

चतुर्दशारं देवेशि दाडिमीकुसुमप्रभम्।
अनन्तफलदं भद्रे सर्वसौभाग्यसंप्रदम् ॥

इति। कादीति। चतुर्दशकोणेषु ककारादिढकारान्ताश्चतुर्दश वर्णा एकैकशो वर्त्तन्त इत्यर्थः।

४४। अथ सर्वार्थसाधकचक्रं विवृणोति—तप्तेत्यादिना। तप्तकाञ्चनसिन्दूरसदृशं रक्तवर्णम्। तदुक्तं ज्ञानार्णवे दशमपटले—

दशारं तप्तहेमाभं सिन्दूरसदृशं प्रिये।
सर्वार्थसाधकं चक्रं मनश्चिन्तितदं सदा ॥

इति। दशकोणकं दशकोणविशिष्टम्। णादीति। णकारादिभकारान्ता दश वर्णा दशारेष्वेकैकशो विराजन्त इत्यर्थः।

४५। द्वितीयदशकोणात्मकं सर्वरक्षाकरचक्रमाह—तरुणेत्यादिना। तरुणारुणसङ्काशं रक्तवर्णम्। मादीति। मकारादिक्षकारान्ता दश वर्णा एकैकशो दशारेषु वर्त्तन्त इत्यर्थः।

४६। एतत्त्रितयस्य स्थितिचक्रत्वमाह—स्थितीत्यादिना। एतत्त्रयं सर्वसौभाग्यदायक-सर्वार्थसाधक-सर्वरक्षाकराख्यं महाज्ञानप्रदायकं स्थितिचक्रमिति सम्बन्धः। ज्ञानार्णवे दशमपटलेऽपि निरुक्तचक्रत्रयमभिधाय—

---

1. तप्तेत्यादिपादचतुष्टयं A-B-पुस्तकयोर्नास्ति। 2. 'अरुणा-' A-B. 3. '-क्षारकं नाम वादिक्षान्ताक्षरैर्विभूषितम्?' A-B.

[ सर्वरोगहरचक्रम् ]

पद्मरागप्रतीकाश मष्टकोणञ्च सिद्धिदम् ।
सर्वरोगहरं नाम वर्गाष्टकैर्विमण्डितम् ॥ ४७ ॥

[ सर्वसिद्धिप्रदचक्रम् ]

दाडिमीपुष्पसङ्काशं त्रिकोणं सर्वभूतिदम् ।
सर्वसिद्धिप्रदं चक्रमकथादित्रिरेखगम् ॥ ४८ ॥

[ सर्वानन्दमयचक्रम् ]

ह-क्षवर्णमध्यगतं सर्वेषां सिद्धिकारकम् ।
सर्वानन्दमयं नाम [2]बिन्दुचक्रं परं पदम् ॥ ४९ ॥

---

एतत्त्रयं महेशानि स्थितिचक्रं सुखप्रदम् ।

इत्युक्तम् ।

४७। एवं स्थित्यात्मक-चक्रत्रयमभिधाय संहारात्मकचक्रत्रये वक्तव्ये क्रमप्राप्तं सर्वरोगहरचक्रमाह—पद्मरागेत्यादिना । पद्मरागमणिसवर्णं रक्तवर्णम् । वर्गाष्टकैर्विमण्डितम् । सर्वसंक्षोभणचक्रोक्तरीत्या कादिवर्गाष्टकमष्टारेषु वर्त्तन्त इत्यर्थः । तदुक्तं ज्ञानार्णवे दशमपटले—

अष्टकोणं वरारोहे बालार्ककिरणारुणम् ।
पद्मरागसमप्रख्यं सर्वरोगहरं सदा ॥ इति ।

४८। सर्वसिद्धिप्रदचक्रमाह—दाडिमीत्यादिना । दाडिमीपुष्पसङ्काशं दाडिमीकुसुमवद्रक्तवर्णम् । सर्वभूतिदम् अखिलविभूतिसम्पादकम् । अ-क-थादित्रिरेखगम् । अकारादयः षोडश स्वराः, कादि-तान्तानि थादि-सान्तानि व्यञ्जनानि च क्रमेणैकैकरेखारूपेण वर्त्तन्त इत्यर्थः । ज्ञानार्णवे दशमपटले—

उद्यत्सूर्यसहस्राभं बन्धूककुसुमप्रभम् ।
सर्वसिद्धिप्रदं चक्रं सकलालयमीश्वरि ।
त्रिकोणं सर्वसम्भूतिकारणं भूतिदं सदा ॥ इति ।

४९। अथेदानीं चरमं भगवत्या निवासस्थानं बिन्द्वाख्यं सर्वानन्दमयचक्रमाह—ह-क्षेति । परं पदं कामेश्वराङ्कनिलयाया देशकालाकारादिभिरनवच्छिन्नायाः

---

1. अष्टेत्यादिपादचतुष्टयं A-B. पुस्तकयोर्नास्ति । 2. 'तद् विष्णोः परमं' C.

[ निरुक्तत्रितयात्मकं संहारचक्रम् ]

सदाशिवमयश्चैतत्त्रयं संहारकारकम् ॥ ५० ॥

[ निरुक्तचक्रे पुष्पाञ्जलिदानोपदेशः ]

योगिनीमूलमन्त्रेण तत्र पुष्पाञ्जलिं क्षिपेत् ।

[ चक्रस्याशून्यतासम्पादनोपदेशः ]

मुक्ता-मणि-प्रवालैर्वा विलोममूल[1]विद्यया ॥ ५१ ॥

अशून्यं सर्वदा कार्यं शून्ये विघ्नं सदा भवेत् ।

[ नवचक्रोपसंहारः ]

नवचक्रमयं चक्रं [2]बालादेव्या विराजितम् ॥ ५२ ॥

[ चक्रेश्वरीणां नामानि ]

प्रथमा त्रिपुरा देवी द्वितीया त्रिपुरेश्वरी ।

तृतीया सुन्दरीनाम्नी तुर्या त्रिपुरवासिनी ॥ ५३ ॥

---

श्रीमत्त्रिपुरसुन्दर्याः परं पदं श्रेष्ठं निवासस्थानमित्यर्थः । अत एव योगिनीहृदये प्रथमपटले सर्वानन्दचक्रमभिधाय—

अत्र पूज्या महादेवी महात्रिपुरसुन्दरी ।

इत्युक्तम् । व्यक्तमाह कामकलाविलासे—

आसीना बिन्दुमये चक्रे सा त्रिपुरसुन्दरी देवी ।
कामेश्वराङ्कनिलया कलया चन्द्रस्य कल्पितोत्तंसा ॥
पाशाङ्कुशेक्षुचाप-प्रसूनशरपञ्चकाञ्चितस्वकरा ।
बालारुणारुणाङ्गी शशिभानुकृशानुलोचनत्रितया ॥

इति । अत्र बालारुणारुणाङ्गीत्यभिधानाद् बिन्दोरपि रक्तत्वमुक्तं भवति । हक्षवर्णमध्यगतमिति, ह-क्षौ वर्णौ मध्यगतौ यस्येति विग्रहः ।

५१—५२ । मुक्तेति । यन्त्रं पूजयित्वा तत्र विलोममूलमन्त्रेण मुक्ताद्यन्यतमं स्थापयेत् कदाऽपि शून्यं न विदधीतेत्यर्थः । उपसंहरति—नवेति । शिष्टं स्पष्टम् ।

५३—५४ । एवं त्रैलोक्यमोहनादीनि सर्वानन्दमयान्तानि नव चक्राण्युपदिश्य तेषु

---

1. '-मुद्रया' B. 2. 'नव' C.

[1]पञ्चमी त्रिपुराश्रीश्च षष्ठे त्रिपुरमालिनी ।
सप्तमे त्रिपुरा सिद्धा अष्टमे त्रिपुरा[2]म्बिका ॥ ५४ ॥
नवमे श्रीमहादेवी महात्रिपुरभैरवी ।

[ चक्रे स्वस्वस्थानेऽर्चनीया देवताः ]

समस्ताः प्रकटा [3]गुप्तास्तथा [4]गुप्ततरा[5]श्रयाः ॥ ५५ ॥
[6]सम्प्रदायाः कुलाः कौला [7]निगर्भाश्च रहस्यगाः ।
[8]परापररहस्याह परमातिरहस्यगाः ॥ ५६ ॥
राजराजेश्वरी पूर्णा महात्रिपुरसुन्दरी ।
एताश्चक्रस्थिताः सर्वाः स्थानं ज्ञात्वा समर्चयेत् ॥ ५७ ॥

[ निरुक्तचक्रसङ्केतज्ञानवैभवम् ]

नवधा चक्रसङ्केतं यो जानाति स साधकः ।
नवधा यो न जानाति कथं देवीं प्रपूजयेत् ॥ ५८ ॥

[ निरुक्तश्रीचक्रज्ञानप्रशस्तिः ]

एतच्छ्रीचक्रराजं सकललिपिमयं सर्व[9]देवस्य वन्द्यं
नित्यानन्दस्वरूपं भुवनवशकरं भोगमोक्षैकहेतुम् ।

---

क्रमेण पूजनीयानां नवचक्रेश्वरीणां नामानि निरूपयति—प्रथमेत्यादिना । योगिनीहृदये प्रथमपटलेऽपि निरुक्तक्रमेण नामान्यभिधाय—

पूजयेच्च क्रमादेता नवचक्रे पुरोदिते ।

इत्युक्तम् ।

५५—५७ । नवम इति । महात्रिपुरभैरवीत्यत्र महात्रिपुरसुन्दरीति योगिनीहृदये । समस्ता इति । आसामावरणशक्तीनां स्वस्वस्थाननामार्चाक्रमादीनि अष्टादशे वक्ष्यन्ते ।

---

1. 'पञ्चमे' B. 2. '-त्मिका' B. 3. 'सुप्ता-' ? B. 4. 'सुप्त' ? B. 5. '-श्च याः' C. 6. 'सम्प्रदायः' A-B. 7. 'कौलानिगर्भरहस्यगैः' ? B. निगर्षा C. 8. 'परेत्यादि पादद्वयं' A-B पुस्तकयोर्नास्ति । 9. '-देव्याति' A-B.

शुद्धो भूत्वा [1]लिखित्वा यदि पशुरहितो धारयेत् पूजयेद् वा
सर्वा सिद्धिः करस्था भवति सुकृतिनस्तस्य [2]सिद्धिः पराऽपि ॥५९॥
सर्वानन्दमयं समस्तजगतामेकाधिपं कामदं
सर्वव्याधिनिराकरञ्च शुभदं ज्ञानप्रदं [3]कीर्त्तिदम्।
साक्षात् कल्पतरुं सुरासुरगणैः संवेष्टितं दृश्यते
येनेदं स तु सर्वतीर्थगमनस्नानस्य पुण्यं लभेत् ॥ ६० ॥

[ श्रीचक्ररहस्यनिरूपणप्रतिज्ञा ]

रहस्यं चक्रराजस्य कथयामि यथाक्रमम्।

[ त्रिकोणान्तर्बिन्दुरहस्यम् ]

मध्ये बिन्दुः शिवो ज्ञेयः सृष्टिसंहारकारकः ॥ ६१ ॥
बिन्दुमध्ये वसेन्नित्यं श्रीमत्त्रिपुरसुन्दरी।
महाकामकला तत्र बिन्दुत्रितयरूपिणी ६२ ॥

[ त्रिकोणरहस्यम् ]

त्रिकोणं त्रिपुरा चैव बाला त्रिपुर[4]सुन्दरी।
त्रिकोणरूपी रुद्रः स्यात्त्रिकोणत्वात् परा शिवा ॥ ६३ ॥
त्रिषु पञ्चदशी नित्या समया च चतुर्दशी।
षडङ्गयुवती देवी तत्र [5]पूर्वादितः स्थिता ॥ ६४ ॥

---

६१-६२। अथ श्रीचक्ररहस्यं वक्तुमुपक्रमते—रहस्यमित्यादिना। मध्ये सर्वसिद्धिप्रदाख्य-त्रिकोणमध्ये। बिन्दुः शिवात्मकः श्वेतबिन्दुः। बिन्दुमध्ये शिवात्मकसितबिन्दुमध्ये शोणबिन्द्वात्मिका महाकामकला श्रीमत्त्रिपुरसुन्दरी विलसतीत्यर्थः। तां विशिनष्टि—बिन्द्वित्यादिना। बिन्दुत्रितयरूपिणी शिवशक्तिरूपं निरुक्तबिन्दुद्वयम्, तयोः समरसीभूतस्तृतीयो मिश्रबिन्दुः तत्त्रितयरूपिणीत्यर्थः। विशेषस्तु भूमिकायां द्रष्टव्यः।

---

1. 'लिखेद् वा' C. 2. 'मुक्तिः परेऽपि' C 3. 'कामदम्' B. 4. '-भैरवी' C. 5. 'स-' B.

[ अष्टाररहस्यम् ]

अष्टकोणेष्वष्टसिद्धिर्भूतयोऽष्टौ भवन्ति हि।
जृम्भमोहवशस्तम्भपाशाङ्कुशधनुःशराः ॥ ६५ ॥
निवसन्ति तत्र नित्यं वशिन्याद्यष्टदेवताः ॥ ६६ ॥

[ अन्तर्दशार-रहस्यम् ]

दशेन्द्रियाणि देहेषु संस्थितानि वसन्ति च।
सर्वज्ञादिमहादेवाः[1] संस्थिता दश देवताः ॥ ६७ ॥
एवं दिक्कोणसन्ध्यग्रप्राणा दश[2] कला दश ॥ ६८ ॥

[ बहिर्दशार-रहस्यम् ]

अपरं दशकोणन्तु दशदिक्[3]पालदैवतम्।
दिग्वातार्कप्रचेतोऽशिव-वह्नीन्द्रोपेन्द्रमित्र-काः॥ ६९ ॥
वैकारिकात्तु ते जाता दशसंख्याः प्रकीर्त्तिताः।
सर्वसिद्ध्यादयस्तत्र सदा तिष्ठन्ति पूजिताः ॥ ७० ॥

[ चतुर्दशाररहस्यम् ]

[4]अनन्तरूपचक्रस्य तथा [5]कोणचतुर्दश।
चतुर्द[6]शाङ्गशास्त्राणि भुवनानि चतुर्दश ॥ ७१ ॥
चतुर्दशारचक्रेषु संक्षोभण्यादिदेवताः।
एको धर्मो गुणान् सूते अधर्मस्तु तथा मतः ॥ ७२ ॥

[ अष्टदल-रहस्यम् ]

अष्टरूपाष्ट[7]पत्रेषु धर्मादीनि वसन्ति च।
अनङ्गकुसुमादीनि बोध्यानि सततं बुधैः ॥ ७३ ॥

६९। मित्रका इति। मित्रस्तृतीयः सूर्यः इति राघवभट्टः। कः प्रजापतिः। कः प्रजापतिरुद्दिष्ट इत्येकाक्षरकोषः।

1. '-देव्यः'? C. 2. '-करा' B. 3. '-काल-'? C. 4. 'अनन्य-' A-B. 5. 'कोणं' A-B. 6. '-शार्ध-' A-B. 7. '-पर्गेषु' A-B.

[ षोडशदल-रहस्यम् ]

षोडशच्छदचक्रेषु तिथयः षोडश स्मृताः ।
सर्वसौभाग्यदा नित्यं [1]कामाकर्षणपूर्विकाः ॥ ७४ ॥
त्रिवृत्ते चन्द्रसूर्याग्नित्रिरेखाकारवर्त्तिनः ॥ ७५ ॥
शिवरेखा पूर्वसन्ध्या [2]ब्रह्माणी ब्रह्मरेखगा ।
[3]अणिमाद्या ब्रह्मरेखाः क्रमेण परिकीर्त्तिताः ॥ ७६ ॥
चतुःषष्टिस्तथा कोटिः कोटिकोटिविभूतयः ।
योगिन्यो देवदेव्यश्च [4]चक्रमाश्रित्य संस्थिताः ॥ ७७ ॥
[5]अस्य प्रभेदाः[6] कोणानां दलानान्तु प्रकीर्त्तिताः ।

[ यन्त्रस्य परिमाणभेदाः ]

त्रिकोण(?)श्चैकतोलं वा चतुरङ्गुलिमानकम् ॥ ७८ ॥
तत्रैव [7]लेखयेच्चक्रं चतुरस्रं सुशोभनम् ।
नवहस्तं [8]द्विहस्तं वा [9]तथैकहस्तमेव वा ॥ ७९ ॥

---

७४—७७। त्रिवृत्त इत्यादिना चक्रमाश्रित्य संस्थिता इत्यन्तेनोक्ता आवरणशक्तयोऽष्टादशे पूजाक्रमे ग्रन्थकृद्भिर्विशिष्य वक्ष्यन्ते ।

७८—८०। अथ यन्त्रस्य मानभेदानाह—त्रिकोण(?)मित्यादिना यामलसम्मतमित्यन्तेन। अत्र 'त्रिकोणमि'ति पाठः प्रामादिक इति प्रतिभाति। चतुरस्रमिति वक्ष्यमाणेन विरोधादेकतोलं वेति वाशब्दवैयर्थ्यात् स्वच्छन्दभैरव-तन्त्रराजादिविरोधाच्च । तथाच तन्त्रसारधृत-स्वच्छन्दभैरवे—

कुर्याच्च स्थण्डिले यन्त्रं हस्तमात्रं सुसुन्दरम् ।
रत्नादिषु तु निर्माणे मानमिच्छावशाद् भवेत् ।

---

1. 'कामकर्षणरूपिणीम्' ? C. 2. 'ब्रह्माणं' C. 3. 'अणिमाद्यष्टरेखायाः' C. 4. 'क्रम-' A-B. 5. 'तस्य' C. 6. '-द-' ? C. 7. 'रेखये-' C. 8. 'त्रिहस्तं' C. 9. 'तत्रैक-' A-B.

लिखेद् यन्त्रं भूप्रदेशे रत्नादौ तु निजेच्छया ।
मूलमुच्चारयन् [1]स्वस्थ इति यामलसम्मतम् ॥ ८० ॥

[ बिन्दुचक्रे महाकामकलाया अवस्थितिः ]

त्रिकोणचक्रमध्ये तु महाकामकलां लिखेत् ।
कथितं [2]परमं चक्रं त्रिषु लोकेषु दुर्लभम् ॥ ८१ ॥
प्रार्थयेद् यदि मोक्षन्तु मोक्षद्वारमिदं महत् ।
श्रीक्रमे परमं वस्तु कीर्त्तितं परमात्मना ॥ ८२ ॥

[ श्रीचक्रोद्धारे दिङ्नियमः ]

उदङ्मुखो यदा मन्त्री चक्रराजं प्रपूजयेत् ।
उदीची दिक् [3]तदा चैव पूर्वाशैव निगद्यते ।
ईशान[4]न्तु तथाग्नेयं भवेदेवं न संशयः ॥ ८३ ॥

---

एकतोलं द्वितोलं वा त्रितोलं वेदतोलकम् ।
इतोऽधिकं नरः कृत्वा प्रायश्चित्ती भवेद् ध्रुवम् ।
रक्तेन रजसापूर्य श्रीचक्रं भुवि पूजयेत् ।
नश्यन्ति सर्वविघ्नानि प्राप्यते वाञ्छितं फलम् ।

इति । तन्त्रराजे त्रयस्त्रिंशपटलेऽपि—

नवहस्तं त्रिहस्तं वा श्रीचक्रमभिषेचने ।
कुर्यात् स्थण्डिलपूजायां हस्तमात्रेऽतिसुन्दरम् ।
रत्नादिषु तु निर्माणे मानमिच्छावशाद् भवेत् ।
सदा सुविहिते पूजा शुभान्यस्मिंस्तथाऽन्यथा ।

इति । एवञ्चैतेषु वचनेषु त्रितोलपरिमाणदर्शनादत्रापि त्रितोलमित्येव साधीयान् पाठ इति मन्तव्यम् । मूलमिति मूलमन्त्रमुच्चारयन् यन्त्रं लिखेदिति सम्बन्धः ।

८१ । त्रिकोणचक्रमध्य इति । मध्यत्रिकोणचक्रस्य मध्ये बिन्दावित्यर्थः ।

८३ । अथेदानीं श्रीचक्रोद्धारे दिङ्नियमः प्रतिपाद्यते । तत्र च—

तत्र प्राङ्मुख आसीनश्चक्रराजं समालिखेत् ।

इति ज्ञानार्णवदशमपटलवचनेन,

---

1. 'सुस्थ' B. 2. 'परमज्ञानं' A-B. 3 'तथा देव' B. 4. '-न्तत्तदा-' A-B.

ततः प्राङ्मुख आसीनश्चक्रोद्धारं समारभेत्।

इति गन्धर्वतन्त्र-चतुर्थपटलवचनेन च श्रीचक्रनिर्माणे साधकस्य पूर्वदिङ्मुखत्वमुपदिष्टम्। तदिदानीं पूर्वां दिशमेव नियमयति—उदङ्मुख इत्यादिना। साधक उदङ्मुखः सन् चक्रनिर्माणाय प्रवृत्तश्चेत्तर्हि उत्तरदिश एव पूर्वदिक्त्वम्, ईशानस्याग्निकोणत्वम्। अनया रीत्या सर्वत्र दिङ्नियम इत्युत्तरवचनेभ्योऽवगन्तव्यम्। एतानि दिङ्नियमप्रतिपादकवचनानि कचिच्छ्रीचक्रोद्धारविषये कचन वा श्रीमत्त्रिपुरापूजनविषयेऽभिहितानि दृश्यन्ते। यथा ज्ञानार्णवे दशमपटले—

उत्तराशामुखो मन्त्री यदा चक्रं समुद्धरेत्।
उत्तराशा तदा देवि पूर्वाशैव निगद्यते॥

इत्यादि। एवमेव कौलावलीनिर्णयेऽपि। वचनमिदं चक्रोद्धारे दिङ्नियमप्रतिपादकम्। तथा गन्धर्वतन्त्रे सप्तमपटले—

उत्तराभिमुखो भूत्वा यदा देवीं प्रपूजयेत्।
उत्तराशा तदा देवि पूर्वाशैव न संशयः।
ईशानमग्निकोणं स्याद्वायुकोणं तथेशकम्।
दक्षिणाशा तदा ज्ञेया पश्चिमाशा महेश्वरि।
राक्षसं वायुकोणं स्यादाग्नेयं राक्षसं भवेत्।

इत्यादिवचनैः पूजायां दिङ्नियमः प्रतिपादितः। एवञ्च निरुक्तज्ञानार्णव-गन्धर्वतन्त्रादिवचनपर्यालोचनया श्रीचक्रोद्धारपूजनयोरुभयोरपि निरुक्तक्रमेण दिङ्नियमः कर्त्तव्य इति पर्यवस्यति। परन्तु—

'तत्र प्राङ्मुख आसीनश्चक्रोद्धारं समारभेत्' इति प्रागुपदर्शित-गन्धर्ववचनेन चक्रोद्धारे प्राङ्मुखत्वनियमात्—

दिग्विभागेषु कौबेरी दिक् शिवाप्रीतिदायिनी।
तस्मात्तन्मुख आसीनः पूजयेत्त्रिपुरां सदा॥

इति गन्धर्वतन्त्रसप्तमपटलवचनेन पूजने उत्तरास्यत्वनियमाच्च चक्रोद्धारे पूर्वदिङ्मुखत्वस्य पूजने चोत्तरास्यत्वस्य प्रशस्ततरत्वमिति बोध्यम्। नच दिग्विभागेष्वित्यादिवचनेन पूजने पूर्वास्यत्वमात्रं कल्प्यतामिति वाच्यम्,

यदाशाभिमुखो मन्त्री त्रिपुरां परिपूजयेत्।
देवीपश्चात्तदा प्राची प्रतीची त्रिपुरापुरः।

इति गुप्तार्णवतन्त्रवचने यदाशाभिमुख इत्यनेन यत्किञ्चिद्दिङ्मात्राभिधानात्,

[1]पश्चिमाशा यदा मन्त्री चक्रराजं प्रपूजयेत् ।
प्रतीची दिक् तदा चैव पूर्वाशैव न संशयः ।
वायुकोणं तदाग्नेयमीशानं राक्षसं भवेत् ॥ ८४ ॥
दक्षिणाशामुखो मन्त्री यदा चक्रं प्रपूजयेत् ।
पूर्वाशैव तदा सा दिग् [2]रक्षःकोणन्तु वह्निवत् ॥ ८५ ॥
आग्नेयन्तु तदेशानं वायुस्तु निर्ऋतिर्भवेत् ।
बृहच्छ्रीक्रमतन्त्रस्य मतमेतत् प्रकीर्त्तितम् ॥ ८६ ॥
पुरन्दरमुखो मन्त्री पूजयेत्त्रिपुरां [3]यदा ।
देवीपश्चात्तदा प्राची प्रतीची त्रिपुरापुरः ।
गुप्तार्णवमतेनापि दिग्विभागः प्रकीर्त्तितः ॥ ८७ ॥

[ श्रीचक्रस्थापनाधारः ]

अथ सिंहासने मन्त्री श्रीचक्रं पुरतो न्यसेत् ॥ ८८ ॥

[ सीसकादिषु चक्रस्थापननिषेधः ]

सीसके कांस्यपात्रे वा रङ्गे वा साधकोत्तमः ।
फलकायां पटे भित्तौ स्थापयेन्न कदाचन ॥ ८९ ॥
स्थापितं यदि लोभेन मोहादज्ञानतोऽपि वा ।
कुलं [4]वित्तमपत्यञ्च निर्मू[5]लयति सर्वदा ॥ ९० ॥

---

उदङ्मुखो यदा मन्त्री चक्रराजं प्रपूजयेत् ।

इत्यादिमूलोक्तवचनेषु पूजने उत्तरास्यत्वादेर्व्यक्तमभिधानाच्च विरोधापत्तेः । तस्मात् चक्रोद्धारे प्राङ्मुखत्वस्य पूजने चोत्तरास्यत्वस्य प्रशस्ततरत्वं दिशामन्यासां प्रशस्तत्वमिति निष्कर्षः ।

---

1. 'पश्चिमे'त्यादिपादचतुष्टयं' A-B-पुस्तकयोर्नास्ति । 2. 'वायु-' A-B. 3. 'पराम्' A-B. 4. 'वृत्त-'? B. 5. '-लं याति' A-B.

[ पीठपूजा ]

पीठपूजां ततः कुर्यादुपर्युपरिभावतः ।
मण्डूकं पूजयेदादौ रुद्रं कालाग्निरूपकम् ॥ ६१ ॥
आधारशक्तिं कूर्मञ्च तथाऽ[1]नन्तं वराहकम् ।
पृथ्वीं सुधासमुद्रञ्च रत्नद्वीपमतः परम् ॥ ६२ ॥
स्वर्णशैलं [2]रत्नभूमिं नन्दनोद्यानमेव च ।
नानावृक्षमहोद्यानं तथैव कल्पवाटिकाम् ॥ ६३ ॥
सन्तानवाटिकाञ्चैव हरिचन्दनवाटिकाम् ।
मन्दारवाटिकां पारिजातवाटीं समर्चयेत् ॥ ६४ ॥
कदम्बवनवाटीञ्च रत्नप्राकारकान् यथा ।
पुष्परागं पद्मरागं गोमेदं [3]वज्रमप्यथ ॥ ६५ ॥
वैदूर्यमिन्द्रनीलञ्च [4]मुक्तां मरकतं तथा ।
[5]विद्रुमञ्चेति नवकान् रत्नप्राकारसंयुतान् ॥ ६६ ॥
माणिक्यमण्डपञ्चैव सहस्रस्तम्भमण्डपम् ।
अमृतवापिकामेवमानन्दवापिकां ततः ॥ ६७ ॥
विमर्षवापिकां बालातपोद्गारमतः परम् ।
चन्द्रिकोद्गारकं [6]महाशृङ्गारपरिखामपि ॥ ६८ ॥
महापद्माटवीं कल्पवृक्षं संपूजये[7]न्नरः ।
ततश्चिन्तामणिगृहं रत्ननिर्मितवेदिकाम् ॥ ६९ ॥

---

६१ । पीठपूजामाह—पीठपूजामित्यादिना समर्चयेदिति प्रकाशान्तेन ।

---

1. '-दन्तं' ? B. 2. 'रक्त-' B. 3. 'रत्न-' A-B. 4. 'मुक्ता' B. 5. 'विद्रुमश्चे-' B.
6. 'महच्छृ-' B. 7. '-द्बुधः' C.

पूर्वाम्नायमयं पूर्वं[1] द्वारं पूर्वं समर्चयेत् ।
दक्षिणे पश्चिमे सौम्ये तत्तदाम्नायमप्यथ ॥ १०० ॥
रत्नसिंहासनं श्वेतच्छत्रमूर्द्धं प्रपूजयेत् ।
धर्मं ज्ञानञ्च वैराग्यमैश्वर्यं चाग्नितो यजेत् ॥ १०१ ॥
अ-पूर्वान् पूजयेदेतान् दिक्षु पूर्वादितः क्रमात् ।
[2]आत्मान्तरात्मपरमज्ञानात्मानः क्रमेण तु ॥ १०२ ॥
चक्रमध्य[3]स्थपद्मञ्च कन्दं वसुदलं ततः ।
[4]नालमूर्द्धच्छदाधश्च तत्त्वरूपान्तु कर्णिकाम् ॥ १०३ ॥
मण्डलं वह्निसूर्येन्दो [5]रजः सत्त्वं तमोऽपि च ।
ज्ञानमायाकलाविद्यातत्त्वा[6]न्यत्र प्रपूजयेत् ॥ १०४ ॥
[7]गणेशं वटुकं मन्त्री सव्ये दक्षे प्रपूजयेत् ।
नामादिवर्णबीजानि चतुरस्रान्तरे पुनः ॥ १०५ ॥
ईशाग्न्यन्तश्च मित्रीशनाथमुड्डीशनाथकम् ।
जालन्धराह्वयं पीठं पीठं पूर्णगिरिं ततः ॥ १०६ ॥
त्र्यस्रे संपूजयेन्मन्त्री क्रमेणानेन तत्परम् ।
पूर्वादिक्रमयोगेण फलके आसनस्य तु ॥ १०७ ॥

१०० । पूर्वेति । पूर्वद्वारे पूर्वाम्नायम् , एवं दक्षिणपश्चिमोत्तरेषु दक्षिणपश्चिमोत्तराम्नायान् क्रमेण पूजयेदित्यर्थः । एतेन पूर्वाम्नायमयपूर्वद्वाराय नमः दक्षिणाम्नायमयदक्षिणद्वाराय नम इत्यादिरूपः प्रयोग इत्यापतति । तन्त्रसारे तु पूर्वाम्नायपूर्वद्वाराय नम इत्यादिरूपः प्रयोग उक्तः ।

१०२ । अपूर्वानिति । अधर्ममज्ञानमवैराग्यमनैश्वर्यञ्चेत्यर्थः ।

१०५ । चतुरस्रेति । श्रीचक्रचतुरस्रान्तरे ईशानाद्यग्निकोणान्तं क्रमेण जालन्धरादिपीठचतुष्टयं पूजयेदित्यर्थः ।

1. ‘पूर्वपूर्वं’ A-B. 2. C-पुस्तके ‘आत्मे’त्यादिपादद्वयं वक्ष्यमाणा‘न्मण्डलमि’त्यादि पादद्वयात् परं दृश्यते । 3. ‘-ञ्च प-’ B. 4. ‘नाद-’ A-B. 5. ‘सत्त्वं रजः’ C. 6. ‘-त्मानः’ C. 7. गणेशमित्यादि पादद्वयं C-पुस्तके नास्ति ।

पृथिव्याश्च पतिश्चैव ब्रह्माणममृतेश्वरम् ।
[1]विष्णुतेजोऽधिपं रुद्रं वार्यधीशं तथेश्वरम् ॥ १०८ ॥

मध्ये प्रासादमुच्चार्य वियत्पदमुदीरयेत् ।
ततोऽधिपतये प्रोच्य पञ्चवक्त्राय योजयेत् ॥ १०६ ॥

सदाशिवाय[2] च महाप्रेतपद्मासनाय [3]हृत् ।
यजेदासनमन्त्रेण [4]सर्वासनमथापि वा ॥ ११० ॥

प्रेतबीजं समुच्चार्य सदाशिवमहापदम् ।
प्रेतपद्मासनायेति हृन्मनुर्मनुरीरितः ॥ १११ ॥

पूर्वोक्तेनैव मन्त्रेण तस्योपरि [5]षडासनम् ॥ ११२ ॥

तस्योपरि यजेन्मन्त्री प्रसूनतूलिकामपि ।
कामेश्वरं तथा कामेश्वरीमूर्त्तिं समर्चयेत् ॥ ११३ ॥

इति श्रीपूर्णानन्दपरमहंसविरचिते श्रीतत्त्वचिन्तामणौ
सप्तदशः प्रकाशः ॥ १७ ॥

---

१०६-११०। प्रासादेति। हौं वियदधिपतये सदाशिवाय महाप्रेतपद्मासनाय नम इति प्रयोगः।

१११। प्रेतेति। प्रेतबीजं हसौरिति। तथाच हसौः सदाशिवमहाप्रेतपद्मासनाय नम इति प्रयोगः।

---

1. 'विष्णिव'त्यादि पादद्वयं C-पुस्तके नास्ति। 2. '-याथ' C. 3. 'च' B. 4. 'परमासन-' ? C. 5. 'शवा-' C.

## अष्टादशः प्रकाशः

[ सामान्यार्घ्यस्थापनादिविसर्जनान्तसपर्याक्रमः ]

[ सामान्यार्घ्यस्थापनम् ( तत्र मण्डलम् ) ]

विधाय वामभागे तु त्रिको[1]णवृत्तभूपुरम् ।
अथवा चतुरस्रन्तु जलेन[2] परिकल्पयेत् ॥ १ ॥
चतुरस्रन्तु तत् कुर्यात्त्रिकोणद्वयसं[3]युतम् ।

[ शङ्खाधारस्थापनम् ]

आधारं तत्र संस्थाप्य पूजयेद् वह्निमण्डलम् ॥ २ ॥
आधारेण विना पूजा निष्फला परिकीर्त्तिता ।

[ आधारभेदाः ]

आधारं [4]विविधश्चैव [5]षट्पदं वा चतुष्पदम् ॥ ३ ॥

---

१। एवं पूर्वप्रकाशे चक्रसङ्केतमभिधाय पूजासङ्केतमभिदधानः प्रथमं सामान्यार्घ्य-स्थापनपरिपाटीमाह—विधायेत्यादिना। त्रिकोणेति। आदौ त्रिकोणं तद्बहि-र्वृत्तं तद्बहिर्भूपुरं चतुरस्रमित्यर्थः। अत्र त्रिकोणमधोमुखं कार्यं शक्तिविषयत्वात्। तदुक्तं ताराहस्यधृतरुद्रयामले—

यत्र यत्र महाविद्या शक्तिविद्या उपासिता ।
तत्र तत्र त्रिकोणञ्च अधोमुखमुदीरितम् ।
देवत्रिकोणे कर्तव्ये ऊर्द्ध्वं तत् परिकीर्तितम् ।

इति। कल्पान्तरमाह—अथवेति। जलेन चतुरस्रं परिकल्प्य तदन्तस्त्रिकोणद्वयं कुर्यादित्यर्थः।

---

1. '-र्णं' C. 2. 'च' A-B. 3. '-पुटम्' C. 4. 'त्रिविध-' C. 5. 'षड्दलं' C.

अथवा वर्त्तुलाकारं त्रिकोणं वा समाचरेत् ।
सुवर्णरूप्यरचितं त्रिपदं वाऽपि पूजयेत् ॥ ४ ॥

[ मन्त्रोपदेशः ]

बीजोक्तौ तदनुक्तौ वा मायाश्रीपूर्वमर्चनम् ।
मन्त्रानुक्तौ नाममन्त्रं सर्वत्रैवोपयोजयेत् ॥ ५ ॥

[ पादुकामन्त्रप्रयोगः ]

श्रीपादुकाख्य[1]मन्त्रन्तु दद्यादन्ते यथाक्रमम्[2] ॥ ६ ॥

[ वह्नेर्दशकलाः ]

धूम्रा च नीलवर्णा च कपिला विस्फुलिङ्गिनी ।
ज्वाला हैमवती कव्यवाहिनी हव्यवाहिनी ।
रौद्री सङ्कर्षिणी[3] वह्नेरेताः कलाः परा यथा ॥ ७ ॥

---

५। त्रिपदं वाऽपि पूजयेदित्युक्तं तत्पूजामन्त्रं निर्दिशति—बीजोक्ताविति। मायाबीजं ह्रीं, श्रीबीजं श्रीं। तथा च ह्रीं श्रीं मं वह्निमण्डलाय दशकलात्मने अर्घ्यपात्राधाराय नम इति प्रयोगः। तन्त्रसारकारस्तु निरुक्तमायाबीजात् पूर्वं वाग्भवबीजस्यापि योजनया त्रितारीप्रयोगमुपदिदेश। त्रिपुरार्चनरहस्ये तु मूलमन्त्रानन्तरं श्रीमहात्रिपुरसुन्दरीसामान्यार्घ्याधारमण्डलाय नम इति मण्डलं संपूज्य ॐ दशकलात्मनेऽग्निमण्डलाय श्रीमहात्रिपुरसुन्दरीसामान्यार्घ्याधाराय नम इत्यर्घ्याधारपूजाक्रम उक्तः, तत्र माया-श्रीबीजयोरुल्लेखो न दृश्यते। मन्त्रानुक्ताविति। नाममन्त्रं तत्तद्देवतानामरूपं मन्त्रमित्यर्थः। अत्र विशिष्यानुक्तावपि नाम्नः प्रणवपूर्वकत्वमवगन्तव्यम्। व्यक्तमाह दुर्गापूजातत्त्वधृतयोगियाज्ञवल्क्य-ब्रह्मपुराणयोः—

ध्यात्वा प्रणवपूर्वन्तु दैवतन्तु समाहितः ।
नमस्कारेण पुष्पादि विन्यसेत्तु पृथक् पृथक् ॥

तथा— ॐकारादिसमायुक्तं नमस्कारान्तकीर्तितम् ।
स्वनाम सर्वदेवानां मन्त्र इत्यभिधीयते ॥ इति ।

६। श्रीपादुकेति। प्रथमं देवतानाम ततः श्रीपादुकां पूजयामि नम इति पादुकामन्त्रः।

७। एवमाधारं तत्रेत्यादिना वह्निमण्डलपूजामुपदिश्य तत्रैव वह्निकलार्चामुपदिशति—धूम्रा चेत्यादिना। योगिनीहृदयटीकाधृतस्वच्छन्दसंग्रहेऽपि—

---

1. '-मन्त्रेण' A. 2. '-क्रमात्' C. 3. -र्षणी' B.

[ तत्र कल्पान्तरम् ]

**धूम्रार्चिरुष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी।**
**सुश्रीः सुरूपा कपिला हव्यकव्य[1]वहे तथा।**
**आभिर्वा पूजयेद् [2]वह्निं यादिक्षान्तादिभिः क्रमात् ॥ ८ ॥**

---

षट्कोणान्तस्त्रिकोणे तु वह्निबिम्बं कलायुतम्।
आवाह्याऽऽधारतो देवि पूजयेन्मन्त्रवित्तमः ॥

इत्युक्तम्। यद्यप्यत्र वचने षट्कोणान्तस्त्रिकोण इत्यनेन विशेषार्घ्यस्थापन एव वह्न्यादिकलानामर्चनमुपदिष्टं न तु सामान्यार्घ्यस्थापनावसरे, त्रिपुरार्चनरहस्य-कौलावलीनिर्णय-तन्त्रसारादिष्वपि तथैव दृश्यते, तथाऽपि मूले तद्वैपरीत्येन सामान्यार्घ्यस्थापन एव वह्न्यादिकलापूजनोपदेशाद् विशेषार्घ्ये तदनभिधानाच्चाऽऽगमान्तरसम्मतोऽयं क्रमो मूलकृद्भिः परमहंसपादैः परिगृहीत इति प्रतिभाति। धूम्रेति। धूम्रादिसङ्कर्षिण्यन्ता वह्नेर्दश कला इत्यर्थः।

८। कल्पान्तरमाह—धूम्रार्चिरिति। तथाचैतत्कल्पे धूम्रार्चिराद्याः कव्यवहान्ता दश कला इत्यर्थः। अत्र तन्त्रसारादिषु नाम्नां क्रमभेदः स्वरूपभेदश्च दृश्येते। आभिर्वेति। वाशब्दः कल्पान्तरबोधकः। आभिर्धूम्रादिभिः धूम्रार्चिरादिभिर्वेति सम्बन्धः। आभिरिति विशेषयति—यादिक्षान्तादिभिरिति। यकारादिक्षकारान्तदशवर्णानामेकैकमादौ नियोज्य नमोऽन्तेन पूजयेदित्यर्थः। अत्र यकारादिवर्णाः सबिन्दुका ग्राह्याः। तथाच कौलावलीनिर्णये षष्ठोल्लासे धूम्रार्चिरित्याद्यभिधाय—

यादिसेन्दुक्षकारान्ता अब्जाद्याः परिकीर्तिताः।
ङे-युता वै नमोऽन्ताश्च कला वह्नेरितीरिताः॥

इत्यनेनानुस्वारयुक्तत्वं यकारादीनामुक्तम्, अब्जाद्या इत्यनेन श्रीबीजपूर्वकत्वमप्युक्तम्, एतेनैतन्मते श्रीं यं धूम्रायै नम इति प्रयोगक्रमः पर्यवस्यति। मूलकृन्मते तु 'बीजोक्तौ तदनुक्तौ वा मायाश्रीपूर्वमर्चनम्' इति प्रागुक्तवचनानुसारेण ह्रीं श्रीं यं धूम्रायै नम इत्यादिरूपः प्रयोग इति प्रतिभाति। तन्त्रसारकृता तु यादीनां पूर्वं त्रितारीप्रयोग उक्तः। योगिनीहृदयटीकाधृतस्वच्छन्दसंग्रहेऽपि—

---

1. '-वहा' B. 2. 'वह्नि'? B.

[ कलानामासां स्वरूपम् ]

तरुणारुणसङ्काशा वराभयकरा इमाः ।

[ तत्र सकल-वह्निमण्डलार्चाक्रमः ]

उदरार्णं[1] वाग्भवं वा दत्त्वा तन्मण्डलं यजेत् ॥ ६ ॥

---

यादिक्षान्तात्मवर्णानि कला वह्नेर्महेश्वरि ।
एताः कलाः समभ्यर्च्य स्वस्ववर्णैर्यथाविधि ॥
स्वबीजाद्याश्चतुर्थ्यन्ता नाममध्या नमोऽन्तिकाः ।
प्रोक्ता वह्निकला मन्त्रनामानि शृणु साम्प्रतम् ॥
धूम्रार्चिर्नीलरक्ता च कपिला विस्फुलिङ्गिनी ।
ज्वालामालिन्यर्चिष्मती तदूर्ध्वं हव्यवाहिनी ।
अष्टमी कव्यवाहा च रौद्री संवाहिनी तथा ॥

इति वचने स्वबीजाद्या इत्यनेन श्रीबीजाद्यं वा मायाश्रीबीजाद्यं वा वाग्भव-माया-श्रीबीजरूपत्रितारीपूर्वकत्वं वाऽभिप्रेतमिति संक्षेपः ।

६ । निरुक्तानां वह्निकलानां स्वरूपमाह—तरुणेति । नवोदितसूर्यसवर्णाः । वराभयकराः एकेन करेण वरमपरेण चाभयं दधत्य इत्यर्थः । पूर्वं 'पूजयेद् वह्निमण्डलम्' इत्युक्तम्, तद्वह्निमण्डलपूजाक्रममुपदिशति—उदरार्णमित्यादिना । उदरार्णं मं वाग्भवं ऐं इति बीजं वा दत्त्वा तन्मण्डलं वह्निमण्डलं यजेदित्यर्थः । एवञ्च निरुक्तयोर्बीजयोरन्यतरदुच्चार्य वह्निमण्डलाय दशकलात्मने अर्घ्यपात्राधाराय नमः इत्यनेन पूजयेदिति बोध्यम् । व्यक्तमाह कौलावलीनिर्णये षष्ठपटले—

पूर्ववन्मण्डलं कृत्वा संपूज्य तेन वर्त्मना ।
आदौ सेन्दुं महाकालं वह्निमण्डलं ङेयुतम् ।
हृदन्तं मन्त्रमुच्चार्य आधारे पूजयेत्ततः ।

इति । महाकालं मकारम् । तत्रापि ज्ञानार्णवे चतुर्दशपटले—

वह्निं तत्र विचिन्त्याथ पूजयेद् यन्त्रिकामयम् ।

इत्यभिधानाद् अर्घ्यपात्राधाराय नम इत्याधारपात्रपदोल्लेखः कार्यः । त्रिपुरार्चनरहस्यादिप्रामाणिकपूजाप्रयोगेष्वपि तथैव दृश्यते ।

---

1. '-र्व्यं' A-B,

[ सकल-सूर्यमण्डलार्चा ]

पात्रं निधाय तत्रैव कलाभिः सूर्यमर्चयेत्।

[ द्वादश सौरकलाः ]

तपिनी तापिनी चान्या विबुधा बोधिनी तथा ॥ १० ॥
[1]कलिनी षोडशी चैव वारुण्याकर्षिणी तथा।
माया विश्वावती हेम(ा)*प्रभा एताः [2]कला रवेः ॥ ११ ॥

[ तत्र प्रकारान्तरम् ]

तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः।
सुषुम्णा भोगदा विश्वा बोधिनी धारिणी क्षमा।
यजेदाभिः कलाभिर्वा [3]तत्तन्मन्त्रेण साधकः ॥ १२ ॥

---

१०-११। अथ सकल-सूर्यमण्डलपूजनमुपदिशति—पात्रमित्यादिना। तत्रैवेति प्रागुक्तषट्पदाद्यन्यतमाधारे इत्यर्थः। व्यक्तमाह कौलावलीनिर्णये षष्ठोल्लासे—

एषामन्यतमं पात्रं स्थापयेत्त्रिपदोपरि।

इति। अत्रापि पूर्ववन्मण्डलमालिख्य संपूज्य च सूर्यमण्डलमर्चयेदिति ज्ञेयम्। तथाचोक्तं तत्रैव विशेषार्घ्यप्रकरणे—

पूर्ववन्मण्डलं कृत्वा पूजयेत् पूर्ववर्त्मना।
सूर्यस्य मण्डलं तत्र चिन्तयित्वाऽथ पूजयेत् ॥

इति। द्वादश सूर्यकला निरूपयति—तपिनीत्यादिना। तपिन्याद्याः प्रभान्ता रवेर्द्वादश कलाः।

१२। कल्पान्तरमाह—तपिनीत्यादिना। कल्पेऽस्मिंस्तपिन्याद्याः क्षमान्ता द्वादश

---

1. 'काकिनी' A, 'कालिनी' C. 2. 'रवेः कलाः' A-B. 3. 'तन्मन्त्रेण तु' B.

* अत्रास्मदुपजीव्येषु त्रिष्वपि पुस्तकेषु हेमप्रभा इति पाठो दृश्यते। तेन चैकादश एव कला लभ्यन्ते न तु द्वादश। परन्तु ज्ञानार्णवे चतुर्दशपटले—

तपिनी तापिनी चैव विबुधा बोधिनी तथा।
कलिनी शोषणी चैव वारुण्याकर्षिणी तथा ॥
माया विश्वावती हेमा प्रभा सौरकला इमाः ॥

इति पाठदर्शनात् तत्संवादेनात्रापि 'हेमा प्रभे'ति पाठ एव लेखकप्रमादविकृतो 'हेमप्रभे'त्याकारमापन्न इति प्रतिभाति। तथाच हेमा-प्रभयोर्द्वयोरुपादाने कलानां द्वादशत्वं न व्याहन्यते। तन्त्रसारे तु अत्र धूम्रां तृतीयकलात्वेनान्तर्निवेश्य हेमप्रभामेकामेवाऽऽदाय हेमप्रभायै नम इति प्रयोगः प्रदर्शितः।

[ कलार्चाक्रमः ]

कादि-ठान्तान् विन्दुयुतान् [1]भादि-डान्तान् सबिन्दुकान्।
अन्योऽन्यक्रमयोगेण कलादौ योजयेत् क्रमात्॥ १३॥

[ कलानां स्वरूपम् ]

वराभयकराः सर्वा अतसीपुष्पसोदराः।

[ सौर-मण्डलार्चाक्रमः ]

ललाटं कामबीजं वा संयोज्य मण्डलं रवेः॥ १४॥

---

सूर्यकलाः। कौलावलीनिर्णये षष्ठप्रकाशेऽयमेव क्रमः परिगृहीतो दृश्यते। यजेदिति तपिन्यादिप्रभान्ताभिः तपिन्यादिक्षमान्ताभिर्वा यजेदित्यर्थः। तत्तन्मन्त्रेणेति पूर्ववन्माया-श्रीबीजादिपूर्वकमन्त्रेणेत्यर्थः।

१३। तत्राऽऽदौ वर्णयोजनमाह—कादीत्यादिना। कादि-ठान्तान् ककारादि-ठकारान्तान् तथा भादि-डान्तान् भकारादि-डकारान्तान् विलोमपरिपठितान् बिन्दु-युक्तान् निरुक्तानां द्वादशकलानामादौ योजयेदित्यर्थः। एवञ्च प्रागुक्तक्रमेण बीजमुच्चार्य कं भं तपिन्यै नमः, खं मं तापिन्यै नम इत्यादिरूपः प्रयोगक्रमः पर्यवस्यति। व्यक्तमाह योगिनीहृदयटीकाधृतस्वच्छन्दसंग्रहे—

अस्त्रप्रक्षालितं शङ्खं स्थापयित्वा तथोपरि।
हृदयात् सूर्यबिम्बञ्च समावाह्य स्वमन्त्रतः॥
कादि-ठान्तं भादि-डान्तं वर्णजातं क्रमोत्क्रमात्।
द्वयं द्वयं प्रयोक्तव्यं कलाश्च तदनन्तरम्॥

इति। अत्रापि कौलावलीनिर्णय-योगिनीहृदयादिषु पूर्ववत् कलानां नामभेदः स्वरूप-भेदश्च दृश्येते।

१४। कलानामासां स्वरूपमाह—वराभयेति। सर्वा एव एकेन हस्तेन वरमपरेण चाभयं दधत्यः। अतसीपुष्पसोदराः अतसीपुष्पसवर्णाः। पूर्वं कलाभिः सूर्यमर्चये-दित्युक्तम्, तत्क्रममुपदिशति—ललाटमिति। ललाटम् अं, कामबीजं क्लीं। बीजयो-रेतयोरन्यतरमादौ संयोज्य रवेर्मण्डलं पूजयेदित्यर्थः। पूजाक्रममाह कौलावलीनिर्णये षष्ठपटले—

---

1. 'डादिभान्तान्।' B.

[ अर्घ्यपात्रापूरणम् ]

तीर्थोदकेन शुद्धेन [1]पूरयेन्मूलमुच्चरन्[2] ।

[ सोमकलार्चोपदेशः ]

[3]प्रणवेन गन्धपुष्पे दत्त्वा सोमकलार्चनम् ॥ १५ ॥

[ षोडश सोमकलाः ]

अमृता मानसी तुष्टिः पुष्टिः प्रीती रतिस्तथा ।
श्रीश्च ह्रीश्च स्वधा रात्रिर्ज्योत्स्ना हैमवती तथा ॥ १६ ॥
छायाऽन्या पूर्णिमा विद्या अमावास्या च षोडशी ।
आभिर्वा पूजयेत् सोमं पराभिर्वा यथाक्रमात् ॥ १७ ॥

---

मण्डलं पूर्ववत् कृत्वा पूजयेत् पूर्ववर्त्मना ।
सूर्यस्य मण्डलं तत्र चिन्तयित्वाऽथ पूजयेत् ।
स्वराद्यं बिन्दुसहितमर्कमण्डलं ङेयुतम् ।
नमोऽन्तं मन्त्रमुच्चार्य पूजयित्वाऽर्घ्यपात्रकम् ।
कलाः संपूजयेत्तत्र भानोर्द्वादशसंज्ञकाः ।

इति । एवञ्च ललाटकामबीजयोरन्यतरमुच्चार्य अं अर्कमण्डलाय द्वादशकलात्मने अर्घ्यपात्राय नम इति प्रयोगः ।

१५ । अथार्घ्यपात्रस्याऽऽपूरणादिकमाह—तीर्थेत्यादिना । पूरयेत् अर्घ्यपात्रमिति शेषः । मूलमुच्चरन्नित्यन्तर्भूतण्यर्थः उच्चारयन्नित्यर्थः । ततस्तत्र प्रणवेन गन्धपुष्पादिकं निक्षिप्य सोमकलार्चनं सोममण्डलार्चनं कुर्यादित्यर्थः । तदुक्तं स्वच्छन्दसंग्रहे—

एलालवङ्गकक्कोलजातीफलसुसंयुतान् ।
सुगन्धिकुसुमैर्द्रव्यैः सह तस्मिन् जले क्षिपेत् ।
नवयोनिं समालिख्य पूर्ववज्जलमध्यतः ।
निशुद्धितः समावाह्य चन्द्रमण्डलमर्चयेत् । इति ।

१६-१७ । अथ षोडश सोमकलास्तत्पूजनञ्चोपदिशति—अमृतेत्यादिना । अमृताद्या अमावास्यान्ताः षोडश कलाः । आभिर्निरुक्ताभिः कलाभिः । कल्पान्तरमवतारयति—पराभिर्वेति, वक्ष्यमाणाभिर्वेत्यर्थः ।

---

1. 'पूजये-' B. 2. '-रेत्' B. 3. 'प्रणवैर्गन्धपुष्पे वा' B.

[ तत्र प्रकारान्तरम् ]

अमृता मानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः ।
शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा ॥ १८ ॥
पूर्णा पूर्णामृता कामदायिन्यः स्वरगाः कलाः ।

[ सोमकलानां स्वरूपम् ]

तरुणारुणसङ्काशा वराभयकराः स्मृताः ॥ १९ ॥

[ कलार्चाक्रमः ]

पश्चिमादिक्रमेणापि कलाः सर्वाः प्रपूजयेत् ।

[ सोममण्डलार्चा ]

शक्त्यर्णं दत्तकर्णं वा नियोज्य मण्डलं विधोः ॥ २० ॥

[ आनन्दभैरवयोः पूजनम् ]

आनन्दभैरवं देवमानन्दभैरवीमपि ।

---

१८-२० । ता एवाऽऽह—अमृतेति । कल्पेऽस्मिन् अमृताद्याः पूर्णामृतान्ताः कामदायिन्यः वाञ्छितार्थप्रदाः षोडश कलाः, एताः पूजयेदित्यर्थः । अयमेव कल्पः समानानुपूर्वीकवचनेन प्रतिपादितः कौलावलीनिर्णये । स्वरगाः अकारादि-षोडशस्वरगताः कला इत्यर्थः । अत्र स्वरजाः कला इत्युक्तं कौलावलीनिर्णये । एवञ्चाकारादिषोडशस्वराणामेकैकमादौ नियोज्य एकैकमर्चयेदिति बोध्यम् । व्यक्तमाह योगिनीहृदयटीकाधृतस्वच्छन्दसंग्रहे—

आदिकाद्यन्तिकाः सौम्याः कलाः षोडश कीर्त्तिताः ।

इति । बीजयोगश्च पूर्ववत् । एवञ्च पूर्ववद् बीजमुच्चार्य अं अमृतायै नमः । आं मानदायै नम इत्यादिरूपः प्रयोगक्रमः पर्यवस्यति । कलानामासां स्वरूपमाह—तरुणेति । स्पष्टम् । पश्चिमादिक्रमेण वृत्ताकारेण पूजयेत् । तन्त्रसारेऽप्येवमेव ।

अथ चन्द्रमण्डलपूजाक्रममाह—शक्त्यर्णमिति । शक्त्यर्णं सौः इति, दत्तकर्णम् उं । बीजयोगः पूर्ववत् । एवञ्च निरुक्तबीजमुच्चार्य उं सोममण्डलाय षोडशकलात्मने अर्घ्यपात्रामृताय नम इति प्रयोगः ।

२१-२२ । अथाऽऽनन्दभैरवानन्दभैरव्योस्तत्र पूजामुपदिशति—आनन्देत्यादिना ।

[ आनन्दभैरवमन्त्रः ]

[1]शिवसोमौ मातृकान्तं कालभूवरुणानलम् ॥ २१ ॥
वामकर्णसमायुक्तं वायुमर्धेन्दुमण्डितम् ।
आनन्दभैरवायेति शिखामन्त्रं ततो वदेत् ॥ २२ ॥
आनन्दभैरवः सोम(?) आनन्दभैरवीं शृणु ।

[ आनन्दभैरवीमन्त्रः ]

पूर्व[2]वद् वर्णमालिख्य चन्द्रं हित्वा[3]दिमं नयेत् ॥ २३ ॥
कर्णे वामाक्षि संयोज्य सुधादेव्यै मनुं द्दशोः ।

[ अर्घ्ये जपक्रमः ]

[4]अस्योपरि जपेन्मूलं तारं वा सप्तधा बुधः ॥ २४ ॥

आदावानन्दभैरवं तत आनन्दभैरवीं, प्रपूजयेदिति पूर्वेण सम्बन्धः । तत्राऽऽनन्दभैरवमन्त्रमाह—शिवेत्यादिना । शिवो हकारः, सोमश्चन्द्रबीजं सकारः, मातृकान्तं क्षकारः, कालो मकारः, भूः पृथ्वीबीजं लकारः, वरुणबीजं वकारः, अनलं वह्निबीजं रकारः, वायुबीजं यकारः, तच्च वायुबीजं वामकर्णेन षष्ठस्वरेण समायुक्तं तथा अर्धेन्दुना अनुस्वारेण मण्डितम् । एवञ्च ह स क्ष म ल व र यूं इति प्राप्तम् । तत आनन्दभैरवायेति । ततश्च शिखामन्त्रं वषट् इति । एवञ्च ह स क्ष म ल व र यूं आनन्दभैरवाय वषडित्यानन्दभैरवमन्त्रः पर्यवस्यति ।

२३-२५ । आनन्दभैरवमन्त्रमुपसंहरति—आनन्देति । अत्र 'सोम' इति प्रामादिकः पाठः, 'प्रोक्त' इत्येव समीचीन इति प्रतिभाति । अथाऽऽनन्दभैरवीमन्त्रमाह—आनन्दभैरवीमित्यादिना । पूर्ववदानन्दभैरवक्रमेण हकारादिवर्णाष्टकमालिखेत्यर्थः । चन्द्रं हित्वा द्वितीयवर्णं सकारं उल्लङ्घ्य आदिमं हकारं नयेत् द्वितीयात्परात् सकारात् परतः प्रयुञ्जीतेत्यर्थः, अनेन ह स इत्यत्र स ह इति प्राप्तम् । तथा कर्णे निरुक्तमन्त्रस्थ वामकर्णस्थाने वामाक्षि चतुर्थस्वरं संयोज्य । अनेन यूं इत्यत्र यीं इति प्राप्तम् । ततः सुधादेव्यै इति । ततश्च द्दशोर्मनुं वौषडिति पदं योजयेदिति शेषः । एवञ्च स ह क्ष म ल व र यीं

1. 'शिवासोमौ' B. 2. '-वर्णान्त-' B. 3. 'दिने' B. 4. 'त-' C.

[ उपसंहारः ]

सामान्यार्घ्यमिदं प्रोक्तं

[ विशेषार्घ्यनिरूपणप्रतिज्ञा ]

विशेषार्घ्यमथोच्यते ॥ २५ ॥

[ श्रीपात्रकल्पना ]

गृहीत्वाज्ञां [1]महादेव्याः श्रीपात्रं परिकल्पयेत् ।

[ मण्डलनिर्माणम् ]

आत्मश्रीचक्रयोर्मध्ये मण्डलं रचयेद् यथा ॥ २६ ॥

ईकारेणान्वितं त्र्यस्रं षडस्रं वृत्तभूपुरे ।

[2]त्र्यस्रबाह्येऽथवा वृत्तं तदभ्युक्षेत्तदम्बुना ॥ २७ ॥

---

सुधादेव्यै वौषडित्यानन्दभैरवीमन्त्रः पर्यवस्यति । अस्येति । अस्य सामान्यार्घ्यस्योपरि मूलमन्त्रं तारं प्रणवं वा सप्तधा जपेदित्यर्थः । सामान्यार्घ्यमुपसंहरति—सामान्येति ।

एवं सामान्यार्घ्यपरिपाटीमभिधाय विशेषार्घ्यस्थापनप्रक्रियामभिधत्ते—विशेषार्घ्यमित्यादिना ।

२६-२७ । अथ पात्रस्थापनयोग्यमण्डलनिर्माणस्थानमुपदिशति—आत्मेति । आत्मश्रीचक्रयोर्मध्ये आत्मनः श्रीचक्ररूपाया देवतायाश्च मध्यवर्त्तिन्यां भूमौ मण्डलं वक्ष्यमाणक्रमेण रचयेदित्यर्थः । तदुक्तं कौलावलीनिर्णये षष्ठपटले—

आत्मदेव्योर्द्वयोर्मध्ये भूमौ चक्रं लिखेत्ततः ।

इति । मण्डलरचनापरिपाटीमाह—ईकारेणेति । ईकारेणान्वितमीकारगर्भं त्रिकोणम् । कौलावलीनिर्णये षष्ठपटलेऽपि—

मध्ये मायां समालिख्य प्रोक्षयेत्तदनन्तरम् ।

इति । तत्रापि मायापदेन चतुर्थस्वर एव बोध्यः । एवञ्च चतुर्थस्वरगर्भं त्रिकोणं तद्बहिः षट्कोणं तद्बहिर्वृत्तं तद्बहिश्चतुरस्ररूपं भूपुरम् इत्येको मण्डलरचनाकल्पः । कल्पान्तरमाह—त्र्यस्रेति । अथवा प्रागुक्तत्र्यस्रबाह्ये वृत्तं विदधीत । एवञ्चात्र कल्पे आदावीकारगर्भं त्रिकोणं तद्बहिर्वृत्तं तद्बहिःषट्कोणं तद्बहिश्चतुरस्रमिति विशेषः । एवं मण्डलरचनायां कल्पद्वयमन्यत्रापि दृश्यते । यथा कौलावलीनिर्णये षष्ठपटले—

---

1. 'वाम-' B. 2. 'त्र्यस्रे' B.

[ तत्र पीठचतुष्टयाद्यर्चा ]

**चतुरस्त्रे पूर्णशैलमुड्डीयानाभिधं परम् ।**

**जालन्धरं कामरूपं षट्कोणेषु [1]षडासनम् ॥ २८ ॥**

[ षट्कोणार्चायां विकल्पः ]

**षडङ्गं पूजयेद् वाऽपि तत्तन्मन्त्रमुदीरयन् ।**

[ त्रिकोणाद्यर्चा ]

**त्रिकोणञ्च त्रिभिः कूटैर्मध्य आधारशक्तिकाम् ॥ २९ ॥**

---

आत्मदेवीद्वयोर्मध्ये भूमौ चक्रं लिखेत्ततः ।
त्रिकोणञ्चैव षट्कोणं वृत्तं भूगृहसंयुतम् ॥

इति । वचनमिदं पूर्वकल्पप्रतिपादकम् । तथा ज्ञानार्णवे चतुर्दशपटले—

त्रिकोणवृत्तषट्कोणं चतुरस्रन्तु मण्डलम् ।

इति । वचनमिदमुत्तरकल्पप्रतिपादकम् । एवञ्च तन्त्रभेदेन कल्पभेददर्शनात् स्वस्वगुरुसंप्रदायानुसारेणैकतरः पक्षः समाश्रयणीय इति दिक् । तदिति । तन्मण्डलं तदमुना सामान्यार्घ्यजलेनाभ्युक्षेदित्यर्थः । व्यक्तमुक्तं कौलावलीनिर्णये षष्ठपटले—

मध्ये मायां समालिख्य प्रोक्षयेत्तदनन्तरम् ।
अस्त्रान्तमूलमन्त्रेण सामान्यार्घ्यजलेन च ॥

इति ।

२८ । अथ प्रागुक्तमण्डले चतुरस्रादिक्रमेण पूजनमुपदिशति—चतुरस्र इत्यादिना । चतुरस्रे पूर्णशैलादिपीठचतुष्टयमर्चयेत् । पूजनञ्च पूर्वादिक्रमेण, तदुक्तं कौलावलीनिर्णये षष्ठपटले—

चतुरस्रे पूर्णशैलमुड्डीयानं जलन्धरम् ।
पूजयेत् कामरूपञ्च पूर्वादिक्रमयोगतः ॥

इति । अथ निरुक्तचतुरस्रान्तःषट्कोणे पूजनमाह—षडिति । षट्कोणेषु षडासनं पूजयेदिति परेण सम्बन्धः । षडासनानि च अमृतार्णवासन-पोताम्बुजासनात्मासन-चक्रासनसर्वमन्त्रासनसाध्यसिद्धासनानि त्रिपुरार्चनरहस्ये व्यक्तमुक्तानि वेदितव्यानि । प्रयोगस्तु ह्रीं श्रीमिति द्वितारीं ऐं ह्रीं श्रीमिति त्रितारीं वोच्चार्य अमृतार्णवासनाय नमः इत्यादिरूपः ।

२९ । कल्पान्तरमाह—षडङ्गमिति । व्यक्तमाह ज्ञानार्णवे चतुर्दशपटले—

---

1. 'षडाननम्' B.

त्रिकोणवृत्तषट्कोणमाधारं पूर्वमेव वा ।

[ मण्डलेऽर्घ्याधारस्थापनक्रमः ]

हृदा प्रोक्षितमाधारं स्थापयेन्म[1]ण्डलोपरि ॥ ३० ॥

[ आधारार्चा ]

[2]बालात्रिबीजं त्रिपुरसुन्दर्यर्घ्यासनं वदेत् ।

[3]साधयामि नमोऽन्तेन मनुनाधारमर्चयेत् ॥ ३१ ॥

प्रपूज्य पूर्ववद् [4]वह्नेः कलान्तमन्त्रमुच्चरन् ।

स्याद् वह्निमण्डलायेति [5]रूपं दशकलात्मने ॥ ३२ ॥

अर्घ्यपात्रासनायेति हृदाधारे समर्चयेत् ।

षट्कोणेषु षडङ्गानि व्यस्तैर्मध्ये शिवां मनोः ॥ ३३ ॥

---

द्विरावृत्त्या षडङ्गानि षट्कोणेषु प्रपूजयेत् ।

इति । एवञ्चाग्न्यादिक्रमेण प्रथमं वाग्भवकूटं ततः कामराजकूटं ततः शक्तिकूटं पुनरपि निरुक्तवाग्भवादिकूटत्रयमुच्चार्य पूजयेदित्यर्थः । तन्त्रसारकारैरपि "अग्न्यादिक्रमेण षट्कोणे मूलविद्यया द्विरावृत्त्या षडङ्गानि पूजयेदि"त्युक्तम् । त्रिपुरार्चनरहस्येऽप्येवमेव । 'तत्तन्मन्त्रमुदीरयन्नि'त्यस्याप्ययमेवाभिप्रायो ज्ञानार्णवतन्त्रसारादिसंवादेनावगम्यते । अन्तस्त्रिकोणपूजनमाह—त्रिकोणेति । त्रिभिः कूटैर्व्यस्तकूटत्रयेणेत्यर्थः । ज्ञानार्णवे चतुर्दशपटलेऽपि—

व्यस्तकूटैर्यजेत्तत्र त्रिकोणे परमेश्वरि ।

इत्युक्तम् । मध्य इति । त्रिकोणमध्ये आधारशक्तिं पूजयेदित्यर्थः ।

३० । हृदा नम इत्यनेन ।

३१ । अथार्घ्यपात्राधारार्चामन्त्रमाह—बालेति । तथाच ऐं क्लीं सौः त्रिपुरसुन्दर्यर्घ्यासनं साधयामि नम इति मन्त्रः पर्यवस्यति ।

३२-३३ । पूर्ववदिति । सामान्यार्घ्योक्तक्रमेण वह्नेर्दश कलाः संपूज्य वह्निमण्डलाय दशकलात्मने अर्घ्यपात्रासनाय नम इत्याधारे समर्चयेदित्यर्थः ।

---

1. '-नसो-' C. 2. 'बालाबीजं त्रिपुरसुन्दर्यास्तथासनं वदेत्ततः' ? B. 3. 'धार-' C. 4. 'वर्गैः' B. 5. 'रूप' ? B.

[ अर्घ्यपात्रनिर्णयः ]

पात्रं काञ्चन[1]काचरूप्यजनितं मुक्ताकपालोद्भवं
विश्वामित्रमयञ्च कामदमिदं हैमं [2]प्रियं स्फाटिकम्।
[3]ताम्रं प्रीतिदमष्टसिद्धिजनकं श्रीनारिकेलोद्भवं
कापालं स्फुटमन्त्रसिद्धिजनकं मुक्तप्रदं मौक्तिकम्॥ ३४ ॥
शङ्खम् अलाबुपात्रञ्च तथा पुण्यतरूद्भवम्।
[4]मृन्मयं ताम्रजं वाऽपि तथा लोहसमुद्भवम्॥ ३५ ॥
पुरा वै निर्मितं पात्रं विश्वामित्रेण धीमता।
विश्वामित्रकपालञ्च सर्वपात्रोत्तमोत्तमम्॥ ३६ ॥
ब्रह्महत्यादिपापानि तथा विश्वासघातकम्।
दृष्ट्वा पात्रं नारिकेलं सर्वपापं प्रणश्यति॥ ३७ ॥
कल्पकोटिप्रदानानि तथा हेमशतानि च।
यो ददाति मुनीन्द्राय राहुग्रस्ते [5]निशाकरे॥ ३८ ॥
तत्फलात् कोटिगुणितं नारिके[6]लार्घ्यपात्रतः।
[7]अभावे तस्य पात्रस्य पात्रमन्यत् [8]प्रकल्पयेत्॥ ३९ ॥
दृष्ट्वाऽर्घ्य[9]पात्रं परमं ब्रह्माद्या देवताः सदा।
नृत्यन्ति सर्वयोगिन्यः प्रीत्या सिद्धिं ददात्यलम्॥ ४० ॥

[ कामनाभेदेन पात्रभेदाः ]

वश्याकर्षणकार्ये तु हेमपात्रं प्रशस्यते।
शान्तिके पौष्टिके चैव राजतं कारयेद् बुधः॥ ४१ ॥

४१। पात्रभेदेन फलभेदमाह हरतत्त्वदीधितिधृतशिवरहस्ये—

हेमपात्राणि सर्वाणि गृहीतानि भवन्तु मे।
अर्घ्यं दत्त्वा तु रौप्येण लोके पूज्यसुताँल्लभेत्॥

1. '-रौप्यकाच-' C. 2. 'श्रियं' C. 3. 'तारं' C. 4. 'मृन्मये'त्यादि पादद्वयं C-पुस्तके नास्ति। 5. 'दिवा-' C. 9. '-लघ्न' B. 7. 'अलाभे' C. 8. 'प्रयोजयेत्' C. 9. '-र्घ्यं' C.

लौहपात्रं विजानीयान्मारणोच्चाटने तथा ।
स्तम्भकार्येषु पाषाणं विद्वेषे [1]लौहमृन्मयम् ॥ ४२ ॥
कुलोत्सादनकार्येषु काचपात्रं प्रशस्यते ।
[2]काष्ठपात्रं विजानीयान्मन्त्राराधनकर्मणि ॥ ४३ ॥

[ सर्वत्र विश्वामित्रपात्रस्य प्राशस्त्यम् ]

सर्वकार्येषु कर्त्तव्यं विश्वामित्र[3]मनुत्तमम् ।

[ पात्रभेदेन फलभेदाः ]

शङ्खं ज्ञानप्रदं प्रोक्तमलावु सर्वसिद्धिदम् ॥ ४४ ॥
[4]उक्तं महाराजतन्त्रमतं परमदुर्लभम् ।

[ अर्घ्यपात्रपरिमाणम् ]

षोडशाङ्गुलमानं तत् पात्रं सर्वसमृद्धिदम् ॥ ४५ ॥

---

ताम्रपात्रेण सौभाग्यं धर्मं मृन्मयसम्भवे ।
सर्वालाभे तु माहेयं स्वहस्तघटितं यदि ॥
आ(मल ? सन)श्चार्घ्यपात्रञ्च भग्नमासादयेन्न तु ।
सर्वत्र स्वर्णवत्ताम्रमर्घ्यपात्रे ततोऽधिकम् ॥
पात्राणामादरः कार्यः पात्राण्येवोत्तमानि तु ।
बहिर्होमक्रियायान्तु विना पात्रं न सिध्यति ॥ इति ।

अधिकारिभेदेन पात्रभेदमाह गन्धर्वतन्त्रे द्वादशपटले—

शङ्खशुक्तिरजतस्वर्णैर्दिव्यानां पात्रमिष्यते ।
महाशङ्खैस्तु वीराणां फलजं वनवासिनाम् ॥ इति ।

अर्घ्यादौ ताम्रपात्रस्य प्राशस्त्यमाह—

पूजार्घ्यपात्रं नैवेद्याद्याधारपानपात्रकम् ।
सर्वं ताम्रमयं कुर्याद् यत्किञ्चिदिह पूजने ॥
ताम्रे देवाः प्रमोदन्ते ताम्रे देवाः स्थिताः सदा ।
देवीप्रीतिकरं ताम्रं तस्मात्ताम्रं प्रयोजयेत् ॥

---

1. 'लोह-' C. 2. 'कांस्य-' C. 3. '-समुद्भवम्' C. 4. 'इत्थमुक्तं महाराजतन्त्रमतं परमदुर्लभम्' C.

द्वादशाङ्गुलमानं वा वस्वङ्गुलमथापि वा ।
एतन्न्यूनञ्च यत् पात्रं तत् पात्रमधमं स्मृतम् ॥ ४६ ॥

[ वर्जनीयपात्रनिरूपणम् ]

अत्यन्तस्थूलपात्रन्तु सूक्ष्मपात्रन्तु[1] [2]वर्जयेत् ।
एतेषामाचरेदेकं पाथसा साधकोत्तमः ॥ ४७ ॥

[ पात्रस्थापनक्रमः ]

अस्त्रमन्त्रेण प्रक्षाल्य स्थापयेद्[3] यन्त्रिकोपरि ।

---

४५-४७ । अर्घ्यपात्रस्य परिमाणमाह—षोडशेत्यादिना ।
विशिष्याऽऽह कौलावलीनिर्णये षष्ठपटले—

उक्तेष्वेतेषु पात्रेषु पात्रमेकं प्रकल्पयेत् ।
षोडशाङ्गुलविस्तारं षडङ्गुलसमुच्छ्रयम् ॥
अथवाऽपि तदर्धं स्यात्तदर्धं वाऽपि कारयेत् ।
एकाङ्गुलं तथा सार्धं षट्कञ्चैव प्रमाणतः ॥
अतिसूक्ष्ममतिस्थूलं सच्छिद्रं परिवर्जयेत् ।
न योजयेद् भग्नपात्रं स्वप्रादेशं प्रशस्यते ॥

इति । शिवार्चनचन्द्रिकाधृतशिवरहस्येऽपि—

षट्त्रिंशदङ्गुलं पात्रमुत्तमं परिकीर्तितम् ।
मध्यमन्तु त्रिभागोनं कनिष्ठं द्वादशाङ्गुलम् ॥
वस्वङ्गुलविहीनन्तु न पात्रं कारयेत् क्वचित् ॥
नाभीविवरयुक्तानि पुण्डरीकाकृतीनि च ।
द्राक्षानीलोत्पलादीनि पात्राणि परिकल्पयेत् ॥

इति । तथा हरतत्त्वदीधितिधृतश्यामार्चनचन्द्रिकायाम्—

भग्नं वस्वङ्गुलिन्यूनं क्षीणं सच्छिद्रमेव च ।
विजातीयञ्च देवेशि वर्जयेत् सर्वथा प्रिये ॥ इति ।

---

1. '-ञ्च' C. 2. 'कल्पयेत्' C, 3. '-न्मन्त्रि-' B.

[ पात्रप्रतिष्ठापनमन्त्रः ]

बालाबीज[1]त्रयस्यान्ते ततस्त्रिपुरसुन्दरी ॥ ४८ ॥

विशेषार्घ्य[2]पदात् पात्रं प्रतिशब्दा[3]दनन्तरम् ।

स्थापयामीति मनुना प्रतिष्ठाप्य कला रवेः ॥ ४९ ॥

[ तत्र सूर्यकलामण्डलार्चा ]

प्रपूज्य विधिवद् विद्वान् स्यात् सूर्यमण्डलाय च ।

द्वादशे[4]ति कलात्मने चार्घ्यपात्राय हृन्मनुः ॥ ५० ॥

[ मण्डलविधिः ]

त्रिकोणं वृत्तषट्कोणं पात्रमध्ये लिखेत्ततः ।

---

४८-५० । आधारेऽर्घ्यपात्रस्थापनमाह—अस्त्रेति । अस्त्रमन्त्रेण फडित्यनेन । प्रक्षाल्य सामान्यार्घ्योदकेनेति शेषः । यस्त्रिकोपरि त्रिपदिकादिप्रागुक्ताधारे । तथाच गन्धर्वतन्त्रे द्वादशपटले—

तथैवास्त्रेण युतया सामान्यार्घ्योदकेन तु ।
प्रक्षाल्य परमेशानि मण्डले स्थापयेत्ततः ॥

इत्यनेन मण्डलेऽर्घ्यपात्राधारस्थापनस्य क्रममुपदिश्य—

पूर्ववत् परमेशानि पात्रं प्रक्षाल्य साधकः ।

इत्यादिना आधारस्थापनक्रमेणैवार्घ्यपात्रस्यापि स्थापनमुक्तम् । अर्घ्यपात्रप्रतिष्ठामन्त्रमाह—बालेति । तथाच ऐं क्लीं सौः त्रिपुरसुन्दरीविशेषार्घ्यपात्रं प्रतिष्ठापयामीति प्रतिष्ठापनमन्त्रः पूर्ववत् । द्वितारीप्रयोगस्त्रितारीप्रयोगो वा सर्वत्र पूर्ववत् । कला रवेरिति । प्रागुक्तसामान्यार्घ्यक्रमेण द्वादश तपिन्यादिसूर्यकलाः प्रपूज्येत्यर्थः । सूर्यमण्डलेति । (अं) सूर्यमण्डलाय द्वादशकलात्मने अर्घ्यपात्राय नम इति मन्त्रेणार्घ्यपात्रं पूजयेदित्यर्थः ।

---

1. '-द्वय-' B. 2. '-प्रदा' ? C. 3. '-त्तदन्तकम्' A-B. 4. 'त्रिकोणान्ते च मूलेऽर्घ्यपात्रहृन्मनुः' A-B.

[ मण्डलपूजा ]

समस्तव्यस्तकूटेन पूजयेत्तु त्रिकोणके ॥ ५१ ॥

[ पात्रापूरणक्रमः ]

बालात्रिबीजं त्रिपुरसुन्दर्यर्घ्यपदोपरि ।
पात्रं [1]संपूरयामीति सङ्कल्प्य मनुनाऽमुना ॥ ५२ ॥
अनुलोमविलोमाभ्यां मातृकार्णं [2]समुच्चरन् ।
[3]अमृतामृत[4]बुद्ध्या तु श्रीपात्रं परि[5]पूरयेत् ॥ ५३ ॥

[ पात्रापूरणद्रव्याणि ]

जलाच्छतगुणं प्रोक्तं [6]दुग्धोदकमनुत्तमम् ।
[7]दुग्धाद्दधि शतगुणं दध्नः शतगुणं घृतम् ॥ ५४ ॥
घृताच्छतगुणो हेतु(?) देवोदक्षिणसाधने ।

५१। त्रिकोणमिति । निरुक्तार्घ्यपात्रमध्ये आदौ त्रिकोणं तद्बहिर्वृत्तं तद्बहिः षट्कोणं लिखेदित्यर्थः । अत्र कौलावलीनिर्णये षष्ठपटले—

मण्डलं पूर्ववत् कृत्वा पूजयेत् पूर्ववर्त्मना ।

इत्यभिधानात्, तन्त्रसारेऽपि पूर्ववद् यन्त्रमालिख्येत्युक्तेर्ज्ञानार्णवादावपि तथा दर्शनात् अत्रापि षट्कोणाद् बहिर्भूपुरं लिखेदिति हृदयम् । समस्तेति त्रिकूटात्मकमन्त्रेण ; व्यस्तकूटेन पृथक् पृथक् वाग्भव-कामराज-शक्तिकूटेनेत्यर्थः ।

५२-५३। अथ पात्रापूरणक्रममाह—बालेति । तथाच ऐँ क्लीँ सौँः त्रिपुरसुन्दर्यर्घ्यपात्रं संपूरयामीति मन्त्रेण संकल्प्येत्यर्थः । अनुलोमेति । अकारात् क्षकारान्तं पुनः क्षकाराद्कारान्तं मातृकावर्णं समुच्चरन् । अमृतामृतबुद्ध्या परमामृतत्वेन विभाव्येत्यर्थः । श्रीपात्रमर्घ्यपात्रम् ।

५४। अथ पात्रापूरणद्रव्याणि द्रव्यभेदेन फलभेदांश्चाऽऽह—जलादिति । जलाद् दुग्धोदकस्य शतगुणफलजनकत्वं ततो दध्नः शतगुणफलजनकत्वमित्येवं क्रमेणोक्तानां फलजनकत्वमवगन्तव्यमित्यर्थः । दक्षिणसाधन इति । दक्षिणाचारक्रमेण साधन इत्यर्थः । विशिष्याऽऽह गन्धर्वतन्त्रे द्वादशपटले—

1. 'संपूज-' B. 2. 'समाच-' C. 3. 'हेतुना-' C. 4. '-बुद्धया' C. 5. '-पूज-' B, 6. 'गन्धो-' C. 7. 'गन्धा-' C.

[ अर्घ्यद्रव्याणि ]

दूर्वाक्षतं रक्तपुष्पं विल्वपत्रञ्च चन्दनम् ॥ ५५ ॥
नानासुगन्धि[1]कद्रव्यं नवरत्नाष्टगन्धकम् ।

[ सकलसोममण्डलार्चा ]

दत्त्वा यजेत् सोमकलाः पूर्ववत् पश्चिमक्रमात् ॥ ५६ ॥
स्यात् सोममण्डलायान्ते षोडशेति कलात्मने ।
अर्घ्यामृताय नम इत्यर्घ्यं दद्याद् वामक्रमेण तु ॥ ५७ ॥

[ गन्धाष्टकम् ]

चन्दनागुरुकस्तूरीचोरकुङ्कुमरोचनाः ।
जटामांसी कपियुता शक्तेर्गन्धाष्टकं विदुः ॥ ५८ ॥

---

मातृकां प्रतिलोमेन मूलमन्त्राभिमन्त्रितैः ।
आदिमैः पूरयेद्द् वाऽपि तथा पुष्पासवैरपि ॥
कपिलायास्तथा क्षीरैर्नारिकेलामृतैरपि ।
इक्षुरसैः सुगन्धैश्च मधुरत्नितयेन वा ॥
पूरयेत्तन्महापात्रं नानाद्रव्यैः कदाचन ।
अधिकारिप्रभेदेन द्रव्यभेदा भवन्ति हि ॥
स्वयम्भूकुसुमन्तत्र कर्पूरागुरुचन्दनैः ।
रोचनाकुङ्कुमैर्मिश्रं कस्तूरीपरिभावितम् ।
निक्षिपेत् परमेशानि शर्करां मधुसंयुताम् ॥ इति ।

५५-५६ । अथ तत्रार्घ्यद्रव्यार्पणमाह—दूर्वेति । स्पष्टम् । नवेति । नवरत्नं गन्धाष्टकञ्च दत्त्वा यजेद्द् वक्ष्यमाणक्रमेणेति शेषः । नवरत्नानि पञ्चमप्रकाशे ( ५।६३ श्लो० ) प्रदर्शितानि ।

गन्धाष्टकन्तु स्वयमेवाग्रे वक्ष्यति । यजेदिति । पूर्ववत् सामान्यार्घ्यक्रमेण अमृतादिषोडशचन्द्रकला यजेदित्यर्थः । सोमेति । (उं) सोममण्डलाय षोडशकलात्मने अर्घ्यामृताय नम इति प्रयोगः ।

५८ । पूर्वमष्टगन्धकमित्युक्तम्, तद्द् गन्धाष्टकं निरूपयति—चन्दनेत्यादिना । चोरः कृष्णशठी, कपिः गाठियाला इति तन्त्रसारः । शिष्टं स्पष्टम् ।

---

1. '-कं' A-C.

[ अर्घ्यासृते यन्त्रलेखनादिक्रमः ]

पुष्पेण यन्त्रमालिख्य पूर्वसोमामृतान्तरे ।
अकथा[1]दीँस्त्रिरेखासु हं लं क्षं मध्यतो लिखेत् ॥ ५९ ॥

[ तत्रार्चावाहने ]

त्रिकोणं पूजयेन्मन्त्री त्रिकूटेन यथाक्रमात् ।
हस्ताभ्यां पात्रमाच्छाद्य तीर्थावाहनमाचरेत् ॥ ६० ॥

[ पञ्चरत्नार्चाक्रमः ]

पूर्वादितो दिक्षु मध्ये पञ्चरत्नं प्रपूजयेत् ॥ ६१ ॥

[ पञ्चरत्नमन्त्रः ]

कान्तान्तं सोमतपनं भान्तं धान्तं महीयुतम् ।
दन्तकर्णेन्दुसंयुक्तं पञ्चरत्न[2]मनुक्रमात् ॥ ६२ ॥

[ पञ्चरत्नानि ]

गगनं स्वर्ग[3]पातालं मर्त्यं नागमनन्तरम् ।
पञ्चरत्नमिदं प्रोक्तं देव्यानन्दकरं महत् ॥ ६३ ॥

५९। पुष्पेणेति। पूर्वसोमामृतान्तरे सोमकलात्मकार्घ्यस्थामृताभ्यन्तरे। यन्त्रं त्रिकोणवृत्तषट्कोणचतुरस्रात्मकयन्त्रमित्यर्थः। अकथेति। अन्तस्त्रिकोणघटकरेखात्रये क्रमेण अकारादिषोडशस्वरान्, ककारादितकारान्तान् थकारादिसकारान्तांश्च व्यञ्जन-वर्णान्, तथा मध्यतो निरुक्तत्रिकोणाभ्यन्तरे हं लं क्षमिति वर्णत्रयं लिखेदिति फलितार्थः। अत्राकारादिककारादिथकारादिवर्णनियामकोऽकथशब्द इति ज्ञेयम्।

६०। त्रिकोणमिति। निरुक्तत्रिकोणं त्रिकूटेन वाग्भव-कामराज-शक्ति-कूटैर्यस्तैः क्रमेण पूजयेदित्यर्थः। तीर्थावाहनमिति 'ॐ गङ्गे चे'त्यादिनेत्यर्थः।

६१। पूर्वादित इति। पूर्वादिदिक्चतुष्टये चत्वारि मध्ये चैकमित्येवंक्रमेण पञ्चरत्नं प्रपूजयेदित्यर्थः।

६२-६३। पञ्चरत्नान्याह—कान्तान्तमित्यादिना। कान्तान्तो गकारः, सोमः सकारः, तपनः पकारः, भान्तो मकारः, धान्तो नकारः, एतद्वर्णपञ्चकं महीयुतं मह्या पृथ्वीबीजेन लकारेण युक्तं तथा दन्तकर्णेन पञ्चमस्वरेण इन्दुनाऽनुस्वारेण च संयुक्तम्।

1. '-दित्रि-' B. 2. '-मनुः' C. 3. '-पाताले' C.

[ आनन्दभैरवार्चा ]

आनन्दभैरवं देवं पूर्ववत् परिपूजयेत् ।

[ पञ्चभिर्मन्त्रैरर्चनस्योपदेशः ]

कुलद्रव्याणि[1] निःक्षिप्य पञ्चमन्त्रैः[2] समर्चयेत् ॥ ६४ ॥

एतेन ग्लुं स्लुं म्लुं, प्लुं न्लुं इति बीजपञ्चकं प्राप्तम् । एतत् पञ्चरत्नं क्रमेण गगनादीनां पूर्वं योजयेदित्यर्थः । उपसंहरति—पञ्चरत्नमित्यादिना । एवञ्च ग्लुं गगनरत्नाय नमः, स्लुं स्वर्गरत्नाय नमः, प्लुं पातालरत्नाय नमः, म्लुं मर्त्यरत्नाय नमः, न्लुं नागरत्नाय नमः इति प्रयोगक्रमः । एवमेव त्रिपुरार्चनरहस्येऽपि । कौलावलीनिर्णये षष्ठपटले तु गगनरत्नेभ्यो नमः इत्यादिबहुवचनान्तः प्रयोगो दृश्यते । यथा—

संपूजयेत्ततः पश्चात् पञ्चरत्नं सुसाधकः ।
पञ्चान्तकं बिन्दुयुतं दत्तकर्णसमन्वितम् ॥
गगनान्ते च रत्नेभ्यो नमोऽन्तमनुमुद्धरेत् ।
शीतलं शक्रसंयुक्तमग्रबिन्दुविभूषितम् ॥
स्वर्गपदं समुच्चार्य रत्नेभ्यो नम इत्यपि ।
पञ्चमं देवराजञ्च दत्तश्रोत्रसमन्वितम् ॥
पातालपदरत्नेभ्यो नमोऽन्तश्चापरो मनुः ।
महाकालं क्षितियुतं दत्तकर्णसमन्वितम् ॥
मर्त्यरत्ने ततः पश्चाद् भ्यो नमोऽत्र समुद्धरेत् ।
वामपादं क्षितियुतं दत्तश्रवणभूषितम् ।
नागपदं समुच्चार्य रत्नेभ्यो नम इत्यपि ॥

इति । अस्माभिस्तु मूले गगनमित्याद्येकवचनान्तपददर्शनाद् ग्रन्थकृद्गुरु-श्रीमद्ब्रह्मानन्दकृतत्रिपुरार्चनरहस्ये गगनरत्नायेत्याद्येकवचनान्तप्रयोगदर्शनाच्चैकवचनान्त एव प्रयोगष्टीकायां प्रदर्शितः । परन्तु तत्र पातालरत्नात् पूर्वं मर्त्यरत्नस्य समावेशो दृश्यत इति विशेषः ।

६४ । आनन्देति । पूर्ववत् प्राक्प्रदर्शितसामान्यार्घ्योक्तक्रमेण । अत्राऽऽनन्दभैरव्या अपि पूर्ववत् पूजनं विधेयं त्रिपुरार्चनरहस्य-तन्त्रसारादौ तथा दर्शनात् ।

1. '-दिव्यानि' C. 2. '-रत्नैः' ? A-B.

[ तत्र प्रथमो मन्त्रः ]

अखण्डैकरसानन्दकरे[1] परसुधात्मनि ।
[2]स्वच्छन्दस्फुरणामत्र [3]निधेह्यकुल[4]रूपिणि ॥ ६५ ॥

[ द्वितीयः ]

अकुलस्थामृताकारे शुद्धज्ञानकरे परे ।
अमृतत्वं [5]निधेह्यस्मिन् [6]वस्तुनि क्लिन्नरूपिणि ॥ ६६ ॥

[ तृतीयः ]

[7]तद्रूपेणैकरस्यञ्च कृत्वाऽस्यै ततस्वरूपिणि ।
भूत्वा परामृता[8]कारं मयि विस्फुरणं कुरु ॥ ६७ ॥

[ चतुर्थः ]

वाग्भवं (प्लु?प्ल)मात्मञ्च [9]भ्रौँ हूँ सस्ततः पठेत् ।
अमृतेऽमृतोद्भवे प्रोच्य अथामृतेश्वरीति च ॥ ६८ ॥
अमृतवर्षि(णी ? णि) पदममृतं [10]स्रावयद्वयम् ।
वह्निजायां समुद्धृत्य मन्त्रमन्यं समुद्धरेत् ॥ ६९ ॥

---

६५। मन्त्रपञ्चकमाह—अखण्डैकेत्यादिना। स्पष्टम्।

६८-६९। चतुर्थं मन्त्रमाह—वाग्भवमित्यादिना। वाग्भवं ऐँ, ततः प्लुं ? (प्लूं) ततः भ्रौँ हूँ स इति। अधोधृतपाठान्तरानुसारेण तु 'भ्रौँ हूँ सः' इत्यत्र हसौ हंस इति लभ्यते। कौलावलीनिर्णयषष्ठपटलोक्तक्रमेण तु द्रौँ जूं सं इति लभ्यते। गन्धर्वतन्त्रद्वादशपटलानुसारेण तु क्लीं सौरिति बीजद्वयम्। एवञ्च बहुधा पाठभेद-दर्शनात् संशयविषदिग्धहृदयैर्मूलोक्तमेव पाठमनुरुध्य मन्त्रोद्धारः क्रियतेऽस्माभिरिति क्षमतां भूतभावनो भगवान् भवानीपतिः। तथाच निरुक्तप्रमाणानुसारेण, ऐँ प्लुं ? (प्लूं) भ्रौँ हूँ सः अमृतेऽमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतं स्रावय स्रावय स्वाहेति मन्त्रः पर्यवस्यति। कौलावलीनिर्णये षष्ठपटले—

---

1. '-परे' C. 2. 'स्वद्वन्द्व-' ? A-B. 3. 'विदेह्य-' A-B. 4. '-रूपिणे' B. 5. 'विदे-' A-B. 6. 'वस्तुवि-' B. 7. 'तद्रूपेणे'त्यादिपादद्वयं A-B-पुस्तकयोर्नास्ति। 8. '-कार' A-B. 9. 'हसौ हंस-' A-B. 10. 'श्रावयद्वयम्' C.

वाग्भवं [1]वदवदस्यान्ते वाग्वादिनि च वाग्भवम्।
क्लिन्ने-क्लेदिनि-शब्दात्तु क्लेदयेति समुद्धरेत् ॥ ७० ॥
महाक्षोभं कुरुद्वन्द्वं [2]कामं शक्तिं समुद्धरेत् ।
मोक्षं कुरुयुगं प्रोच्य हसौः स्थौस्तु समुद्धरेत् ॥ ७१ ॥

---

वाग्भवं पञ्चमं क्षौर्णीं वामश्रोत्रसमन्वितम् ।
क्षौं जूं सं अमृतेऽमृतोद्भवेऽमृतेश्वरि ॥
अमृतवर्षिणि प्रोच्य अमृतं स्रावयद्वयम् ।
वह्निजायान्तमुच्चार्य चोद्धरेदपरन्ततः ॥

इति । अत्र प्लूमिति षष्ठस्वरसंयोगदर्शनात् तदपि दर्शितम् ।

७०-७१ । पञ्चमं मन्त्रमाह—वाग्भवमित्यादिना । तथाच ऐँ वदवद वाग्वादिनि ऐँ क्लिन्ने क्लेदिनि क्लेदय महाक्षोभं कुरु कुरु क्लीं ह्रीं मोक्षं कुरु कुरु हसौः स्थौः इति मन्त्रः पर्यवस्यति । अत्र कौलावलीनिर्णयगन्धर्वतन्त्रयोस्तु विशेषो दृश्यते—यथा कौलावल्यां षष्ठपटले—

वाग्भवं वदयुग्मञ्च वाग्वादिनि ततः परम् ।
वाङ्मनःपदमाभाष्य क्लिन्ने क्लेदिनि तत्परम् ॥
क्लेदयद्वितयं महामोक्षं कुरुद्वयं वदेत् ।
कामबीजं शक्तिबीजं मोक्षं कुरुद्वयं वदेत् ।
प्रेतबीजं समुच्चार्य हसौर्नमस्ततः परम् ॥

इति । अत्र वाग्वादिनीत्यतः परं वाङ्मनःपदं क्लेदयेत्यस्य द्विरावृत्तिः, महाक्षोभम् इत्यत्र महामोक्षम्, हसौरित्यतः पूर्वं प्रेतबीजं स्थौरित्यत्र नम इति विशेषः । तथा गन्धर्वतन्त्रे द्वादशपटले—

वाग्भवं वदयुग्मञ्च वाग्वादिनि च वाग्भवम् ।
कामबीजं क्लिन्नेत्युक्त्वा क्लेदिनि क्लेदयेति च ॥
महाक्षोभं कुरुयुग्मं कामबीजमतः परम् ।
तार्त्तीयं मोक्षमित्युक्त्वा कुरुयुग्मं वदेत्ततः ॥
शक्तिबीजं पुनश्चान्ते सन्दीपनमनुः प्रिये ।

---

1. 'वरद-' B. 2. 'काम-' A-B.

[ आवाहनादिक्रमः ]

आवाहयेदर्घ्यमध्ये ध्यात्वा त्रिपुरसुन्दरीम् ।
तालत्रयं ततो दत्त्वा तथाऽवगुण्ठनं चरेत् ॥ ७२ ॥
धेन्वाख्ययाऽमृतीकृत्य दिग्बन्धनं शरेण तु ।

[ नवमुद्राप्रदर्शनम् ]

मुद्राः सन्दर्शयेन्मन्त्री सर्वसंक्षोभणादिकाः ॥ ७३ ॥

[ त्रिकोणे बीजयोगार्चाप्रक्रिया ]

त्रिकोणे हंसमन्त्रञ्च लिखेत् कामकलाक्षरम् ।
तार्त्तीयं श्रीगुरोर्बीजं नमोऽन्तं तत्र पूजयेत् ॥ ७४ ॥

[ शङ्खमुद्राप्रदर्शनोपदेशः ]

शङ्खमुद्रां प्रदर्श्याथ सकलीकरणं चरेत् ।

[ शङ्खमुद्रास्वरूपम् ]

वामाङ्गुष्ठान्तरेऽङ्गुष्ठं नियोज्य सकलाङ्गुलीः ॥ ७५ ॥
दक्षिणस्य करस्यैव वामाङ्गुष्ठेन संस्पृशेत् ।
शङ्खमुद्रेयमाख्याता मुद्राशास्त्रविशारदैः ॥ ७६ ॥

---

इति । अत्र क्लेदयेत्यस्य द्विरावृत्तिर्नास्तीति मूलेन संवदति, क्लिन्ने इत्यतः पूर्वं वाग्भवाच्च परं कामबीजप्रयोग इत्येवमादयो विशेषाश्च दृश्यन्ते । तदेवं मन्त्रस्वरूपभेददर्शनात् स्वस्वगुरुसम्प्रदायानुसारेणैकतमः पक्षः समाश्रयणीय इति दिक् ।

७२ । अवगुण्ठनमिति,अवगुण्ठनमुद्रामिति शेषः । अवगुण्ठनमुद्रा च पञ्चदशप्रकाशे ( ६७ श्लो० ) टीकायां प्रदर्शिता ।

७३ । धेन्वाख्येति । धेनुमुद्रयाऽमृतीकृत्य अर्घ्योदकममृतत्वं प्रापय्येत्यर्थः । धेनुमुद्राऽपि पञ्चदशप्रकाशे ( ६७ श्लो० ) टीकायां प्रदर्शिता । दिगिति । शरेण फडित्यस्त्रमन्त्रेण दिग्बन्धनं कृत्वा, छोटिकाभिरिति शेषः । मुद्रा इति । सर्वसंक्षोभणादिका अस्मिन्नेव प्रकाशे वक्ष्यमाणा नव मुद्राः सन्दर्शयेदिति सम्बन्धः ।

७५-७६ । शङ्खेति । शङ्खमुद्रां वक्ष्यमाणलक्षणाम् । सकलीकरणमपि वक्ष्यमाणक्रमेण । तत्र शङ्खमुद्रालक्षणमाह—वामाङ्गुष्ठान्तर इति । सकलेति ।

[ सकलीकरणमुद्रा ]

देवताङ्गैः षडङ्गैश्च सकलीकरणन्त्विदम् ।

[ तत्र जपस्य संख्याभेदः ]

मीनाख्यमुद्रयाच्छाद्य सप्ताष्टदशधा जपेत् ॥ ७७ ॥

इष्टदेवधियाऽर्घ्यन्तु धूपदीपैश्च वन्दयेत् ।

[ तर्पणम् ]

कौलिक्या तर्पयेन्मन्त्री तत्तन्मन्त्रेण वै त्रिधा ॥ ७८ ॥

आनन्दभैरवं मूर्ध्नि 'गुरुं'[1] श्च हृदि देवताम् ।

[ तत्र कौलिकी मुद्रा ]

मध्यमाङ्गुष्ठयोगेन मुद्रा तु कौलिकी स्मृता ॥ ७९ ॥

---

दक्षिणस्य करस्य सकलाङ्गुलीः वामाङ्गुष्ठेन संस्पृशेदिति सम्बन्धः । शिष्टं स्पष्टम् । व्यक्तमाह तन्त्रसारे—

वामाङ्गुष्ठन्तु संगृह्य दक्षिणेन तु मुष्टिना ।
कृत्वोत्तानं ततो मुष्टिमङ्गुष्ठन्तु प्रसारयेत् ॥
वामाङ्गुल्यस्तथा श्लिष्टाः संयुक्ताः स्युः प्रसारिताः ।
दक्षिणाङ्गुष्ठसंस्पृष्टा ज्ञेयैषा शङ्खमुद्रिका ॥ इति ।

७७ । सकलीकरणमुद्रामाह—देवताङ्ग इति । स्पष्टम् । तन्त्रसारेऽपि 'देवताङ्गे षडङ्गानां न्यासः स्यात् सकलीकृतिरि'त्युक्तम् । गन्धर्वतन्त्रे त्रयोदशपटले—

संपूर्णावस्थितेर्याज्ञा सकलीकरणं प्रिये ।

इति । सकलीकरणन्तु षडङ्गमन्त्रैर्विधेयम् । तदुक्तं गन्धर्वतन्त्रे द्वादशपटले—'सकलीकरणं कुर्यात् षडङ्गेन च पूर्ववत्' इति । मीनेति । मीनाख्यमुद्रया मत्स्यमुद्रयेत्यर्थः । मत्स्यमुद्रामाह तन्त्रसारे—

दक्षपाणिपृष्ठदेशे वामपाणितलं न्यसेत् ।
अङ्गुष्ठौ चालयेत् सम्यङ् मुद्रेयं मत्स्यरूपिणी ॥

इति । सप्तेति । सप्तधाऽष्टधा दशधा वा जपेदित्यर्थः ।

७८–७९ । कौलिक्या तदाख्यया मुद्रयेत्यर्थः । आनन्दभैरवम्, गुरून्, हृदि-

---

1. 'गुरूंश्च' A-B.

[ कौलिकमुद्रया तर्पणस्योपयोगित्वम् ]

**अङ्गुष्ठे भैरवी देवी मध्यमे चण्डिका स्मृता ।**
**अतः प्रयत्नतो मन्त्री तर्पयेदनया सदा ॥ ८० ॥**

---

स्थितां देवताञ्च तत्तन्मन्त्रेण आनन्दभैरवादिमन्त्रेण प्रत्येकं त्रिधा तर्पयेदिति सम्बन्धः। कौलिकीं मुद्रामाह—मध्यमेति। स्पष्टम्।

८०। कौलिक्या तर्पणे युक्तिमाह—अङ्गुष्ठ इति। अङ्गुष्ठे भैरवी देवी मध्यमे मध्यमायां चण्डिका स्मृता। अतो भैरवी-चण्डिकासम्बन्धात् तर्पणद्रव्यस्यामृतत्व-सम्पादनाय अनया कौलिक्या तर्पयेदिति सम्बन्धः। तर्पणक्रमोऽयं कुलार्णवसम्मत इति स्वयमेव वक्ष्यति। परन्तु कुलार्णवे षष्ठोल्लासे तर्पणप्रकरणे कौलिकी मुद्रा नोपलभ्यते, तत्र तु—

अङ्गुष्ठो भैरवो देवो अनामा चण्डिका प्रिये।
अनामाङ्गुष्ठयोगेन······················ ······॥

इति वचनमुपलभ्यते। एतेन तु तत्त्वमुद्रयैव तर्पणमुक्तं भवति। तन्त्रसारधृत-स्वतन्त्रतन्त्रेऽपि—

अङ्गुष्ठानामिकायोगाद् वामहस्तस्य पार्वति।
तर्पयेत् सुन्दरीं देवीं समुद्राञ्च सवाहनाम्।
तर्पयामि मुखे देव्यास्त्रिवारं मूलविद्यया।
अङ्गुष्ठानामिकायोगान्नखैर्निर्दिष्टमुद्धृतम्।
श्रीपात्रस्योदकं विन्दुं तर्पयेत् कुलनायिकाम्।
अङ्गुष्ठो भैरवो देवि अनामा चण्डिका प्रिये।
सव्येन हस्तयोगेन तर्पयेद् वा कुलेश्वरीम्।

इति। अत्रापि अङ्गुष्ठे भैरवस्यानामायां चण्डिकायाः स्थितिरङ्गुष्ठानामासंयोगरूप-तत्त्वमुद्रया तर्पणञ्चोपदिष्टं इति मूलेन विसंवादः। तत् 'अतः प्रयत्नतो मन्त्री तर्पयेदनया सदा' इत्यन्तं मध्यमाङ्गुष्ठसंयोगात्मककौलिकमुद्राकरणकतर्पणप्रतिपादकवचनं तन्त्रा-न्तरीयं क्रमान्तरप्रतिपादकञ्च। अनामाङ्गुष्ठयोगेनेत्यादिवचनानि तु कुलार्णवोक्तानि इति सम्भावयामः। एवञ्चाविसंवादः सुतरामुपपद्यते।

[ कामनाभेदेन तर्पणे मुद्राभेदाः ]

अनामाङ्गुष्ठ[1]योगेन वश्यकर्मणि तर्पयेत् ।
अङ्गुष्ठतर्जनीभ्यान्तु तर्पयेदभिचारके ॥ ८१ ॥
कनिष्ठाङ्गुष्ठयोगेन तर्पयेत् स्तम्भने सुधीः ।
कुलार्णवाख्यतन्त्रस्य मतं तर्पणमीरितम् ॥ ८२ ॥

[ तत्राऽऽगमान्तरसम्मतः क्रमः ]

[2]शुद्धं द्रव्यं समादाय तर्पयेत्तत्त्वमुद्रया ।
अङ्गुष्ठानामिका[3]मध्ये शुद्धिं संगृह्य यत्नतः ॥ ८३ ॥
वामेन दक्षिणेनैव देवीं सन्तर्पयेद् [4]बुधः ।
एवं सन्तर्पणं प्रोक्तं समयाचार[5]सम्मतम् ॥ ८४ ॥

[ आत्मोपकरणादिप्रोक्षणक्रमः ]

सामान्यार्घ्ये[6] परं बिन्दुं निःक्षिपेत् साधकोत्तमः ।
प्रोक्षयेत्तेन चाऽऽत्मानं पूजोपकरणानि च ॥ ८५ ॥

[ प्रोक्षणफलम् ]

एवं प्रोक्षण[7]मात्रेण सर्वं ब्रह्ममयं भवेत् ।

[ देव्यङ्गदेवतातर्पणविधिः ]

सामान्यार्घ्यस्य तोयेन तर्पयेदङ्गदेवताः ॥ ८६ ॥

---

८१-८२ । अथ कामनाभेदेन तर्पणेऽङ्गुलिनियममाह—अनामेत्यादिना । तन्त्रसारेऽप्येवमेव । कौलावलीनिर्णये सप्तमोल्लासे तु—

अङ्गुष्ठमध्यमाभ्याञ्च वश्यकर्मणि तर्पयेत् ।
कनिष्ठाङ्गुष्ठयोगेन स्तम्भने तर्पयेत्ततः ।
तर्जन्यङ्गुष्ठयोगेन तर्पयेदभिचारके ।

इति क्रमभेदो दृश्यते ।

८६ । एवमिति प्रागुक्तक्रमेण । प्रोक्षणमिदं त्रिधा अर्घ्योदकेनैव कर्त्तव्यम्, उदकान्तरेण तत्करणे दोषश्रवणात् । तदुक्तं गन्धर्वतन्त्रे द्वादशपटले—

---

1. '-योगाभ्यां' C. 2. 'शुद्ध-' C. 3. '-मध्यैः' C. 4. 'मुदा' C. 5. '-संयुतम्' C. 6. '-र्घ्य-' B. 7. '-मन्त्रेण' C.

[ वटुकादिपूजोपदेशः ]

**इदानीं वटुकादीनां बलिदानं समाचरेत् ।**

[ क्षेत्रपालादिबलिमदत्त्वा देवतान्तरपूजननिषेधः ]

**अदत्त्वा क्षेत्रनाथेभ्यः कथं क्षेत्रेषु पूजयेत् ॥ ८७ ॥**

**यावन्न वटुके दद्यात्तावत् पूजा कथं भवेत् ।**

**गणेशयोगिनीभ्यान्तु न दत्त्वा पूजयेत् कथम् ॥ ८८ ॥**

---

प्रोक्षयेत्तेन चाऽऽत्मानं मूलेन वारुणेन वा ।
पूजोपकरणञ्चापि त्रिरभ्युक्ष्य तथैव हि ।
अमृतैः प्रोक्षितं यत्तु सर्वं ब्रह्ममयं भवेत् ।
यदन्यद्दीयते द्रव्यमलङ्कारादिकञ्च यत् ।
वरुणस्यैव बीजेन तेषां प्रोक्षणमाचरेत् । इति ।

[illegible]था—

अन्यतोयैस्तु संसृष्टमर्घ्यपात्रस्थितेतरैः ।
तन्न गृह्णातीष्टदेवी दत्तं विधिशतैरपि । इति ।

[illegible]रतत्त्वदीधितिधृतकालिकापुराणे—

यद्देयमर्घ्यपात्रस्थजलैरेव निवेदयेत् ।
अन्यतोयैर्यदुत्सृष्टमर्घ्यपात्रस्थितेतरैः ॥
तन्न गृह्णाति वै देवी दत्तं विधिशतैरपि ।

[illegible]र्घ्यं सामान्यार्घ्यमिति सम्प्रदायविद इति हरतत्त्वदीधितिः । मूलेऽपि सामान्यार्घ्यस्य [illegible]येनेत्यस्योभयत्र सम्बन्धात् तेन प्रोक्षणमङ्गदेवतातर्पणञ्चेत्युभयमेव प्राप्तमिति [illegible]र्विवादमेतत् । प्रोक्षणन्तूत्तानहस्तेन कर्त्तव्यम्—

उत्तानेन तु हस्तेन प्रोक्षणं समुदाहृतम् ।

[illegible]त्येकादशीतत्त्वधृतवचनात् । सामान्येति । अत्र तर्पयेदित्यनेनाङ्गदेवतानां वक्ष्य[illegible]माणानां पूजनमपि अत्रैव कर्त्तव्यमिति ज्ञेयम् । अत एव तन्त्रसारकारैः "सुन्दरी[illegible]देवताया अङ्गदेवतापूजनन्त्वर्घ्यस्थापनानन्तरम्" इत्युक्तम् । परिवारपूजनन्त्वर्घ्य[illegible]स्थापनानन्तरं "गृहीत्वाज्ञां महादेव्याः परिवारांस्ततोऽर्चयेदि"ति तर्पणोपदेशानन्तरं [illegible]वक्ष्यमाणत्वात् ।

[ बलिदानाकरणे दोषश्रुतिः ]

बलिदानं विना[1]कृत्य त्रिपुरां पूजयेद् यदि ।
पूजा तु विफला [2]प्रोक्ता विघ्नश्चैव पदे पदे ॥ ८९ ॥

[ उपसंहारः ]

इति ज्ञात्वा प्रयत्नेन बलिदानं समाचरेत् ।

[ अत्र प्रामाणिकतन्त्रसम्मतिः ]

शक्तियामलतन्त्रे [3]तु शिवेनेति [4]प्रकीर्त्तितम् ॥ ९० ॥

[ वटुकपूजामकृत्वा सुन्दरीपूजानिषेधः ]

यावन्न वटुके दद्यात्तावन्नैव कुलेश्वरीम् ।
सुन्दर्यै प्रथमे दत्ते पूजा तु विफला भवेत् ॥ ९१ ॥

[ अत्राऽऽगमान्तरसम्मतिः ]

बृहच्छ्री[5]क्रमतन्त्रे तु शिवेनेति प्रकीर्त्तितम् ॥ ९२ ॥

[ वटुकादिपूजाक्रमः, तत्राऽऽदौ मण्डलनिर्माणम् ]

ईशानाद् वायुकोणान्तं दिक्षु पूर्वादितो[6]ऽथवा ।
मण्डलं रचयेन्मन्त्री [7]त्रिकोणं वृत्तसंयुतम् ॥ ९३ ॥
भूपुरेण युतं [8]कृत्वा साधको [9]भूमिजानुकः ।
त्रिकोणञ्चैव षट्कोणं चतुरस्रं स्ववामतः ॥ ९४ ॥

---

९३-९४ । अथ वटुकादिपूजाया मण्डलमाह—ईशानादित्यादिना । ईशानाद् वायुकोणान्तं पूर्वादिदिक्चतुष्टये वा श्रीचक्रस्येति शेषः, वक्ष्यमाणक्रमेण मण्डलचतुष्टयं रचयेदित्यर्थः । व्यक्तमाह ज्ञानार्णवे पञ्चमपटले—

ईशाने च तथाग्नेये नैर्ऋत्ये च तथा प्रिये ।
वायव्ये क्रमतो देवि मण्डलानां चतुष्टयम् ॥
श्रीचक्रमभितो देवि त्रिकोणं व्योम चाऽऽलिखेत् ।

---

1. 'कृत्वा' A-B. 2. 'सर्वा' C. 3. '-षु' A-B. 4. 'प्रकाशितम्' C. 5. '-चक्रमन्त्रस्य' C. 6. '-ऽपि वा' C. 7. 'त्रिकोण-' B. 8. 'तद् वा' C. 9. 'भुवि जल्पकः' A-B.

[ मण्डलार्चामन्त्रः ]

वाग्भवञ्च महामायां कवचं [1]मण्डलाय च ।
हृदन्तोऽयं मनुः प्रोक्तः पूजयेन्मण्डले[2] बुधः ॥ ९५ ॥

[ वटुकार्चोपदेशः ]

वटुकं पूजयेदादौ ध्यात्वा पाद्यादिभिः सदा ॥ ९६ ॥

[ वटुकध्यानम् ]

पीयूषभाण्डमसिखण्डकपालखण्ड-
[3]चण्डातिचण्डभुजदण्डम[4]तिप्रचण्डम् ।
श्रीकुण्डलद्वयविमण्डित[5]गण्डमीडे
नीलं [6]वटुं वटुकनाथमहीन्द्रहारम् ॥ ९७ ॥

[ वटुकबलिमन्त्रः ]

ध्यात्वैवं पूजयेन्मन्त्री [7]वांकारबीजपूर्वकम् ।
एह्येहि देवीपुत्रान्ते वटुकान्ते च [8]नाथतः ॥ ९८ ॥
कपिलान्ते जटाभार[9]भासुरान्ते [10]त्रिनेत्रतः ।
ज्वालामुखेति सर्वान्ते विघ्नान्नाशय नाशय ॥ ९९ ॥

---

इति । मण्डलस्वरूपमाह—त्रिकोणमित्यादिना । आदौ त्रिकोणं तद्बहिर्वृत्तं तद्बहि-र्भूपुरमिति मण्डलक्रमः । पञ्चमं मण्डलमाह—त्रिकोणमिति । स्ववामभागे आदौ त्रिकोणं तद्बहिः षट्कोणं तद्बहिश्चतुरस्रं रचयेदिति सम्बन्धः ।

९५ । मण्डलपूजामन्त्रमाह—वाग्भवमित्यादिना । वाग्भवं ऐँ, महामाया ह्रीं, कवचं हुं, हृदन्तः नमोऽन्तः । एवञ्च ऐँ ह्रीं हुं मण्डलाय नम इति मण्डलपूजामन्त्रः पर्यवस्यति ।

९८-१०० । ध्यानानन्तरं वटुकस्य पूजनमाह—वामिति । एवञ्च वां वटुकाय नम इति पूजामन्त्रः । तदुक्तं तन्त्रसारे—

---

1. 'मङ्गलाय' ? B. 2. '-लान्' A-C. 3. 'चण्डारि-' B. 4. '-भि-' C. 5. '-खण्ड-' A-B. 6. 'वपुं' C. 7. 'लाङ्कार-' A-B. 8. 'वामतः' A-B. 9. 'भानुरन्ते' B. 10. 'त्रिनेत्रितः' C.

सर्वोपचारसहितं बलिं गृह्ण द्विधा पदम्।
वह्निजायान्तमन्त्रेण वटुकस्य बलिं हरेत् ॥ १००॥

[ वटुकबलिक्रमः ]

[1]अर्धान्नपूर्णसलिलं रक्तपुष्पादिसंयुतम्।
तर्जन्यङ्गुष्ठयोगेन कनिष्ठाङ्गुष्ठतोऽपि वा ॥ १०१ ॥
वामानामाङ्गुष्ठतो वा साधको बलिमुत्सृजेत्।

[ योगिनीपूजोपदेशः ]

ततश्च योगिनीं ध्यात्वा यजेद्गन्धादिभिः क्रमात् ॥ १०२ ॥

[ योगिनीध्यानम् ]

योगिन्यः कामरूपाः सकलगुणभृतस्तप्तकार्त्तस्वराभा
मत्ताः कङ्कालमालाकलितगलतटा रक्तवस्त्रोत्तरीयाः।

---

वामादिवटुकं ङेऽन्तं नमोऽन्तो मनुरीरितः।

इति। बलिमन्त्रमाह—एह्येहीत्यादिना बलिं हरेदित्यन्तेन। तथाच एह्येहि देवीपुत्र वटुकनाथ कपिलजटाभारभासुर त्रिनेत्र ज्वालामुख सर्वविघ्नान्नाशय नाशय सर्वोपचार-सहितं बलिं गृह्ण गृह्ण स्वाहा इति वटुकबलिमन्त्रः पर्यवस्यति। अनेन मन्त्रेण बलिं हरेदित्यर्थः। कौलावलीनिर्णये षष्ठपटले तु—

विषं माया रमा देवीपुत्रवटुकनाथतः।
पिङ्गलपदतो जटाभास्वर प्रोच्य पिङ्गल।
त्रिनेत्र च इमं बलिं पूजां गृह्णयुगं ततः।
वह्निजायान्तमुच्चार्य वटुकस्य महात्मनः।
अनेन बलिमुत्सृज्य योगिनीश्चिन्तयेत्ततः।

इत्यनेन तेषु तेषु स्थानेषु बलिमन्त्रे भेदो दर्शितः।

१०१—१०२। वटुकबलेरुपचारं दानक्रमञ्चाऽऽह—अर्धेत्यादिना। स्पष्टम्।

१०३। योगिनीनां ध्यानमाह—योगिन्य इति। तप्तकार्त्तस्वराभाः तप्तसुवर्णरक्तवर्णाः।

---

1. 'अर्धान्नपूर्वमलिनं' A-B.

शूलं पाशं कपालं शृणिमपि विधृताः [1]सस्मिताः सुप्रसन्ना
भक्तानां साधकानामभिलषितफलं दीयमानाः सुवेशाः ॥१०३॥

[ योगिनीपूजामन्त्रः ]

यांकारं बीजमुच्चार्य योगिनीं पूजयेत्ततः ॥ १०४ ॥

[ योगिनीबलिः ]

[2]ऊर्ध्वं ब्रह्माण्डतो वा [3]दिवि गगनतले भूतले निष्कले वा
पाताले वा वने वा सलिलपवनयोर्यत्र कुत्र स्थिता वा ।
क्षेत्रे पीठोपपीठादिषु च कृतपदा धूपदीपादिकेन
प्रीता देव्यः सदा नः शुभबलिविधिना पान्तु [4]वीरेन्द्र[5]वन्द्याः ॥१०५

एतदन्ते वायुबीजं मुखवृत्तेन संयुतम् ।
योगिनीभ्यः पदं वह्निजायाश्च सर्वयोगिनीम् ॥ १०६ ॥
कवचा[6]स्त्राग्निजायान्ते बलिदानं समाचरेत् ।

[ तत्राङ्गुलिनियमः ]

दत्त्वाङ्गुष्ठानामिकाभ्यां कनिष्ठाङ्गुष्ठतोऽपि वा ॥ १०७ ॥

---

कपालं नरशिरोऽस्थि । शृणिमङ्कुशम् । विधृता धारयन्त्यः । शूलं पाशमित्यादिना चतुर्भुजत्वमप्यासामर्थादायाति । दीयमाना ददत्य इत्यर्थः ।

१०४ । योगिनीपूजामन्त्रमाह—यामिति । अत्र योगिनीमित्येकवचने सत्यपि योगिन्यः कामरूपा इति बहुवचनदर्शनात्,

एतदन्ते महेशानि यां बीजं योगिनी ततः ।
भ्यः स्वाहा सर्ववर्णान्ते योगिनीपदमालिखेत् ॥

इति ज्ञानार्णवपञ्चमपटलवचनदर्शनाच्च यां योगिनीभ्यो नम इत्येव प्रयोगः । एतेन योगिनीनां युगपद्वाक्याभेदेनार्चोपदिष्टा ।

१०५—१०७ । योगिनीनां बलिमन्त्रमाह—ऊर्द्ध्वमित्यादिना । स्पष्टम् । एतदन्त

---

1. 'संस्मृताः' C. 2. 'ऊर्द्ध्वं' B. 3. 'दिशि' B. 4. 'बीजेन्द्र-' B. '-वर्गाः' C.
6. '-स्त्वाग्नि-' B.

[ क्षेत्रपालार्चा ]

[1]क्षांकारं बीजमुच्चार्य ध्यात्वा क्षेत्रे समर्चयेत् ॥ १०८ ॥

[ क्षेत्रपालध्यानम् ]

चञ्चत्कपालसुकृपाणकमू( शू )लदण्ड-
मुद्यत् ( सदा ? ) डमरुमण्डितपाणिदण्डम् ।
नीलाञ्जनप्रचयपुञ्जमिव प्रसन्नं
श्रीक्षेत्रनायकमहं शरणं श्रयामि ॥ १०९ ॥

[ क्षेत्रपालबलिदानोपदेशः ]

एवं ध्यात्वा [2]तु [3]संपूज्य बलिदानं समाचरेत् ॥ ११० ॥

[ बलिदानक्रमः ]

षड्दीर्घस्वरसंभिन्नं क्षकारं स्थानशब्दतः ॥ १११ ॥
[4]क्षेत्रपालपदं धूपदीपादिसहितं बलिम् ।
गृह्ण गृह्ण वह्निजायां समुद्धृत्य बलिं हरेत् ॥ ११२ ॥

[ तत्राङ्गुलीनियमः ]

वाममुष्टिं विधायाथ तर्जनीं सरलाञ्चरेत् ।
[5]अङ्गुष्ठतर्जनीभ्यां वा क्षेत्रपालबलिर्मतः ॥ ११३ ॥

---

इति। आदावूर्द्ध्वमित्यादि वीरेन्द्रवन्द्या इत्यन्तमुक्त्वा तदन्ते यमिति वायुबीजं तच्च मुखवृत्तेन द्वितीयस्वरेण संयुतं वदेदित्यर्थः। एतेन यामिति प्राप्तम्। तथाच ऊर्द्ध्वमित्यादि ततश्च यां योगिनीभ्यः स्वाहा सर्वयोगिनी हुं फट् स्वाहेति योगिनीबलिमन्त्रः पर्यवस्यति। निरुक्तबलिदानेऽङ्गुलिनियममाह—दक्षेति। स्पष्टम्।

१०८। अथ क्षेत्रपालपूजनमाह—क्षामित्यादिना। तथाच क्षां क्षेत्रपालाय नम इति पूजामन्त्रः।

११०—११३। ध्यानमुपदिश्य बलिदानमाह—एवमित्यादिना। षडिति।

---

1. 'क्षीं-' A-B. 2. 'च' C. 3. 'संयोज्य' B. 4. अत्र 'क्षेत्रपालपदं प्रोच्य धूपदीपादिशब्दतः। सहितं बलिमन्ते तु गृह्ण गृह्णानलप्रियाम्। इन्द्रपार्य (?) वाममुष्टि (?) तर्जन्या दीर्घया तथा' इति पाठः C-पुस्तके दृश्यते। एवमत्र पाठभेदेऽप्यभिधेयं तुल्यमेव।
5. अङ्गुष्ठेत्यादिपादद्वयं C-पुस्तके नास्ति।

[ गणेशपूजनोपदेशः ]

संपूजयेद् गणेशश्च ध्यात्वा पाद्यादिभिः सुधीः ॥ ११४ ॥

[ गणेशध्यानम् ]

पाशाङ्कुशामृतकपाल[1]कशूलहस्तं
हस्त्याननं विविधभूषणनीलदेहम् ।
नित्योत्[2]सवं सकलविघ्नविनाशहेतुं
श्रीमद्[3]गजाननमहं प्रणमामि नित्यम् ॥ ११५ ॥

[ गणेशपूजाक्रमः ]

गंका[4]रबीजमुच्चार्य [5]गणेशं पूजयेद् बुधः ।

[ गणेशबलिमन्त्रः ]

[6]गंकारत्रयमुच्चार्य दीर्घयुक्तं समुद्धरेत् ॥ ११६ ॥
ङेऽन्तं गणपतिं प्रोच्य [7]वरं वरदशब्दतः ।
सर्वजनं समालिख्य मे वशमानयेति च ॥ ११७ ॥

---

आकारादिविसर्गान्तषड्दीर्घस्वरसंयुक्तं क्षकारम् । एवञ्च क्षां क्षीं क्षूं क्षैं क्षौं क्षः स्थानक्षेत्रपाल धूपदीपादिसहितं बलिं गृह्ण गृह्ण स्वाहेति क्षेत्रपालबलिमन्त्रः । तत्र बलिदानक्रममाह—वाममुष्टिमिति । ज्ञानार्णवे पञ्चमपटले—

वाममुष्टिं विधायाऽऽदौ तर्जनीं सरलां कुरु ।
अनया मुद्रया देवि क्षेत्रपालबलिर्भवेत् ॥ इत्युक्तम् ।

११४ । अथ गणेशस्य पूजनमुपदिशति—संपूजयेदिति । ध्यात्वा संपूजयेद् वक्ष्यमाणक्रमेणेति शेषः ।

११६—११८ । गमिति । गं गणेशाय नम इत्यनेन पूजयेदित्यर्थः । बलिमन्त्रमाह—गंकारमिति । दीर्घयुक्तं द्वितीय-चतुर्थ-षष्ठस्वरयुक्तं गंकारत्रयमुच्चार्येत्यर्थः । अत्र

---

1. '-सुशूल-' C. 2. '-सुकं' B. 3. '-गणेश्वर-' C. 4. '-रं' C. 5. 'गणपतिं प्रपूजयेत्' C. 6. 'गंकारत्रयदीर्घेण युतं पञ्चममुद्धरेत्' A-B. 7. 'वर' C.

बलिं गृह्ण[1]युगं प्रोच्य वह्निजायां [2]समुच्चरेत्।
अनेन मनुना मन्त्री गणेशस्य बलिं हरेत् ॥ ११८ ॥

[ गजतुण्डामुद्रा ]

संकोचिताङ्गुलीः कृत्वा दण्डवत् कारयेद् बुधः।
गजतुण्डाख्यमुद्रेयं गणेशस्य [3]प्रकीर्त्तिता ॥ ११९ ॥

---

दीर्घयुक्तमिति विशिष्यानुक्तावपि प्रथमप्राप्तपरित्यागे प्रमाणाभावाद् द्वितीय-चतुर्थ-षष्ठ-स्वराणां ग्रहणमर्थादायातम्। एतेन गां गीं गूं इति प्राप्तम्। व्यक्तमाह ज्ञानार्णवे पञ्चमपटले—

गां गीं गूं त्रयमालिख्य ङेऽन्तं गणपतिं ततः।

इति। एवञ्च गां गीं गूं गणपतये वरवरद सर्वजनं मे वशमानय बलिं गृह्ण गृह्ण स्वाहेति गणेशबलिमन्त्रः पर्यवस्यति। ज्ञानार्णवपञ्चमपटले तु—

गां गीं गूं त्रयमालिख्य ङेऽन्तं गणपतिं ततः।
वरान्ते वरदान्ते च सर्वान्ते जनमालिखेत्।
मे वशं चाऽऽनय प्रोच्य सर्वोप-पदमालिखेत्।
चारान्ते सहितं चोक्त्वा बलिं गृह्ण द्विधा पदम्।
वह्निजायान्वितो मन्त्रो गाणपत्यबलिं हरेत्

इत्यनेन निरुक्तमन्त्रे वशमानयेत्यनन्तरं सर्वोपचारसहितमिति बलिविशेषणमुक्तमिति विशेषो दृश्यते।

११९। अथ गणेशबलिदाने विहितां गजतुण्डामुद्रामाह--संकोचितेति। अङ्गुली-र्वामहस्तस्य सङ्कोचिताः कृत्वेत्यर्थः। दण्डवदिति मध्यमामङ्गुलिं दण्डवत् कारयेत्। इयमेव गणेशप्रिया गजतुण्डामुद्रेत्यर्थः। तथाच ज्ञानार्णवे पञ्चमपटले—'वाममुष्टिं विधायाऽऽदावि'ति क्षेत्रपालबलिमुद्रामभिधाय—

तथा मुष्टेस्तु मध्यस्थामङ्गुलीं दण्डवत् कुरु।
गजतुण्डा महामुद्रा गणपस्य बलिर्भवेत् ॥

इत्यनेन वामहस्ते मुष्टिं बध्वा मध्यमाङ्गुलेर्दीर्घीकरणमेव गजतुण्डामुद्रेति व्यक्तमुक्तम्।

---

1. '-द्वयं' C. 2. 'समुद्धरेत्' C. 3. 'बलिर्मतः' C.

[ मण्डलपूजा ]

[1]स्ववाममण्डलं [2]मन्त्री साधारं परिपूजयेत् ।
व्यापकान्ते[3] मण्डलाय [4]ऐँ परान्ते नमः[5]पदम् ॥ १२० ॥

[ सर्वभूतबलिः ]

बलिं [6]तत्रैव संस्थाप्य त्रिमूलेनाभिमन्त्रयेत् ।
पूजयेत् सर्वभूतञ्च धूपदीपादिना सुधीः ॥ १२१ ॥

[ बलिमन्त्रः ]

तारञ्च भुवनेशानीं सर्वविघ्नपदन्ततः ।
हृद्भ्यश्च सर्वभूतेभ्यः शब्दबीजञ्च ठद्वयम् ॥ १२२ ॥
[7]इमं कलार्णमुच्चार्य वितारान्ते बलिं हरेत् ।

[ बलिमुद्रा ]

अङ्गुष्ठानामिकाभ्याञ्च[8] मुद्रया तत्त्वसंज्ञया ॥ १२३ ॥

[ निरुक्तबलौ कल्पान्तरम् ]

एकत्र वा पञ्च बलीन् दद्याद् व्यापकमण्डले ।
वामभागे [9]स्थिते मन्त्री सर्वविघ्नहरो भवेत् ॥ १२४ ॥

---

१२० । एवं मण्डलचतुष्टये क्रमेण बटुकादीनां पूजनं बलिञ्चोपदिश्य प्रागुक्त-स्ववामावस्थितमण्डलस्य पूजामाह । ऐँ परान्ते व्यापकमण्डलाय ततो नमःपदमिति सम्बन्धः । एवञ्च ऐँ ह्रीं व्यापकमण्डलाय नम इति मण्डलपूजामन्त्रः ।

१२१ । बलिमिति । तत्रैव प्रागुक्तत्रिकोण-षट्कोण-चतुरस्रमण्डल एव । पूजयेदिति, 'सर्वभूतेभ्यो नम' इत्यनेनेत्यर्थः ।

१२२—१२३ । बलिमन्त्रमाह—तारमित्यादिना । तारः प्रणवः, भुवनेशानी ह्रीं । एवञ्च ॐ ह्रीं सर्वविघ्नहृद्भ्यः सर्वभूतेभ्यः ऐँ स्वाहा । इति सर्वभूतबलिमन्त्रः । अङ्गुष्ठेति । अङ्गुष्ठानामिकायोगात्मकतत्त्वमुद्रया सर्वभूतेभ्यो बलिं हरेदिति सम्बन्धः ।

१२४ । पूर्वं श्रीचक्रस्य चतुर्दिक्षु कृते मण्डलचतुष्टये बलिचतुष्टयं स्ववामभागे कृते मण्डले बलिमेकं दद्यादित्युक्तम् । तत्र कल्पान्तरमाह—एकत्र वेति । मण्डल-

---

1. 'स्ववामे' A-B. 2. 'कृत्वा' A-B. 3. '-न्त' A-B. 4. 'वाक्-' B. 5. 'पठेत्' C. 6. 'तथव' A-B. 7. 'इमां कलां समुच्चार्य' B. 8. '-न्तु' C. 9. 'स्थिता' A, B.

[ पुनः कल्पान्तरम् ]

अथवा सर्वभूताय बलिमेकं समाचरेत् ।

[ पुनः षडङ्गपूजा ]

[1]षडङ्गञ्च ततः कुर्यात् पूर्वोक्तेनैव वर्त्मना ॥ १२५ ॥

[ हृदये मूर्त्तिकल्पना ]

मायाबीजं समुच्चार्य कामबीजं ततः परम् ।
बलिमात्मकमारोप्य हृदि [2]मूर्त्तिं प्रकल्पयेत् ॥ १२६ ॥

[ ध्याने विहितं मुद्राद्वयम् ]

[3]त्रिखण्डामुद्रया [4]ध्यायेद् बद्ध्वा वा पाणिकच्छपाम् ।
यथा ध्यात्वा साधकस्य मनो नान्यत्र सज्जते ॥ १२७ ॥

---

चतुष्टयमकृत्वा केवलं स्ववामकृतव्यापकमण्डले वटुकादिसर्वभूतान्तबलिपञ्चकं विदधीतेत्यर्थः । व्यक्तमाह ज्ञानार्णवे पञ्चमपटले—

अथवा वामभागे तु मण्डलं चैकमालिखेत् ।
तत्रैव बलिदानन्तु कुर्यात् सर्वार्थसिद्धये ॥

इति । वामभागे विहितस्य बलेः फलमाह—वामेत्यादिना ।

१२५ । तत्रापि कल्पान्तरमाह—अथवेति । कल्पेऽस्मिन् अशक्तौ पूर्ववद् बलिपञ्चकमकृत्वा केवलेन सर्वभूतबलिनैव बलिफलं लभ्येत ।

१२७ । अथ त्रिपुराया ध्याने विहितं मुद्राद्वयं निरुक्तमुद्राद्वयेन कृतस्य ध्यानस्य प्रशस्तिञ्चाऽऽह—त्रिखण्डेति । तत्र त्रिखण्डामुद्रामाह तन्त्रसारे—

परिवर्त्त्य करौ स्पृष्टावङ्गुष्ठौ कारयेत् समौ ।
अनामान्तर्गते कृत्वा तर्जन्यौ कुटिलाकृती ॥
कनिष्ठिके नियुञ्जीत निजस्थाने महेश्वरि ।
त्रिखण्डेयं समाख्याता त्रिपुराध्यानकर्मणि ॥

इति । अनया मुद्रया त्रिपुरां ध्यायेदित्यर्थः । कल्पान्तरमाह—बद्ध्वा वेति । पाणिकच्छपां कूर्ममुद्रां बद्ध्वा वेत्यर्थः । कूर्ममुद्रालक्षणमाह तन्त्रसारे—

वामहस्तस्य तर्जन्यां दक्षिणस्य कनिष्ठिकाम् ।
तथा दक्षिणतर्जन्यां वामाङ्गुष्ठं नियोजयेत् ॥

---

1. 'षड्वर्गञ्च' C. 2. 'मुर्त्ति' A-B. 3. 'त्रिखण्ड-' C. 4. 'ध्यात्वा चोद्धरेत्' B.

[ ध्यानयोगः ]

[1]ध्यानयोगं [2]समास्थाय पूरकेणापि कर्मणा ।
मनो मूले तु संयोज्य कुञ्च्य प्राणानिरूकतः(?) ॥ १२८ ॥
मूलाधारे स्फुरद्दीपशिखाकारां शिवां स्मरेत् ।
[3]संयोज्य परमानन्दे[4] ब्रह्मरन्ध्रान्तरस्थिते ॥ १२९ ॥
सामरस्यं [5]तयोः कृत्वा विश्राम्य च पुनः पुनः ।
शिवानन्दामृतालोली[6]भूतां चैतन्यरूपिणीम् ।
तामात्मस्थानमानीय चिद्रूपां परिचिन्तयेत् ॥ १३० ॥

---

उन्नतं दक्षिणाङ्गुष्ठं वामस्य मध्यमादिकाः ।
अङ्गुलीर्योजयेत् पृष्ठे दक्षिणस्य करस्य च ॥
वामस्य पितृतीर्थेन मध्यमानामिके तथा ।
अधोमुखे च ते कुर्याद्दक्षिणस्य करस्य च ॥
कूर्मपृष्ठसमं कुर्याद्दक्षपाणिश्च सर्वतः ।
कूर्ममुद्रेयमाख्याता देवताध्यानकर्मणि ॥

इति । एवमेव गन्धर्वतन्त्रे एकादशपटलेऽपि । यथेति—निरुक्तान्यतरमुद्रया ध्यायतः साधकस्य मनः अन्यत्र न सज्जते ध्येयविषय एव समाहितं भवतीत्यर्थः ।

१२८ । मूल इति । मूलाधारे मनः संयोज्येत्यर्थः । इममेवार्थमाह तन्त्रसारे योगप्रक्रियाप्रकरणे—

आदौ पूरकयोगेन स्वाधारे योजयेन्मनः ।
गुदमेढ्रान्तरे शक्तिं तामाकुञ्च्य प्रबोधयेत् ॥

गुदमेढ्रान्तरे तां शक्तिमाकुञ्च्य निरुपमसूक्ष्मताकां सञ्चिन्त्य प्रवर्धयेत् ( इति चास्य व्याख्या ) ।

१२९ । मूलाधार इति । निरुक्तलक्षणां शिवां कुण्डलिनीं मूलाधारचतुर्दलाभ्यन्तरे स्मरेदित्यर्थः । संयोज्येति । ब्रह्मरन्ध्राभ्यन्तरीणे परमानन्दस्वरूपे परमशिवे तां कुण्डलिनीं संयोजयेत्यर्थः ।

१३० । सामरस्यमिति । सामरस्यञ्च—

स्त्रीपुंयोगे तु यत् सौख्यं सामरस्यं तदुच्यते ।

इत्युक्तलक्षणम् । तयोः कुण्डलिनीपरमशिवयोर्निरुक्तसामरस्यं सम्पाद्येत्यर्थः ।

---

1. 'ध्यात्वा' C. 2. 'समादाय' B. 3. 'संपूज्य' B. 4. '-नन्द-' B.
5. 'ततः' B. 6. '-भूतचैतन्यरूपिणी' B.

[1]चिन्तयेत् कर्णिकामध्ये रत्नसिंहासनं महत् ।
सिद्धिषोडशकोणं तत् सूर्यकोटिसमप्रभम् ॥ १३१ ॥
तन्मध्ये चिन्तयेन्मन्त्री चक्रराजं सुशोभनम् ।
चक्रमध्ये ततः शक्तिं [2]त्रिकोणां परिचिन्तयेत् ॥ १३२ ॥
तन्मध्ये [3]चिन्तयेत्तेजः सुप्रकाशं निरञ्जनम् ।
प्रलयानलसङ्काशं सर्वदेवमयं शिवम् ॥ १३३ ॥
ब्रह्मतेजोमयं नित्यं मुनिसिद्धितपोमयम्[4] ।
सर्वव्रतफलमयं सर्वयज्ञफलात्मकम् ॥ १३४ ॥
सर्वशक्तिमयञ्चैव सर्वविद्यात्मकं[5] पुनः ।
[6]सर्वात्मभावरूपञ्च सर्वानन्दमयं तथा ॥ १३५ ॥
[7]सर्वज्ञानमयञ्चैव सर्वभूतात्मकं पुनः ।
चिन्तयेच्च महादेवीं तेजः [8]परिणतं हि तत् ॥ १३६ ॥

[ देव्या ध्यानम् ]

[9]ततः पद्मनिभां देवीं बालार्ककिरणारुणाम् ।
जवाकुसुमसङ्काशां दाडिमीकुसुमप्रभाम् ॥ १३७ ॥

शिवेति। परमशिवसम्भोगसम्भुतानन्दामृतचञ्चलीभूतामित्यर्थः। आत्मस्थानं हृदयमित्यर्थः।

१३१। चिन्तयेदिति। कर्णिकामध्ये अनाहतपद्मस्येति शेषः। शिष्टं स्पष्टम्।

१३२—१३६। तन्मध्ये निरुक्तरत्नसिंहासनमध्यप्रदेशे चक्रराजं श्रीचक्रम्, तन्मध्ये त्रिकोणरूपां शक्तिम्, तन्मध्ये च वक्ष्यमाणरूपं तेजः; तत्तेजःपरिणतिरूपां महादेवीं श्रीमत्त्रिपुरसुन्दरीं वक्ष्यमाणध्यानक्रमेण चिन्तयेदिति फलितार्थः।

१३७। अथ श्रीमत्त्रिपुरसुन्दर्या ध्यानद्वयमभिधास्यन् प्रथमं ध्यानमाह— ततः पद्मनिभामित्यादिना परमानन्दनन्दितामित्यन्तेन। स्पष्टार्थमिदमिति न व्याख्यायते।

1. 'चिन्तयेदि'त्यादिपादचतुष्टयं A-B-पुस्तकयोर्नास्ति। 2. 'त्रिकोणं' A-B. 3. 'पूजये-' A-C. 4. '-धनम्' B. 5. '-विद्मात्मकं' ? B. 6. 'सर्वस्वभाव-' A-B. 7. 'सर्वे'त्यादिपादद्वयं A-B-पुस्तकयोर्नास्ति। 8. 'परिमितं' A-B. 9. 'रक्तपद्मनिभां' इति गन्धर्वतन्त्रपाठः।

पद्मरागप्रतीकाशां [1]कुङ्कुमोदकसन्निभाम् ।
स्फुरन्मुकुटमाणिक्य-किङ्किणीजालमण्डिताम् ॥ १३८ ॥
कालालिकुलसङ्काशकुटिलालक[2]पल्लवाम् ।
प्रत्यग्रारुणसङ्काशवदनाम्भोजमण्डलाम् ॥ १३९ ॥
किञ्चिदर्धेन्दुकुटिलललाटमृदुपट्टिकाम् ।
पिनाकिधनुराकार[3]सुभ्रुवं परमेश्वरीम् ॥ १४० ॥
आनन्दमुदितो[4]ल्लोललीला[5]न्दोलितलोचनाम् ।
स्फुरन्मयूख[6]सङ्घातविलसद्धेमकुण्डलाम् ॥ १४१ ॥
सुगण्डमण्डलाभोगजितेन्द्वमृतमण्डलाम् ।
विश्व[7]कर्मादिनिर्माणसूत्र[8]विस्पष्टनासिकाम् ॥ १४२ ॥
ताम्रविद्रुम[9]बिम्बाभरक्तोष्ठीममृतोपमाम् ।
स्मितमाधुर्यविजितमाधुर्यरससागराम् ॥ १४३ ॥
बीजपूरस्फुरद्बीजदन्तपङ्क्तियुगान्विताम् ।
रत्नद्वीपस्फुरद्रत्नजिह्वाममलभाषिणीम् ॥ १४४ ॥
अनौपम्यगुणोपेतचिबुकोद्देशशोभिताम् ।
कम्बुग्रीवां महादेवीं मृणाललतितैर्भुजैः ॥ २४५ ॥
रक्तोत्पलदलाकारसुकुमारकराम्बुजाम् ।
कराम्बुजनखज्योति[10]र्विद्योतितनभस्तलाम् ॥ १४६ ॥
मुक्ताहारलतोपेतसमुन्नतपयोधराम् ।
त्रिवलीवलया[11]मुक्तमध्यदेशसुशोभिताम् ॥ १४७ ॥

1. '-कुङ्कुमदल-' B. 2. '-कन्दराम्' C. 3. '-सुकरां' B. '-भ्रूलतां' इति C-पुस्तकटिप्पनीधृतः पाठः । 4. '-ल्लास-' B. 5. '-लोलिते'ति गन्धर्वतन्त्रपाठः । 6. '-सङ्काशे'ति C-पुस्तकपादटीकायां पाठः । 7. '-कर्मवि-' B. 8. '-सुस्पष्ट-' B. 9. '-विद्याभ-' ? A-C. 10. '-र्वितानित-' ? B. '-र्विराजिते'ति गन्धर्वतन्त्रपाठः । 11. '-युक्त-' A-B.

लावण्यसरिदावर्त्ताकारनाभिविभूषिताम् ।
अनर्घरत्नघटितकाञ्ची[1]युक्तनितम्बिनीम् ॥ १४८ ॥
नितम्बबिम्बद्विरदरोमराजिवराङ्कुशाम् ।
कदलीललितस्तम्भसुकुमारोरुमीश्वरीम् ॥ १४९ ॥*
[2]लावण्यकदलीतुल्यजङ्घायुगलमण्डिताम्[2]* ।
गूढगुल्फपदद्वन्द्वप्रपदाजितकच्छपाम् ॥ १५० ॥
ब्रह्मविष्णुशिरोरत्ननिघृष्टचरणाम्बुजाम् ।
तनुदीर्घाङ्गु[3]लिस्वच्छनखचन्द्रविभूषिताम् ॥ १५१ ॥
शीतांशुशतसङ्काशकान्तिसन्तानहासिनीम् ।
लौहित्यजितसिन्दूरजवादाडिम[4]रागिणीम् ॥ १५२ ॥
रक्तवस्त्रपरीधानां पाशाङ्कुशकरोद्यताम् ।
रक्तपद्मनिविष्टान्तु रक्ताभरणभूषिताम् ॥ १५३ ॥
चतुर्भुजां त्रिनेत्राञ्च[5] पञ्चबाणधनुर्धराम् ।
कर्पूरशकलोन्मिश्रताम्बूलपूरिताननाम् ॥ १५४ ॥
महामृगमदोद्दामकुङ्कुमारुणविग्रहाम् ।
सर्वशृङ्गारवेशाढ्यां सर्वाभरणभूषिताम् ॥ १५५ ॥
[6]जगदाह्लादजननीं जगद्रञ्जनकारिणीम् ।
जगदाकर्षणकरीं जगत्कारणरूपिणीम् ॥ १५६ ॥

---

1. '-युत-' B. * इतः परं 'लावण्यकुसुमाकारजानुमण्डलबन्धुराम्' इति तन्त्रसारेऽधिकः पाठो दृश्यते । 2. एतदर्धं नास्ति B. 3. '-लीभास्वन्नख-' C. 4. '-रूपिणीम्' इति C-पुस्तकपादटीकायां तन्त्रसारे च पाठो दृश्यते । 5. '-न्तु' C. 6. 'जगदि'त्यादिपादद्वयं C-पुस्तके 'रक्तपद्मनिविष्टान्त्वि'त्यादिपादद्वयात् परं दृश्यते ।

*सर्वमन्त्रमयीं देवीं सर्वसौभाग्यसुन्दरीम् ।
सर्वलक्ष्मीमयीं नित्यां परमानन्द[1]नन्दिताम् ॥ १५७ ॥*

[ ध्यानान्तरम् ]

अथवाऽन्यप्रकारेण ध्यायेद्देवीं सुलक्षणाम् ।
जवाकुसुमसङ्काशां दाडिमीकुसुमारुणाम् ॥ १५८ ॥
सिन्दूरपूररुचिरां बालार्ककिरणोपमाम् ।
तप्तकाञ्चनसङ्काशां पद्मरागमणिप्रभाम् ॥ १५९ ॥
[2]नानासद्रत्नसंयुक्तकिरीटवरभूषणाम् ।
अर्द्धेन्दुमस्तकाक्रान्तकुटिलालकपल्लवाम् ॥ १६० ॥
चमरीबालकुटिलनिर्मलश्यामकेशिनीम् ।
मल्लिकामालतीमालाकवरीपरिवेष्टिताम् ॥ १६१ ॥
नाना[3]सद्रत्नसंयुक्तपट्टगुच्छप्रलम्बिताम् ।
शरदर्धेन्दुकुटिलललाटमृदुपट्टिकाम् ॥ १६२ ॥
केशमध्ये महाभास्वत्सिन्दूरलहरीयुताम् ।
चन्दनागुरुकस्तूरीकुङ्कुमैस्तिलकोज्ज्वलाम् ॥ १६३ ॥
कामकोदण्डसदृशसुभ्रुवं पद्मलोचनाम् ।
आनन्दमुदितो[4]ल्लासलोचनत्रितयान्विताम् ॥ १६४ ॥
[5]शरत्पूर्णेन्दुसदृशसूत्रविस्पष्टनासिकाम् ।
नासाग्रे गजराजोत्थमहामुक्ताविराजिताम् ॥ १६५ ॥

---

१५८—१६३ । अथ ध्यानान्तरमाह—अथवेत्यादिना साधकोत्तम इत्यन्तेन ।

---

* अत्र गन्धर्वतन्त्रे "सर्वदेवमयीं देवीं सर्वमन्त्रमयीं पराम् । सर्वलक्ष्मीमयीं साक्षात् परमानन्दरूपिणीम् ॥" इति पाठो दृश्यते । 1. '-वन्दिताम्' B. 2. 'नाने'त्यादि पादाष्टकं A-B-पुस्तकयोर्नास्ति । 3. '-रत्नसमायुक्त-' C. 4. '-ल्लोल-' C. 5. 'तिलप्रसून-' C.

सुचारुवृत्तगण्डेन विजितामृतमण्डलाम् ।
शरत्पूर्णेन्दुसदृश[1]मुखमण्डलमण्डिताम् ॥ १६६ ॥
ईषत्[2]सहास्यवदनजितमाधुर्यसागराम् ।
कर्णोपरिस्फुरद्रत्नपत्रिकावरराजिताम् ॥ १६७ ॥
[3]आनन्दरत्नघटितकर्णभूषणभूषिताम् ।
स्फुरद्रत्नसमूहेन विलसद्धेमकुण्डलाम् ॥ १६८ ॥
कर्णभूषणतेजोभिः कपोलस्थलमञ्जरीम् ।
बन्धूकारुणसिन्दूरबिम्बोष्ठीममृतोपमाम् ॥ १६९ ॥
बीजपूरस्फुरद्बीजदन्तपङ्क्तियुगान्विताम् ।
अनौपम्यगुणोपेतचिबुकस्थलराजिताम् ॥ १७० ॥
नानारत्नसमायुक्तग्रीवाभूषणभूषिताम् ।
मुक्तामणिप्रवालस्य निकरैः कण्ठभूषिताम् ॥ १७१ ॥
प्रवालवल्लीसादृश्यबाहुवल्लीचतुष्टयाम् ।
कुङ्कुमारुण[4]सङ्काशसुकोमलकराम्बुजाम् ॥ १७२ ॥
पाणिपद्मनखज्योत्स्नाविताननितनभ[5]स्थलाम् ।
सद्रत्नगणसंयुक्तकेयूरवर[6]भूषिताम् ॥ १७३ ॥
नवरत्नसमायुक्तपट्टसूत्रप्रलम्बिताम् ।
नागेन्द्रदन्तशङ्खेन मणिबन्धविराजिताम् ॥ १७४ ॥
अनर्घ्यरत्नघटित[7]कङ्कणैः परिमण्डिताम् ।
[8]अङ्गुलीयकरत्नेन विराजितदिगन्तराम् ॥ १७५ ॥

---

1. '-शङ्ख-' ? B. 2. '-सहास-' B. 3. 'अनेक-' C. 4. '-सङ्काशैः' ? A-B. 5. '-स्तलाम्' B. 6. '-भूषणाम्' C. 7. '-कङ्कालैः' A-B. 8. 'अङ्गुरीयक-' C.

सत्त्वरज[1]स्तमोभूतपाशं वामकरे धृताम् ।
भृङ्गपङ्क्तिगुणाक्रान्तमिक्षुचापविधारिणीम् ॥ १७६ ॥
अष्टधातुसमायुक्तमङ्कुशं दक्षिणे करे ।
रक्तोत्पलाब्जकुमुदकुन्दाम्राङ्कुरसम्भवान् ॥ १७७ ॥
तदधः पञ्चबाणांश्च दधतीं त्रिपुरेश्वरीम् ।
आयुधस्य प्रताकाशैर्नभस्तलविराजिताम् ॥ १७८ ॥
आनन्दहारसन्दोहविराजितपयोधराम् ।
पृष्ठदेशे स्फुरद्रत्नपट्टगुच्छप्रलम्बिताम् ॥ १७९ ॥
सुवृत्तनिविडोत्तुङ्गपीवरस्तनमण्डलाम् ।
पयोधर[2]भरानम्रसुचारुक्षीणमध्यमाम् ॥ १८० ॥
नाभिपद्माद्रोमराजिलताकुचसमीपगाम् ।
गन्धचन्दनकस्तूरीविलेपितकलेवराम् ॥ १८१ ॥
काञ्चना[3]ञ्चित[4]काञ्चोली[5]परिपूरितभूषिताम् ।
सुचारुत्रिवलीयुक्तमध्यदेशसुशो[6]भिताम् ॥ १८२ ॥
[7]क्वणत्काञ्चीसमायुक्तनितम्बबिम्बमण्डलाम् ।
सुवर्णसूत्ररचितरक्त[8]पट्टपटान्विताम् ॥ १८३ ॥
[9]पटाञ्चलसमा[10]युक्तसद्रत्नवरभूषिताम् ।
अनेकरत्नरचितचारुमेखलयाऽन्विताम् ॥ १८४ ॥
करीन्द्र[11]करसादृश्यसुकुमारोरुयुग्मकाम् ।
कदलीललितस्तम्भचारुजङ्घायुगान्विताम् ॥ १८५ ॥

---

1. '-स्तमोद्भूत-' B. 2. '-भवा-' B. 3. '-ञ्चल-' C. 4. '-काञ्चूली-' C. 5. '-परिभूरिविभूषिताम्' C. 6. '-भनाम्' C. 7. 'रणत्-' C. 8. '-पद्म-' C. 9. 'पटाञ्चन-' A. 10. '-युक्तां' C. 11. '-वर-' B.

तरुणारुणपादाब्ज[1]रणन्नूपुरराजिताम् ।
मुक्तामणिप्रवालैश्च पाद[2]पद्मविभूषिताम् ॥ १८६ ॥
प्रवालाङ्कुरसादृश्यपादाङ्गुलिप्रकाशिताम् ।
पादाङ्गुलिनखज्योतिःशरदिन्दुतिरस्कृताम् ॥ १८७ ॥
सुकोमललसन्मालापादपद्मप्रलम्बिताम् ।
ब्रह्मविष्णुशिरोरत्नैः प्रकाशितपदाञ्चलाम् ॥ १८८ ॥
कामराजाङ्कमारूढां शिवसिंहासनस्थिताम् ।
सर्वशृङ्गारवेशाढ्यां सर्वाभरण[3]भूषिताम् ॥ १८९ ॥
शरदिन्दुसहस्रस्य कान्तिसन्तान[4]हारिणीम् ।
कर्पूरादिसमायुक्तताम्बूलपूरिताननाम् ॥ १९० ॥
मुखप्रसादवचनै[5]र्जितमाधुर्यसागराम् ।
कर्ण[6]चुम्बिस्फुरन्नीललोलात्क्षेपसुन्दरीम् ॥ १९१ ॥
जगदाह्लादजननीं जगत्कारणरूपिणीम् ।
सर्वमन्त्रमयीं देवीं जगद्रञ्जनकारिणीम् ॥ १९२ ॥
नानासद्रत्नसंयुक्तश्वेतच्छत्रविराजिताम् ।
कोटिकोटिधूपदीपैः परिवेष्टितमण्डलाम् ।
शब्दब्रह्ममयीं नित्यां भावयेत् साधकोत्तमः ॥ १९३ ॥

[ निरुक्तध्यानप्रशस्तिः ]

एवं परिणतां देवीमात्मानं चिन्तयेत् सदा ।
तदाविष्टः सदा स स्यात्तथावेशः सदा भवेत् ॥ १९४ ॥

1. '-वरनूपुर-' B. 2. '-पल्लव-' C. 3. '-मण्डिताम्' C. 4. '-ह्लादिनीम्'(?) C.
5. '-र्निज-' B. 6. '-चिन्वी-(?)' B.

तथाभिनयशीलश्च तथा[1]चारस्तथा[2]शुचिः ।
सदा कामेश्वरो भूत्वा कामभोगान् समाचरेत् ॥ १९५ ॥
एवं हि ध्यानयोगेन भवेन्ना[3]न्यमना यदि ।
तदा तन्मयतामेत्य जीवन्मुक्तो भवेत् सदा ॥ १९६ ॥
निर्विकल्पः सदा ध्यानान्निः[4]सङ्गो जायते सदा ।
जरामरणमुक्तश्च महा[5]भोगी महासुखी ॥ १९७ ॥
अव्याहताज्ञः सर्वत्र विचरेद् [6]भुवनत्रयम् ।
नास्ति पापं नास्ति पुण्यं साक्षादेवः[7] शिवो भवेत् ॥१९८॥
एवं [8]सिद्धो दृढाभ्यासान्नानारूपाणि [9]धारयेत् ।
स्थूलसूक्ष्मविभेदेन दृश्या[10]दृश्यश्च जायते ॥ १९९ ॥
पञ्चभूतात्मकं रूपं सूर्याचन्द्रमसोरपि ।
ब्रह्मादीनां तथा रूपं देवगन्धर्वरक्षसाम् ॥ २०० ॥
पतत्त्रिणां पन्नगानामिच्छयैव हि जायते ।
कल्पनादेव नश्यन्ति सिद्ध[11]यो वा जगत्त्रये ॥ २०१ ॥
सर्व[12]भूतानि संवेत्ति सर्वत्रा[13]व्याहता गतिः ।
मारणोच्चाटनं चैव स्तम्भनं मोहनं तथा ॥ २०२ ॥
दृष्ट्वैव कुरुते सर्वं कल्पनादेव साधकः ।
दासवत्त्रिजगत् सर्वं तस्मै बलिमुपाहरेत् ॥ २०३ ॥

---

२०३ । बलिं पूजाम् ।

---

1. '-पर-' B. 2. 'रुचिः' B. 3. '-न्यासना' ? B. 4. '-शङ्को' B. 5. '-योगी' B. 6. 'भुवनत्रये' C. 7. '-देव' B. 8. 'सिद्धिदृढान् न्यासा-' B. 9. 'वारयेत्' B. 10. '-हृदयः प्र-' C. 11. '-योगा' C. 12. '-भूतहतं' C. 13. '-भ्याहता' B.

कर्त्ता हर्त्ता तथा [1]पाता शिवतुल्यो भवेत् सदा ।

[ निरुक्तस्वरूपाया देव्या हृदयादावाहनम् ]

एवं तां हृदयाम्भोजान्मुद्रयावाहयेत्ततः ॥ २०४ ॥

[ त्रिखण्डा मुद्रा ]

परि[2]वर्त्त्यकरौ कृत्वा अङ्गुष्ठौ कारयेत् समौ ।
धारयेत्तर्जनीभ्याञ्च कनिष्ठाद्यद्वयं ततः ॥ २०५ ॥
मध्यमायुगलं मध्ये स्थापयित्वा कनिष्ठके ।
निजस्थाने समायोज्य [3]स्थापयेत् साधकोत्तमः ॥ २०६ ॥
त्रिखण्डेयं [4]समाख्याता त्रिपुरा[5]ह्वानकर्मणि ।

[ त्रिखण्डया देव्या आवाहनम् ]

अनयावाहयेद्देवीं श्रीमत्त्रिपुरसुन्दरीम् ॥ २०७ ॥

[ पुष्पाञ्जलौ समानयनम् ]

वहन्नासा[6]पुटेनैव [7]वहन्तीं परमां कलाम् ।
पुष्पाञ्जलौ समानीय पूर्वोक्तां भैरवीं जपन् ॥२०८॥

---

२०५—२०६ । त्रिखण्डामुद्रामाह तन्त्रसारे—

परिवर्त्य करौ स्पृष्टावङ्गुष्ठौ कारयेत् समौ ।
अनामान्तर्गते कृत्वा तर्जन्यौ कुटिलाकृती ॥
कनिष्ठके नियुञ्जीत निजस्थाने महेश्वरि ।
त्रिखण्डेयं समाख्याता त्रिपुराध्यानकर्मणि ॥

२०८ । वहन्नासापुटेनेति । नासापुटप्रवाहितवायुना वहन्तीं विनिःसरन्तीम् । एवञ्च हृत्पङ्कजे देवीं ध्यात्वा नासारन्ध्रप्रवाहिवायुना तां विनिःसार्य पुष्पाञ्जलौ समानीय 'महापद्मे'त्यादिना तस्मादञ्जलेर्देवीं महायन्त्रे स्थापयेदिति क्रमः । अञ्जलि-वियोजनन्तु स्थापनात् पूर्वं न कर्त्तव्यम् । स्फुटमाह गन्धर्वतन्त्रे त्रयोदशपटले—

प्राणायामं ततः कृत्वा गृह्णीयात् कुसुमाञ्जलिम् ।
पुष्पाञ्जलिं विना देवीं नाऽऽवाहयेत् कदाचन ।
ततो ध्यायेन्महादेवीं यथोक्तां परमेश्वरीम् ।

---

1. 'पोता' B. 2. '-वर्ण्य' B. 3. 'चरयेत्' ? ( रचयेत् ) C. 4. 'महामुद्रा' C. 5. '-ध्यान-' B. 6. '-पदे-' C. 7. 'स्फुरन्तीं' C.

[ प्रार्थनामन्त्रः ]

महापद्मवनान्तःस्थे कारणानन्दविग्रहे ।
सर्वभूतहिते मातरेह्येहि परमेश्वरि ॥ २०६ ॥

[ यन्त्रे देव्याः स्थापनम् ]

इत्युच्चार्य महायन्त्रे स्थापयेत् परदेवताम् ॥ २१० ॥

[ आवाहनी मुद्रा ]

ऊर्ध्वा[1]ञ्जलिमधः कुर्यादियमावाहनी भवेत् ।

[ स्थापनी मुद्रा ]

इयन्तु विपरीता स्यात्तदा वै स्थापनी भवेत् ॥ २११ ॥

[ सन्निधापनी मुद्रा ]

ऊर्ध्वा[2]ङ्गुष्ठौ मुष्टियुगं तदेयं सन्निधापनी ।

[ सन्निरोधिनी मुद्रा ]

अन्तराङ्गुष्ठमुष्टिभ्यां तदेयं सन्निरोधिनी ॥ २१२ ॥

---

प्रत्यक्षीकृत्य हृदये जितप्राणोऽथ साधकः ।
ऐक्यं सञ्चिन्तयेद्देव्या बाह्यान्तर्मूर्त्तियुग्मयोः ।
ततस्तु वायुबीजेन वहन्नासापुटेन तु ।
तच्चैतन्यं विनिःसार्य पुष्पाञ्जलौ निवेशयेत् ।
नासिकावायुनिःसारात् पुष्पस्था देवता भवेत् ।
यावत् संस्थापयेद्देवीं स्वहस्तं न वियोजयेत् ।
कृते वियोगे हस्तस्य पुष्पात्तस्मान्महेश्वरि ।
गन्धर्वैः पूज्यते देवी पूजकैर्नाऽऽप्यते फलम् ॥ इति ।

२११ । ऊर्ध्वेति । ऊर्ध्वं स्थितमञ्जलिमधःकुर्यादवनमयेदित्यर्थः । न तु ऊर्ध्वमुखमञ्जलिमधोमुखं कुर्यादित्यर्थः कल्पनीयः, वक्ष्यमाणस्थापनीमुद्रया विरोधात् ।

हस्ताभ्यामञ्जलिं बद्ध्वाऽनामिकामूलपर्वणोः ।
अङ्गुष्ठौ निक्षिपेत् सेयं मुद्रा त्वावाहनी स्मृता ॥

इति तन्त्रसारधृतवचने स्पष्टमभिधानाच्च । इयन्त्विवति विपरीता अधोमुखी । तदुक्तं तन्त्रसारे— अधोमुखी त्वियं चेत् स्यात् स्थापनीमुद्रिका स्मृता । इति ।

---

1. '-ङ्गलि-' C. 2. '-ञ्जलौ' A-B.

[ आवाहनस्वरूपम् ]

[1]स्वत एवाभिपूर्णाया देवतायाः प्रपूजने ।
सादरं संमुखीभाव आवाहनमिहोच्यते ॥ २१३ ॥

[ स्थापनस्वरूपम् ]

विभोर्नि[2]वेशनं यन्त्रे स्थापनं कथितं बुधैः ॥ २१४ ॥
पूजां प्रपूज्य[3]मानस्तु गृहीत्वाऽनुग्रहादि[4]कम् ।

[ सन्निधापनस्वरूपम् ]

कर्त्तुं सान्निध्य[5]मस्यास्तु तत्सान्निध्यं [6]प्रचक्षते ॥ २१५ ॥

[ सन्निरोधस्वरूपम् ]

[7]आकर्मकाण्डपर्यन्तं सान्निध्यं हि विभोश्च यत् ।
[8]स सन्निरोध उद्दिष्टो भक्तितो मन्त्रविन्नरैः ॥ २१६ ॥

[ अवगुण्ठनम् ]

आनन्दायतनं तत्त्वं सच्चिदानन्दलक्षणम् ।
तदत्र [9]सकले व्याप्तं ध्येयं स्यादवगुण्ठनम् ॥ २१७ ॥

[ सकलीकरणम् ]

सकलीकरणं कृत्वा मन्त्रैः षड्भिरथैकताम् ।

[ अमृतीकरणम् ]

अङ्गनामङ्गला(?)सार्द्धं विदध्यादमृताकृतम् ॥ २१८ ॥

[ परमीकरणम् ]

क्षमा तस्थापराधानां विज्ञेया [10]परमीकृतिः ॥ २१९ ॥

[ जीवन्यासः ]

जीवन्यासं ततः कुर्यात् पूर्वोक्तमन्त्रमुच्चरन् ॥
[11]कुशस्य विष्टरेणापि लेलिहानेन वा बुधः ॥ २२० ॥

---

1. 'अत' B. 2. '-वासनं' C. 3. '-मानान्तु' B. 4. '-काम्' B. 5. '-मस्तान्तं' ? B. 6. 'प्रचक्ष्यते' B. 7. 'आकर्ण-' ? A-B. 8. 'समं निरोध्य' B. 9. 'सकलं' B. 10. 'परमा कला' A. 11. 'ईशस्य च विष्टनापि' ? B.

[ लेलिहामुद्रा ]

तर्जनीमध्यमानामाः समं कुर्यादधोमुखम्(?)।
अनामायां क्षिपेद् वृद्धामृजुं कृत्वा कनि[1]ष्ठिकाम्।
[2]लेलिहा नाम मुद्रेयं जीवन्यासे प्रकीर्त्तिता ॥ २२१ ॥

[ सकलीकरणस्वरूपम् ]

वह्न्यादिदिक्षु वा देव्यास्तत्तदङ्गेषु वा सुधीः।
षडङ्गं कल्पयेदेतत् सकलीकरणं भवेत् ॥ २२२ ॥

[ त्रितालादिपरमीकरणान्तं कर्म ]

त्रितालं दशदिग्बन्धमवगुण्ठनमाचरेत्।
धेन्वाख्ययाऽमृतीकृत्य परमीकरणञ्चरेत् ॥ २२३ ॥

[ परिवारदेवतास्वरूपम् ]

एवं कृत्वा तच्छरीरान्मयूख[3]निकरान् बहिः।
विनिःसृत्य स्थिरीभूतं परिवारं विचिन्तयेत ॥ २२४ ॥

---

२२२। वह्न्यादीति। तत्तदङ्गेषु हृदयादिषडङ्गेषु। 'षडङ्गं कल्पयेदि'ति षडङ्गमन्त्रैरित्यर्थः। तदुक्तं गन्धर्वतन्त्रे त्रयोदशपटले—

अङ्गमन्त्रान् न्यसेद्देवि देव्यङ्गे साधकोत्तमः।
सकलीकरणं नाम मुद्रेयं व्याप्तिरूपिणी ॥ इति।

२२३। त्रितालादिक्रमः पूर्वमेव विशदीकृतः। परमीकरणञ्चरेदिति परमीकरणमुद्रयेत्यर्थः। परमीकरणमुद्रामाह तन्त्रसारे—

अन्योन्यग्रथिताङ्गुष्ठा प्रसारितपराङ्गुली।
महामुद्रेयमुदिता परमीकरणे बुधैः ॥

इति। परमीकरणस्वरूपमाह गन्धर्वतन्त्रे त्रयोदशपटले—

सर्वापराधजातानां सहिष्णुत्वप्रकाशकम्।
परमीकरणं नाम संप्रार्थनमिहोच्यते ॥ इति।

२२४। एवमिति। देवीशरीरान्मयखरूपेण बहिराविर्भूता देवता एव परिवारा इत्यर्थः।

---

1. '-ष्ठकाम्' C. 2. 'लेलिहानाख्यमु-' B. 3. '-निकराद्' C.

[ मुद्रानवककदर्शनोपदेशः ]

वक्ष्यमाणोक्तविधिना नव मुद्राः प्रदर्शयेत् ।

[ तत्र सर्वसंक्षोभणी मुद्रा ]

मध्यमामध्यमे कृत्वा [1]कनिष्ठेऽङ्गुष्ठरोधिते ॥ २२५ ॥
तर्जन्यौ दण्डवत् कृत्वा मध्यमोपर्यनामिके ।
सर्वसंक्षोभणीनाम्नो मुद्रेयं क्षोभयेज्जगत् ॥ २२६ ॥

[ सर्वविद्रावणी मुद्रा ]

एतस्या एव मुद्राया मध्यमे सरले यदा ।
सर्वविद्रावणीनाम्नी मुद्रेयं द्राव[2]येत् क्षणात् ॥ २२७ ॥

[ सर्वाकर्षिणी मुद्रा ]

[3]मध्यमा तर्जनी युग्मे [4]वक्रे कुर्याद् यथाविधि ।
एतस्या एव मुद्रायास्तदाकर्षण[5]कर्मणि ॥ २२८ ॥

---

२२५—२२६ । अथ त्रिपुरार्चने दर्शयितव्या नव मुद्राः क्रमेण निरूपयति—वक्ष्यमाणेत्यादिना । तत्र प्रथमां सर्वसंक्षोभणीमुद्रामाह—मध्यमेत्यादिना । अत्र कनिष्ठेऽङ्गुष्ठरोधित इति सन्धिरार्षः । हस्तयोर्मध्यमाङ्गुलेर्मध्यमे पर्वणि स्थापिते कनिष्ठे अङ्गुष्ठाभ्यां रोधिते कृत्वा तर्जनीद्वयं दण्डवत् सरलं कृत्वा अनामिकाद्वयं मध्यमाद्वयोपरि स्थापयेदिति फलितार्थः । सर्वजगत्संक्षोभणकारित्वादस्या मुद्रायाः सर्वसंक्षोभणीति संज्ञा ।

तदुक्तं तन्त्रसारे—

मध्यमामध्यगे कृत्वा कनिष्ठेऽङ्गुष्ठरोधिते ।
तर्जन्यौ दण्डवत् कृत्वा मध्यमोपर्यनामिके ।
एषा च प्रथमा मुद्रा सर्वसंक्षोभकारिणी । इति ।

२२७ । द्वितीयामाह—एतस्या इति । एतस्याः सर्वसंक्षोभण्या मुद्राया मध्यमाङ्गुल्यौ सरले अवक्रे चेत् सर्वविद्रावणी मुद्रा भवति । तन्त्रसारेऽप्याह—

एतस्या एव मुद्राया मध्यमे सरले यदा ।
क्रियेते परमेशानि सर्वविद्राविणी तदा ॥ इति ।

२२८ । तृतीयामाह—मध्यमेति । निरुक्तमुद्राया मध्यमातर्जन्योरुभयोर्वक्रत्वे सर्वाकर्षिणी मुद्रा भवति । मुद्रा चैषा साधकजगदाकर्षणशक्तिमाविर्भावयति ।

मध्यमातर्जनीभ्याञ्च कनिष्ठानामिके समे ।
अङ्कुशाकाररूपाभ्यां मध्यमे परमेश्वरि ।

---

1. 'कनिष्ठाङ्गुष्ठरोधितः' B. 2. '-येज्जगत्' C. 3. 'मध्यमे तर्जने' ? B.
4. 'वक्रे' B. 5. '-कारिणी' B.

[ सर्ववश्यकरी मुद्रा ]

परिवर्त्तनमार्गेण स्वाङ्गुलीः सम्मुखा यजेत् ।
अङ्गुष्ठयो[1]र्वक्त्रदेशे तर्जन्यावङ्कुशाकृती ।
सर्ववश्यकरीनाम्नी मुद्रेयं वशकारिणी ॥ २२९ ॥

[ सर्वोन्मादिनी मुद्रा ]

[2]सम्मुखौ तु करौ कृत्वा मध्यमा[3]मध्यगेऽन्त्यजे ।
अनामिके तु सरले तद्बहिस्तर्जनीद्वयम् ॥ २३० ॥
दण्डाकारौ ततोऽङ्गुष्ठौ मध्यमानखदेशगौ ।
[4]मुद्रैषोन्मादिनीनाम्नी क्लेदिनी सर्वयोषिताम् ॥ २३१ ॥

---

अङ्गुष्ठन्तु नियुञ्जीत कनिष्ठानामिकोपरि ।
इयमाकर्षिणी मुद्रा त्रैलोक्याकर्षिणी परा ।

इति तन्त्रसारधृतवचनानुसारेण तु कनिष्ठानामिकयोरवक्रत्वं कनिष्ठानामिकयोरुपर्यङ्गुष्ठस्थापनञ्चेति विशेषो दृश्यते ।

२२९ । चतुर्थीमाह—परिवर्त्तनेत्यादिना । अत्र पूर्वतो 'मध्यमातर्जनीयुग्म' इत्याद्यध्याहार्यम् । एवञ्चाऽऽभिमुख्येन वक्रयोस्तर्जन्योरधो मध्यमे तदधः परिवर्त्तनक्रमेणानामिके ततस्तेनैव क्रमेण कनिष्ठे अङ्गुष्ठयोर्वक्त्रदेशे अग्रे निविडं सङ्गताः कुर्यात् इत्येवाऽऽह—स्वाङ्गुलीः सम्मुखा यजेदित्यनेन । यजेत् परस्परं सङ्गमयेदित्यर्थः । तर्जन्यौ अङ्कुशाकृती अङ्कुशवद् वक्रे कुर्यात् । न तु अङ्कुशाकृती तर्जन्यौ अङ्गुष्ठयोर्वक्त्रदेशे निवेशयेदिति सम्बन्धः, तन्त्रसारे सर्वासामङ्गुलीनामुपरि अङ्गुष्ठनिवेशनस्य व्यक्तमुक्तत्वात् । तथाच तन्त्रसारे—

पुटाकारौ करौ कृत्वा तर्जन्यावङ्कुशाकृती ।
परिवर्त्तक्रमेणैव मध्यमे तदधोगते ।
क्रमेण देवि तेनैव कनिष्ठानामिके तथा ।
संयोज्य निविडाः सर्वा अङ्गुष्ठावग्रदेशतः ।
मुद्रेयं परमेशानि सर्ववश्यकरी मता ॥ इति ।

२३०-२३१ । अथ पञ्चमीमाह—सम्मुखाविति । करौ परस्परं सम्मुखौ कृत्वा अन्त्यजे कनिष्ठिके मध्यमयोर्मध्यगे मध्यपर्वसंस्थे कुर्यात् । अनामिके सरले अवक्रे

---

1. '-र्वक्र-' C. 2. 'साम्मुख्यौ' A-B. 3. '-मध्यगेऽकुजे' C. 4. 'मुद्रैषोन्मादनी-' C.

[ महाङ्कुशा मुद्रा ]

एतस्या एव मुद्राया अनामातर्जनीक्रमात् ।
अङ्कुशाकाररूपेण योजयेत् साधकोत्तमः ।
इयं महाङ्कु[1]शानाम्नी सर्वकार्यार्थसाधिका ॥ २३२ ॥

[ खेचरी मुद्रा ]

[2]सव्यं दक्षिणहस्ते तु दक्षिणं वामहस्तके ।
परिवेष्टनमार्गेण कनिष्ठानामिके ततः ॥ २३३ ॥
तर्जनीभ्याञ्च संरुध्य मध्यमे सरले ततः ।
योन्याकारस्वरूपेण [3]योजयेत् साधकोत्तमः ॥ २३४ ॥
इयन्तु खेचरीनाम्नी मुद्रा सर्वोत्तमोत्तमा ॥ २३५ ॥

---

कृत्वा तद्वहिस्तर्जनीद्वयं स्थापयेत् । ततो दण्डाकारौ सरलावङ्गुष्ठौ मध्यमानखदेशगौ कुर्यात् मध्यमयोर्नखदेशे सरलावङ्गुष्ठौ योजयेदित्यर्थः । सर्वयोषितां क्लेदिनी आर्द्रता-सम्पादिनीयमुन्मादिनी मुद्रा ।

प्रायः समानुपूर्वीकवचनेनोक्तेयं मुद्रा तन्त्रसारेऽपि—

सम्मुखौ तु करौ कृत्वा मध्यमामध्यगेऽन्त्यजे ।
अनामिके तु सरले तद्वहिस्तर्जनीद्वयम् ॥
दण्डाकारौ ततोऽङ्गुष्ठौ मध्यमानखदेशगौ ।
मुद्रैषोन्मादिनी नाम्ना कर्षिणी सर्वयोषिताम् ॥ इति ।

२३२ । षष्ठीमाह—एतस्या इति । एतस्या उन्मादिनीमुद्रायाः क्रमेणानामिकाद्वयं तर्जनीद्वयञ्च अङ्कुशाकाररूपेण यदि योजयेत् तदा महाङ्कुशाख्या मुद्रा भवति । व्यक्तमाह तन्त्रसारे—

अस्यास्त्वनामिकायुग्ममधःकृत्वाऽङ्कुशाकृती ।
तर्जन्यावपि तेनैव क्रमेण विनियोजयेत् ॥
इयं महाङ्कुशा मुद्रा सर्वकार्यार्थसाधिनी ।

इति । अस्या इति उन्मादिनीमुद्रायाः ।

२३३-२३५ । अथ सप्तमीमाह—सव्यमित्यादिना । सव्यं वामहस्तं दक्षिणहस्ते

---

1. '-शा-' C. 2. 'सव्यो' C. 3. 'रचयेत्' C.

[ खेचरीमुद्राप्रशस्तिः ]

प्रयतोऽप्रयतो वाऽपि शुचिर्वाऽप्यथवाऽशुचिः ।
गच्छंस्तिष्ठन् स्वपन् वाऽपि भुञ्जानो मैथुने रतः ॥ २३६ ॥
[1]मुद्राया मध्यमाङ्गुल्यौ[2] परिवर्त्तक्रमेण तु ।
पार्थिवस्थानसंयुक्ताः सद्यः खेचरतां व्रजेत् ॥ २३७ ॥
एतया ज्ञातया चैव योगिनीनां भवेत् प्रियः ॥ २३८ ॥

[ बीजमुद्रा ]

परि[3]वर्त्त्य करौ [4]स्पृष्टावर्धचन्द्राकृती भवेत् ।
तर्जन्यङ्गुष्ठयुगलं युगपत् कारयेद् बुधः ॥ २३९ ॥
अधः कनिष्ठा[5]वष्टब्धे मध्यमे विनियोजयेत् ।
तथैव [6]कुटिले योज्य सर्वाधस्तादनामिके ॥ २४० ॥

---

दक्षिणञ्च वामहस्ते योजयेत्, ततः परिवेष्टनमार्गेण कनिष्ठानामिके योजयेत् वामहस्तस्य कनिष्ठया दक्षहस्तस्य अनामिकां दक्षहस्तस्य कनिष्ठया वामहस्तस्यानामिकाञ्च परिवेष्टयेदित्यर्थः । तर्जनीभ्यामिति । तथा सरले अवक्रे मध्यमे प्रागुक्तरीत्या तर्जनीभ्याञ्च संरुध्य योन्याकारेण स्थापयेदिति खेचरी मुद्रा ।

सव्यं दक्षिणदेशे तु सव्यदेशे तु दक्षिणम् ।
बाहुं कृत्वा महादेवि हस्तौ संपरिवर्त्त्य च ॥
कनिष्ठानामिके देवि युक्त्वा तेन क्रमेण तु ।
तर्जनीभ्यां समाक्रान्ते सर्वोर्द्ध्वमपि मध्यमे ॥
अङ्गुष्ठौ तु महेशानि सरलावपि कारयेत् ।
इयं सा खेचरी नाम्ना पार्थिवस्थानयोजिता ॥

इति तन्त्रसारधृतवचने तु अङ्गुष्ठयोः सारल्येन अवस्थानमिति विशेषो दृश्यते ।

२३९-२४१ । अष्टमीमाह—परिवर्त्त्येति ।

परिवर्त्त्य करौ स्पष्टावर्धचन्द्राकृती प्रिये ।
तर्जन्यङ्गुष्ठयुगलं युगपत् कारयेत् ततः ॥

---

1. 'मुद्रया' A-B. 2. '-ङ्गुल्या' B. 3. '-वृत्त ?' C. 4. 'कृष्टा-' A. 5. '-संरम्भो' B. 6. 'कुलिने' C.

बीजमुद्रेयमाख्याता सर्वसिद्धिप्रवर्त्तिनी ॥ २४१ ॥

[ योनिमुद्रा ]

मध्यमे कुटिलाकारे तर्जन्युपरिसंस्थिते ।
अनामिकामध्यगते तथैव [1]च कनिष्ठिके ॥ २४२ ॥
सर्वा एकत्र संयोज्य अङ्गुष्ठपरिपीडिताः ।
योनिमुद्रेयमाख्याता त्रैलोक्योत्पत्तिमातृका ॥ २४३ ॥

[ निरुक्तमुद्राबीजनिरूपणप्रतिज्ञा ]

बीजानि क्रमतो वक्ष्ये मुद्राणां तन्त्रवर्त्मना[2] ।

[ मुद्रानवके प्रयोज्यानि बीजानि ]

पञ्चबाणं समुद्धृत्य [3]शूलबीजं लिखेत्ततः ॥ २४४ ॥

---

अधः कनिष्ठावष्टब्धे मध्यमे विनियोजयेत् ।
तथैव कुटिले योज्ये सर्वाधस्तादनामिके ॥
बीजमुद्रेयमचिरात् सर्वसिद्धिविवर्धिनी । इति तन्त्रसारे ।

२४२-२४३ । अथ नवमीं योनिमुद्रामाह—मध्यम इति । कुटिलाकारे मध्यमे तर्जन्युपरिसंस्थिते कुर्यात्, तथा कनिष्ठिके अनामिकामध्यगते विदधीत । ततश्च सर्वा अङ्गुलीरेकत्र संयोज्य अङ्गुष्ठाभ्यामवष्टब्धाः कुर्यादिति योनिमुद्राबन्धनक्रमः । त्रैलोक्योत्पत्तिमातृकेति सर्वोत्पत्तिभूमित्वाद् योनेरित्यर्थः ।

मध्यमे कुटिले कृत्वा तर्जन्युपरिसंस्थिते ।
अनामिके मध्यगते तथैव हि कनिष्ठिके ॥
सर्वा एकत्र संयोज्य अङ्गुष्ठपरिपीडिताः ।
एषा तु परमा मुद्रा योनिमुद्रेयमीरिता ॥ इति तन्त्रसारे ।

एतासां मुद्राणां पूजाकाले प्रयोगमाह तत्रैव—

एता मुद्रा महेशानि त्रिपुरायां मयोदिताः ।
पूजाकाले प्रयोक्तव्याः सन्ध्यानुक्रमयोगतः ॥ इति ।

---

1. 'हि' C. 2. '-वर्त्मनः' A-B. 3. 'भूति-' C.

[1]शिवः शक्तिः कान्तपान्तं भगरेफेन्दुमण्डितम् ।
सदाशिवस्य बीजन्तु वाग्भवं नवमं स्मृतम् ॥ २४५ ॥

[ तर्पणोपदेशः ]

तर्पणञ्च ततः कुर्यात्त्रिवारं तत्त्वमुद्रया ।

[ षोडशोपचारैः पूजनस्योपदेशः ]

उपचारैः षोडशभिः पूजयेत् परमेश्वरीम् ॥ २४६ ॥

२४४-२४५ । अथ क्रमेण निरुक्तसर्वसंक्षोभण्यादिमुद्रासु प्रयोज्यानि बीजानि निरूपयति—पञ्चबाणमित्यादिना । पञ्चबाणबीजानि तु पञ्चदशे 'थान्तद्वयमि'त्यादिना (३४३ श्लो०) मूले टीकायाञ्च प्रदर्शितानि । पञ्चबाणं समुद्धृत्य द्रां द्रीं क्लीं ब्लूं सः इति बीजपञ्चकमुद्धृत्येत्यर्थः । एवञ्च सर्वसंक्षोभण्यादिसर्वोन्मादिन्यन्तमुद्रापञ्चके निरुक्तबीजपञ्चकं प्रयुञ्जीतेति बोध्यम् । ततश्च द्रामित्युक्त्वा सर्वसंक्षोभणीं मुद्रां प्रदर्शयेत् । एवं द्रीं सर्वविद्रावणीम् । क्लीं सर्वाकर्षिणीम् । ब्लूं सर्ववश्यकरीम् । सः सर्वोन्मादिनीम् । शूलबीजं क्रों । एवञ्च क्रोमित्युक्त्वा महाङ्कुशां मुद्रां प्रदर्शयेत् । अथ सप्तम्यां खेचरीमुद्रायां बीजयोजनमुपदिशति—शिव इत्यादिना । शिवो हकारः, शक्तिः सकारः, कान्तः खकारः, पान्तः फकारः, स च फकारो भगेनैकादशस्वरेण रेफेण इन्दुनाऽनुस्वारेण च मण्डितः । एतेन ह स ख फ्रें इत्युक्त्वा खेचरीमुद्रां प्रदर्शयेदिति बोध्यम् । अष्टम्यां बीजमुद्रायां बीजयोगमाह—सदेति । सदाशिवस्य बीजं ह्सौरिति । एवञ्च ह्सौरित्युक्त्वा बीजमुद्रां प्रदर्शयेदित्यर्थः । वाग्भवमिति ऐँ इति वाग्भवबीजपूर्विकां नवमीं योनिमुद्रां प्रदर्शयेदित्यर्थः । गन्धर्वतन्त्रे त्रयोदशपटले—

सन्दर्शयेत् स्वस्वबीजपूर्वं मुद्रास्ततो नव ।
संक्षोभद्रावणाकर्षवश्योन्मदमहाङ्कुशाः ।
खेचरीबीजयोन्याख्या नव मुद्रास्ततः क्रमात् ।
एता मुद्रा महेशानि बन्धूककुसुमप्रभाः ॥
स्वस्वमुद्राकराः सर्वाः श्रीविद्यासम्मुखी स्मरेत् ॥ इति ।

२४६ । तर्पणञ्चेति । तत्त्वमुद्रालक्षणमाह गन्धर्वतन्त्रे त्रयोदशपटले—

अङ्गुष्ठानामिकायोगं (:) तत्त्वमुद्रेयमीरिता ।

1. 'शिवशक्तिफान्तपान्तक्रमाद्रेफे समन्वितम्' B.

त्रितत्त्वैर्वह्निजायान्तैस्त्रिधाऽर्घ्यं परिकल्पयेत् ॥ २४७ ॥

मूलस्य च त्रिषु त्रीणि बीजानि [1]विनियोज्य च ।

बालामन्त्रेण मन्त्रज्ञ उपचारान्निवेदयेत् ॥ २४८ ॥

[ षोडशोपचाराः ]

आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ।

मधुपर्काचमनस्नानवसनाभरणानि च ॥ २४९ ॥

सुगन्धसुमनोदीपधूपनैवेद्यवन्दनाः ।

प्रयोजयेदर्चनायामुपचारांस्तु षोडश ॥ २५० ॥

[ तत्र कल्पान्तरम् ]

अथवा कल्पयेन्मन्त्री पाद्यार्घ्याचमनीयकम् ।

स्नानं वस्त्रं तथा भूषां गन्धप्रसूनधूपकम् ॥ २५१ ॥

[2]प्रदीपकञ्च नैवेद्यमाचान्तार्थं[3] जलं पुनः ।

ताम्बूलमर्चना स्तोत्रं तर्पणञ्च नमस्क्रिया ।

प्रयोजयेदर्चनायामुपचारांस्तु षोडश ॥ २५२ ॥

---

अङ्गुष्ठं शिवमित्याहुरनामा शक्तिरुच्यते ॥

तर्पणन्तु तयोर्योगादमृतैर्वामपाणिना ॥ इति ।

उपचारैरिति । उपचारपदव्युत्पत्तिमाह तत्रैव—

भक्त्यैवैते कृता देवे साधकं देवसन्निधिम् ।

चारयन्ति यतस्तस्मादुच्यन्ते चोपचारकाः ॥

समीपे चरणाद्वा ऽपि कलाकान्ते तथोदिताः ॥ इति ।

२४९—२५४ । अथ क्रमेणोपचारान् विभजते—आसनमित्यादिना पञ्चोपचारिका इत्यन्तेन । स्पष्टम् । तत्राऽऽसने विशेषमाह गन्धर्वतन्त्रे चतुर्दशपटले—

सौवर्णं राजतं वास्त्रं तथा रत्नविनिर्मितम् ।

आसनं प्रथमं दद्यात् पौष्पं दारवमेव वा ॥

---

1. 'योजयेत्ततः' C. 2. 'प्रदीपञ्चैव' C. 3. '-र्थ-' C.

[ दशोपचाराः ]

अर्घ्यं पाद्यं निवेद्याथ जलमाचमनीयकम् ।
मधुपर्कञ्चाऽऽचमनं गन्धप्रसूनके ततः ।
धूपदीपौ च नैवेद्यं दशोपचारकं स्मृतम् ॥ २५३ ॥

[ पञ्चोपचाराः ]

गन्धादयो [1]नैवेद्यान्ताः पूजाः पञ्चोपचारिकाः ।

[ क्रमेणैतेषामुत्तममध्यमाधमत्वम् ]

उत्तमा मध्यमा चैव बुधैरुक्ताऽधमा क्रमात् ॥ २५४ ॥

[ उपचारेषु कस्यचिदलाभे व्यवस्था ]

उपचारेषु सर्वेषु यत्किञ्चिद्दुर्लभं भवेत् ।
तत् सर्वं मनसा ध्यात्वा पुष्प[2]क्षेपेण कल्पयेत् ॥ २५५ ॥

---

न पलमासनं दद्यात् कदाचिदिह पूजने ।
यथोक्तविधिना देव्यै रक्तकम्बलमेव वा ॥
स्वमेरुपादपीठान्ते पञ्चकल्पितमासनम् ।
भोगमोक्षप्रदे मातस्तिष्ठस्व परमेश्वरि ॥
अनेनैवाऽऽसनं देव्यै यो दद्याद्विहितं शिवे ।
भुक्तिमुक्ती करे तस्य सर्वत्र स्थानवान् भवेत् ॥

इति । अन्येषामप्युपचाराणां स्वरूपमत्रैव प्रदर्शितं नेहोच्यते विस्तरभयात् । पञ्चोपचारानाह—गन्धादय इति । व्यक्तमाह निबन्धतन्त्रे पञ्चपञ्चाशत्तमपटले—

गन्धपुष्पधूपदीपनैवेद्यमिति पञ्चकम् ।
निवेदयेत् सदाऽर्चायां पूजाः पञ्चोपचारिकाः ॥

इति । उत्तमेति । षोडशोपचारिका उत्तमा, दशोपचारिका मध्यमा, पञ्चोपचारिका अधमा पूजेत्यर्थः ।

२५५ । उपचारेष्विति । कस्यचिदुपचारस्याभावे पुष्पमेव तदुपचारत्वेन कल्पयित्वा देव्यै निवेदयेदित्यर्थः ।

---

1. '-नि-' C. 2. '-क्षेत्रन्तु कारयेत्' B.

[ प्रत्युपचारानन्तरं जलदानम् ]

तत्र तत्र जलं दद्यादुपचारान्तरान्तरा ।

[ देवीशिरसि पुष्पदानम् ]

देवतायाः शिरः कुर्यात् कुसुमोपहितं सदा ॥ २५६ ॥

[ देव्या ऊर्ध्वं करभ्रामणनिषेधः ]

पूजाकाले देवताया नोपरि भ्रामयेत् करम् ।

[ पुष्पाद्यभावे व्यवस्था ]

पूजयेत् परमेशानीं पुष्पाभावे तु पत्रकैः ॥ २५७ ॥

पत्राणामप्य[1]भावे तु तृणगुल्मौषधादिभिः ।

ओषधीनामभावे तु तत्फलैरपि पूजयेत् ॥ २५८ ॥

अक्षतैर्वा जलैर्वाऽपि तदभावे तु सर्षपैः ।

[2]सितैस्तथाऽप्यलाभे तु मानसीं भक्तिमाचरेत् ॥ २५९ ॥

---

२५७। पूजयेदिति पुष्पाभावे पत्रादिभिरर्चयेत्, परं तु कदाऽपि पूजालोपं न विदधीत, निरुक्तानामेकतमस्याप्यलाभे मानसीं पूजां विदधीत ; तयैव पूजासिद्धिर्भवतीति भावः। व्यक्तमाह गन्धर्वतन्त्रे चतुर्दशपटले—

पुष्पाभावे यजेत् पत्रैः पत्रालाभे च तत्फलैः ।

अक्षतैर्वा जलैर्वाऽपि न पूजां व्यतिलङ्घयेत् ॥

एतेषामप्यलाभे तु मानसीं भक्तिमाश्रयेत् ।

इति। अत्र 'पुष्पाभावे यजेत् पत्रैरि'ति सामान्यतः पत्रविधाने सत्यपि—

पत्रेषु बिल्वपत्रञ्च तथा मदनपल्लवम् ।

दूर्वाङ्कुरं तथा प्रोक्तं नान्यत् पत्रं प्रयोजयेत् ॥

इति गन्धर्वतन्त्रचतुर्दशपटलवचनसंवादात् 'न पत्रैरर्चयेच्छिवामि'त्यनेन सामान्यतः पत्रकरणकार्चानिषेधाच्च पुष्पाभावे निरुक्तबिल्वादिपत्रैरेव पूजनं विधेयं न तु पत्रान्तरैरिति ज्ञेयम् ।

---

1. '-लाभे' C. 2. 'तिल-' B.

[ पुष्पाद्युपचाराणां परत्वापरत्वादि ]

परापरोत्तमञ्चैव मध्यमञ्च तथाऽधमम् ।
सौवर्णं परमं प्रोक्तमपरं चित्रवस्तुजम् ॥ २६० ॥
वृक्ष[1]गुल्मोद्भवं पुष्पमुत्तमं परिकीर्त्तितम् ।
अधमं पत्रतोयादि मध्यमन्तु फलात्मकम् ॥ २६१ ॥

[ पुष्पनिवेदनक्रमः ]

[2]ज्ञानाख्यमुद्रया मन्त्री चक्रे पुष्पं निवेदयेत् ।

[ ज्ञानमुद्रा ]

अङ्गुष्ठतर्जनीभ्यान्तु ज्ञानमुद्रा प्रकीर्त्तिता ॥ २६२ ॥

[ पुष्पादिदाने विशेषः ]

यथोत्पन्नं तथा पुष्पं तथा दद्याच्च पत्रकम् ।
पुष्पाञ्जलिप्रदाने तु न भवेन्नियमस्त्वयम् ॥ २६३ ॥
नाधोमुखं फलं दद्यादिति शास्त्रस्य निर्णयः ।

[ तर्पणम् ]

तर्पयेन्मूलमन्त्रेण त्रिवारं [3]पूर्ववत् सुधीः ॥ २६४ ॥

[ देव्या उद्वर्तनाद्यलङ्कारदानान्तं कर्म ]

स्ववाममण्डले नीत्वा देवीमुद्वर्त्तनादिकम् ।
[4]मनःपूजाक्रमैः स्नानं वाससा तनुमार्जनम् ॥ २६५ ॥
सर्वालङ्करणं दत्त्वा [5]मण्डले तां समानयेत् ।

[ पाद्याद्यर्पणम् ]

पूर्ववद् वन्दनं [6]कृत्वा पाद्यादीनि निवेदयेत् ॥ २६६ ॥

---

२६५ । मनःपूजाक्रमैरिति । सप्तदशपटलोक्तमानसार्चनविहितस्नानक्रमैः देव्याः स्नानं निर्वर्त्तयेदित्यर्थः ।

---

1. '-गुल्मलता-' C. 2. 'तिलाक्ष- ?' B. 3. 'पूजयेत्' A-B. 4. 'नमः पूजाक्रम-' A-B. 5. 'तां देवीं सममानयेत्' B. 6. 'दत्त्वा' A-B.

[ गन्धाद्यर्पणम् ]

गन्धचन्दनधूपैस्तु दीपैर्नानाफलैरपि ।
शर्करामिश्रपयसा घृतेन मधुना [1]फलैः ।
दध्ना च परमान्नेन भवानीं परितोषयेत् ॥ २६७ ॥

[ नैवेद्यनिवेदनक्रमः ]

[2]मूलं देव्याः स्वनामान्ते नैवेद्यमिति चोच्चरन् ।
गृहाण वह्निजायान्ते नैवेद्यमुत्सृजेदिति ॥ २६८ ॥

[ बलिदाने विशेषः ]

न राजा मेषमाहिषबलिदानं समाचरेत् ।
सिंहव्याघ्रनरांश्चैव न दद्याद् ब्राह्मणोत्तमः ॥ २६९ ॥

[ व्यजनाद्युपचारैर्देव्याः परितोषविधानम् ]

व्यजनैः शुद्धसिन्दूरैर्घण्टाचामर[3]दर्पणैः[4] ।
वितानच्छत्रताम्बूलैः कस्तूरीकुङ्कुमादिभिः ॥ २७० ॥
रोचनागुरुकर्पूरैस्तथा लाक्षारसेन च ।
नृत्यैर्गीतैश्च वाद्यैश्च तोषयेत् परमेश्वरीम् ॥ २७१ ॥

---

२६८। नैवेद्यनिवेदनक्रममाह—मूलमित्यादिना । आदौ मूलं ततो देव्याः स्वनाम ततो नैवेद्यमिति गृहाणेति च पदद्वयं वह्निजाया स्वाहेति । एवञ्च मूलं ततः श्रीमत्त्रिपुरसुन्दरि नैवेद्यं गृहाण स्वाहेति मन्त्रः पर्यवस्यति ।

२६९। बलिदाने विशेषमाह—न राजेति। सामान्यतो बलिदाने विहितेष्वपि पशुषु राजा मेषमहिषबलिं तथा ब्राह्मणोत्तमः सिंहादिबलिं न विदधीतेत्यर्थः ।

---

1. 'जलैः' A-B. 2. 'मूले' B. 3. '-तर्पणैः ?' A-B. 4. इतः परं C-पुस्तके 'तत् सर्वं मनसा ध्यात्वा पुष्पक्षेपेण कल्पयेत् । तत्र तत्र जलं दद्यादुपचारं तदन्तरा । देवतायाः शिरः कुर्यात् कुसुमोपहितं सदा ।' इत्यधिकः पाठो दृश्यते । परं पुनरुक्ततया प्रतिभानादसङ्गतेश्च नायं पाठो मूले निवेशितः ।

[ तर्पणम् ]

दत्त्वा नानाविधं द्रव्यं हेतुभिस्तर्पयेत् पराम् ।

[ परिवारदेवतार्चोपदेशः ]

गृहीत्वाज्ञां महादेव्याः परिवारांस्ततोऽर्चयेत् ॥ २७२ ॥

[ तत्र षण्णामङ्गदेवतानां पूजा ]

यथा सर्वज्ञता तृप्तिरनादिबोधसंज्ञिका ।
स्वतन्त्रा नित्य[1]तृप्ताऽन्या तथा[2]ऽनन्तक्रमादिमाः ॥ २७३ ॥

---

२७२ । दत्त्वेति । हेतुभिः कारणैः । तत्रापि विशेषमाह गन्धर्वतन्त्रे पञ्चदशपटले—

निर्विकल्पस्य देवेशि सुरैव विहितागमे ।
अमृतञ्च तदेव स्यान्मद्यञ्चापि तदेव हि ॥
नाऽऽपद्यपि द्विजो मद्यं दद्याद् देव्यै कदाचन ।
मोहाद् यदि ददेन्मद्यं ब्राह्मण्यादेव हीयते ॥
ब्रह्मघाती स एव स्यात् तस्मान्मद्यं विवर्जयेत् ।
... ... ...
निर्विकल्पो यदा मद्यं महादेव्यै निवेदयेत् ।
अश्वमेधसहस्रस्य ... ... ...
सविकल्पो यदा देवि पापभाङ् नात्र संशयः ॥ इति ।

अथ परिवारार्चनमवतारयति—गृहीत्वेति । आज्ञाप्रार्थनक्रममाह त्रिपुरार्चनरहस्ये आदौ मूलम् , ततः—

संविन्मये परे देवि परामृतरसप्रिये ।
अनुज्ञां त्रिपुरे देहि परिवारार्चनाय मे ॥

इति । गन्धर्वतन्त्रे षोडशपटले—

रश्मिवृन्दानि ते देवि पूजयामि विधानतः ।
आज्ञापय जगन्मातर्यतस्तमेव तानिव (?) ॥
कृताञ्जलिर्महेशानि देव्याज्ञां साधकोत्तमः ।
गृहीत्वा पूजयेत्तुष्टः प्रागुक्तक्रमयोगतः ॥ इति ।

२७३-२७५ । तत्राऽऽदौ षडङ्गदेवतार्चाक्रममभिधत्ते—यथेत्यादिना । तथाच

---

1. '-तृप्तयाऽन्या' B. 2. '-ऽनन्ता' A.

षडङ्गदेवताः पूज्यास्तत्तन्मन्त्रं समुच्चरन् ।

[ तासां ध्यानम् ]

तुषारस्फटिकश्यामनीलकृष्णारुणार्चिषः ॥ २७४ ॥

वरदाभयधारिण्यः प्रधानतनवः स्त्रियः ।

[ पूजास्थानम् ]

अग्नीशासुरवायव्ये[1] मध्ये दिक्षु यथाक्रमात् ॥ २७५ ॥

[ पुनस्तर्पणं पुष्पाञ्जलिदानञ्च ]

तर्पणञ्च पुनः कृत्वा मूलमुच्चार्य सर्वतः ॥ २७६ ॥

शिरोवक्त्रःपदद्वन्द्वकरद्वन्द्वेषु च क्रमात् ।

सर्वाङ्गेषु पुनः कुर्यात् पञ्चपञ्चाञ्जलीन् [2]हृदा ॥ २७७ ॥

[ परिवारपूजायामादौ बीजयोजनक्रमः ]

सर्वावरणनामादौ मायां लक्ष्मीं नियोजयेत् ।

वाङ्मायां कमलां वाऽपि त्रिभिः [3]संपुटितञ्च वा ॥ २७८ ॥

---

सर्वज्ञताशक्तिश्रीमहात्रिपुरसुन्दरीहृदयाय नमः, तृप्तिशक्तिश्रीमहात्रिपुरसुन्दरीशिरसे स्वाहेत्यादिक्रमेण षडङ्गदेवताः पूजयेदित्यापतति। तन्त्रसारकृता तु सर्वज्ञतेत्यत्र सर्वज्ञा शक्तिरिति बालाबीजस्य द्विरावृत्त्या ऐं क्लीं सौरित्याद्येकैकबीजपूर्वकत्वञ्चोक्तम्।

एतासामङ्गदेवतानां क्रमेण स्वरूपमाह—तुषारेति। सर्वज्ञताशक्तिस्तुषारवर्णा, तृप्तिशक्तिः स्फटिकवर्णा, अनादिबोधशक्तिः श्यामवर्णा, स्वतन्त्रा शक्तिर्नीलवर्णा, नित्यतृप्तिशक्तिः कृष्णवर्णा, अनन्तशक्तिररुणवर्णेत्युक्तं भवति। वरदेत्यादि साधारणम्। क्रमेणैतासां स्थानमाह—अग्नीति, अग्न्यादिक्रमेणैताः पूजयेदित्यर्थः।

२७६। पञ्चपुष्पाञ्जलिदानमाह—मूलेत्यादिना। तथाच आदौ मूलं ततः शिरआदिसर्वाङ्गान्तेषु क्रमेण पुष्पाञ्जलिपञ्चकमर्पयेदित्यर्थः।

२७८। अथाऽऽवरणपूजायामादौ बीजयोजने प्रस्थानत्रयमाह—मायामित्यादिना। तथाच मायां लक्ष्मीं ह्रीं श्रीमिति मायाबीजं श्रीबीजञ्च नियोजयेदिति द्वितारीप्रयोग-

---

1. '-व्यः' C. 2. 'मुदा' C. 3. 'संपूजितञ्च' ? C.

[ पादुकामन्त्रः ]

[1]पादुकां पूजयामीति श्रीपूर्वं पादुकामनुः ।
नमोऽन्ते योजयित्वा तु नमोऽन्तं सर्वमर्चयेत् ॥ २७९ ॥

[ न्यासेऽपि पादुकामनोः प्रयोज्यत्वम् ]

न्यासेऽपि योजयेन्मन्त्री पादुका सर्वसिद्धिदा ।

[ अत्र प्रामाणिकागमसम्मतिः ]

रहस्यं परमं प्रोक्तमिति यामलसम्मतम् ॥ २८० ॥

---

क्रमः । वाङ्मायां कमलामिति ऐं ह्रीं श्रीमिति बीजत्रयं योजयेदिति त्रितारीप्रयोगक्रमः । त्रिभिः संपुटितं वेति तृतीयः कल्पः । त्रिभिः वाङ्मायाकमलाबीजैः संपुटितम् । संपुटलक्षणमाह तन्त्रसारे—

मन्त्रमादौ वदेत् सर्वं साध्यसंज्ञामनन्तरम् ।
विपरीतं पुनश्चान्ते बीजं तत् संपुटं स्मृतम् ॥

एवञ्चात्र कल्पे प्रथमं ऐं ह्रीं श्रीं ततः पूज्यदेवतानाम ततः श्रीं ह्रीं ऐं इति विपरीतमुच्चारयेदिति फलितम् । तन्त्रसारकृताऽपि सर्वत्राऽऽदौ द्वितार्या त्रितार्या वा प्रयोग इत्युक्तम् । ज्ञानार्णवेऽपि—

मायालक्ष्मीमयं बीजयुग्मं पूर्वक्रमेण हि ।
कथितं योजयेद्देवि त्रयं वा परमेश्वरि ॥

इति । कल्पसूत्रेऽपि सर्वत्राऽऽदौ त्रितारीप्रयोग इति तन्त्रसारकारः । त्रितारी च—

वाङ् माया कमला चेति त्रितारी समुदाहृता । इति ।

२७९ । अथ सर्वत्र परिवारार्चने प्रयोज्यं पादुकामन्त्रमाह—पादुकामिति । तथाच ऐं ह्रीं श्रीं श्रीमहात्रिपुरसुन्दरीश्रीपादुकां पूजयामि नम इत्येवंक्रमेण सर्वमर्चयेदित्यर्थः ।

२८० । न्यासेऽपीति । न्यासकालेऽपि निरुक्तपादुकामन्त्रं प्रयुञ्जीतेत्यर्थः । तत्र पादुकायै नम इति विशेषः । अस्मिन्नर्थे प्रमाणभूतमागममुदाहरति—रहस्यमिति ।

---

1. पादुकेत्यादिपादद्वयं C-पुस्तके नास्ति ।

[ तर्पणसंख्या ]

तर्पणञ्च त्रिधा कार्यं सकृद्वाऽपि निजेच्छया ।

[ होमादौ वाक्यभेदाः ]

स्वाहा होमे तर्पणे च तर्पयामीति संस्मरेत् ॥ २८१ ॥

[ षोडशतिथिनित्यार्चायां स्वरविन्यासः ]

मध्यत्रिकोणरेखासु स्वाग्रे दक्षोत्तरक्रमैः ।
पञ्च पञ्च क्रमेणापि स्वरान् विभागतो लिखेत् ॥
अःस्वरञ्च लिखेन्मध्ये तिथिनित्या[1]स्तथाऽर्चयेत् ॥ २८२ ॥

[ कामेश्वर्यादिपूजनोपदेशः ]

कामेश्वर्यादिकाः सर्वा ध्यात्वा तत्तन्मनुं[2] चरेत् ।
प्रतिपदादिपूर्णान्तं वामावर्त्तक्रमेण तु ॥ २८३ ॥

[ कामेश्वर्या ध्यानम् (१) ]

कामेश्वरीं रक्तवर्णां रक्त[3]वस्त्रविभूषिताम् ।
पाशाङ्कुशशरांश्चापं धारयन्तीं विचिन्तयेत् ॥ २८४ ॥

---

२८१। परिवारदेवतानां तर्पणसंख्यामाह—तर्पणञ्चेति । स्पष्टम् । प्रकृते तु तर्पयामीत्यन्तेन तर्पणं कुर्यादिति बोध्यम् ।

२८२-२८३। अथ कामेश्वर्यादिषोडशतिथिनित्यार्चनमभिधास्यन् प्रथमं श्रीचक्रमध्यत्रिकोणे अकारादिविसर्गान्तषोडशस्वरविन्यासमाह—मध्येत्यादिना । स्वाग्रे दक्षोत्तरक्रमैः दक्षादिक्रमेण पञ्चशः स्वरान् अनुस्वारान्तान् रेखात्रये त्रिकोणमध्ये च विसर्गं लिखेदिति फलितार्थः । तत्र कामेश्वर्यादिका वक्ष्यमाणास्तिथिनित्या वक्ष्यमाणक्रमेण ध्यात्वा तत्तद्देवतामन्त्रेणार्चयेदित्यर्थः । तत्र क्रममाह—प्रतिपदादीति ।

२८४। अथ क्रमेण कामेश्वर्यादीनां विचित्रान्तानां प्रतिपदादिपञ्चदश्यन्तेषु पञ्चदशतिथिषु क्रमेणार्चनीयानां पञ्चदशतिथिनित्यानां साधारण्येन पञ्चदशतिथिषु

---

1. '-स्तथा-' C. 2. 'स(स्म)रन्' C. 3. '-वर्ण-' B.

[ भगमालायाः (२) ]

भगमालां शुक्लवर्णां भगमालाविभूषिताम् ।
पाशाङ्कुश(ञ्च) सूत्रञ्च पुस्तकं बिभ्रतीं करैः ॥ २८५ ॥

[ नित्यक्लिन्नायाः (३) ]

नित्यक्लिन्नां शुक्लवर्णां [1]वराभयकराम्बुजाम् ॥ २८६ ॥

[ भेरुण्डायाः (४) ]

भेरुण्डां रक्तवर्णाञ्च रक्ताभरणभूषिताम् ।
मुण्डवेदधरां देवीं द्विभुजां परिचिन्तयेत् ॥ २८७ ॥

[ वह्निवासिन्याः (५) ]

पिङ्गलाभां तथाहस्तां भावयेद् वह्निवासिनीम् ।

[ महानित्येश्वर्याः (६) ]

महानित्येश्वरीं [2]खड्गचर्माक्षस्त्रग्धरां वराम् ॥ २८८ ॥

---

समर्चनीयायाः श्रीमत्त्रिपुरसुन्दर्याश्च ध्यानान्याह—कामेश्वरीमित्यादिना साधकोत्तम इत्यन्तेन । स्पष्टम् ।

२८८ । महानित्येश्वरीमिति । वज्रेश्वरीति ज्ञानार्णवे महावज्रेश्वरीति च तन्त्रराजे पाठः । अत्र महानित्येश्वरीध्यानानन्तरम् एवं सुकृष्णां त्वरितामिति त्वरिताया ध्यानमुक्तम् । परन्तु—

प्रथमा सुन्दरी नित्या महात्रिपुरसुन्दरी ।
कामेश्वरी समाख्याता तथैव भगमालिनी ॥
नित्यक्लिन्ना च भेरुण्डा तथैव वह्निवासिनी ।
वज्रेश्वरी च दूती च त्वरिता कुलसुन्दरी ॥
नित्या नीलपताका च विजया सर्वमङ्गला ।
ज्वालामालाविचित्रान्ताः पञ्चदश प्रकीर्तिताः ॥

इति तन्त्रसारधृतकुलार्णववचने त्वरितायाः पूर्वं शिवदूत्या निरूपणं दृश्यते । एवमेव तन्त्रराजतन्त्रेऽपि । त्रिपुरार्चनरहस्येऽप्येवमेव । मूलेऽपि पञ्चदशप्रकाशे षोडश-नित्यान्यासावसरे 'सप्तम्यां विन्यसेदेनां शिवदूतीं स्वयं हृदि' इत्यनेन शिवदूतीन्यास-

---

1. '-वरां' ? C. 2. 'भीतां खड्गचर्माक्षस्त्रग्धराम्' ? C.

[ शिवदूती (७) ]

× × × × × ।

[ त्वरिता-कुलसुन्दर्योः (८, ९) ]

एवं सुकृष्णां त्वरितां गौराङ्गीं कुलसुन्दरीम् ।

[ नित्यायाः (१०) ]

अष्टसिद्धिधरां देवीमष्टकोणान्तरस्थिताम् ॥ २८९ ॥

[ नीलपताकायाः (११) ]

नित्यां नीलपताकाञ्च पाशाङ्कुशधरां स्मरेत् ।

[ विजयायाः (१२) ]

विजयां चण्डरूपाञ्च तथा[1]स्त्रां योगिनीवृताम् ॥ २९० ॥

[ सर्वमङ्गलायाः (१३) ]

पद्मद्वयकरां रक्तां ध्यायेद् वै सर्वमङ्गलाम् ।

[ ज्वालांशुमालिन्याः (१४) ]

[2]ज्वालांशुमालिनीं धूम्रां त्रिनेत्रां श्वेतरूपिणीम् ॥ २९१ ॥

[ विचित्रायाः (१५) ]

विचित्रां श्वेत[3]रूपाञ्च श्वेतपद्मधरां शुभाम् ।

चित्रहस्तां महादेवीं सर्वाभरणभूषिताम् ॥ २९२ ॥

[ श्रीमत्त्रिपुरसुन्दर्याः (१६) ]

ततः श्रीसुन्दरीं ध्यात्वा पूजयेत् साधकोत्तमः ।

[ प्रतिपदादिष्वेकैकनित्यार्चायाः फलम् ]

एकैकां पूजयेद् यो हि स सौभाग्यफलं लभेत् ॥ २९३ ॥

---

मभिधाय 'अष्टम्यां विन्यसेत् कण्ठे त्वरितां द्वादशाक्षरीमि'त्यनेन शिवदूत्यनन्तरं त्वरिताया निर्देशः कृतः। एतेन गणनया नित्यानां षोडशत्वमप्युपपद्यते, शिवदूत्या अग्रहणे तु न्यूनतैव स्यात्। तद् यदत्र मूले षोडशनित्यापूजाप्रकरणे शिवदूत्या ध्यानं न दृश्यते, तल्लेखकप्रमादकृतमिति प्रतिभाति।

१९३। एवं कामेश्वर्यादीनां विचित्रान्तानां पञ्चदशनित्यानां ध्यानान्यभिधाय

---

1. 'स्त्रीं' A. 2. 'ज्वालासुमालिनीं' C. 3. '-वर्णाञ्च' C.

[ सुन्दर्याः सर्वासु तिथिषु पूज्यत्वम् ]

# अःस्वरे षोडशीं नित्यां त्रिपञ्चतिथिगामिनीम् ।

[ पक्षभेदेनार्चायां क्रमभेदः ]

# कृष्णपक्षे विचित्राद्याः कामेश्वर्यन्तिका[1] यजेत्[2] ॥ २६४ ॥

---

षोडश्याः श्रीमत्त्रिपुरसुन्दर्या ध्यानमुपदिशति—तत्र इत्यादिना । ध्यानन्तु पूर्वमेव दर्शितम् । एकैकां निरुक्तासु नित्यास्वित्यर्थः ।

२६४ । षोडश्याः सुन्दर्याः पूजास्थानमाह—अःस्वर इति । अःस्वरे 'अःस्वरञ्च लिखेन्मध्ये' इति प्रागुक्त्या मध्यत्रिकोणमध्यलिखिते 'अः' इति षोडशस्वरे इत्यर्थः । षोडशीं विशिनष्टि—त्रिपञ्चेति । एवञ्च प्रतिपदादिपञ्चदशतिथिषु एकैकां नित्यां पूजयेत्; षोडशीन्तु सर्वास्वेव तिथिषु पूजयेदित्युक्तं भवति । यदेतत् कामेश्वर्यादीनां प्रतिपदादिष्वेकैकं पूजनमुक्तं तच्छुक्लपक्षविषयम् । कृष्णपक्षे विशेषमाह—कृष्णेत्यादिना । अत्र प्रतिपदि विचित्रां द्वितीयायां ज्वालांशुमालिनीमित्येवंक्रमेण कामेश्वर्यन्ता नित्याः पूजयेदित्यर्थः । व्यक्तमाह ज्ञानार्णवे षोडशपटले—

प्रतिपत्तिथिमारभ्य पौर्णमास्यन्तमद्रिजे ।
एकैकां पूजयेन्नित्यां महासौभाग्यमाप्नुयात् ॥
कृष्णपक्षे महेशानि पूजयेत्तिथिमण्डलम् ।
विचित्राद्या वरारोहे यावत् कामेश्वरी भवेत् ॥ इति ।

तन्त्रसारकृताऽपि "महात्र्यस्रे वामावर्त्तेन आकारादिपञ्च ऊकारादिपञ्च एकारादिपञ्च विभाव्य मध्ये विसर्गं तेषु वामावर्त्तेन शुक्लपक्षे कामेश्वर्यादिविचित्रान्तं कृष्णपक्षे विचित्रादिकामेश्वर्यन्तं पूजयेदिति व्यक्तमुक्तम् । एवमेव त्रिपुरार्चनरहस्येऽपि । यजेदिति, निरुक्तक्रमेण ध्यात्वा पञ्चदशप्रकाशीयतिथिनित्यान्यासोक्तरीत्या तत्तन्मन्त्रमुच्चार्य श्रीपादुकां पूजयामि नम इत्यन्तेन पूजयेदित्यर्थः । तदुक्तं तन्त्रसारधृततन्त्रान्तरे—

श्रीपदं पूर्वमुच्चार्य पादुकापदमुच्चरेत् ।
पूजयामि नमः पश्चात् पूजयेदङ्गदेवताः ॥

इति । अत्रापि द्वितीयास्त्रितायां वा प्रयोगः कर्त्तव्यः साधारण्येनाङ्गदेवतार्चायां विहितत्वात् । तथाच ऐँ ह्रीं ( ऐँ ह्रीं श्रीं ) अं ऐँ क्लीं सौः ॐ नमः कामेश्वरि

---

1. '-न्ततो' C. 2. 'व्रजेत्' B.

[ नित्यानां तर्पणद्रव्यम् ]

[1]तर्पयेच्च मधुद्रव्यैः परमानन्दचेतसा ।

[ पूजनम् ]

वर्णानुक्रमयोगेण [2]साधये[3]त्त्रिपुरेश्वरीम् ॥ २६५ ॥

स्वशक्त्या पूजनं कुर्यान्मूलविद्याञ्च पूजयेत् ।

[ देव्यनुज्ञाग्रहणम् ]

देव्याज्ञां मस्तके कृत्वा करोमि बाह्यपूजनम् ॥ २६६ ॥

[ गुरुपूजनोपदेशः ]

त्रिवृत्ते दिव्यसिद्धौघमानवौघान् प्रपूजयेत् ।

[ अस्य प्रामाणिकागमसंवादित्वम् ]

बृहच्छ्रीक्रमतन्त्रे तु शिवेनेति प्रकीर्त्तितम् ॥ २६७ ॥

[ तत्र कल्पान्तरम् ]

तिथिनित्यार्चनाद् बाह्ये त्रिरेखास्वथवा सुधीः ।

[4]प्रदक्षिणक्रमेणैव [5]त्रिपङ्क्त्या पूजयेद् गुरून् ।

---

इच्छाकामफलप्रदे सर्वसत्त्ववशङ्करि सर्वजगत्क्षोभकरि हुं हुं हुं हुं द्रां द्रीं क्लीं ब्लूं सः सौः क्लीं ऐं कामेश्वरीनित्याकलाश्रीपादुकां पूजयामि नमः इत्यादिरूपः प्रयोगः कर्त्तव्यः। एवं भगमालिन्यादीनामपि मन्त्रा उन्नेयाः। षोडश्याः सुन्दर्याः पूजने तु आदौ द्वितारी त्रितारी वा ततः षोडशस्वरस्ततो मूलं ततः श्रीमहात्रिपुरसुन्दरी (महा) नित्याकला श्रीपादुकां पूजयामि नमः इति प्रयोगः।

२६५—२६६। तर्पयेदिति तिथिनित्या इति शेषः। वर्णानुक्रमयोगेणेति आदितोऽकारादिविसर्गान्तषोडशस्वरयोगेणेत्यर्थः। मूलविद्यां त्रिपुरसुन्दरीम्। पूजनक्रमस्तु पूर्वमेव प्रदर्शितः।

२६७। अथ गुरुमण्डलपूजामभिधास्यन् प्रथमं गुर्वर्चनस्थानमाह--त्रिवृत्त इति। त्रिवृत्ते षोडशारबहिस्त्रिवृत्ते क्रमेण दिव्यौघान् सिद्धौघान् मानवौघांश्च पूजयेत्। इति बृहच्छ्रीक्रमतन्त्रसिद्धान्तः।

२६८। तत्र कल्पान्तरमाह--तिथीत्यादिना। तिथिनित्यार्चनास्थानं प्रथमं

---

1. 'तर्पयन्तु' B. 2. 'धारये-' B. 3. '-त्रिपुरातनीम्' C. 4. 'प्रा-' C. 5. 'त्रिभङ्गा ?' C.

[ तत्र प्रयोगक्रमः ]

आनन्दनाथशब्दान्तानम्बान्तां मातरं क्रमात् ॥ २९८ ॥

[ गुरुक्रमनिरूपणप्रतिज्ञा ]

अथातः संप्रवक्ष्यामि षोडशीनां गुरुक्रमम् ॥ २९९ ॥

[ तत्र सप्त दिव्यौघाः ]

परप्रकाशको नाम परशिवो द्वितीयकः ।
तृतीया परशक्तिश्च कौलेश्व[1]रस्ततः परम् ॥ ३०० ॥
शुक्लादेवी [2]परेशानः कामेश्वर्यम्बिका ततः ।
दिव्यौघा गुरवः प्रोक्ताः [3]पराख्याः सप्तमा इति ॥ ३०१ ॥

प्रथमत्रिकोणं सर्वसिद्धिप्रदं नाम तद्बाह्यरेखात्रये प्रादक्षिण्येन त्रिपङ्क्त्या रेखात्रयेणेत्यर्थः, क्रमेण दिव्यौघान् सिद्धौघान् मानवौघांश्च गुरून् पूजयेदिति फलितार्थः । पूजनक्रममाह--आनन्देति । तथाच अमुकानन्दनाथश्रीपादुकां पूजयामि इति पुंगुरुपूजायाम्, अमुकाम्बाश्रीपादुकां पूजयामीति स्त्रीगुरुपूजायां प्रयोगः । व्यक्तमाह तन्त्रसारे—

आनन्दनाथशब्दान्ता विज्ञेयाः परमेश्वरि ।
अम्बान्ता गुरवः प्रोक्ताः स्त्रीलिङ्गा वीरवन्दिते ॥

इति । श्रीपादुकादिपदव्यवहारबीजन्तु श्रीपदं पूर्वमुच्चार्येत्यादिना पूर्वमुपदर्शितम् ।

२९९—३०१ । अथ षोडशीनां गुरुपङ्क्तिमभिधास्यन् प्रथमं कामराजविद्यायास्तद्घटितानां विद्यानाञ्च गुरुक्रममाह—परप्रकाशक इत्यादिना । अनेन १ परप्रकाशः, २ परशिवः, ३ परशक्तिः, ४ कौलेश्वरः, ५ शुक्लादेवी, ६ परेशानः, ७ कामेश्वर्यम्बिका इति सप्त पराख्या दिव्यौघाः । तदुक्तं ज्ञानार्णवे षोडशपटले—

परप्रकाशो देवेशि ततः परशिवो मतः ।
परा शक्तिस्तथा देवि कौलेश्वर इति प्रिये ।
शुक्ला देवि(वी) कुलेशानकामेश्वर्यम्बिकाः क्रमात् ।
मुनिसंख्यास्तु गुरवः पराख्या दिव्यरूपिणः ।

इति । अत्र ज्ञानार्णववचने परेशान इत्यत्र कुलेशान इति विशेषः । कौलेश्वर इत्यत्र कौलेश्वरीति च तन्त्रसारे ।

1. '-री ततः' A. 2. 'कुलेशानः' B. '-न्द्रयेशानः' C. 3. 'पुराख्याः' C.

[सिद्धौघाः पञ्च]

भोगक्रीडौ च समयः सहजो देवसंज्ञकः ।
परापराख्याः सिद्धौघाः[1]

[मानवौघाः सप्त]

मानवौघान् ब्रवीम्यथ ॥ ॥३०२॥

गगनो विश्वविमलौ मदनो भुवनस्तथा ।
[2]नीलमात्मप्रियश्चैव सप्तसंख्यास्तु मानवाः ।

[निगमनम्]

काम[3]राजाख्यविद्याया[4] गुरुपङ्क्तिरियं भवेत् ॥ ३०३ ॥

---

३०२। अथ क्रमप्राप्तान् परापराख्यान् सिद्धौघानाह—भोगेत्यादिना। तथाच—१ भोगः, २ क्रीडः, ३ समयः, ४ सहजः, ५ देवः इति पञ्च परापराख्याः सिद्धौघाः। तदुक्तं तत्रैव—

भोगक्लिन्नस्तु समयो वेदाख्यः सहजस्तथा ।
परापराख्यसिद्धौघे मानवौघे शृणु प्रिये ॥

इति। एवञ्च क्रोड इत्यत्र क्लिन्न इति ज्ञानार्णवे विशेषः। समयः सहजो वेद इति मूलतः क्रमभेदः, देव इत्यत्र वेद इति पाठभेदश्च ज्ञानार्णव-तन्त्रसारयोः। निरुक्त-भोगेत्यादिज्ञानार्णववचनस्य—समयः सहजो वेदसंख्यकाः इति क्वचित् पाठभेदो दृश्यते। तत्र च भोगः क्लिन्नः समयः सहज इति वेदसंख्यकाश्चतुःसंख्यकाः सिद्धौघा इत्यर्थो लभ्यते। त्रिपुरार्चनरहस्येऽपि भोगाद्याश्चत्वार एव सिद्धौघत्वेन परिगृहीताः। देव इत्यत्र ज्ञानार्णवतन्त्रसारादिषु वेद इति दर्शनाद् वेद इति पाठस्य समीचीनत्वं सम्भावयताऽपि प्रबलतरप्रमाणाभावान्मूलोक्तपाठो न परिहृतः।

३०३। अथ क्रमप्राप्तान् सिद्धौघानाह—गगन इत्यादिना। एवञ्च १ गगनः, २ विश्वः, ३ विमलः, ४ मदनः, ५ भुवनः, ६ नीलम्, ७ आत्मप्रियः इति सप्तापराख्या मानवौघाः। अत्र ज्ञानार्णवे—

गगनो विश्वविमलौ मदनो भुवनस्तथा ।

---

1. '-घान् ?' B. 2. 'नील आत्मा' B. 3. '-रूपा-' B. 4. 'च' B.

[ स्वगुर्वादियागः ]

मानवौघान्तिके मन्त्री स्वगुरुत्रितयं यजेत् ।
परमेष्ठी [1]च परमः स्वगुरुश्च त्रयो भवेत् ॥ ३०४ ॥

[ गुरुवंशप्रकर्षः ]

स्ववंशादधिको ज्ञेयो गुरुवंशो महाशुभः ।

[ मन्त्रदातुः प्रकर्षः ]

पितुरप्यधिको ज्ञेयो मन्त्रदः परमो गुरुः ॥ ३०५ ॥

[ निरुक्तगुरुनामाज्ञाने कर्त्तव्यम् ]

न जानाति गुरोर्नाम [2]तदाऽनेन प्रपूजयेत् ।
गुरुभ्यो नम उच्चार्य पादुकाभ्यो नमो [3]वदेत् ॥ ३०६ ॥
गुर्वन्ते परमान्ते च गुरुभ्यो नम इत्यपि ।
एतेषां पादुका[4]स्तद्वदाचार्येभ्यो नमो [5]वदेत् ॥ ३०७ ॥

[ निगमनम् ]

[6]सामान्यगुरुशिष्याणां गुरुपङ्क्तिरियं भवेत् ।

[ गुरुपङ्क्तिपूजाप्रशस्तिः ]

गुरुपङ्क्तिं प्रपूज्याथ स्वयं श्रीत्रिपुरा भवेत् ॥ ३०८ ॥

---

लीला स्वात्मा प्रियः पश्चान्नागसंख्यास्तु मानवाः ।
अपराः परमेशानि नियता अन्तरा इमे ।

इति वचने गुरूणां केषाञ्चिन्नामभेदा अष्टसंख्यत्वञ्च दृश्यन्ते । त्रिपुरार्चनरहस्य-तन्त्रसारयोरपि निरुक्तक्रमेणाष्टसंख्यत्वमेवोक्तमिति 'सप्तसंख्यास्तु मानवा' इति मूलोक्त्या महान् विरोधः । कामराजेति । निरुक्तो गुरुक्रमः कामराजाख्यविद्याया-स्तद्घटितानां विद्यान्तराणाञ्चेति बोध्यमित्यर्थः ।

३०४ । मानवेति । मानवौघानां निरुक्तानामन्तिके गुरुं परमगुरुं परापरगुरुं परमेष्ठिगुरुञ्च यजेदित्यर्थः ।

---

1. 'तु' C. 2. 'भेदानिन' ? B. 3. 'नमः' B. 4. '-स्तत्व-?' C. 5. 'नमः' B.
6. सामान्येत्यादि पादद्वयं B-पुस्तके नास्ति ।

[ लोपामुद्राया गुरुक्रमः ]

लोपामुद्राख्यविद्यायाः प्रवक्ष्यामि गुरुक्रमम् ।

[ तत्र दिव्यौघाः ]

परमाद्यः[1] [2]शिवान्तश्च कामेश्व[3]र्यम्बिका ततः ॥ ३०९ ॥
दिव्यौघश्च [4]महौघश्च सर्वानन्दस्ततः परम् ।
प्रज्ञादेवी प्रकाशश्च दिव्यौघे सप्तमो भवेत् ॥ ३१० ॥

[ सिद्धौघाः ]

[5]दिव्यचित्तश्च कैवल्य[6]देव्यम्बा [7]च महोदयः ।
सिद्धौघे च चतुष्कः स्यान्-

[ मानवौघाः ]

मानवौ[8]घमथोच्यते ॥ ३११ ॥
चिद्विश्वशक्तीश्वर[9]काश्चतुर्थ(ः) कमलो भवेत् ।
[10]मनोहरः परः स्वात्मा [11]अलोभश्चाष्टमो मतः ॥ ३१२ ॥

---

३०९—३१० । एवं कामराजविद्याया गुरुक्रमं निरूप्य लोपामुद्रायास्तद्घटितानां विद्यान्तराणाञ्च गुरुक्रममाह—परमाद्य इत्यादिना । परमाद्यः शिवः परमशिवः । एवञ्च १ परमशिवः, २ कामेश्वर्यम्बिका, ३ दिव्यौघः, ४ महौघः, ५ सर्वानन्दः, ६ प्रज्ञादेवी, ७ प्रकाशश्चेति सप्त दिव्यौघा इति पर्यवस्यति ।

३११—३१२ । सिद्धौघानाह—दिव्येति । १ दिव्यः, २ चित्तः, ३ कैवल्यदेव्यम्बा, ४ महोदयः, इत्येते चत्वारः सिद्धौघाः । मानवौघानाह—मानवेत्यादिना । तथाच—१ चिद्, २ विश्वः, ३ ईश्वरः, ४ कमलः, ५ मनोहरः, ६ परः, ७ स्वात्मा, ८ अलोभः इत्यष्टौ मानवौघाः । तन्त्रसारकृता तु "चिद्विश्वशक्तीश्वरकमलपरमानन्दमनोहर-सुखानन्दप्रतिभान् । एते मानवौघा" इत्यनेन मनोहरादिचतुष्टये नामभेदाः प्रदर्शिताः । ज्ञानार्णवे षोडशपटले लोपामुद्राया गुरुक्रम इत्थमुपदर्शितः—

---

1. 'द्याः' A-B. 2. 'शिवान्ता-' B. 3. '-र्यात्मिका पुनः' B. 4. 'महा-' C. 5. 'दिव्यवित्त-' B. 6. '-दिव्याम्बा' A-B. 7. 'तु' A-B. 8. '-घ अ ?' C. 9. '-वां-' A. 10. 'महाद्भवः' B. 11. 'प्रलोभ-' B.

[ विद्यान्तराणां गुरुक्रमः ]

**अन्यासां सर्वविद्यानां समाना गुरवः क्रमात् ॥ ३१३ ॥**

**अथापरः [1]प्रकारश्च परादि[2]विश्व इत्यपि ।**

**कामेश्वरी तृतीया स्याच्चतुर्थी स्यादथाम्बिका ॥ ३१४ ॥**

---

लोपामुद्राख्यविद्याया गुरूञ् शृणु वरानने ।
परमाद्यशिवश्चाऽऽद्या कामेश्वर्यम्बिका तथा ॥
दिव्यौघश्च महौघश्च सर्वानन्दस्ततः परम् ।
प्रज्ञादेव्यम्बिका पश्चात् प्रकाशः सप्तमो भवेत् ॥
दिव्याः पराख्यगुरवो लोपामुद्राप्रभामयाः ।
दिव्यश्चित्रश्च कैवल्यदेव्यम्बा च महोदयः ॥
सिद्धाः परापरा ज्ञेया मानवौघं शृणु प्रिये ।
विद्या शक्तिश्च विश्वश्च चतुर्थः कोमलो(?)भवेत् ॥
पञ्चमस्तु परानन्दो मनोहर इति प्रिये ।
स्वात्मानन्दः सप्तमस्तु प्रतिभोऽष्टम उच्यते ॥
अपराख्या इमे देवि गुरवः परिकीर्त्तिताः ।
पूर्ववद् योजयेत् पश्चादष्टानन्तरमेव च ॥
त्वयं वा स्वगुरुं वाऽपि नवान्तं वाऽब्जलोचने ।
दक्षिणामूर्त्तिशिष्याणां गुरुक्रम उदाहृतः ॥

इति । निरुक्तज्ञानार्णववचने कैवल्यदेव्यम्बेति तृतीयगुरुनिर्देशात् सिद्धौघे च चतुष्कः स्यादिति मूलोक्तचतुःसंख्याकत्वं सम्यगुपपद्यते । यत्तु तन्त्रसारे दिव्यं चित्रं कैवल्यं दिव्याम्बां महोदयम् एते सिद्धौघाः पञ्च इत्यनेन सिद्धौघानां पञ्चत्वं प्रतिपादितम्, तज् ज्ञानार्णवश्रीतत्त्वचिन्तामणिविरोधाल्लेखकप्रमादकृतमिति प्रतीमः । मानवौघेष्वपि गुरूणां परस्परं संज्ञाभेदो दृश्यते ।

३१३ । अन्यासामिति लोपामुद्राघटितानाम् । समानाः 'मानवौघान्तिके मन्त्री'त्यादिकामराजविद्यागुरुक्रमे प्रदर्शितैः स्वगुर्वादिभिस्तुल्या इत्यर्थः । एतेन कामराजविद्यागुरुक्रमे ये सामान्या गुरवस्तत्पादुकाश्च पूज्यतया निर्दिष्टा अत्रापि क्रमेण त एव प्रयोज्या इत्यर्थः । अत एव ज्ञानार्णवे षोडशपटले—

साधारणास्तु गुरवः सर्वभेदेषु वै समाः । इत्युक्तम् ।

---

1, 'प्रकाशश्च' C. 2. '-रिह' B.

मोक्षश्चामृतसंज्ञश्च [1]प्रकाशो घोर एव च ।
अथ नाम सद्गुरुश्च सिद्धौघश्चो[2]त्तरः क्रमात् ॥ ३१५ ॥
उद्भवः परमश्चैव [3]सर्वज्ञस्तत्त्व एव च ।
सिद्धस्तथा च गोविन्दः शङ्करो मानवो भवेत् ॥ ३१६ ॥
गुरुपङ्क्तिविहीनस्तु पुरुषः पङ्क्तिवर्जितः ।
सम्प्रदायविहीनस्य न दद्यात् पङ्क्तिमुत्तमाम् ॥ ३१७ ॥
गुरुं विना क्रमं यस्तु कुरुते [4]यदि साधकः ।
महानिष्टं भवेत्तस्य सत्यं सत्यं न संशयः ॥ ३१८ ॥
दक्षिणामूर्त्तितन्त्रस्य मतमेतदुदीरितम् ।

[ आम्नायदेवतापूजनोपदेशः ]

गुरुक्रमं प्रपूज्याथ यजेदाम्नायदेवताः ॥ ३१९ ॥

[ तत्र पूर्वाम्नायार्चा ]

त्रैलोक्यमोहने चक्रे सर्वाशापरिपूरके ।
सर्वसंक्षोभणे चक्रे पूर्वाम्नायं समर्चयेत् ॥ ३२० ॥

[ दक्षिणाम्नायार्चा ]

सर्वसौभाग्य[5]दे चक्रे [6]तथा सर्वार्थसाधके ।
सर्वरक्षाकरे चक्रे दक्षिणाम्नायमर्चयेत् ॥ ३२१ ॥

---

३२०। एवं गुरुक्रमार्चामभिधायाऽऽम्नायदेवतार्चामभिदधानः प्रथमं पूर्वाम्नायसमर्चनक्रममाह—त्रैलोक्येत्यादिना। प्रागुक्ते त्रैलोक्यमोहनादिचक्रत्रये चतुरस्रषोडशदलाष्टदलात्मके सृष्टिचक्रे पूर्वाम्नायं समर्चयेदित्यर्थः। एवं दक्षिणाम्नायादीनामपि वक्ष्यमाणरीत्या चक्रे यथास्थानमर्चना ज्ञेया।

३२१। सर्वसौभाग्यदे चतुर्दशारे, सर्वार्थसाधके बहिर्दशारे, सर्वरक्षाकरेऽन्तर्दशारे। एतत्त्रितये दक्षिणाम्नायमर्चयेदित्यर्थः।

---

1. 'प्रकाशाद्' B. 2. '-त्तमः' B. 3. 'सर्वज-' B. 4. 'यस्तु' B. 5. '-चक्रेण' B. 6. 'ऊर्ध्वाम्नायं समर्चयेत्' B.

[ पश्चिमाम्नायार्चा ]

मध्यचक्रे यजेद्देवीं पश्चिमाम्नाय[1]नायिकाम्।

[ उत्तराम्नायार्चा ]

[2]अष्टचक्रे यजेद्देवीमुत्तराम्नायनायिकाम्॥ ३२२॥

[ अध-आम्नायार्चा ]

सर्वसिद्धिप्रदे चक्रे अध-आम्नायमर्चयेत्।

[ ऊर्ध्वाम्नायार्चा ]

[3]सर्वाम्नायमये चक्र ऊर्ध्वाम्नायं प्रपूजयेत्॥ ३२३॥

[ तर्पणम् ]

पूर्वोक्तमन्त्रयोगेण ततः सन्तर्पयेत् क्रमात्॥ ३२४॥

[ पञ्चपञ्चिकाः, तत्र पञ्चलक्ष्म्यः ]

श्रीविद्या च तथा लक्ष्मीर्महालक्ष्मीस्तथैव च।
[4]त्रिशक्तिः सर्वसाम्राज्यलक्ष्मीः पञ्च प्रकीर्त्तिताः॥ ३२५॥

---

३२२। मध्यचक्र इति। मध्यचक्रत्रये—

मध्यचक्रत्रये देवि पश्चिमाम्नायमर्चयेत्।

इति ज्ञानार्णवे षोडशपटले व्यक्तमभिधानात्। मध्यचक्रत्रयञ्च सर्वरोगहरचक्रम् अष्टकोणात्मकम्, सर्वसिद्धिप्रदचक्रं त्रिकोणात्मकम्; सर्वानन्दमयचक्रं मध्य-बिन्द्वात्मकम्। अष्टचक्र इति। अत्र—

नवचक्रेषु देवेशि कौबेराम्नायमर्चयेत्।

इति ज्ञानार्णवे पाठः।

३२३। सर्वसिद्धिप्रद इति। निरुक्तमध्यत्रिकोण इत्यर्थः। सर्वेति। सर्वाम्नायमये चक्रे मध्यबिन्द्वात्मकसर्वानन्दमयचक्र इत्यर्थः। तन्त्रसारकारैरपि बैन्दवचक्रे ऊर्ध्वाम्नायार्चाऽभिहिता। ज्ञानार्णवतन्त्रसारयोरध-आम्नायार्चाक्रमो न दृश्यते, आम्नायार्चाक्रमस्तु तन्त्रसारादावनुसन्धेयः।

३२५। अथ पञ्चपञ्चिकार्चामभिधास्यन् प्रथमपञ्चलक्ष्मीर्निरूपयति—श्रीविद्येति।

---

1. '-नामिकाम्' B. 2. 'अष्टचक्र' इत्यादि पादद्वयं B-पुस्तके नास्ति। 3. 'सर्वाम्नाये'त्यादि पादद्वयं B-पुस्तके नास्ति। 4. 'त्रिकालधर्मसाम्राज्यविद्याः'? B.

[ पञ्च कोशाः ]

[1]श्रीविद्या च परंज्योतिः परा निष्कलशाम्भवी ।
अजपा मातृका चेति पञ्च कोशाः प्रकीर्त्तिताः ॥ ३२६ ॥

[ पञ्च कल्पलताः ]

श्रीविद्या त्वरिता चेति पारिजातेश्वरी तथा ।
त्रिपुटा पञ्चकामेशी पञ्च कल्पलताः स्मृताः ॥ ३२७ ॥

[ पञ्च कामदुघाः ]

श्रीविद्या *मृतपीठेशी [2]सुधाश्रीरमृतेश्वरी ।
अन्नपूर्णेति विख्याताः पञ्च कामदुघाः स्मृताः॥ ३२८ ॥

[ पञ्चरत्नाः ]

श्रीविद्या [3]सिद्धलक्ष्मीश्च मातङ्गी भुवनेश्वरी ।
वाराहीति च संप्रोक्ताः पञ्चरत्नाः प्रकीर्त्तिताः ॥ ३२९ ॥

---

श्रीविद्या लक्ष्मीर्महालक्ष्मीस्त्रिशक्तिः सर्वसाम्राज्येति पञ्च लक्ष्म्यः । अत्र ज्ञानार्णवे षोडशपटले—

श्रीविद्या च तथा लक्ष्मीर्महालक्ष्मीस्तथैव च ।
त्रिशक्तिः सर्वसाम्राज्या पञ्च लक्ष्म्यः प्रकीर्त्तिताः॥ इति पाठः ।

३२६ । श्रीविद्येति । ज्ञानार्णवे तु पञ्चलक्ष्मीनिरूपणात् पूर्वं पञ्चकोशनिरूपणं दृश्यते । शिष्टं स्पष्टम् ।

३२८ । कामदुघाः कामधेनवः । तथाच ज्ञानार्णवे षोडशपटले—श्रीविद्येत्यादि-समानानुपूर्वीकवचने 'पञ्च कामदुघाः स्मृता' इत्यत्र 'पञ्चैताः कामधेनव' इति पाठो दृश्यते । त्रिपुरार्चनरहस्ये तु कामदुघेत्येव पाठो वाक्ये विनियुक्तः ।

---

1. 'श्रीविद्या चे'त्यादि पादचतुष्टयं C-पुस्तके नास्ति । *'मूलपीठेशी'ति ज्ञानार्णवे पाठः । 2. 'स्वधाश्री-' B. 3. 'सिद्धि-' A-B.

[ पञ्चपञ्चिकार्चास्थानम् ]

श्रीविद्यापूजनस्थाने[1] चक्रराजे महोदये[2]।

महाकोषेश्वरीवृन्दमण्डिता[3]सनसंस्थिता ॥ ३३० ॥

[ पञ्चपञ्चिकार्चाक्रमः ]

सर्वसौभाग्यजननीं पादुकां पूजयामि च।

इत्युच्चार्य परंज्योतिः[4]कोशाढ्यां(?) परिपूजयेत् ॥ ३३१ ॥

अनेनैव विधानेन पूजयेत् [5]पञ्चपञ्चिकाम्।

[ निगमनम् ]

एवं [6]संपूज्य [7]सकलं श्रीविद्यां परितो [8]यजेत् ॥ ३३२ ॥

[ तर्पणम् ]

तर्पणानि पुनः कुर्यात् त्रिः सकृद्वा यथेच्छया।

[ अणिमादिप्रकटयोगिनीध्यानम् ]

[9]अणिमाद्या रक्तवर्णास्त्रिनेत्राः शशिशेखराः ॥ ३३३ ॥

सव्यदक्षिणहस्ताभ्यां विधृताभय[10]पुस्तिकाः।

त्रैलोक्यमोहने चक्रे ध्यायेत् प्रकटयोगिनीम् ?(:) ॥३३४॥

---

३३०। श्रीविद्येति। श्रीविद्यापूजनस्थाने बैन्दवचक्रे इत्यर्थः,

श्रीविद्यापूजनस्थाने बैन्दवे पञ्चपञ्चिकाः।

इति त्रिपुरार्चनरहस्ये व्यक्तमभिधानात्।

३३१। निरुक्तपञ्चपञ्चिकापूजनक्रममाह—सर्वेति। विशेषस्तु ज्ञानार्णवे षोडशपटलेऽनुसन्धेयः। परंज्योतिःकोशाढ्यामिति लक्ष्मीविशेषणम्, परज्योतिर्मयीमित्यर्थः। कोशाद्यामिति ज्ञानार्णवपाठे तु पञ्चकोशादिपञ्चपञ्चिकामित्यर्थः, तत्र पञ्चकोशानामेव प्रथमं निरूपणम्।

३३३-३३४। अथाणिमादिप्रकटयोगिनीध्यानमाह—अणिमेत्यादिना। त्रैलोक्यमोहने षोडशदलाद् बहिर्वृत्तत्रयात्मके चक्रे इत्यर्थः। स्पष्टमिदं प्रकरणम्।

---

1. '-पि' B. 2. '-दया' B. 3. 'मान-' B. 4. 'कोषां स्वां' B. 'कोशाद्यामि'ति-ज्ञानार्णवे पाठः। 5. 'पञ्चिकां पराम्' B. 6. 'क्रमेण' B. 7. 'सकलां' B. 8. '-पयेत्' B. 9. 'अणामाद्या-' B. 10. '-पुस्तकाः' C.

[ अणिमाद्यर्चास्थानम् ]

अणिमां पश्चिमद्वारि दक्षभागे प्रपूजयेत् ।
[1]लघिमामुत्तरद्वारि पश्चिमे परिपूजयेत् ॥ ३३५ ॥
पूर्वद्वारे च महिमामुत्तरे [2]तु समर्चयेत् ।
दक्षिणद्वारदेशे [3]च ईशित्वाख्याश्च [4]पूर्वतः ॥ ३३६ ॥
वशित्वाख्याश्च वायव्ये [5]प्राकाम्यसिद्धिमीशके ।
[6]मुक्तिसिद्धिं तथाऽग्नेय्यामिच्छासिद्धिश्च नैरृते ॥ ३३७ ॥
अधस्तात् प्राप्तिसिद्धिश्च [7]सर्वकामं तदूर्ध्वतः ।

[ असिताङ्गाद्यष्टभैरवध्यानोपदेशः ]

मध्यद्वारे ततो ध्यायेत् पश्चिमादिक्रमेण तु ॥ ३३८ ॥

[ असिताङ्गाद्यष्टभैरवनिरूपणम् ]

असिताङ्गं रुरुं चण्डं क्रोधमुन्मत्तभैरवम् ।
[8]कपालिनं भीषणञ्च संहारञ्चाष्टभैरवम् ॥ ३३९ ॥

[ भैरवाणां ध्यानम् ]

एते श्यामास्त्रिनयना [9]भ्रुकुटीभीषणाननाः ।
शूलं दण्डञ्च वेतालं कपालं क्षुद्र[10]घण्टिकाम् ।
विधृता [11]वेदहस्तेन गजचर्मोत्तरांशुकाः ॥ ३४० ॥

---

३३८। मध्येति। अत्र प्रकटयोगिनीध्यानावसरेऽसिताङ्गादिभैरवध्यानोपदेशो ब्राह्म्याद्यष्टशक्तिपूजार्थः। वक्ष्यति च—'भैरवाङ्कस्थिता एता पूज्या वै भैरवैः सहे'ति (३४६ श्लो०)। मध्यद्वारे मध्यचतुरस्रस्य द्वारचतुष्टये पश्चिमादिक्रमेण ध्यायेदिति सम्बन्धः।

---

1. 'महिमा-' ? B. 2. 'च' B. 3. 'तु' C. 4. 'पूजयेत्' C. 5. 'प्राकाम्या-' C. 6. 'भक्ति-' C. 7. 'सर्वकामी तदूर्द्ध्वतः' C. 8. 'का-' C. 9. 'भ्रुकुटि-' C. 10. '-दण्डिकाम्' C. 11. 'देह-' ? B.

[ अष्टशक्तीनां ध्यानम् , तत्र ब्रह्माण्याः ]

ब्रह्माणी पीतवर्णा च चतुर्भिः शोभिता मुखैः ।
वरदाभयहस्ता च [1]कुण्डिकाक्षलसत्कराः ॥ ३४१ ॥

[ माहेश्वर्याः ]

[2]माहेश्वरी श्वेतवर्णा त्रिनेत्रा शूलधारिणी ।
कपालमालां परशुं दधाना सिद्धिदायिनी ॥ ३४२ ॥

[ कौमार्याः ]

कौमारी पीतवर्णा च शक्ति[3]तोमरधारिणी ।
वरदाभयहस्ता च ध्यातव्या साधकोत्तमैः ॥ ३४३ ॥

[ वैष्णव्याः ]

वैष्णवी श्यामलच्छाया शङ्खचक्रगदा[4]करा ।
बिभ्रती कर[5]पद्मञ्च दिव्यभूषणभूषिता ॥ ३४४ ॥

[ वाराह्याः ]

वाराही श्यामलच्छाया वराहवदना शुभा ।
हलञ्च मूषलं खड्गं खेटकं दधती भुजैः ॥ ३४५ ॥

[ इन्द्राण्याः ]

इन्द्राणी श्यामलच्छाया रक्तोत्पललसत्करा ॥ ३४६ ॥

[ चामुण्डायाः ]

चामुण्डा कृष्णवर्णा च शूलं डमरुमेव च ।
खड्गं वेतालकञ्चैव विधृता दक्षिणैर्भुजैः ।
नगखेटकघण्टाञ्च दधा[6]नोच्चैः कपालकम् ॥ ३४७ ॥

[ महालक्ष्म्याः ]

महालक्ष्मीस्तु पीताभा [7]पद्मं दर्पणमेव च ।
मातुलु[8]ङ्गफलञ्चैव [9]दधाना परमेश्वरी ॥ ३४८ ॥

---

1. 'गुण्डिकाख्य-' B. 2. 'माहेशी श्वेतवर्णा च' C. 3. '-वारुण-' B. 4. '-धकान्' ? C.
5. '-पद्मैश्च' C. 6. '-नाद्यैः' C. 7. 'पद्मादर्पण-' C. 8. '-ङ्गं' C. 9, 'प्रधाना' ? A-B.

[ निरुक्ताष्टशक्तीनां पूजायां विशेषः ]

भैरवाङ्कस्थिता एताः पूज्या वै भैरवैः सह ॥ ३४६ ॥

[ पूजास्थानम् ]

[1]महेन्द्रादीशपर्यन्तं पूजयेत् क्रमतोऽ[2]थवा ।
पश्चिमोत्तरमाहेन्द्रदक्ष[3]द्वारे क्रमेण तु ॥ ३५० ॥
[4]वाय्वीशवह्निरक्षःस्थयुग्मायुग्मस्वरैः सह ।

[ मन्त्रे विशेषः ]

[5]ह्रस्वार्णा भैरवा मन्त्रा मातृणां दीर्घरूपकाः ॥ ३५१ ॥

[ मुद्रार्चा ]

अन्तर्द्वारे [6]प्रतीच्याद्याः सर्वसंक्षोभणादिकाः ।
रक्ताः पाशाङ्कुश[7]धरा ध्यात्वा तत्तन्मनुं स्मरन् ॥ ३५२ ॥

---

३४६। अथ निरुक्तानां ब्राह्म्याद्यष्टशक्तीनां पूजायां विशेषमाह—भैरवेति। भैरवाङ्कस्थिताः प्रागुक्तासिताङ्गाद्यष्टभैरवक्रोडस्थिता एता ब्राह्म्याद्यष्टशक्तयः भैरवैरसिताङ्गादिभिः सह पूज्या इत्यर्थः ।

३५०-३५१। अथाष्टशक्तीनां पूजास्थानं विशिष्य निरूपयति—महेन्द्रादिति। एवञ्च पूर्वतः प्रादक्षिण्येनेशानकोणान्तं क्रमेण पूजयेदित्यर्थः । क्रमान्तरमाह—अथवेति। एवञ्च पश्चिमादिदक्षिणान्तद्वारचतुष्टये वायव्यादिनैर्ऋतान्तकोणचतुष्टये च पूजयेदित्यर्थः। युग्मेति। अयुग्मस्वरैः प्रथमतृतीयादिभिः, युग्मस्वरैः द्वितीयचतुर्थादिभिश्च सह पूजयेदिति सम्बन्धः। इममेव स्वरविभागं विशिनष्टि—ह्रस्वार्णा इति। एवञ्च भैरवमन्त्रादौ अकारादिह्रस्वस्वरान् अष्टशक्तिमन्त्रादावाकारादिदीर्घस्वरान् योजयेदित्यर्थः। यद्यप्येकादशादिस्वरेषु ह्रस्वार्णत्वं व्यभिचरति तथाऽपि ह्रस्वार्णा इत्यस्य द्वयोर्द्वयोः पूर्वपूर्वस्वरोपलक्षकत्वाददोषः ।

३५२-३५३। अन्तर्द्वारे अभ्यन्तरचतुरस्रद्वारचतुष्टये प्रतीच्याद्याः पश्चिमादि-

---

1. 'माहेन्द्रा-' B-C. 2. '-पि वा' C. 3. '-द्वार-' C. 4. 'वागीश-' B. 5. 'ह्रस्वान्ता' A-B. 6. 'पृथिव्याद्याः' ? B. 7. '-करा' C.

प्रपूजयेत्त्रिखण्डा[1]न्तु वाग्भवं बीजमुच्चरन् ।

[ मुद्रार्चायां दिङ्नियमः ]

पश्चिमादिक्रमेणैव पूर्ववद्दिग्विदिक्षु च ॥ ३५३ ॥

[ तत्र विशेषः ]

ऊर्ध्वाधःक्रमयोगेण खेचरीं योनिमर्चयेत् ।

[ निगमनम् ]

एताः प्रकटयोगिन्यः पान्तु त्रिचतुरस्रगाः ॥ ३५४ ॥

[ चक्रार्चा ]

त्रैलोक्यमोहनं नाम चक्रं संपूजयेत्ततः ।

[ त्रिपुरायाः स्वरूपं पूजनञ्च ]

[2]प्रथमावरणे देवीं त्रिपुरां चक्रनायिकाम् ॥ ३५५ ॥

पाशाङ्कुशकरां रक्तां त्रिनेत्रां परिचिन्तयेत् ।

[ अणिमासिद्ध्याद्यर्चा ]

अणिमासिद्धि[3]पुरतः पूजयेत्तन्मनुं स्मरन् ।

सर्वसंक्षोभिणीं[4] कृत्वा बुद्धश्च परिपूजयेत् ॥ ३५६ ॥

स्थिताः सर्वसंक्षोभणादिकाः प्रागुपदर्शिता मुद्राः प्रपूजयेत् इत्यर्थः। तत्तन्मनुं स्मरन्निति प्रागुक्तक्रमेण बीजमुच्चार्य सर्वसंक्षोभणीमुद्राश्रीपादुकां पूजयामीत्यादिरूपः प्रयोगः कर्त्तव्य इत्यर्थः। पश्चिमादीति। पूर्ववत् प्रागुक्ताष्टशक्तिपूजनक्रमेणेत्यर्थः।

३५४। खेचरीयोनिमुद्रयोर्विशेषमाह—ऊर्ध्वाध इति। ऊर्ध्वद्वारे खेचरीमुद्रामधश्च योनिमुद्रामर्चयेदित्यर्थः। त्रिचतुरस्रगा इति प्रागुक्तचतुरस्रत्रयस्थिताः।

३५५-३५६। त्रैलोक्येति। त्रैलोक्यमोहनचक्राय नम इति पूजयेत्। एवमेव त्रिपुरार्चनरहस्येऽपि। तन्त्रसारे तु त्रैलोक्यमोहनचतुरस्रचक्राय नम इति प्रयोग उक्तः। प्रथमावरण इति। (अं आं सौः) त्रिपुरेश्वरीचक्रनायिकाश्रीपादुकां पूजयामि नम इति प्रयोगः। अणिमेति। पूर्वं यदणिमासिद्धेः स्थानं दर्शितं तत्रैव पश्चिमद्वारे सर्वसंक्षोभिणीमुद्रां पूजयेदित्यर्थः। व्यक्तमाह ज्ञानार्णवे—

1. '-द्या' B. 2. 'अथ आ-' B. 3. '-प्रयतः' A-B. 4. '-भणीं' C.

[ बौद्धमन्त्रः ]

प्रणवश्च ततस्तारे [1]चण्डारे [2]भैरवद्वयम् ।
वह्नि[3]जायानिगदितो बौद्धमन्त्रो मनीषीभिः ॥ ३५७ ॥

[ बुद्धतद्दर्शनयोरर्चा ]

बुद्धाय बौद्ध[4]पूर्वाय दर्शनाय नमः परम् ॥ ३५८ ॥

[ देव्यै पूजार्पणम् ]

एताः प्रकटयोगिन्य इति त्रैलोक्यमोहने ।
चक्रे समुद्रा इति च ससिद्धयस्तु सायुधाः ॥ ३५९ ॥
सवाहनाः [5]सवर्णाद्याः परिवाराः सपूर्विकाः ।
ततः सर्वोपचा[6]रैश्च पूजिताः सन्तु चोच्चरन् । ३६० ॥

[ पूजासमर्पणद्रव्यम् ]

अर्घ्योदकाक्षतैः पुष्पैर्देव्यै पूजां समर्पयेत् ।

[ गुप्तयोगिनीनां स्वरूपमर्चाक्रमश्च ]

जवाकुसुमसङ्काशाः कामाकर्षणिका[7]दिकाः ॥ ३६१ ॥

---

अणिमासिद्धिपुरतः सर्वकार्यार्थसाधिकाम् ।
सर्वसंक्षोभिणीं मुद्रां दर्शयेत् कमलानने ॥ इति ।

तत्रैवाणिमासिद्धिश्रीपादुकां पूजयामि नम इति प्रयोगः । तथा सर्वसंक्षोभिणीमुद्राश्रीपादुकां पूजयामि नम इति प्रयोगः ।

३५७ । बुद्धश्च परिपूजयेदित्युक्तम्, तद्बुद्धमन्त्रमाह—प्रणवश्चेत्यादिना ।

३५९-३६० । अथ देव्यै प्रकटयोगिनीपूजासमर्पणमुपदिशति—एता इत्यादिना । तथाच एताः प्रकटयोगिन्यस्त्रैलोक्यमोहने चक्रे समुद्राः ससिद्धयः सायुधाः सवाहनाः सपरिवाराः सर्वोपचारैः पूजिताः सन्तु इति प्रयोगः । तन्त्रसारे तु पूजितास्तर्पिताः सन्तु इति प्रयोगो दृश्यते । स तु निरुक्तप्रमाणविरोधितया नात्र प्रदर्शितः ।

३६१-३६२ । अथ षोडशदले सर्वाशापरिपूरकचक्रे वक्ष्यमाणानां गुप्तयोगिनीनां

---

1. 'मत्तारे' C. 2. 'चतुर-' C. 3. '-जायां'? C. 4. '-रूपाय' B.
5. 'स्वराद्याश्च'? A-B. 6. '-रैः सं-' C. 7. '-निकाः'? A, '-ह्निकाः'? B.

**पाशशूलधराः पूज्या वामावर्त्तेन षोडश।**
**पश्चिमादिक्रमेणापि बिन्दु[1]युक्तैः स्वरैः सह॥ ३६२॥**

[ कामाकर्षिण्यादिषोडशगुप्तयोगिन्यः ]

**[2]कामाकर्षणरूपाञ्च बुद्ध्याकर्षणरूपिणीम्।**
**अहङ्काराकर्षणीञ्च शब्दाकर्षणरूपिणीम्॥ ३६३॥**

पूजनमभिधास्यन् तासां स्वरूपमाह—जवेत्यादिना। वामावर्त्तेनेति। पश्चिमादि-क्रमेण सबिन्दुकैः स्वरैः क्रमेणादित एकैकशो निवेशितैः स्वरैः सह पूजयेदिति सम्बन्धः ; तदुक्तं ज्ञानार्णवे षोडशपटले—

पश्चिमादिविलोमेन षोडशारे स्वरान्विताः।
एता नित्याः कलाः पूज्याः स्रवत्पीयूषमण्डलाः॥

इति। एवञ्च अं कामाकर्षिणीनित्याकलाश्रीपादुकां पूजयामि नमः। आं बुद्ध्या-कर्षिणीनित्याकलाश्रीपादुकां पूजयामि नमः इत्यादिरूपः प्रयोगः कर्त्तव्य इति ज्ञेयः। द्वितार्यादिप्रयोगस्तु पूर्ववदेव।

३६३—३६५। अथ कामाकर्षिण्यादिषोडशगुप्तयोगिनीर्निरूपयति—कामाकर्षण-

1. 'युक्तस्वरैः' A.

2. 'कामाकर्षणरूपाञ्च बुद्ध्याकर्षणरूपिणीम्। रसाकर्षणरूपाञ्च गन्धाकर्षणरूपिणीम्॥ चित्ताकर्षणरूपाञ्च गन्धाकर्षणरूपिणीम्। चित्ताकर्षणरूपाञ्च धैर्याकर्षणरूपिणीम्॥ बीजाकर्षण-रूपाञ्च आत्माकर्षणरूपिणीम्। अमृताकर्षिणीं देवीं तत्तन्मन्त्रेण पूजयेत्॥' A. 'कामाकर्षण-रूपाञ्च धैर्याकर्षणरूपिणीम्। बीजाकर्षणरूपाञ्च आत्माकर्षणरूपिणीम्। अमृताकर्षिणीं देवीं तत्तन्मन्त्रेण पूजयेत्।' B. अत्र अस्मदुपजीव्येषु त्रिष्वपि पुस्तकेषु प्रामादिकः पाठो दृश्यते। यथाहि—सर्वाशापरिपूरकं नाम चक्रं षोडशदलात्मकम्, तत्र पूज्याः कामाकर्षिण्यादिका गुप्त-योगिन्योऽपि षोडश एव। तथाच—ज्ञानार्णवे षोडशपटले—"सर्वाशापूरकं चक्रं गुप्तयोगिन्य-धिष्ठितम्। षोडशारं ततो देवि! पूजयेत् कार्यसिद्धये" इत्यभिधाय कामाकर्षिण्यादीनां प्रतिदलमेकैकशः पूज्यानां षोडशानामेव गुप्तयोगिनीनां नामानि समुद्दिष्टानि। तानि च टीकायामस्माभिः प्रदर्शितानि। अत्र A-पुस्तके एकादशानां नामानि प्रदर्शितानि, तत्रापि गन्धाकर्षिण्या वारद्वयं चित्ताकर्षिण्याश्च वारद्वयम् आवृत्त्या समुल्लेखेन फलतो नवैव योगिन्यः समुदाहृताः। B-पुस्तके तु पञ्चानामेव समुल्लेखो दृश्यते। मूले निवेशिते C-पुस्तक-धृतपाठे-ऽपि कामाकर्षिण्यादीनां द्वादशानामेव समुल्लेखः ; अत्र गणनया योगिनीनां संख्याधिक्यात् प्रामादिकोऽप्ययमेव पाठो मूले निवेशितः।

स्पर्शाकर्षणरूपाञ्च रूपाकर्षणरूपिणीम् ।
स्मृत्याकर्षणरूपाञ्च नामाकर्षणरूपिणीम् ॥ ३६४ ॥
बीजाकर्षणरूपाञ्च आत्माकर्षणरूपिणीम् ।
अमृताकर्षिणीं देवीं शरीराकर्षिणीं तथा ॥ ३६५ ॥

[ तासामर्चास्थानम् ]

[1]एतास्तु गुप्तयोगिन्यः सर्वाशापरिपूरके ।

[ चक्रपूजा ]

सर्वाशापूरकं नाम चक्रं संपूजयेत्ततः ॥ ३६६ ॥

[ चक्रनायिकार्चा ]

कामाकर्षणरूपायाः पुरतस्त्रिपुरेश्वरीम् ।
द्वितीयावरणे मन्त्री त्रिनेत्रां चक्रनायिकाम् ॥ ३६७ ॥

---

रूपाञ्चेत्यादिना । अत्र मूलोक्तः पाठः प्रामादिक इति ज्ञानार्णवतन्त्रानुसारेण गुप्तयोगिनीनां नामानि निर्दिश्यन्ते । यथा ज्ञानार्णवे षोडशपटले—

कामाकर्षिणिकां देवि बुद्ध्याकर्षिणिकां तथा ।
अहङ्काराकर्षिणीञ्च शब्दाकर्षणरूपिणीम् ॥
स्पर्शाकर्षिणि(?)रूपाञ्च रूपाकर्षिणि(?)रूपिणीम् ।
रसाकर्षकरीञ्चैव गन्धाकर्षणकारिणीम् ॥
चित्ताकर्षिणिकां तद्वद् धैर्याकर्षिणिकां प्रिये ।
नामाकर्षिणिकाञ्चैव बीजाकर्षिणिकान्तथा ॥
अमृताकर्षिणीञ्चैव स्मृत्याकर्षिणिकां प्रिये ।
शरीराकर्षिणीञ्चैव आत्माकर्षणरूपिणीम् ॥
पश्चिमादिविलोमेन षोडशारे स्वरान्विताः ।
एता नित्याः कलाः पूज्याः स्रवत्पीयूषमण्डलाः ॥

इति । अमृतानन्दनाथकृतायां योगिनीहृदयटीकायां तन्त्रसारे च योगिनीनामासां पूजने पौर्वापर्यक्रमभेदो दृश्यते ।

३६६ । सर्वाशेति । सर्वाशापरिपूरकचक्राय नमः इति प्रयोगः ।

३६७ । अथ निरुक्तचक्रनायिकार्चामाह—कामेति । कामाकर्षणरूपायाः

---

1. 'एतास्त्वि'त्यादि पाददशकं A-B-पुस्तकयोर्नास्ति ।

पाशशूलधरां देवीं तस्य मन्त्रेण पूजयेत् ।

[ मुद्रादर्शनम् ब्रह्मणः पूजनञ्च ]

सर्वविद्रावणीं कृत्वा ब्रह्माणं परिपूजयेत् ॥ ३६८ ॥

[ पूजामन्त्रः ]

[1]पतृतीयं वह्नियुतं [2]शेषाख्येन्दुसमन्वितम् ।

[ दर्शनार्चा ]

ब्रह्मणे वैदिके[3]त्युक्त्वा दर्शनाय नमः स्मरन् ॥ ३६९ ॥

[ पूजासमर्पणम् ]

[4]अथैता गुप्तयोगिन्यः सर्वाशापरिपूरके ।
चक्रे समुद्रा इत्यादिपूर्ववन्मनुनाऽमुना ।
समर्प्य मूल[5]देव्यै तां पूजामर्घ्योदकादिभिः ॥ ३७० ॥

---

प्रथमयोगिन्याः पुरतस्त्रिपुरेश्वरीं चक्रनायिकां पूजयेदिति सम्बन्धः । तथाच ज्ञानार्णवे षोडशपटले—

चक्रेश्वरीं यजेद् देवीं त्रिपुरेशीं समृद्धिदाम् ।
कामाकर्षणरूपायाः पुरतः पूजयेत् प्रिये ।

इति । प्रयोगस्तु द्वितार्याद्यन्यतमानन्तरं त्रिपुरेश्वरीचक्रनायिकाश्रीपादुकां पूजयामि नमः इति । तन्त्रसारे तु पूर्वतः ऐं क्लीं सौरिति बीजत्रययोग उक्तः ।

३६८-३६९ । सर्वविद्रावणोमिति । पूर्वोपदर्शितां सर्वविद्रावणीमुद्रां प्रदर्श्येत्यर्थः । ब्रह्मणो मन्त्रमाह—पतृतीयमिति । पकारस्य तृतीयो वर्णो बकारः स च वह्निना रकारेण युक्तः । शेषाख्येण द्वितीयस्वरेण इन्दुना विन्दुना च समन्वितः । एतेन ब्रां इति प्राप्तम् । एवञ्च ब्रां ब्रह्मणे नमः इति ब्रह्माणं परिपूजयेत् इति फलितार्थः । वैदिकेति । वैदिकदर्शनाय नमः इति प्रयोगः ।

३७० । अथ देव्यै पूजासमर्पणमाह—अथैता इत्यादिना । एवञ्च—एता गुप्तयोगिन्यः सर्वाशापरिपूरके चक्रे समुद्राः ससिद्धयः सायुधाः सवाहनाः सपरिवाराः पूजिताः सन्तु इति प्रयोगः ।

---

1. 'पद्मरागं' B. 2. 'तोषा-' B. 3. 'कृत्वा' C. 4. 'तथैता' C. 5. 'देवतायै ?' B.

[ गुप्ततरयोगिनीनामर्चा स्वरूपञ्च ]

अष्टपत्रे यजेन्मन्त्री कादिवर्गा[1]ष्टकेन च ॥ ३७१ ॥

अनङ्गकुसुमारक्ता रक्तवस्त्रा[2]स्त्रिलोचनाः[3] ।

अक्षस्रक्पुस्तकाभीतिवरदाढ्यकराम्बुजाः[4] ॥ ३७२ ॥

अनङ्गकुसुमां पूर्वे दक्षिणेऽनङ्गमेखलाम् ।

पश्चिमेऽनङ्ग[5]मदनामुत्तरे मदनातुराम् ॥ ३७३ ॥

अनङ्ग[6]रेखाश्चाऽऽग्नेय्यां नैरृते ऽनङ्गवेगिनीम् ।

अनङ्गाङ्कुशान्तु वायव्ये शम्भौ चानङ्गमालिनीम् ॥ ३७४ ॥

[ आसां तृतीयावरणवृत्तित्वम् ]

एता गुप्ततराः सर्वास्तृतीया[7]वरणे स्थिताः ।

[ चक्रार्चा ]

सर्वसंक्षोभणं चक्रमष्टारञ्च प्रपूजयेत् ॥ ३७५ ॥

---

३७१-३७२ । एवं षोडशदले सर्वाशापरिपूरकचक्रे कामाकर्षिण्यादीनां पूजनमभिधाय तदनन्तरष्टदले सर्वसंक्षोभणचक्रेऽनङ्गकुसुमादीनां गुप्ततरयोगिनीनां पूजनमाह—अष्टपत्र इत्यादिना । कादीति । कादिवर्गाणामेकैकं सबिन्दुकमादौ योजयित्वा पूजयेदित्युत्तरत्र दर्शयिष्यामः । अनङ्गकुसुमारक्तेति स्पष्टम् । अत्र अनङ्गकुसुमारक्तेत्यादिना प्राथम्यादनङ्गकुसुमायाः स्वरूपं प्रदर्शितम् , अन्यासामपि स्वरूपमिदमेव बोध्यम् । योगिनीहृदये तृतीयपटले—

अनङ्गकुसुमाद्यास्तु रक्तकञ्चुकशोभिताः ।
वेणीकृतलसत्केशाश्चापबाणधराः शुभाः ॥

इत्यभिन्नरूपतादर्शनात् ।

३७३-३७४ । पूजास्थानमाह—अनङ्गेत्यादिना । पूर्वे पूर्वपत्रे यजेदिति सम्बन्धः । एवमन्यत्रापि । एवञ्च कं खं गं घं ङं अनङ्गकुसुमादेवीश्रीपादुकां पूजयामीत्यादिरूपः प्रयोगः । त्रितार्यादिप्रयोगस्तु पूर्ववदेव । कादिवर्गाष्टकपूर्वकत्वं व्यक्तमाह ज्ञानार्णवे षोडशपटले—

---

1. '-न्तकेन ?' B. 2. 'त्रि-' B. 3. '-ना' B. 4. '-जा' B. 5. '-वदना-' B. 6. '-वेगा-' C. 7. '-ये' B.

[ चक्रनायिकार्चा ]

**अनङ्गकुसुमाग्रे तु चक्रेशीं सुन्दरीं यजेत् ॥ ३७६ ॥**

[ मुद्राप्रदर्शनम्, शिवार्चा ]

**तत आकर्षिणीं कृत्वा प्रासादेन शिवं यजेत् ।**

[ दर्शनार्चा ]

**शिवाय [1]शैवरूपाय दर्शनाय नमः स्मरन् ॥ ३७७ ॥**

---

सर्वसंक्षोभणे चक्रे यजेद् गुप्ततराभिधाः ।
अनङ्गकुसुमां प्राच्यां क-वर्गेण प्रपूजयेत् ॥
दक्षिणे च च-वर्गेण तथा चानङ्गमेखलाम् ।
अनङ्गमदनां पश्चाट्ट-वर्गेण प्रपूजयेत् ॥
त-वर्गेणोत्तरे पश्चादनङ्गमदनातुराम् ।
अनङ्गरेखामाग्नेये प-वर्गेण प्रपूजयेत् ॥
राक्षसेऽनङ्गवेगान्तु य-वर्गेण प्रपूजयेत् ॥
वायव्ये तु श-वर्गेण तथाऽनङ्गाङ्कुशां यजेत् ।
ईशान्ये ल-क्ष-वर्गेण पूज्याऽनङ्गादिमालिनी ॥

इति । अत्रानङ्गादिमालिनी अनङ्गमालिनीत्यर्थः । सर्वेति । तथाच सर्वसंक्षोभणाष्टारचक्राय नम इति प्रयोगः ।

३७६ । चक्रेश्वरीपूजनमाह—अनङ्गेति । अनङ्गकुसुमायाः प्रथमयोगिन्या अग्रे चक्रेश्वरीं त्रिपुरसुन्दरीं पूजयेदित्यर्थः । तथाच ज्ञानार्णवे षोडशपटले—

चक्रेश्वरीं यजेद्देवीं ततस्त्रिपुरसुन्दरीम् ।
अनङ्गकुसुमाग्रे च सर्वसाम्राज्यदायिनीम् ॥

इति । अत्र तन्त्रसारकृता त्रितारीप्रयोगानन्तरम् ऐँ क्लीं सौः त्रिपुरसुन्दरीचक्रनायिकाश्रीपादुकां पूजयामि नमः इति प्रयोगो दर्शितः ।

३७७ । तत इति । ततश्चक्रेश्वरीपूजनानन्तरम् आकर्षिणीं कृत्वा सर्वाकर्षिणीमुद्रां प्रदर्श्येत्यर्थः, 'सर्वाकर्षणमुद्राञ्च दर्शयेत् सुरवन्दिते' इति ज्ञानार्णवे षोडशपटले

---

1. '-शिव-' B.

[ पूजासमर्पणम् ]

एता गुप्ततरेत्युक्त्वा योगिन्य इति शब्दतः ।
सर्वसंक्षोभवर्णान्ते कारके चक्र इत्यपि ॥ ३७८ ॥
समुद्रेत्यादिसर्वैश्च पूर्ववत् परिकल्पयेत् ।
सर्वसिद्धिप्रदं नाम सृष्टि[1]चक्रत्रयात्मकम् ॥ ३७६ ॥

[ सत्सम्प्रदाययोगिनीनामर्चा ]

चतुर्दशारचक्रे तु पूजयेत् पश्चिमक्रमात् ।
वामावर्त्तेन मन्त्वज्ञः सर्वसंक्षोभणादिकाः ॥

[ तासां स्वरूपम् ]

सूर्यकान्तप्रतीकाशा [2]धनुर्बाणकराम्बुजाः ॥ ३८० ॥

[ चतुर्दश सत्सम्प्रदाययोगिन्यः ]

सर्वसंक्षोभणीं शक्तिं सर्वविद्रावणीं तथा ।
[3]सर्वाकर्षणशक्तिश्च [4]सर्वाह्लादनकारिणीम् ॥ ३८१ ॥

व्यक्तमभिधानात् । अनेन सर्वाकर्षिणीमुद्रायाः प्रदर्शनमेव प्रतीयते नतु पूजनम् । अत्र तन्त्रसारकृता सर्वाकर्षिणीमुद्राश्रीपादुकां पूजयामि नमः इति यत् पूजनमुक्तं तत्रानुकूलं प्रमाणं किमपि नोपलभ्यते । प्रासादेन हौं इति प्रासादबीजेन । हौं शिवाय नमः । शैवदर्शनाय नमः इति । तन्त्रसारे तु जिनेन्द्रदर्शनाय नमः इति दृश्यते ।

३७८-३७६ । एता इति । तथाच एता गुप्ततरयोगिन्यः सर्वसंक्षोभकारके चक्रे समुद्राः ससिद्धयः सायुधाः सवाहनाः सपरिवाराः सर्वोपचारैः पूजिताः सन्तु इति मूलदेव्यै प्रागुक्तक्रमेण पूजां समर्पयेत् ।

३८० । अथ चतुर्दशारे सर्वसौभाग्यदायकचक्रे सर्वसंक्षोभण्यादिशक्तीनां सत्सम्प्रदाययोगिनीनां पूजनमाह—चतुर्दशारेत्यादिना । एतासां ध्यानमाह—सूर्येति ।

३८१—३८३ । सर्वसंक्षोभणीशक्त्यादिचतुर्दशसत्सम्प्रदाययोगिनीराह—सर्व-

1. '-चक्रं लया-' B. 2. 'बाणधनुः-' B. 3. 'सर्व-' C. 4. 'सर्व-' C.

[1]सर्वसम्मोहनीं शक्तिं सर्वस्तम्भनरूपिणीम् ।
सर्वजृम्भणशक्तिं च सर्वतोवशकारिणीम् ।
सर्व[2]रञ्जनशक्तिश्च सर्वोन्मादस्वरूपिणीम् ॥ ३८२ ॥
सर्वार्थ[3]साधिनीं शक्तिं सर्वसम्पत्तिपूरणीम् ।
सर्वमन्त्रमयीं शक्तिं सर्वद्वन्द्वक्षयङ्करीम् ॥ ३८३ ॥

[ एतासां प्रथमावरणवृत्तित्वम् ]

सत्सम्प्रदाययोगिन्यः प्रथमावरणे स्थिताः ।

[ अर्चाक्रमश्चक्रपूजनञ्च ]

कादिढान्ताक्षरैरिष्ट्वा सर्वसौभाग्यदं यजेत् ॥ ३८४ ॥

[ एतच्चक्रनायिकायाः पूजनं स्वरूपञ्च ]

सर्वसंक्षोभणीं[4] [5]शक्तिं पुरतः पुरवासिनीम् ।

---

संक्षोभणीमित्यादिना सर्वद्वन्द्वक्षयङ्करीमित्यन्तेन । सर्वत्र पूजयेदिति पूर्वेण सम्बन्धः ।

३८४ । पूजने योगिनीनां पुरतो वर्णयोजनमाह—कादीति । ककारादि-ढकारान्तानि चतुर्दशाक्षराणि सबिन्दुकानि क्रमेणैकैकशः पूर्वतो योजयित्वाऽर्चयेदिति बोध्यम्, तथाच द्वितीयाद्यन्यतमप्रयोगानन्तरं कं सर्वसंक्षोभणीशक्तिश्रीपादुकां पूजयामि नमः । खं सर्वविद्रावणीशक्तिश्रीपादुकां पूजयामि नमः इत्यादिरूपाः प्रयोगा ज्ञेयाः । पूजनन्तु वामावर्त्तेन कर्त्तव्यम्,

सर्वसौभाग्यदे चक्रे पश्चिमादिविलोमतः ।
वाममार्गेण देवेशि संपूज्याः सर्वसिद्धिदाः ॥

इति ज्ञानार्णवे षोडशपटले विशिष्याभिधानात् । सर्वेति । तथाच सर्वसौभाग्यदायकचतुर्दशारचक्राय नम इति प्रयोगः ।

३८५ । सर्वसंक्षोभणीमिति । निरुक्तासु चतुर्दशयोगिनीषु प्रथमायाः सर्वसंक्षोभणीशक्त्याः पुरतः पुरवासिनीं त्रिपुरवासिनीं पूजयेत् । तथाच त्रिपुरवासिनीचक्रनायिका-

---

1. सर्वेत्यादिपादद्वयं B-पुस्तके नास्ति । 2. '-वञ्चन-' B. 3. '-साधनीं' C. 4. '-णी-' C. 5. 'शक्तिः' C.

हिमकुन्देन्दुधवलां श्रीचक्रनायिकां पराम् ।
पाशाङ्कुशवराभीति[1]करां पीनपयोधराम् ॥ ३८५ ॥

[ मुद्राप्रदर्शनं सूर्यपूजनञ्च ]

वश्यमुद्रां दर्शयित्वा सूर्यं तन्मनुना [2]यजेत् ।

[ दर्शनार्चा ]

सूर्याय सौरपूर्वाय दर्शनाय [3]नमः स्मरन् ॥ ३८६ ॥

[ पूजासमर्पणम् ]

एताः सम्प्रदाययोगिन्यः सर्वसौभाग्य[4]दायके ।
चक्रे समुद्रा इत्यादि पूर्ववत् परिकल्पयेत् ॥ ३८७ ॥

[ कुलकौलिकयोगिनीनां स्वरूपं स्थापनञ्च ]

वराभयकराः श्वेताः सर्वसिद्धिप्रदा[5]यिकाः ।
[6]सर्वार्थसाधके चक्रे [7]पञ्चमावरणे स्थिताः ॥ ३८८ ॥

---

श्रीपादुकां पूजयामि नम इति प्रयोगः । तन्त्रसारे तु पूर्वतः हैं हः क्लीं ह्सौः इति बीजचतुष्टययोगो दृश्यते ।

३८६ । वश्येति । प्रागुपदर्शितां सर्ववश्यकरीं मुद्रां प्रदर्श्येत्यर्थः । सूर्यमिति । सूर्यं संपूज्य सौरदर्शनाय नम इति पूजयेत् इत्यर्थः । तन्त्रसारे तु अत्र सांख्य-मीमांसा-न्यायदर्शनेभ्यो नम इति दृश्यते ।

३८७ । एता इति । तथाच एताः संप्रदाययोगिन्यः सर्वसौभाग्यदायके चक्रे समुद्राः ससिद्धयः सायुधाः सवाहनाः सपरिवाराः सर्वोपचारैः पूजिताः सन्तु इति पूर्ववन्मूलदेव्यै पूजां समर्पयेत् ।

३८८ । अथ बहिर्दशारे सर्वार्थसाधकचक्रे कुलकौलिकयोगिनीनां पूजनमभिधास्यन् तासां स्वरूपमाह—वरेति । सर्वेति । एवंलक्षणा वक्ष्यमाणाः सर्वसिद्धिप्रदादिकुलकौलिकयोगिन्यः पञ्चमावरणे बहिर्दशारे स्थिता इत्यर्थः । तदुक्तं ज्ञानार्णवे षोडशपटले—

---

1. 'परा ?' B. 2. '-ऽर्चयेत्' C. 3. 'मनु' B. 4. '-दायिका ?' B. 5. '-यकाः' B. 6. 'सर्वसिद्धिप्रदे' ? B 7. 'द्वितीया-' A-B.

[ पूजापरिपाटी ]

णादिभान्ताक्षरं दत्त्वा पश्चिमादिक्रमाद् यजेत् ॥ ३८९ ॥

[ दश कुलकौलिकयोगिन्यः ]

सर्व[1]सिद्धिप्रदां देवीं सर्वसम्पत्प्रदां तथा ।
सर्वप्रियङ्करीञ्चैव सर्वमङ्गलकारिणीम् ॥ ३९० ॥
सर्वकामप्रदां देवीं सर्वदुःखप्रमो[2]चिनीम् ।
सर्वमृत्युप्रशमनीं सर्वविघ्नविनाशिनीम् ॥ ३९१ ॥
सर्वाङ्गसुन्दरीं देवीं सर्वसौभाग्यदायिनीम् ।

[ एतासां पूजनोपदेशः ]

कुलकौलिकयोगिन्य एतास्तु परि[3]पूजयेत् ॥ ३९२ ॥

[ चक्रार्चा ]

सर्वार्थसाधकं चक्रं ततः पूर्वोक्त[4]लक्षणम् ।

[ चक्रनायिकार्चा ]

सर्वसिद्धिप्रदाग्रे तु नायिकां त्रिपुराश्रियम् ॥ ३९३ ॥

---

सर्वार्थसाधके चक्रे दशारे कुलयोगिनीः ।
पूजयेत् सर्वकार्यार्थसिद्धिदाः पश्चमे क्रमात् ॥ इति ।

३८९ । अथैतासां पूजापरिपाटीमाह—णादीति । णकारादिभकारान्तदशाक्षराणि सबिन्दुकानि एकैकशः क्रमेणाऽऽदौ नियोज्य पश्चिमतो वामावर्त्तेन पूजयेत् ।

पश्चिमादिविलोमेन दशारे पूजयेदिमाः ।

इति ज्ञानार्णवे षोडशपटले विशिष्याभिधानात् । तथाच द्वितार्याद्यन्यतमानन्तरं णं सर्वसिद्धिप्रदादेवीश्रीपादुकां पूजयामि नमः । तं सर्वसम्पत्प्रदादेवीश्रीपादुकां पूजयामि नम इत्यादिरूपः प्रयोगः ।

अथ दश कुलकौलिकयोगिनीराह—सर्वसिद्धिप्रदामित्यादिना सर्वसौभाग्यदायिनीमित्यन्तेन । सर्वेति सर्वार्थसाधकबहिर्दशारचक्राय नमः इति प्रयोगः ।

३९३-३९४ । चक्रेश्वरीपूजनमाह—सर्वसिद्धीति । सर्वसिद्धिप्रदायाः प्रथमयोगिन्याः पुरतश्चक्रनायिकां त्रिपुराश्रियं पूजयेत् । तथाच त्रिपुराश्रीचक्रनायिका-

---

1. '-प्रदात्मिकां' C. 2. '-चनीम्' C. 3. '-चिन्तयेत्' B. 4. '-लक्षणाम्' C.

[ मुद्राप्रदर्शनादि ]

सन्दर्श्योन्[1]मादिनीं मुद्रां नारायणं प्रपूजयेत् ।
नमो नारायणं[2] ङेऽन्तं प्रणवाद्यमथापि वा ।
[3]विष्णवे वैष्णवान्ते च दर्शनाय नतिं स्मरन् ॥ ३६४ ॥
एताः पदं समुद्धृत्य कुल[4]कौलिकपदं ततः ।
योगिन्य इति सर्वार्थसाधके चक्र इत्यपि ।
ततः समुद्रा इत्यादिपूर्ववत् परिकल्पयेत् ॥ ३६५ ॥

[ निगर्भयोगिनीनां स्वरूपं स्थानञ्च ]

पुस्ताभयज्ञानमुद्रा अक्षसूत्रकराः [5]सिताः ।
सर्वरक्षाकरे चक्रे [6]निगर्भयोगिनीगणाः ॥ ३६६ ॥

[ पूजापरिपाटी ]

पश्चिमादिक्रमादेता मादिक्षान्ताक्षरैर्यजेत् ।

[ दश निगर्भयोगिन्यः ]

सर्वज्ञां सर्वशक्तिश्च सर्वैश्वर्यप्रदायिनीम् ॥ ३६७ ॥

---

श्रीपादुकां पूजयामि नम इति प्रयोगः । तन्त्रसारे तु त्रितार्यनन्तरम् आदौ हसैं हसक्लीं हसौरिति बीजयोगो दृश्यते । सन्दर्श्येति । उन्मादिनीं सर्वोन्मादिनीं प्रागुक्तलक्षणाम् । नारायणमिति, ॐ नमो नारायणायेत्यष्टाक्षरमन्त्रेण विष्णवे नम इत्यनेन वा पूजयेदित्यर्थः । वैष्णव इति । वैष्णवदर्शनाय नम इति दर्शनं पूजयेत् ।

३६५ । एता इति । तथाच एताः कुलकौलिकयोगिन्यः सर्वार्थसाधके चक्रे समुद्राः ससिद्धयः सायुधाः सवाहनाः सपरिवाराः सर्वोपचारैः पूजिताः सन्तु इति प्रयोगः ।

३६६-३६७ । अथान्तर्दशारे सर्वरक्षाकरचक्रे सर्वज्ञादीनां निगर्भयोगिनीनां पूजनमभिदधानस्तासां स्वरूपमाह—पुस्तेति । पश्चिमेति । पश्चिमतो वामावर्त्तेनैताः पूजयेत् ।

पश्चिमादिविलोमेन पूजयेत् पङ्क्तियोनिके ।

इति । मादिक्षान्ताक्षरैरिति । पूर्ववन्मकारादिक्षकारान्तदशाक्षराण्येकैकशः क्रमेण

---

1. '-न्मादनीं' A-B. 2. '-यणा ?' C. 3. 'वैष्णवे ?' B. 4. '-कौल-' A-B.
5. 'स्थिताः' B. 6. 'निगर्व-' C.

सर्वज्ञानमयीं देवीं सर्वव्याधिविनाशिनीम् ।
सर्वाधारस्वरूपाञ्च सर्वपापहरां तथा ॥ ३९८ ॥
सर्वानन्दमयीं देवीं सर्वरक्षास्वरूपिणीम् ।
गन्धाद्यैरुपचारैस्तु[1] सर्वेप्सितफलप्रदाम् ॥ ३९९ ॥

[ चक्रार्चा चक्रनायिकार्चा ]

सर्वरक्षाकरं चक्रं ध्यायेच्छ्रीचक्रनायिकाम् ।
सर्वज्ञापुरतो मन्त्री त्रिपुरामालिनीं पराम् ॥ ४०० ॥
पाशाङ्कुशधनुर्बाणधरां श्वेताम्बुजश्रियम् ।

[ मुद्राप्रदर्शनादि ]

महाङ्कुशाख्यं सन्दर्श्य [2]जिनेशं विष्णुमर्चयेत् ॥ ४०१ ॥

[ पूजासमर्पणम् ]

एता [3]निगर्भयोगिन्यः सर्वरक्षाकरे पदात् ।
चक्रे समुद्रा इत्यादि पूर्ववत् परिकल्पयेत् ॥ ४०२ ॥

---

आदितो नियोज्य यजेदित्यर्थः । तथाच मं सर्वज्ञादेवीश्रीपादुकां पूजयामि नमः । यं सर्वशक्तिदेवीश्रीपादुकां पूजयामि नम इत्यादिरूपः प्रयोगः । सर्वत्र द्वितार्याद्यन्यतमप्रयोगः पूर्ववत् ।

३९७-३९९ । अथ दश निगर्भयोगिनीराह—सर्वज्ञामित्यादिना सर्वेप्सितफलप्रदामित्यन्तेन । गन्धाद्यैरुपचारैर्यजेदिति सर्वत्र सम्बध्यते ।

४००-४०१ । सर्वरक्षेति । चक्रं यजेदिति सम्बन्धः । तथाच सर्वरक्षाकरान्तर्दशारचक्राय नम इति प्रयोगः । ध्यायेदिति । त्रिपुरामालिनीचक्रनायिकाश्रीपादुकां पूजयामि नम इति प्रयोगः । तन्त्रसारे तु त्रितार्यनन्तरमादौ ह्रीं क्लीं ब्लुमिति बीजयोगो दृश्यते । महेति । सर्वमहाङ्कुशमुद्रां प्रागुक्तलक्षणाम् ।

४०२ । अथ मूलदेव्यै पूजासमर्पणस्य क्रममाह—एता इति । तथाच एता

---

1. '-श्च' C. 2. 'दिनेशं' B. 3. 'निगर्भ-' C.

[ स्थितिचक्रोपसंहारः संहारचक्रनिरूपणप्रतिज्ञा च ]

स्थितिचक्रं समाख्यातं संहारं कथयाम्यथ ॥ ४०३ ॥

[ वशिन्याद्यष्टरहस्ययोगिन्यः ]

पश्चिमाम्नायमार्गेण वशिन्याद्यष्टदेवताः ।

[ तासां स्वरूपम् ]

नवीनार्कसमाभासाः सर्वालङ्कारभूषिताः ॥ ४०४ ॥

धनुर्बाणाक्षमालाश्च पुस्तकं बिभ्रतीः करैः ।

[ पूजाक्रमः ]

[1]न्यासोक्तमनुना मन्त्री यजेद् वर्गाष्टकेन तु ।

[ एतासामष्टारवृत्तित्वम् ]

एता रहस्ययोगिन्यः प्रथमावरणे स्थिताः ॥ ४०५ ॥

---

निगर्भयोगिन्यः सर्वरक्षाकरे चक्रे समुद्राः ससिद्धयः सायुधाः सवाहनाः सपरिवाराः सर्वोपचारैः पूजिताः सन्तु इति प्रयोगः ।

४०३। स्थितीति। सर्वसौभाग्यदायकं सर्वार्थसाधकं सर्वरक्षाकरञ्चेत्येतच्चितयात्मकं स्थितिचक्रमित्यर्थः। वक्ष्यमाणत्रितयात्मकं संहारचक्रं निरूपयितुं प्रतिजानीते—संहारमित्यादिना ।

४०४-४०५। तत्र प्रथममष्टारे सर्वरोगहरे चक्रे वशिन्यादीनां रहस्ययोगिनीनां पूजनमभिदधानस्तासां स्वरूपमाह—नवीनार्केति। वशिन्याद्यास्तु वशिन्याद्यष्टवाग्देवीरेषु स्थानेषु विन्यसेदित्यादिना पञ्चदशे न्यासप्रकरणे समुद्दिष्टास्ताश्च तट्टीकायां वशिनी-कामेश्वरी-मोदिनी-विमलारुणा-जयिनी-सर्वेश्वरी-कौलिन्याख्या अष्टाविति विशिष्य प्रदर्शिताः। न्यासोक्तेति। पूर्वप्रदर्शितन्यासोक्तमन्त्रेणैवैताः पूजयेत्। वर्गाष्टकेनेति वशिन्यादीनामष्टानां पुरतः क्रमेण वर्गाष्टकं प्रयोज्य पूजयेदित्यर्थः ; एवञ्च अकारादिषोडशस्वराण्युच्चार्य वरलूं वशिनीवाग्देवताश्रीपादुकां पूजयामि नमः इत्यादिरूपः प्रयोगः, त्रितार्यादिप्रयोगस्तु पूर्ववदेव ।

---

1. 'न्यासोक्त-१' C.

[ चक्रपूजा ]

सर्वरोगहरं नाम चक्रं संपूजयेत्ततः ।

[ चक्रनायिकार्चा ]

ध्यायेच्छ्रीत्रिपुरासिद्धां वशिनीपुरतः सुधीः ॥ ४०६ ॥

[ चक्रनायिकायाः स्वरूपम् ]

जवाकुसुमसङ्काशां पाशाङ्कुशधनुःशराम् ।

[ मुद्राप्रदर्शनादि ]

सन्दर्श्य [1]खेचरीमुद्रां यजे[2]च्छक्तिश्च मायया ॥ ४०७ ॥

[ पूजासमर्पणम् ]

एता रहस्ययोगिन्यः सर्वरोगहरे पदात् ।
चक्रे समुद्रा इत्यादि पूर्ववत् परिकल्पयेत् ॥ ४०८ ॥

[ बाणार्चा ]

अष्टकोणा[3]न्तराले च त्रिकोणस्य [4]बहिःस्थितः ।
पश्चिमादिचतुर्दिक्षु बाणान् संपूजयेद् बुधः ॥ ४०९ ॥

[ बाणानां स्वरूपम् ]

तरुणारुणसङ्काशान् रक्तवस्त्रविभूषितान् ।
रक्तमाल्यविशोभाढ्यान् यौवनोन्मत्तविग्रहान् ॥ ४१० ॥
पाशाङ्कुशधनुःपञ्च[5]पुष्पबाणविभूषितान् ।
बाणधनुःपाश[6]सृणियुग्मानि च क्रमादनु ॥ ४११ ॥

---

४०६-४०७ । सर्वरोगेति । सर्वरोगहराष्टारचक्राय नमः इति प्रयोगः । ध्यायेदिति । श्रीत्रिपुरासिद्धाचक्रनायिकाश्रीपादुकां पूजयामि नमः इति प्रयोगः । अत्र मूले चक्रनायिकापदमनुपात्तमपि सर्वत्र चक्रनायिकापदप्रयोगदर्शनाद्विवेशितम् ।

---

1. 'खेचरीं' C. 2. '-द् युक्तिश्च' C. 3. '-न्तरे तस्य' B. 4. 'च वारितः' C. 5. '-पञ्चपुष्पविभू-' B. 6. '-शूलि- ?' C.

[ बाणानां संज्ञाः पूजाक्रमश्च ]

[1]जृम्भणं मोहनश्चैव वशं स्तम्भनमेव च ।
न्यासोक्तक्रमयोगेण पूजयेत् साधकोत्तमः ॥ ४१२ ॥

[ अङ्गदेवतार्चा ]

[2]अस्त्रत्रिकोणयोर्मध्ये पूजयेदङ्गदेवताः ॥ ४१३ ॥
त्रिकोणमध्यचक्रे तु पूजयेन्मूलविद्यया ।
अन्तरान्तरभेदेन समस्तव्यस्तया यजेत् ॥ ४१४ ॥
[3]बालाबीजत्रयेणापि भैरव्याः कूटकैस्त्रिभिः ।
सुन्दर्याश्च त्रिभिः [4]कूटैस्त्रिकोणं परिपूजयेत् ॥ ४१५ ॥
कामेश्वरीं [5]रुद्रशक्ति[6]मग्निचक्रे प्रपूजयेत् ।
वज्रेश्वरीं विष्णुशक्तिं सूर्यचक्रे प्रपूजयेत् ॥ ४१६ ॥
भगमालां ब्रह्मशक्तिं सोमचक्रे प्रपूजयेत् ।
[7]बिन्दुचक्रे यजेद्देवीं परंब्रह्मस्वरूपिणीम् ॥ ४१७ ॥
[8]कामे मित्रीशनाथः स्याज्जाले षष्ठीशनाथकः ।
पूर्णे चोड्डीशनाथश्च[9] [10]चर्यानाथस्तु [11]ओड्रके ॥ ४१८ ॥
कामेश्वरीं वाग्भवेन यजेद् ध्यात्वा तु पूर्ववत् ।
एवं [12]चक्रेश्वरीं ध्यात्वा काम[13]राजेन पूजयेत् ॥ ४१९ ॥
भगेशीं शक्तिकूटेन यजेद् ध्यात्वा तु पूर्ववत् ।
सर्वसिद्धिप्रदे चक्रे द्वितीयावरणे नयेत् ॥ ४२० ॥

---

1. 'जम्भनं' C. 2. 'अन्तस्त्रि-' B. 3. 'बाण-' B. 4. 'कूटे त्रि-' ? C. 5. 'वज्र-' B. 6. 'अग्नी'त्यादि पादद्वयं A-B-पुस्तकयोर्नास्ति । 7. 'विष्णु-' B. 8. 'काम-' ? B. 9. '-न्तु' C. 10. 'चर्म-' B 11. 'शूद्रके' ? B. 12. 'वज्रे-' C. 13. '-राजे प्र-' B.

रहस्ययोगि[1]नीस्तत्र [2]सर्वसिद्धिप्रदायिकाम् ।
[3]पाशाङ्कुशधनुर्बाणधरां रक्तां सुशोभनाम् ॥ ४२१ ॥
बीजमुद्राञ्च सन्दर्श्य परां शक्तिं प्रपूजयेत् ॥ ४२२ ॥
[4]एता अतिरहस्येति पदाद् योगिन्य इत्यपि ।
सर्वसिद्धिमये चक्रे समुद्रेत्यादि पूर्ववत् ॥ ४२३ ॥

[ बिन्दुचक्रे श्रीमत्त्रिपुरसुन्दरीसपर्या ]

सर्वानन्दमये चक्रे बैन्दवे परमेश्वरीम् ।
परंब्रह्मस्वरूपाञ्च परमामृतरूपिणीम् ॥ ४२४ ॥
सर्वचक्रेश्वरीं देवीं सर्वमन्त्रेश्वरीं तथा ।
सर्वमुद्रेश्वरीञ्चापि सर्वविद्येश्वरीं तथा[5] ॥ ४२५ ॥
सर्वपीठेश्वरीञ्चापि सर्ववीरेश्वरीं पुनः ।
सर्वयोगेश्वरीञ्चापि सर्व[6]सिद्धीश्वरीमपि ॥ ४२६ ॥
उत्पत्तिस्थितिसंहारकारिणीं मातृकां पराम् ।
समुद्रां सायुधाञ्चापि सचक्राञ्च सवाहनाम् ॥ ४२७ ॥
परिवारसमेताञ्च [7]ससिद्धिञ्च सदेवताम् ।
[8]परापरां महादेवीं भुक्तिमुक्तिप्रदायिनीम् ॥ ४२८ ॥

---

४२३ । एता इति । तथाच 'एता अतिरहस्ययोगिन्यः सर्वसिद्धिमये चक्रे समुद्राः ससिद्धयः सायुधाः सवाहनाः सपरिवाराः सर्वोपचारैः पूजिताः सन्तु' इति प्रयोगः ।

---

1. '-नीं तत्र' B. 2. 'सर्वदा त्रिपुराम्बिकाम्' C. 3. 'पाशे'त्यादि पादद्वयं C-पुस्तके नास्ति । 4. 'तृतीयाति-' B. 5. इतः परं C-पुस्तके 'परंब्रह्मस्वरूपाञ्च परमामृत-रूपिणीम्' इति पुनरुक्तः पाठो दृश्यते । 6. '-सिद्धे-' B. 7. 'सर्वसिद्धिं सदेवताम्' B. 8. 'परामपरां' C.

ब्रह्मविष्णुशिवाद्यैश्च मुनीन्द्रैरपि सेविताम् ।
मनसैवं समालोक्य[1] श्रीमत्त्रिपुरसुन्दरीम् ॥ ४२९ ॥
परंब्रह्मात्मशक्तिश्रीपादुकामर्चयेद् बुधः ।

[ बैन्दवचक्रार्चा ]

सर्वानन्दमयं चक्रं बैन्दवं परिपूजयेत् ॥ ४३० ॥

[ चक्रनायिकार्चा ]

आवाहनेन मन्त्रेण भैरवीचक्रनायिकाम् ।
देव्यग्रे पूजयेन्मन्त्री गन्धपुष्पाक्षतादिभिः ॥ ४३१ ॥

[ मुद्रादर्शनादि ]

योनिमुद्राञ्च सन्दर्श्य [2]परां शक्तिं प्रपूजयेत् ।
शैवं वा पूजयेत्तत्र तत्त्वविमर्षिणीमते ॥ ४३२ ॥
[3]मध्यत्र्यस्रं सान्तरालं शैवं दर्शनमीरितम् ।
हौँ ॐ नमः शिवाय हौँ [4]भूयो नमोऽमुना शिवम् ।
पूजयेद् गन्धपुष्पाद्यैः षोढाऽयं दर्शनक्रमः ॥ ४३३ ॥

[ मूलदेव्यै पूजासमर्पणम् ]

एताः परापरेत्युक्त्वा रहस्येति पदोपरि ।
योगिन्य इति चोद्धृत्य [5]सर्वानन्दमये पदात् ॥ ४३४ ॥
[6]महाचक्रे बैन्दवे च परब्रह्मस्वरूपिणी ।
परामृतपदाच्छक्ति सर्वचक्रेश्वरीपदम् ॥ ४३५ ॥
सर्वमन्त्रेश्वरीशब्दात् सर्व[7]विद्येश्वरीपदम् ।
[8]सर्ववीरेश्वरी सर्वपीठेश्वरी पदं ततः ॥ ४३६ ॥

---

४३४—४३८ । अथ पूजासमर्पणमन्त्रमाह—एता इत्यादिना । तथाच एताः परापररहस्ययोगिन्यः सर्वानन्दमये महाचक्रे बैन्दवे चक्रे परब्रह्मस्वरूपिणी-

---

1. '-च्य' C. 2. 'पुरा' C. 3. 'मध्यं' C. 4. 'भूयो मनुना शिवम्' B. 5. 'सर्वयोगेश्वरीपदम्' B. 6. 'महाचक्र' इत्यादि पादचतुष्टयं B-पुस्तके नास्ति । 7. '-वागी-' B. 8. 'सर्ववीरेश्वरी'त्यादिपादचतुष्टयं B-पुस्तके नास्ति ।

सर्वयोगेश्वरीशब्दात् सर्ववागीश्वरीपदम् ।
सर्वसिद्धेश्वरी सर्वजगदुत्पत्तिमातृकाः ॥ ४३७ ॥

सचक्रा च समुद्रा चससिद्धि सायुधा[1]स्तथा ।
सवाहनाः सपरिवा[2]राश्च सर्वोपचारकै[3]र्महा ।
त्रिपुरान्ते सुन्दरीति परयापरयापदात् ॥ ४३८ ॥

परापरा तृतीया[4]न्ते सपर्या च तथाविधा ।
पूजिताः सन्तु इत्युक्त्वा देव्यै पूजां समर्पयेत् ॥ ४३९ ॥

---

परामृतशक्ति-सर्वचक्रेश्वरी-सर्वमन्त्रेश्वरी-सर्वविद्येश्वरी-सर्ववीरेश्वरी-सर्वपीठेश्वरी सर्वयोगेश्वरी-सर्ववागीश्वरी-सर्वसिद्धेश्वरी-सर्वजगदुत्पत्तिमातृकाः सचक्राः समुद्राः ससिद्धयः सायुधाः सवाहनाः सपरिवाराः सर्वोपचारकैर्महात्रिपुरसुन्दरीपरया परया परापरया सपर्यया पूजिताः सन्तु इति प्रयोगः ।

तन्त्रसारे तु—अत्र सर्वानन्दमये बैन्दवचक्रे परब्रह्मस्वरूपिणी-परापरशक्ति-श्रीमहात्रिपुरसुन्दरी-समस्तचक्रनायिका-सम्बित्तिरूपचक्रनायिकाधिष्ठिते त्रैलोक्यमोहन-सर्वाशापरिपूरक-सर्वसंक्षोभकारक-सर्वसौभाग्यदायक-सर्वार्थसाधक-सर्वरक्षाकर-सर्वरोगहर-सर्वसिद्धिप्रद--श्रीचक्रसमुन्मीलितसमस्तप्रकटगुप्तगुप्ततरसम्प्रदायकुल-कौलिनी-निगर्भरहस्यातिरहस्य—परापररहस्य—समस्तयोगिनीपरिवृत—श्रीत्रिपुरात्रिपुरेशी-·त्रिपुरसुन्दरी-त्रिपुरवासिनी-त्रिपुराश्री-त्रिपुरमालिनी-त्रिपुरासिद्धा-त्रिपुराम्बातत्तच्चक्रनायिका-वन्दितचरणकमलश्रीमहात्रिपुरसुन्दरी-नित्यादेवी-सर्वचक्रेश्वरी-सर्वमन्त्रेश्वरी-सर्वविद्येश्वरी—सर्वपीठेश्वरी-सर्वकामेश्वरी-सर्वतत्त्वेश्वरी-सर्ववीरेश्वरी-त्रैलोक्यमोहिनी जगदुत्पत्तिमातृका-सर्वचक्रमयी-तच्चक्रनायिकासहिताः समुद्राः ससिद्धयः सायुधाः सवाहनाः सपरिवाराः सर्वोपचारैः श्रीमहात्रिपुरसुन्दरी परापरया सपर्यया पूजितास्तर्पिताः सन्तु इति विशेषार्घ्योदकाक्षतकुसुमैः प्रधानदेव्या वामहस्ते समर्पयेद् इत्युक्तम् ।

---

1. 'शरा ?' B. 2. '-राद्या-' B. 3. '-रपि' B. 4. 'च' B.

कुण्डगोलोद्भवैर्द्रव्यैः स्वयम्भुकुसुमैर्युतैः ।
सुन्दरीं पूजयेन्मन्त्री शतमन्नततण्डुलैः ॥ ४४० ॥

[ पुनः सपर्य्योपदेशः ]

पुनः पाद्यादिकं दत्त्वा श्रीविद्यां पूजयेद् यथा ।

[ पुनरर्घ्यत्रयदानम् ]

[1]पुनस्त्रितत्त्वमुच्चार्य दद्यादर्घ्यं [2]त्रिधा पुनः ॥ ४४१ ॥

[ विविधोपचारैः पूजनम् ]

गन्धचन्दनकस्तूरीरोचनागुरुकुङ्कुमैः ।
रक्तचन्दनसिन्दूरैर्द्रव्यैर्नानाविधैर्यजेत् ॥ ४४२ ॥

[ उपचारदाने प्रार्थनामन्त्राः । तत्र पाद्यस्य प्रार्थनामन्त्रः ]

गन्धपुष्पसमायुक्तं सुगन्धिजलसंयुतम् ।
पाद्यं गृहाण देवेशि सर्वकामार्थसिद्धये ॥ ४४३ ॥

[ अर्घ्यस्य ]

दूर्वाक्षत[3]समायुक्तं गन्धचन्दनचर्चितम् ।
चतुर्वर्गफलावाप्त्यै गृहाणार्घ्यं सुरेश्वरि ॥ ४४४ ॥

[ आचमनीयस्य ]

[4]सुवासितं जलं शुद्धं [5]दुकूलैः परिशो[6]धितम् ।
गृहाणाऽऽचमनीयं त्वं श्रीमत्त्रिपुरसुन्दरि ॥ ४४५ ॥

[ मधुपर्कस्य ]

दध्याज्यमधुसंयुक्तं [7]सुवहं सुमनोहरम् ।
मधुपर्कं गृहाण त्वं धर्मकामार्थसिद्धये ॥ ४४६ ॥

---

४४२ । अथ देवीपूजायां प्रशस्तानुपचारान् सामान्यत आह—गन्धेति ।

---

1. 'मूलत्रि-' ? B. 2. 'तथा बुधः' C. 3. '-सुरा-' C. 4. 'छवासित-' C.
5. 'मृदुकूलैः' C. 6. '-भितम्' B. 7. 'सवनं ?' B.

[ गन्धस्य ]

[1]चन्द्रचन्दनकस्तूरीरोचनागुरुकुङ्कुमैः।
[2]सम्भृतं सरलैरार्द्रं गन्धमाकल्पयाम्यहम् ॥ ४४७ ॥

[ पुष्पस्य ]

विचित्र[3]ममलं रम्यं वासितं गन्धवारिभिः।
सुगन्धि विकसत् पुष्पमादरात् कल्पयाम्यहम् ॥ ४४८ ॥

---

४४८। पुष्पदानमाह—विचित्रमिति। वासितमिति गन्धवारिभिश्चन्दनजलै-र्वासितं सुरभीकृतमित्यर्थः। अत्रेदमवधेयम्—गन्धपुष्पधूपादय उपचाराः परकीयत्व-घ्रातत्वादिदोषदुष्टाः पूजायां वर्जनीयाः। तदुक्तं गन्धर्वतन्त्रे चतुर्दशपटले—

परकीयांस्तथा घ्रातांस्तेषां कृत्याभिमर्दितान्।
पुष्पं धूपञ्च गन्धञ्च नोपचारांस्तथाऽपरान्।
घ्रातान्निवेद्य देवेशि नरो नरकमाप्नुयात्।
नैव पर्युसितैः पुष्पैः पत्रैश्चापि महेश्वरीम्।
पूजयेत् परमेशानि महात्रिपुरसुन्दरीम् ॥
सर्वं पर्युषितं वर्ज्यं पत्रं पुष्पं फलं तथा।
पद्मानि सितरक्तानि कुमुदान्युत्पलानि च ॥
एषां पर्युषिताशङ्का कार्या पञ्चदिनोर्ध्वतः।
अन्येषां कुसुमानाञ्च यावद् गन्धविपर्ययः ॥

इति। एवञ्च पद्मकुमुदोत्पलानां दिनपञ्चकं यावत्, इतरेषान्तु यावद् गन्धावस्थिति-स्तावत् पर्युषितत्वं नास्तीत्युक्तं भवति। त्रिपुरार्चायां प्रशस्तानि पत्रपुष्पाण्याह तत्रैव—

बकुलं केशरं वज्रं माल्यं कुन्दञ्च शाल्मलम्।
करवीरञ्चार्कपुष्पं बन्धूककमले तथा ॥
मालती मल्लिका जाती यूथिका माधवी तथा।
तगरः कर्णिकारश्च द्रोणश्चोत्पलचम्पकौ ॥

---

1. 'चण्ड- ?' C. 2. 'सभूतं ?' B. 3. '-मदनं' B.

[ षोडशाङ्गधूपप्रमाणम् ]

गुग्गुलं सरलं दारु पत्रं मलयसम्भवम् ।
ह्रीवेरमगुरुं कुष्ठं गुडं सर्जरसं घनम् ॥ ४४६ ॥

---

अशोकः कुमुदश्चैव शेफालिका-कदम्बकौ
केतकी वनमाला च कुसुम्भकिंशुकौ तथा ॥
कह्लारबकुले चैव लवङ्ग-नागकेशरौ ।
सर्वेषु पुष्पजातेषु त्रिपुरायाः सदैव हि ॥
एतान्येव प्रियाणि स्युर्न पत्रैरर्चयेच्छिवाम् ।
पत्रेषु विल्वपत्रञ्च तथा मदनपल्लवम् ॥
दूर्वाङ्कुरन्तथा प्रोक्तं नान्यत् पत्रं प्रयोजयेत् ।
मल्लिका मालती कुन्दो द्रोणश्चाथ सिताम्बुजः ॥
शुक्लपत्ते महादेवि त्रिपुरायै निवेदयेत् ।
सर्वेषां पुष्पजातीनां रक्तपद्मं तथा जवा ॥
देवीप्रीतिकरं प्राज्ञे सर्वकामफलप्रदम् ।
रत्नपुष्पञ्च देवेशि तथा स्वर्णादिनिर्मितम् ।
रक्तपद्मेन वज्रेण तुलां नाऽऽयाति कर्हिचित् ॥

इति । तथा विहितानामपि पुष्पाणाम् उग्रगन्धत्वाशुद्धपात्रगतत्वादिदोषदुष्टत्वे तेषामर्पणं निषिद्धम्, यथा तत्रैव—

उग्रगन्धमगन्धञ्च क्रिमिकेशादिदूषितम् ।
अशुद्धपात्रपाणिस्थं वासोभिः कुत्सितात्मभिः ॥
आनीतं नार्पयेद्देव्यै प्रमादादपि दोषकृत् ।
स्नात्वानीतैः पर्युषितैर्याचितैः कृष्णवर्णकैः ॥
स्वयं विकशितैर्मुक्तैः स्वयञ्च पतितैर्भुवि ।
नार्चयेत् कलिकाभिश्च विना चम्पकपङ्कजैः ॥

इत्यादि । एवमन्यान्यपि विहिताविहितपुष्पप्रतिपादकप्रमाणानि मुण्डमाला-योगिनीतन्त्र-कौलावलीनिर्णयादिषु ज्ञातव्यानि ।

हरीतकीं [1]नखं लाक्षां जटामांसीञ्च शैलजम् ।
षोडशाङ्गं विदुर्धूपं दैवे [2]पित्र्ये च कर्मणि ॥ ४५० ॥

[ अन्यादृशधूपप्रमाणम् ]

मधुसर्पिः शर्करा च चन्दनागुरुगुग्गुलुः ।
[3]उशीरः सप्त एवैते धूपोऽयं चण्डिकाप्रियः ॥ ४५१ ॥

---

४४९-४५० । षोडशाङ्गधूपप्रमाणमाह—गुग्गुलमित्यादिना । सरलो वृक्षविशेषः । 'पीतद्रुः सरलः पूतिकाष्ठमि'त्यमरः । दारु देवदारु, 'शक्रपादपः परिभद्रकः । भद्रदारुद्रुकिलिमम्, पीतदारु च दारु च । पूतिकाष्ठञ्च सप्त स्युर्देवदारुणी'त्यमरः । अत्र दारुशब्देन देवदारुरेवोच्यते,

हरीतकी मुस्तमथो नखी च मांसी जतुः शैलज-देवदारुः ।
कुष्ठं गुडः सर्जरसस्तथैव दशाङ्गधूपः कथितो मुनीन्द्रैः ॥

इति कौलावलीनिर्णयसप्तमोल्लासीयदशाङ्गधूपप्रमाणे तथा दर्शनात् । पत्रं तेजपत्रम् । मलयसम्भवं चन्दनम् । ह्रीबेरं नेत्रवालेति ख्यातो गन्धद्रव्यविशेषः । 'बालं ह्रीबरबर्हिष्ठोदीच्यं केशाम्बुनाम चे'त्यमरः । सर्जरसः सालनिर्यासः । 'यक्षधूपः सर्जरसोऽरालसर्वरसावपी'त्यमरः । घनो मुस्ता मुथेति प्रसिद्धा । 'घनः सान्द्रे दृढे दार्ढ्ये विस्तारे मुद्गरेऽम्बुदे । संघे मुस्ते घनं मध्यनृत्यवाद्यप्रकारयोरि'ति हैमः । नखं गन्धद्रव्यविशेषः, 'नखं पुनर्गन्धद्रव्ये नखः करजषण्डयोरि'ति हैमः । शैलजं 'शिलाजतु' इति ख्यातो गन्धद्रव्यविशेषः । 'कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु शैलेयमि'त्यमरः । 'शैलेयं गलपर्ण्याञ्च सैन्धवे । शैलजे ना तु मधुपे शिलातुल्येऽन्यलिङ्गकम् ।" इति च मेदिनी । शिष्टं स्पष्टम् । गन्धर्वतन्त्रे चतुर्दशपटले—

पत्रं मुस्तं नखं कुष्ठं जटामांसीञ्च शैलजम् ।
सरलं देवकाष्ठञ्च जतुसर्जं सचन्दनम् ॥
कपिलाघृतकर्पूरशर्करापूरमिश्रितम् ।
षोडशाङ्गो महाधूपः षोडशीप्रीतिदायकः ॥

इति ।

४५१ । मध्वित्ति । उशीरो वीरणमूलम् ।

---

1. 'नखीं' B. 2. 'पैत्रे' C. 3. 'उशीर' इत्यादिपादचतुष्टयं A-B-पुस्तकयोर्नास्ति ।

[ अन्यादृशधूपप्रमाणम् ]

अथवाऽगुरुकर्पूरचन्दनैः सह गुग्गुलुः ।
मधुसर्पिर्जटामांसी शैलेयं कुङ्कुमं तथा ।
[1]एभिर्विमिश्रितः कार्यो धूपोऽयं [2]पार्वतीप्रियः ॥ ४५२ ॥

[ धूपदानक्रमः ]

[3]धूपभाजनमस्त्रेण प्रोक्ष्याभ्यर्च्य हृदाऽनुना ।
जयध्वनि ततो मन्त्रमातः स्वाहेति पूजिताम् ।
वामेन वादयन् घण्टां धूपदीपौ निवेदयेत् ॥ ४५३ ॥

[ धूपस्य प्रार्थनामन्त्रः ]

वनस्पतिरसोत्पन्नो गन्धाढ्यो गन्ध उत्तमः ।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ ४५४ ॥
[4]अथवा धूपयेद्धूपैर्मूलमन्त्रपुरःसरम् ।
सुरभीघृतसंयोगाद् वह्नेरुत्पन्नमुत्तमम् ।
ध्वस्तदुर्वा[5]सनं [6]दिव्यं धूपमुन्मीलयाम्यहम् ॥ ४५५ ॥

[ दीपस्य ]

सुप्रकाशो महादीपः सर्वतस्तिमिरापहः ।
सबाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥ ४५६ ॥

---

४५३ । धूपेति । अस्त्रेण फट् इत्यनेन । हृदाऽनुना, नम इति हृन्मन्त्रेणेत्यर्थः । तथाच फट् इत्यनेन धूपभाजनमभ्युक्ष्य धूपाय नम इत्यभ्यर्च्येत्यर्थः । धूपेति । धूपदीपौ निवेदयेदित्यनेन वक्ष्यमाणदीपदानेऽपि निरुक्तक्रमेण ओं जयध्वनि-मन्त्रमातः स्वाहेति प्रयोजयेदिति बोध्यम् ।

---

1. 'एभिर्वै' C. 2. 'प्रतिगृह्यताम्' B. 3. 'धपे'त्यादि'प्रतिगृह्यतामि'त्यन्तं पाददशकं B-पुस्तके नास्ति । 4. 'तथाच' B. 5. '-दूर्वासमं' B. 6. 'रम्यं' C.

[ तत्र कल्पान्तरम् ]

अथवाऽन्यप्रकारेण दीपं दद्याद् विचक्षणः ॥ ४५७ ॥

[ प्रार्थनामन्त्रान्तरम् ]

घृतसंयुक्तवर्त्त्यग्रे प्रज्वलन्तं निरन्तरम् ।
दिव्यदर्शनदातारं दीपं सन्दर्शयाम्यहम् ॥ ४५८ ॥

[ धूपदाने दिङ्नियमः ]

धूपन्तु वामतो दद्यात् संमुखे [1]वा विचक्षणः ।

[ भूम्यादौ धूपस्थापननिषेधः ]

न भूमौ [2]स्थापयेद्धूपमासने वा घटे च वा ॥ ४५९ ॥

[ दीपदाने दिङ्नियमः ]

घृतदीपं [3]दक्षिणे च स्ववामे तैल[4]दीपकम् ।
अभितो दर्शयेन्मन्त्री दीपमालां सुशोभनाम् ॥४६०॥

[ सप्तविधाः प्रदीपाः ]

घृतप्रदीपः प्रथमं तिलतैलसमुद्भवः ।
सार्षपः फलनिर्यासजातो वा वारिजोद्भवः ।
दधिज[5]श्चान्नजश्चैव दीपाः सप्त प्रकीर्त्तिताः ॥ ४६१ ॥

[ पञ्चविधा वर्तिकाः ]

[6]पट्टसूत्रभवा [7]दर्भगर्भसूत्रभवाऽ[8]थवा ।
[9]शालजा बादरी वाऽपि फलकोषोद्भवाऽथवा ।
वर्त्तिका दीप[10]कृत्येभ्यः सदा पञ्च[11]विधाः स्मृताः ॥ ४६२ ॥

[ प्रशस्तानि दीपपात्राणि ]

तैजसं बादरं लौहं मार्त्तिक्यं नारिकेलजम् ।
तृणराजोद्भवं वाऽपि दीपपात्रं प्रशस्यते ॥ ४६३ ॥

---

1. 'न' B. 2. 'स्थापनं कार्य-' B. 3. 'लक्षणे तु ?' C. 4. '-सम्भवम्' C. 5. '-श्चान्दन-' B. 6. 'पद्म-' C. 7. 'दर्भादर्भ-' C. 8. '-परा' B. 9. 'शालजे'त्यादिपादद्वयं C-पुस्तके नास्ति । 10. '-कृत्स्नेभ्यः' B. 11. '-विधाश्च ताः' B.

एवं दीपं प्रकुर्वीत नेत्र[1]रञ्जनकारकम् ।

[ दीपदानक्रमः ]

दीपन्तु पद्मपर्य्यन्त[2]मधो धूपं प्रकाशयेत् ॥ ४६४ ॥

[ माल्यदाने प्रार्थनामन्त्रः ]

कमलोत्पलकह्लारकरवीरादियोगतः ।
सुरभीणि सुगन्धीनि माल्यान्यावेदयाम्यहम् ॥ ४६५ ॥

[ मधुरद्रव्यदानम् ]

प्रदद्यान्मधुरं [3]द्रव्यं परमानन्दमानसः ॥ ४६६ ॥

[ तर्पणम् ]

तर्पयेन्म[4]धुरैर्द्रव्यैर[5]मृतैर्मधुमिश्रितैः ।
अमृतश्चामृतद्रव्यैस्तर्पयेत् परदेवताम् ॥ ४६७ ॥

[ चरुपाकोपदेशः ]

ततश्च संस्कृते वह्नौ [6]गोक्षीरचरुकं पचेत् ।

[ चरुपाकक्रमः ]

अस्त्रेण क्षालिते पात्रे नवे ताम्रमयादिके ॥ ४६८ ॥

---

४६४-४६५ । दीपन्त्विति । पद्मपर्यन्तमिति दृष्टिपर्यन्तमित्यर्थः । दीपे विशेषमाह गन्धर्वतन्त्रे चतुर्दशपटले—

दीपमाला प्रकर्तव्या नैकदीपः कदाचन ।
त्रयो दीपाः प्रदातव्याः पञ्च वा परमेश्वरि ।
इतो न्यूनं न दातव्यं त्रिपुरायै कदाचन । इति ।

कमलेति । माल्यदानफलमाह गन्धर्वतन्त्रे चतुर्दशपटले—

एतेषां पुष्पजातानां येन केन विनिर्मिताम् ।
मालां कृत्वा महादेव्यै यत् फलं लभते नरः ।
अपि वक्त्रसहस्रैस्तु वक्तुं नालं ततः प्रभुः ।

इति अत्रैतेषामित्यनेन पूर्वोपदर्शितानि विहितपुष्पाण्यभिहितानि ।

४६८—४७२ । ततश्चेति । संस्कृत इति अष्टमप्रकाशोक्तक्रमेणेति शेषः ।

---

1. '-चन्दन-' B. 2. '-मध्वा ?' B. 3. 'दिव्य-' C. 4. '-धुरद्रव्यै-' B. 5. 'अमृते'त्यादिपादद्वयं C-पुस्तके नास्ति । 6. 'गोक्षीरं' B.

तण्डुलाञ् शालिसम्भूतान् मूलमन्त्राभिमन्त्रितान् ।
प्रसृतीः पञ्चदशभिर्निक्षिप्यास्त्रमनुं स्मरन् ॥ ४६९ ॥
[1]पिधाय पात्रवदनं प्रक्षाल्य कवचानुना ।
प्राङ्मुखो मूलमन्त्रेण साधकेन्द्रश्चरुं पचेत् ॥ ४७० ॥
श्रुवेणाऽऽज्येन संस्विन्ने दद्यात्तत्राभिघारणम् ।

[ चरोरवतारणम् ]

मूलमन्त्रेण तत् पात्रं कवचेनावतारयेत् ॥ ४७१ ॥
अस्त्रजप्ते कुशास्तीर्णे [2]मण्डपे विधिवद् गुरुः ।

[ चरुविभागः ]

तं विभज्यैकभागन्तु [3]देवतायै प्रकल्पयेत् ॥ ४७२ ॥
अन्यदग्नौ प्रजुहुयादपरं बलिमुत्तमम् ।
एकन्तु [4]चरुकं प्रोक्तमारात्रिकविधावपि ॥ ४७३ ॥

[ आरात्रिकम्, तत्राष्टदलपद्मनिर्माणम् ]

तत[5]स्तु काञ्चने स्थाने रौप्ये वा कांस्यनिर्मिते ।
वसुपत्रसमायुक्तं कुङ्कुमेन तु [6]नीरजम् ॥ ४७४ ॥

---

चरुपाकपरिपाटीमाह—अस्त्रेणेत्यादिना । अस्त्रेण फडित्यनेन । शालिसम्भूतान् हैमन्तिकधान्यप्रभवान्, पञ्चदशमुष्टिपरिमितान् ताम्रनिर्मितचरुस्थाल्यां निक्षिपेदित्यर्थः । अस्त्रमनुमिति । तथाच फट् इति चरुस्थालीमुखमाच्छाद्य कवचानुना हुँ इति मन्त्रेण प्रक्षाल्य चरुं पचेदिति सम्बन्धः । कवचेनेति, हुँ इत्यवतारयेदित्यर्थः ।

४७२-४७३ । एवंक्रमेण चरोः पाकमभिधाय तस्य चतुर्धा विभजनमाह—तमित्यादिना । तं चरुं चतुर्धा विभज्य एकं देवतायै समर्प्य द्वितीयमग्नौ जुहुयात्, अपरेण बलिं दद्यात्, चरुमन्यमारात्रिकविधौ प्रयुञ्जीतेत्यर्थः ।

---

1. 'निधाय' C. 2. 'मण्डले' ? C. 3. 'भैरवाय' C. 4. 'कवचं ?' B. 5. '-श्च' C. 6. 'वीरजम् ?' C.

[ तत्रौदनस्य नवभागकल्पनम् ]

शुद्धौदनं परिष्कृत्य नवभागं प्रकल्पयेत् ।
नव[1]कोणक[2]रूपञ्च चक्ररूपं विचिन्तयेत् ॥ ४७५ ॥

[ अष्टदलेषु शुद्धौदनस्थापनम् ]

शर्करा[3]यवगोधूमचणकैः परिमण्डितम् ।
तण्डुलाज्यतिलैर्युक्तं वसुपत्रे विनिक्षिपेत् ॥ ४७६ ॥

[ नवमभागस्य कर्णिकायां स्थापनम्, नवमुद्राप्रदर्शनञ्च ]

[4]एकं मध्ये तु संस्थाप्य नव [5]मुद्राः प्रदर्शयेत् ।

[ पश्चात् दीपनवकन्यासः पूजनञ्च ]

स्थापयेत्तत्र मन्त्रज्ञो नव दीपान् घृतप्लुतान् ॥ ४७७ ॥
पञ्चरत्नं प्रेतबीजं समुच्चार्य प्रपूजयेत् ।
मूलमन्त्रेण संपूज्य पाणिभ्यां धारयेद् यथा ॥ ४७८ ॥

---

४७४—४७५। अथाऽऽरात्रिकविधिमाह—ततस्त्वित्यादिना। काञ्चनाद्यन्यतमनिर्मिते स्थाने आधारे कुङ्कुमेनाष्टदलं नीरजं पद्मं विदधीतेत्यर्थः। ततः शुद्धौदनं नवभागं कुर्यात्। नवेति। अष्टौ दलानि कर्णिकाञ्चाऽऽदाय नवसंख्याकत्वं बोध्यम्।

४७६—४७७। निरुक्ताष्टदले प्रागुक्तशुद्धौदनस्थापनमाह—शर्करेति। शर्करादिभिर्युक्तं तत् शुद्धौदनं वसुपत्रे निरुक्तपद्मस्य पत्राष्टके निवेशयेत्। एकमिति। भागमेकं मध्ये कर्णिकायां स्थापयेत्। प्रागुक्तशुद्धौदनस्य नवभागानामष्टौ भागानष्टसु दलेषु, अवशिष्टं नवमं भागं कर्णिकायां स्थापयेदित्यर्थः। नव मुद्रा इति प्रागुक्ताः सर्वाकर्षिण्यादिकाः।

४७७—४७८। तत्र दीपस्थापनमाह—स्थापयेदित्यादिना। नव दीपान् शुद्धौदनक्रमेणाष्टदलेषु कर्णिकायाञ्चेत्यर्थः। अथ सदीपस्य पात्रस्य पूजनमाह—पञ्चरत्नमिति। आदौ पञ्चरत्नं ततो ह्साविति प्रेतबीजम्। पञ्चरत्नं ग्लूं स्लूं म्लूं प्लूं न्लूं इति बीजपञ्चकम्। बीजानामेतेषामादौ श्रीं ह्रीमिति बीजद्वयमन्ते च तद्विलोमेन ह्रीं श्रीमिति बीजद्वयं समष्ट्या नवाक्षरो रत्नेशीमन्त्रो भवति। अत्र पञ्चरत्नमित्युक्तावपि ज्ञानार्ण-

---

1. '-गोलक-' B. 2. '-रूपस्तु ?' C. 3. '-वर-' C. 4. 'एवं' A-C. 5. '-मुद्रां' C.

[ दीपपात्रस्य भ्रामणम् ]

मस्तकान्तं समानीय नवधा भ्रामयेद् बुधः ।
मूलमन्त्रान्तमन्त्रेण ततो नीराजनं चरेत् ॥ ४७६ ॥

[ आरात्रिकमन्त्रः ]

¹समस्तचक्रचक्रेशीयुते देवि नवात्मिके ।
आरात्रिकमिमं देवि गृहाण मम सिद्धये ॥ ४८० ॥

चादौ रत्नेशीमन्त्रेण दीपपात्रार्चोपदेशदर्शनादत्रापि तदभिप्रायेणैव पञ्चरत्नमित्युक्तमिति प्रतिभाति । व्यक्तमाह तन्त्रसारधृतज्ञानार्णवे—

आरात्रिकमतः कुर्यात् सर्वकामार्थसिद्धये ।
सौवर्णे राजते कांस्ये स्थानके परमेश्वरि ॥
कुङ्कुमेन लिखेद् यन्त्रं नवकोणं मनोहरम् ।
चन्द्ररूपं चरुं कृत्वा तन्मध्ये मस्तके शिवे ॥
दीपमेकं विनिक्षिप्य वसुकोणेऽष्टदीपकान् ।
यवगोधूममुद्गादिरचितान् शर्करायुतान् ।
चणकाहितशोभाभिः शोभितान् घृतपूरितान् ॥
अभिमन्त्र्य महेशानि रत्नेश्वर्यास्ततः परम् ॥
श्रीबीजञ्च पराबीजं संलिख्य वरवर्णिनि ।
गसौ च मपलाः पश्चादिन्द्रस्थाः क्रमतः प्रिये ।
वामकर्णसमायुक्ता नादबिन्दुविभूषिताः ।
बीजपञ्चकमेतत्तु पञ्चरत्नानि सुन्दरि ।
पूर्वबीजविलोमेन रत्नेशीयं नवाक्षरी ॥

इति । एवञ्चाऽऽदौ श्रीं ह्रीमिति श्रीपराबीजयोरन्ते च ह्रीं श्रीमिति विलोमेन पठितयोरेतयोर्निवेशेन श्रीं ह्रीं ग्लूं स्लूं म्लूं प्लूं ल्लूं ह्रीं श्रीं इति नवाक्षरो रत्नेशीमन्त्रो भवति । मूलमन्त्रेणेति । पञ्चरत्नेन प्रेतबीजेन मूलेन चाभ्यर्चयेत्यर्थः । अत एव तन्त्रसारकारैरपि रत्नेशीमन्त्रमभिधाय इति मन्त्रेण मूलेन चाभ्यर्च्येत्युक्तम् ।

४७६ । मस्तकान्तमिति । स्पष्टम् । मूलमन्त्रान्तमन्त्रेण आदौ मूलमुच्चार्य वक्ष्यमाणमन्त्रेणेत्यर्थः ।

1. 'समस्ते'त्यादि 'कनिष्ठिकामि'त्यन्तं पादाष्टकं B-पुस्तके नास्ति ।

[ मुद्रादर्शनम् ]

यथोक्तस्थाने संस्थाप्य चक्रमुद्राञ्च दर्शयेत् ॥ ४८१ ॥

[ चक्रमुद्रा ]

दक्षिणेतरहस्तस्य वृद्धागर्भकनिष्ठिकाम् ।
दक्षिणे योजयित्वा तु कनिष्ठागर्भके ततः ॥ ४८२ ॥
वामे च दक्षिणाङ्गुष्ठं साधको विनियोजयेत् ।
अन्योन्ययोगतश्चैव चक्रमुद्रा समीरिता ॥ ४८३ ॥

[ नैवेद्यार्पणम् ]

तत आरात्रिकं वीक्ष्य नैवेद्यानि प्रकल्पयेत् ॥ ४८४ ॥

[ नैवेद्यपात्राणि ]

तैजसेषु च पात्रेषु प्रस्तरे वा द्रुपत्रके ।
यज्ञदारुमये वाऽपि नैवेद्यं कल्पयेद् बुधः ॥ ४८५ ॥
सर्वालाभे तु माहेये स्वहस्तघटिते यदि ॥ ४८६ ॥

[ अर्घ्येतरपात्रीयतोयैर्नैवेद्योत्सर्गनिषेधः ]

अन्यतोयैर्यदुत्सृष्टमर्घ्यपात्रस्थितेतरैः ।
न गृह्णाति महादेवो दत्तं विधिशतैरपि ॥ ४८७ ॥

[ नैवेद्यम् ]

नैवेद्यं [1]सघृतं शुभ्रं घृतव्यञ्जनसंयुतम् ।
मत्स्यमांसं मुद्गसूपं मरीचादिसुसंस्कृतम् ॥ ४८८ ॥

---

४८१ । चक्रमुद्रामिति । तदुक्तं तन्त्रसारे—

आरात्रिके महेशानि चक्रमुद्रां प्रदर्शयेत् । इति ।

४८५-४८६ । तैजसेष्विति । माहेये मृत्पात्रे । त्रिपुरापूजायां प्रशस्तानि नैवेद्यपात्रान्तराण्याह गन्धर्वतन्त्रे पञ्चदशपटले—

सौवर्णे राजते वाऽपि ताम्रे वा प्रस्तरेऽपि च ।
पद्मपत्रेऽथवा दद्यान्नैवेद्यं त्रिपुराप्रियम् ॥ इति ।

---

1. 'सद्युतं' B.

शर्करापूपभरितं मधुदुग्धगुडान्वितम्।
षड्रसेन समायुक्तं पायसं मधुसंयुतम्॥ ४८९॥
नानाविधानि द्रव्याणि फलानि विविधानि च।
मनःप्रियाणि द्रव्याणि कृत्वा साधकसत्तमः॥ ४९०॥

[ तत्स्थापनार्हं मण्डलम्, तत्राऽऽधारशक्त्यर्चनञ्च ]

दक्षिणे वा पुरोभागे वामे वा मण्डलं लिखेत्।
त्रिकोणवृत्तभूबिम्बमाधारशक्तिमर्चितम्॥ ४९१॥

---

४९१। अत्र नैवेद्यस्थापनमाह—दक्षिण इति।

नैवेद्यं दक्षिणे वामे पुरतो वा न पृष्ठतः।

इति गन्धर्वतन्त्रचतुर्दशपटलवचनेन देव्या दक्षिणे वामेऽग्रतो वा नैवेद्यस्थापनोपदेशात्। अत्र मण्डलनिर्माणमपि तत्र तत्रोक्तम्। एतेन नैवेद्यस्थापनस्थानमप्यर्थादायातम्। न च दक्षिणे वा पुरोभाग इत्यत्र कस्येति विशेषानतिदेशाद् आत्मनो दक्षिणादिषु नैवेद्यस्थापनमनेनोपदिष्टमिति वाच्यम्—

दीपं दक्षिणतो देव्याः पुरतो वा न वामतः।
वामतस्तु तथा धूपमग्रे वा न तु दक्षिणे।
निवेदयेत् पुरोभागे गन्धं पुष्पञ्च भूषणम्।

इत्यनन्तरं नैवेद्यं दक्षिणे वाम इत्यादि प्रागुपदर्शितगन्धर्ववचनदर्शनाद् देव्या एव दक्षिणादिषु नैवेद्यस्थापनं न त्वात्मन इति बोध्यम्। अत एव तन्त्रसारकारैरपि वाम-दक्षिणभागस्तु देवताया एव, न तु साधकस्य—

धूपदीपौ सुभोज्यञ्च देवताग्रे निवेदयेत्।

इति दर्शनादित्युक्तम्। तथा—

दद्याद्योग्यं पुरतो नैवेद्यं भोजनादिकम्।

इति गन्धर्ववचनदर्शनाद् द्रव्यप्राचुर्यादिवशात् स्थानाभावेन वामदक्षिणयोः स्थापयितु-मयोग्यमेव नैवेद्यादिकं पुरतः स्थाप्यम्। स्थानसद्भावे तु वामदक्षिणयोरेवेत्युक्तं भवति। पक्वामान्नयोर्विशेषमाह तन्त्रसारे—

पक्वञ्च देवतावामे आमान्नञ्चैव दक्षिणे।

इति। पुरतः स्थापनन्तु नियमविरुद्धम्।

[ नैवेद्यस्थापनं प्रोक्षणादिसंस्काराश्च ]

नैवेद्यं तत्र संस्थाप्य प्रोक्षयेदस्त्रमन्त्रतः ।
कवचाख्येन संरक्ष्य वायुबीजेन शोधयेत् ॥ ४६२ ॥
वह्निबीजेन संदह्य वारुणेनामृतं चरेत् ।

[ नैवेद्यार्चना ]

पुष्पं दत्त्वा तत्र मन्त्रं सप्तधा प्रजपेन्[1]निजम् ॥ ४६३ ॥

---

पुरतो नियमो नास्ति दीपनैवेद्ययोः क्वचित् ।

इति तन्त्रसारधृतयामलवचनात् ।

यत्तु हरतत्त्वदीधितिकारैः—

दक्षिणे च सितावर्त्तिर्वामतो रक्तवर्त्तिकाम् ।
पक्वापक्वविभागेन नैवेद्यस्यापि तत्स्थितिः ।

इति तन्त्रसारधृतयामलवचनेन पक्वान्नस्य दक्षिणत आमान्नस्य वामतश्च स्थापनं प्रतिपादितम्, तत् 'पक्वञ्च देवतावाम' इति पूर्वोपदर्शितवचनविरोधात् कुव्याख्यानविजृम्भितम् । पक्वापक्वविभागेनेत्यत्र अपक्वञ्च पक्वञ्चेति द्वन्द्वेऽल्पस्वरत्वात् पक्वपदस्य पूर्वनिपातेन अपक्वस्य दक्षिणतः पक्वस्य वामतः स्थितिरित्यर्थे न विरोध इति सर्वं निर्विवादम् । एवञ्च—

दक्षिणन्तु परित्यज्य वामे चैव निधापयेत् ।
अभोज्यं तद् भवेदन्नं पानीयन्तु सुरोपमम् ॥

इत्यपि न पक्वान्नविषयम् । दक्षिणन्तु परित्यज्येत्यनेन एकनैवेद्यस्थले दक्षिणत्यागपूर्वकं वामतः स्थापनं प्रतिषिध्यते, बहुनैवेद्यस्थले तु दक्षिणतः स्थानालाभे वामतः स्थापनेऽपि न दोषः । न तु दक्षिणन्तु परित्यज्येति वचनस्य पक्वान्नविषयत्वे किमपि मानमस्ति, तन्त्रसारकारैरपि नास्य वचनस्य पक्वान्नविषयत्वमुक्तम् । पुरश्चरणचन्द्रिकायां वचनमिदं साम्प्रदायिकत्वेन व्याख्यातम् ।

४६२-४६३ । नैवेद्यनिवेदनक्रममाह—नैवेद्यमित्यादिना । अस्त्रमन्त्रतः फडिति मन्त्रेण । कवचाख्येन हुं इति मन्त्रेण । वायुबीजेन यमित्यनेन । वह्निबीजेन रमित्यनेन । वारुणेन वमिति वरुणबीजेन । पुष्पं दत्त्वेति । पुष्पेण नैवेद्यमभ्यर्च्येत्यर्थः । मन्त्रं मूलमन्त्रम् । गन्धर्वतन्त्रे तु—

---

1. '-द्विजः' B.

[ निवेदनप्रकारः ]

हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम् ।
पञ्चधा षड्रसोपेतं गृहाण परमेश्वरि ॥ ४९४ ॥
सर्वोपकरणा[1]दीनि मूलान्तेन निवेदयेत् ।

[ नैवेद्यालाभे व्यवस्था ]

अशक्तौ मनसा दद्यादेतत् कर्म न लोपयेत् ॥ ४९५ ॥

[ देव्यै चुलुकदानं मुद्राप्रदर्शनोपदेशश्च ]

[2]चुल्लुकं मनसा दत्त्वा पञ्च मुद्राः प्रदर्शयेत् ॥ ४९६ ॥

[ प्राणादिपञ्चमुद्रामन्त्राः ]

प्राणापानौ तथा व्यान उदानाख्यः समानकः ।
चतुर्थ्यन्तोऽग्निजायान्तो मुद्रामन्त्रो ध्रुवादिकः ॥ ४९७ ॥

---

निराच्छादं समालोक्य भक्तिश्रद्धासमन्वितः ।
वायुबीजेन संशोध्य सन्दहेद् वह्निना तथा ॥
वारुणेन स्वधावृत्या प्लावयेद्धेनुमुद्रया ।
अस्त्रमन्त्रेण संरक्ष्य मूलेनैवाभिषिच्य तु ॥
मूलदेव्याः स्वनामान्ते नैवेद्यमिति चोच्चरेत् ।
गृहाण वह्निजायान्तो नैवेद्यमनुरीरितः ॥
अन्नं चतुर्विधं देवि रसैः षड्भिः समन्वितम् ।
मया निवेदितं भक्त्या तदिदं प्रतिगृह्यताम् ॥
लेह्यचोष्यानुपानादिभक्ष्यभोज्यानि यानि च ।
मयाहृतानि यत्नेन कृपया देवि भुज्यताम् ॥

इत्येवं नैवेद्यप्रदानक्रम उक्तः ।

४९६-५०० । चुल्लुकमित्यादि स्पष्टम् । अत्र विशेषमाह गन्धर्वतन्त्रे पञ्चदशपटले—

जातीलवङ्गककोलवासितं स्वर्धुनीजलम् ।
मुखवासकरं पुण्यं गृहीत्वाचम सुन्दरि ॥

---

1. '-नीति' B. 2. 'चुलुकं' B.

[ तत्र प्राणमुद्रा ]

वृद्धानामाकनिष्ठाभिः प्राणमुद्रा समीरिता ।

[ अपानमुद्रा ]

वृद्धामध्यातर्जनीभिरपानस्य प्रकीर्त्तिता ॥ ४९८ ॥

[ व्यानमुद्रा ]

वृद्धानामामध्यमाभिर्व्यानमुद्रा [1]समीरिता ।

[ उदानमुद्रा ]

कनिष्ठा[2]वर्जं सर्वाभि[3]रुदानस्य प्रकीर्त्तिता ॥ ४९९ ॥

[ समानमुद्रा ]

[4]समानमुद्रा सर्वाभिरङ्गुलीभिरुदीरिता ।

[ ग्रासमुद्रा ]

वामहस्ते ग्रासमुद्रा विकचोत्पलसन्निभा ॥ ५०० ॥

[ पानीयदानम् ]

सुवासितजलं दद्यात् स्वर्णरौप्यादिभाजने ।

[ पुनर्गण्डूषदानं ताम्बूलदानञ्च ]

पुनश्च [5]चुल्लुकं [6]दत्त्वा दद्यात्ताम्बूलमुत्तमम् ॥ ५०१ ॥

[ ताम्बूलदाने मन्त्रः ]

एलालवङ्गकर्पूरजाती[7]फलसमन्वितम् ।

तमालदलकर्पूरपूगभागतरङ्गितम् ।

संशोधितं सुगन्धञ्च ताम्बूलमनुसंददे ॥ ५०२ ॥

---

मूलमन्त्रेण देवेशि हुनेत् पञ्चाऽऽहुतीः क्रमात् ।
प्राणापाणौ तथा व्यानमुदानञ्च समानकम् ॥
एतत्स्वरूपं जानीयादाहुतीनाञ्च पञ्चकम् ।
पञ्चाङ्गुलीभिरेव स्यात् क्रमात् पञ्चाऽऽहुतीः प्रिये ॥ इति ।

५०१-५०२ । पुनश्चेति । अत्र गन्धर्वतन्त्रोक्तः प्रकारः—

पुनराचमनं दत्त्वा मुखवासं निवेदयेत् ।

---

1. 'प्रकीर्त्तिता' B. 2 '-वर्ज-' C. 3. '-रङ्गुलीभिः' C. 4. 'समाने'त्यादिपादद्वयं C-पुस्तके नास्ति । 5. 'चुलुकं' B. 6. 'दद्यात्' B. 7. '-फलादिसंयुतम्' C.

[ माल्यादिदानम् ]

माल्यं जलञ्च विमलं शीतलञ्च सुवासितम् ।
व्यजनं तालवृन्तञ्च स्वर्णदण्डञ्च चामरम् ।
दर्पणञ्च ततो दद्यात् पुरतश्चन्द्रवानिशं (?) ॥ ५०३ ॥

[ नृत्यगीतादि ]

नृत्यं गीतं शीतलञ्च कुर्याद् विभवपूर्वकम् ॥ ५०४ ॥

[ पुष्पाञ्जलिदानं तर्पणञ्च ]

सुप्रसन्नां ततो [1]ध्यात्वा सर्वाभरणसंयुताम् ।
पुष्पाञ्जलित्रयं दत्त्वा तर्पयेत् परदेवताम् ॥ ५०५ ॥

[ सपर्यात्रैविध्यम् ]

सपर्या [2]त्रिविधा प्रोक्ता पराख्या अपराभिधा ।
परापरेति विख्याता ज्ञातव्या साधकोत्तमैः ॥ ५०६ ॥

[ परादीनां लक्षणम् ]

परा तु बिन्दुपूजा स्यादपरा बाह्यतः क्रमात् ।
परापरा व्यापिका च ज्ञातव्या गुरुवक्त्रतः ॥ ५०७ ॥

---

ताम्बूलं गन्धसंयुक्तं कर्पूरादिसुवासितम् ।
संस्कृत्य विविधैर्द्रव्यैर्गन्धवद्भिर्निवेदयेत् ॥ इति ।

५०७—५०८ । अत्र पूजायास्त्रैविध्यं परादीनां लक्षणञ्चोक्तं सपर्येत्यादिना श्लोकद्वयेन । तत्रापि गुरुमुखादेव ज्ञातव्यमित्युक्तम् इति नात्र परादीनां व्याख्यानमावश्यकम् । तन्त्रसारे तु पूजायाः पञ्चविधत्वमुक्तम्—"गौतमीये—

पूजा च पञ्चधा प्रोक्ता तासां भेदान् शृणुष्व मे ।
अभिगमनमुपादानं योगः स्वाध्याय एव च ।
इज्या पञ्चप्रकाराऽर्चा क्रमेण कथयामि ते ॥
तत्राभिगमनं नाम देवतास्थानमार्जनम् ।
उपलेपननिर्माल्यदूरीकरणमेव च ॥

---

1. 'दद्यात् ?' B. 2. 'द्विविधा' ? B.

[ पुनः प्राणायामः कामकलास्मरणञ्च ]

प्राणायामं पुनः कृत्वा स्मरेत् कामकलां बुधः ।
मुखं बिन्दु[1]वदाकारं तदधः कुचयुग्मकम् ॥ ५०८ ॥
तदधः सपरार्धन्तु[2] चिन्तयेत्तदधो मुखम् ।
मुखबिन्दुर्भवेत् सूर्यो दहनेन्दू स्तनावुभौ ॥ ५०९ ॥
योनि[3]र्हार्दकला ज्ञेया मुखबिन्दोः समु[4]त्थिता ।
[5]नासाद्यङ्गस्तन[6]द्वन्द्वाद् बाहुयोनेः पदद्वयम् ॥ ५१० ॥

[ आत्मनः कामकलाभेदचिन्ता ]

एवं कामकलारूपमात्मानं चिन्तयेत् सदा ॥ ५११ ॥
मेढ्रस्थाने शिखाकारमा[7]धारे कनकप्रभम् ।
[8]नाभिस्थं सूर्य[9]बिम्बाभं तरुणादित्यवर्चसम् ॥ ५१२ ॥
हृदि वह्निशिखाकारं [10]तदूर्ध्वे भास्करद्युतिम् ।
कण्ठे दीपशिखाकारं घण्टावैदूर्यसन्निभम् ॥ ५१३ ॥
लम्बिके चन्द्र[11]बिम्बाभं भ्रूमध्ये रत्नवद्रुचिः ।
नवमे विश्वतेजश्च चिन्तयेदेषु साधकः ॥ ५१४ ॥

---

उपादानं नामगन्धपुष्पादिचयनं तथा ।
योगो नाम स्वदेवस्य स्वात्मत्वेनैव भावना ॥
स्वाध्यायो नाम मन्त्रार्थसन्धानपूर्वको जपः ।
सूक्तस्तोत्रादिपाठश्च हरेः संकीर्तनं तथा ॥
तत्त्वादिशास्त्राभ्यासश्च स्वाध्यायः परिकीर्त्तितः ।
इज्या नाम स्वदेवस्य पूजनन्तु यथार्थतः ॥
इति पञ्चप्रकाराऽर्चा कथिता तव सुव्रत ।
सार्ष्टिसामीप्यसालोक्यसायुज्यसारूप्यदा क्रमात् ॥ इति ।

---

1. '-दला-' B. 2. '-ञ्च' C. 3. '-रर्द्ध-' B. 4. '-त्थितम्' B. 5. 'मासाद्यङ्ग-' B. 6. '-द्वन्द्वा' B. 7. '-धारं' A. 8. 'नाभीन्दु' A. 9. '-विद्याभं' C. 10. 'तदूर्द्ध्वे' इत्यादि पादद्वयं A-B पुस्तकयोर्नास्ति । 11. '-विद्याभं' C.

[ श्रीगुरुपादुकाध्यानम् ]

ततः पद्मे सहस्रारे ध्यायेच्छ्रीगुरुपादुकाम् ।

[ सैव कुलकुण्डलिनीशक्तिः ]

मूलकन्दे तु [1]सा शक्तिर्भुजगाकाररूपिणी ।

[ प्राणस्य स्वरूपम् ]

तद्भ्रमावर्त्त[2]वातोऽयं प्राण इत्युच्यते बुधैः ॥ ५१५ ॥

[ शक्तेश्चेष्टाविशेषः ]

झिञ्जीवाव्यक्तमधुरा स्फुरन्ती [3]शतशोऽपि वा ।
गच्छन्ती ब्रह्ममार्गेण प्रविशन्ती [4]स्वकेतने ॥ ५१६ ॥

[ तत्र मनोलयनम् ]

यातायातक्रमे[5]णापि तत्र कुर्यान्मनोलयम् ।

[ मन्त्रशिखोत्पत्तिः ]

तेन मन्त्रशिखा जाता सर्वसिद्धिप्रदीपिका ॥ ५१७ ॥

[ शिखाहीनमन्त्रस्य निष्फलत्वम् ]

तमःपूर्णगृहे यद्वद् यत्किञ्चिन्न हि भासते ।
शिखाहीनास्तथा मन्त्रा न सिध्यन्ति कदाचन ॥ ५१८ ॥

[ शिखाया गुप्तत्वम् ]

शिखोपदेशः सर्वत्र विद्वद्भिः परिगोपितः ॥ ५१९ ॥

[ तद्वैपरीत्ये सिद्ध्यभावः ]

[6]विनाऽनेन न सिद्धिः स्याद[7]ब्दकोटिशतैरपि ।

[ स्वापकाले मन्त्रजपस्याऽऽनर्थक्यम् ]

स्वापकाले तु मन्त्रस्य जपोऽनर्थफलप्रदः ॥ ५२० ॥

---

५१४ । लम्बिके इति । लम्बिके तालूर्ध्वसूक्ष्मजिह्वायामित्यर्थः । नवमे नवमचक्रे सहस्रारे इत्यर्थः । नवचक्रविवेकस्तु सौभाग्यलक्ष्म्युपनिषदि द्रष्टव्यः ।

५१५—५२० । मूलकन्दे इति मूलाधारे इत्यर्थः । मूलाधारस्थकुलकुण्डलिनीशक्तेर्भ्रमावर्तवातः प्राण इत्याख्यायते । तत्र मनसो मेलनं कुर्यात्, तत एव

---

1. 'या' C. 2. '-मातो-' C. 3. 'सततोऽन्विता' B. 4. 'सुकेतने' C. 5. '-णैव' C. 6. 'विलोमेन' C. 7. '-द्वर्षकोटि-' C.

[ स्वापस्य जागरस्य च लक्षणम् ]

स्वापकालो वामवहो जागरो दक्षिणावहः ।

[ मन्त्रविशेषे स्वापजागरयोर्विशेषः ]

आग्नेयस्य मनोः सौम्य मन्त्रस्यैतद्विपर्ययः ॥ ५२१ ॥

[ प्रबोधकालः ]

प्रबोधकालं जानीयादुभयोरुभयोरपि ।

[ शिवशक्तिसङ्गमकालः ]

प्राणापानसमायोगाच्छिवशक्त्योस्तु सङ्गमः ।
प्रबोधकालो विज्ञेयः स्वापकालस्ततोऽथवा ॥ ५२२ ॥

[ त्रिपुरागायत्रीप्रशंसायां हरिहरसंवादः ]

अथ वक्ष्याम्यहं गुह्यं संवादं हरिहरात्मकम् ।
देवदारुवने पूर्वं [1]ब्राह्मणानतिदुर्धियः ॥ ५२३ ॥
विलोक्य भगवान् विष्णुः शिवं[2] गत्वाऽभ्यभाषत ।
देवदेव जगन्नाथ महादेव जगत्पते ॥ ५२४ ॥
इमे दुर्मतयः सर्वे वेदाचारबहिष्कृताः ।
स्वच्छन्दचरिताः सर्वे देवदारुवने द्विजाः ॥ ५२५

---

मन्त्रशिखा उत्पद्यते । एवञ्च एवंरूपेण प्राणे मनोलयनं विना मन्त्रशिखानुत्पादः, तदनुत्पादे च न मन्त्रसिद्धिः स्यादिति फलितोऽर्थः ।

५२१—५२२ । स्वापकाल इति । यदा वामनासिकया श्वासो वहति तदा स्वापकालः, यदा तु दक्षिणनासापुटेन श्वासश्चलति तदा जागरकालः, इति सर्वसाधारणमन्त्रजपे । एवञ्च जपारम्भकाले दक्षिणनासापुटेन वायोर्वहनमावश्यकम्, अन्यथा जपस्य निष्फलत्वमिति । आग्नेयमन्त्रस्य तु वामनासापुटेन यदा श्वासो वहति तदैव जपारम्भ इति विपर्ययपदेनोपदिशति ग्रन्थकारः । एवञ्च उभयोराग्नेयमन्त्रेतरदेवताकमन्त्रयोर्वामनासावहो दक्षिणनासावहश्च श्वासो यथाक्रमं जागरणकाल इत्याशयः ।

---

1. 'ब्राह्मणश्चातिवर्चसः' (?) B. 2. 'शिवमभ्येति भाषते' (?) B.

[1]अन्यस्त्रीमैथुनासक्ताः सुरापानपरायणाः ।
आत्मज्ञानविहीनानां योगाभ्यासावहेलिनाम् ॥ ५२६ ॥
कथमेषां भवेन्मुक्तिस्तदुपायं वद प्रभो ।
कथं वा ब्रह्मविद्यायां दीक्षायामधिकारिता ॥ ५२७ ॥
[2]इत्युक्त्वैवाभवत्तूष्णीं ततो निखिलवे[3]दिना ।
तस्मै [4]उक्ता ब्रह्मभूता गायत्री त्रिपुरामयी ॥ ५२८ ॥
[5]यया विज्ञातया चैव दीक्षितो ब्राह्मणो भवेत् ।
अपि कृत्वा कदाचारान् पतितो [6]वेदवर्जितः ।
नारी शूद्रोऽथवा व्रात्यो ज्ञात्वैव ब्राह्मणो भवेत् ॥ ५२९ ॥

[ गायत्रीकथनम् ]

अथ वक्ष्यामि तां विद्यां गायत्रीं त्रिपुरातनीम् ॥ ५३० ॥
देवीप्रणवमुद्धृत्य ततस्त्रिपुरसुन्दरी ।
ङेऽन्ताऽथ विद्महे कामेश्वर्यै धीमहि योजयेत् ।
तन्नः क्लिन्ने प्रचोदयादेषा जप्या जपादितः ॥ ५३१ ॥

[ गायत्रीजपानन्तरमन्यजपस्याधिकारिता ]

अष्टाविंशतिसं[7]ख्याभिर्जप्तृणामधिकारिता ।
ब्रह्मविद्यां जपेत् पश्चात् सर्वेषामेव निश्चितम् ॥ ५३२ ॥

[ त्रिपुरागायत्रीजपफलानि ]

जप्त्वैनामगमन्मुक्तिं देवदारुवने द्विजाः ।
जीवन्मुक्तो जामदग्न्यः शिष्यो मे घोरपातकैः ॥ ५३३ ॥

---

५३० — ५३२ । अथ वक्ष्यामीति । त्रिपुरासुन्दरीगायत्रीकथनम्, सा च गायत्री "ह्रीं त्रिपुर- सुन्दर्यै विद्महे, कामेश्वर्यै धीमहि, तन्नः क्लिन्ने प्रचोदयात्"। इति ।

---

1. 'अन्याय-' C. 2. 'इत्युक्तश्चाभव-' C. 3. '-दिनाम्' A. 4. 'भक्ता' B. 5. 'मया' B. 6. 'देव-' B. 7. '-ख्या हि जप्त्वैना-' B.

विमुक्तो मातृपुत्रेभ्यो मीननाथस्तथा [1]परः ।
जैगीषव्यश्च चन्द्रश्च वासवश्च विमो[2]चितः ॥ ५३४ ॥
गुरुदाराकर्षणाद्यैस्तथाऽगस्त्यो विमोचितः ।
अभक्ष्यं भक्षयित्वा तु [3]वातापिञ्च महासुरम् ॥ ५३५ ॥
चाण्डालीगम[4]नाच्चैव वशिष्ठोऽपि विमोचितः ।
दत्तात्रेयः सुरापानाज्ज्वलनः सर्वभक्षणात् ॥ ५३६ ॥
कुलोड्डीशाभिधे तन्त्रे शम्भुनेति प्रकीर्त्तितम् ॥ ५३७ ॥

[ गायत्रीजपस्य नियमः ]

[5]अथ प्रजप्या गायत्री ध्यायन् श्री[6]त्रिपुरेश्वरीम् ।
विलम्बं त्वरितं त्यक्त्वा जपेन्मन्त्रमनन्यधीः ॥ ५३८ ॥
अष्टोत्तरसहस्रं वा गजान्तकशतञ्च वा ।
त्रिंशन्न्यूनं नैव जपेन्नित्यं जप इति स्मृतः ॥ ५३९ ॥

५३९। गजान्तकशतमिति अष्टोत्तरशतमित्यर्थः। विशेषमाह गन्धर्वतन्त्रे सप्तदशपटले—

उत्तमो दशसाहस्रः सहस्रो मध्यमः स्मृतः ।
अधमन्तु विजानीयादष्टोत्तरशतं शिवे ॥
इतो न्यूनं महेशानि न शस्तं जपकर्मणि ।
यथाशक्ति जपं कुर्यात् संख्ययैव प्रयत्नतः ॥
असंख्यातञ्च यज्जप्तं तत् सर्वं निष्फलं भवेत् ।
गृह्णन्ति राक्षसा येन गणयेत् सर्वथा बुधः ॥
नैकवासा जपेन्मन्त्रं बहुवस्त्राकुलोऽपि वा ।
अप्रावृतकरो वाऽपि शिरसा प्रावृतोऽपि वा ॥
चिन्ताव्याकुलचित्तो वा क्रुद्धो वाऽपि त्वरान्वितः ।
निर्बोधः प्रीतिचित्तो न न रुग्णो न क्षुधाऽन्वितः ॥
तथा चान्यमना भूत्वा प्रलपन्न जपेन्मनुम् ।
अनासीनः शयानो वा गच्छन् भुञ्जान एव च ॥ इति ।

1. 'परे' A. 2. '-ह्वितः' B. 3. 'वातापी च महासुरः (?) B. 4. '-नाद्यैश्च' C.
5. 'अतः' C. 6. '-परमेश्वरीम्' C.

मन्त्रनिर्णयतन्त्रस्य मतमे[1]तदुदीरितम् ।

[ निगदादिना जपः ]

निगदेनोपांशुना वा [2]मानसेनापि वा जपेत् ॥ ५४० ॥

[ निगदलक्षणम् ]

जिह्वाधरोष्ठचलनं निगदः परिकीर्त्तितः ।

[ उपांशुलक्षणम् ]

रसनामात्रचलनमुपांशु [3]परिकीर्त्तितम् ॥ ५४१ ॥

[ मानसलक्षणम् ]

मनसा मन्त्रवर्णस्य चिन्तनं मानसः स्मृतः ।

[ जपानामधममध्यमोत्तमत्वनिरूपणम् ]

निगदे लक्ष[4]जप्तः स्यादुपांशु स्मरणोपमः ॥ ५४२ ॥

उपांशुर्वा लक्षजपः सदृशो मानसैककः ।

अधमो मध्यमः प्रोक्त उत्तमो मन्त्रविन्नरैः ॥ ५४३ ॥

[ जपकाले अतिह्रस्वातिदीर्घोच्चारणयोर्निषेधः ]

अतिह्रस्वो व्याधिहेतुरतिदीर्घस्तपःक्षयः ।

[ जपरीतिः ]

अक्षराक्षरसञ्चारं जपेन्मौक्तिकहारवत् ॥ ५४४ ॥

---

५४०—५४५ । निगदेनेत्यादि । विषयमिममधिकृत्य स्फुटमुक्तं गन्धर्वतन्त्रे सप्तदशपटले—

निगदेनोपांशुना वा मानसेनाथवा प्रिये ।
जपारम्भं सुधीः कुर्याद् देवताभावतत्परः ॥
निःशङ्कः परमेशानि स्पष्टवाचा निगद्यते ।
अव्यक्तः प्रस्फुरद्वक्त्र उपांशुः परिकीर्तितः ॥

---

1. '-तत्प्रकीर्ति-' C. 2. 'मानसो वाऽपि पूजयेत्' A. 3. 'समुदीरितः' C.
4. '-जापः स्या-' C.

[ दशाविशेषे स्तवजपयोर्निष्फलता ]

[1]मनसा यः स्मरेत् स्तोत्रं वचसा [2]च मनुं जपेत् ।
उभयं निष्फलं [3]तस्य भिन्नभाण्डोदकं यथा ॥ ५४५ ॥

[ जपे अङ्गुलिनियमः ]

अनामाया द्वयं पर्व परिवर्त्तेन वै क्रमात् ।
मध्यमा[4]यास्त्रयं पर्व तर्जनीमूलपर्वणि ।
नित्यजापे समाख्याता न काम्ये [5]करमालिका ॥ ५४६ ॥

---

धिया यदक्षरश्रेणीं वर्णस्वरपदात्मिकाम् ।
उच्चरेदनु संस्मृत्य स उक्तो मानसो जपः ॥
सौषुम्णाध्वन्युच्चरितं ध्वनिमात्रं विभावयेत् ।
मन्त्राक्षराणि चिच्छक्तौ प्रोतानि च विभावयन् ॥
तामेव परमे व्योम्नि परमामृततृंहितः ।
दर्शयत्यात्मसद्भावं पूजाहोमादिभिर्विना ॥
मनः संहृत्य विषयान्मन्त्रार्थगतमानसः ।
न द्रुतं न विलम्बञ्च जपेन्मौक्तिकपङ्क्तिवत् ॥
निगदेन तु यज्जप्तं लक्षमात्रं वरानने ।
उपांशूच्चारणेनैव तुल्यं भवति शैलजे ॥
उपांशु लक्षमात्रं तु यज्जप्तं कमलेक्षणे ।
मानसोच्चारणात्तुल्यमेकेन वरवर्णिनि ॥
विशेषात् त्रिपुरातन्त्रे प्रशस्तो मानसो जपः ।
मनसा च स्मरेत् स्तोत्रं वचसा वा जपेन्मनुम् ॥
उभयं निष्फलं तस्य भिन्नभाण्डोदकं यथा ।

५४६—५४८ । अनामाया इति । करजपे नियममाह गन्धर्वतन्त्रे सप्तदशपटले—
मालाभावे ततः स्वासु अङ्गुलीषु जपेद् बुधः ।
नित्यं जपं करे कुर्यान्न तु काम्यं कदाचन ॥

---

1. 'मध्यमायाः' C. 2. 'वा' C. 3. 'विन्द्यात्' C. 4. '-या द्वयं' A. 5. 'नवमालिका' B.

[ जपे अङ्गुलिवियोगनिषेधः ]

अङ्गुलीर्न वियुञ्जीत किञ्चित् सङ्कोचयेत् तलम् ।
अङ्गुलीनां वियोगे तु च्छिद्रेषु [1]स्रवते जपः ॥ ५४७ ॥

[ अङ्गुल्यग्रे जपस्य निष्फलत्वम् ]

अङ्गुल्यग्रे [2]च यज्जप्तं यज्जप्तं मेरुलङ्घने ।
पर्वसन्धिषु यज्जप्तं तत् सर्वं निष्फलं भवेत् ॥ ५४८ ॥

---

आरभ्यानामिकामध्यात् प्रादक्षिण्येन वै क्रमात् ।
तर्जनीमूलपर्यन्तं जपेन्नवसु पर्वसु ॥
तर्जन्यग्रे तथा मध्ये यो जपेत् तत्त्ववान् नरः ।
चत्वारि तस्य नश्यन्ति आयुर्विद्या यशो बलम् ॥
अनामामध्यपर्वन्तु मेरुं कृत्वा न लङ्घयेत् ।
मेरुं प्रदक्षिणं कुर्वन्ननामामूलपर्वतः ॥
अङ्गुलीपर्वभिर्मन्त्रं जपन् रेखां न संस्पृशेत् ।
अङ्गुलीर्नापयुञ्जीत किञ्चिदाकुञ्चिते तले ।
अङ्गुलीनां वियोगे तु च्छिद्रेण स्रवते जपः ॥ इति ।

मालया जपे विशेषमाह तत्रैव—

यथा सिद्धिस्तथा माला मालाऽङ्गं जपकर्मणि ।
मालया जपतो नित्यं सिद्धिरेव न संशयः ॥
आशु सिद्धिकरी माला वर्णमयी समीरिता ।
अनुलोमविलोमार्णैर्मातृकायाः सबिन्दुकैः ॥
सुमेरुकैः सदा कार्या माला सर्वसमृद्धिदा ।
अष्टाधिकेऽष्टवर्गैस्तु पुनरेव समापयेत् ॥
वर्णैनान्तरितं मन्त्रं कृत्वा जप्येत साधकः ।
स्फाटिकादिभिरप्यत्र माला जपसमृद्धिदा ॥
निधाय पुरतो मालां सव्यहस्तगताञ्च वा ।
जपादौ पूजयेन्मालां तोयैरभ्युक्ष्य यत्नतः ॥

---

1. 'क्षरते ?' C.   2. 'तु' C.

इष्ट-मन्त्रेण मालायाः प्रोक्षणं परिकीर्तितम् ।
ऐं मां माले महामाले सर्वशक्तिस्वरूपिणि ।
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥
चन्द्र-चन्दन-कस्तूरी-रोचनागुरु-कुङ्कुमैः ।
पूजयित्वा ततो मालां गृह्णीयाद् दक्षपाणिना ॥
बीजं गणपतेः पूर्वमुच्चार्य तदनन्तरम् ।
अविघ्नं कुरु माले त्वं गृह्णीयादित्यनेन तु ॥
यथा हस्तान्न च्यवते जपतः स्रक् तथाचरेत् ।
हस्तच्युतायां विघ्नः स्याच्छिन्नायां मरणं भवेत् ॥
यत्नात् संगोपयेदेनां भ्रामयेन्न विधूनयेत् ।
गुरुं प्रकाशयेन्नैव यन्त्रं मन्त्रं कदाचन ॥
अक्षमालाञ्च मुद्राञ्च गुरवेऽपि न दर्शयेत् ।
भूत-राक्षस वेतालाः सिद्ध-गन्धर्व-चारणाः ॥
हरन्ति प्रकटं यस्मात् तस्माद् गुप्तं जपेत् सदा ।
मालां स्वहृदयासन्नां दक्षिणस्य करस्य च ॥
मध्यमाया मध्यभागे वर्जयित्वा तु तर्जनीम् ।
अनामिकाकनिष्ठाभ्यां युतया नम्रभागतः ॥
स्थापयित्वा तत्र मालामङ्गुष्ठाग्रेण तद्गतम् ।
प्रत्येकं बीजमादाय कुर्याद् वामेन न स्पृशेत् ॥
प्रतिवारं पठेन्मन्त्रं शनैरोष्ठं न चालयेत् ।
तर्जन्या न स्पृशेन्मालां मुक्तितो गणनाक्रमः ॥
अङ्गुष्ठपर्वमध्यस्थां परिवर्तं समाचरेत् ।
अङ्गुष्ठेन विना कर्म कृतं भवति निष्फलम् ॥
अङ्गुष्ठं मोक्षदं देवि तर्जनी शत्रुनाशिनी ।
मध्यमा धनसिद्धौ स्याच्छान्तिकर्मण्यनामिका ॥
कनिष्ठाकर्षणे ज्ञेया जपकर्मणि सिद्धिदा ।
मालाबीजन्तु जप्तव्यं स्पृशेन्न हि परस्परम् ॥
पूर्वबीजं जपन् यस्तु परबीजन्तु संस्पृशेत् ।
अङ्गुष्ठेन भवेत्तस्य निष्फलस्तस्य तज्जपः ॥

[ जपारम्भे विसर्गे च प्राणायामः ]

प्राणायामं समाचर्य जपं कृत्वा समाहितः ।
पुनः प्राणान् समायम्य जपञ्चैव समर्पयेत् ॥ ५४९ ॥

[ जपसमर्पणम् ]

अर्घ्यस्य जलपुष्पाभ्यां देव्या दक्षिणहस्ततः ॥ ५५० ॥

[ समर्पणमन्त्रः ]

गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरि ॥ ५५१ ॥

---

किटि शब्दान्विता माला छिन्ना भिन्नाऽपि वा भवेत् ।
वामोरौ दक्षपादञ्च विन्यस्य परमेश्वरि ॥
बद्धवीरासनो मन्त्री दिशश्चानवलोकयन् ।
गुरु-दैवत-मन्त्राणामैक्यं सम्भावयन् धिया ॥ इति ।

५५०-५५१ । अर्घ्यस्येति । अत्र विशेषो गन्धर्वतन्त्रे सप्तदशपटले—

यथाविधि जपं कृत्वा मन्त्रेणार्घ्योदकेन च ।
जपं तञ्च महादेव्या वामहस्ते समर्पयेत् ॥
तेजोरूपं जपफलं शिवया स्वीकृतं स्मरेत् ।
श्रीबीजेनैव पाणिभ्यामवतारार्णशीर्षतः ।
सारस्वतेन बीजेन हस्ताभ्यां स्थापयेत् ततः ॥
जपकर्मणि मालायाः प्रतिपत्तिरियं प्रिये ।
एवं यः कुरुते मालां जाप्यञ्च साधकः प्रिये ।
स प्राप्नोतीप्सितं देवि हीनस्याऽऽयुर्विपर्ययः ॥
निःसेतुञ्च यथा तोयं क्षणान्निम्नं प्रसर्पति ।
मन्त्रस्तथैव निःसेतुः क्षणात् क्षरति मन्त्रिणाम् ॥
तस्मात् सर्वेषु मन्त्रेषु सर्वे वर्णा द्विजातयः ।
पार्श्वयोः सेतुमादध्याज्जपकर्मणि साधकः ॥
अकारञ्चाप्युकारञ्च मकारञ्च प्रजापतिः ।
वेदत्रयात् समुद्धृत्य प्रणवं निर्ममे पुरा ॥

[ देव्यै रुधिरदानम् ]

गृहीत्वा [1]शोणितं पात्रं स्वकीयहृदयोद्भवम् ।
तोयसैन्धवसंयुक्तं शर्करामधुसंयुतम् ॥ ५५२ ॥
अभ्युद्य रुधिरं दद्याद् वाग्भवेन [2]तु साधकः ।
[3]यथाशक्ति नरो दद्यान्नाभेरूर्ध्वमधो न च ॥ ५५३ ॥

[ स्तवपाठानन्तरं प्रदक्षिणस्य कर्त्तव्यता ]

स्तुत्वा प्रदक्षिणं कार्यं त्रि-सप्त-नवधाऽपि वा ।

[ अष्टाङ्गप्रणामस्य कर्त्तव्यता ]

अष्टाङ्गं प्रणमेन्मन्त्री भक्तिभावेन [4]साधकः ॥ ५५४ ॥

---

जपादौ जपकर्मान्ते प्रणवं सेतुरूपकम् ।
नियोजयेन्महेशानि सर्वकार्यार्थसिद्धये ॥ इति ।

५५४। स्तवपाठानन्तरं प्रदक्षिणमाह—स्तुत्वेत्यादिना । अत्रोक्तं गन्धर्वतन्त्रे पञ्चदशपटले—

स्तुवन्नानाविधैः स्तोत्रैर्भक्तिभावसमन्वितः ।
प्रणमेत् परमेशानि विधिना साधकोत्तमः ॥

स्तवे विशेषमाह तत्रैव—

यत् स्वयं गद्यपद्याभ्यां घटिताभ्यां नमस्क्रिया ।
क्रियते भक्तियुक्तेन वाचिकस्तूत्तमः स्मृतः ॥
पौराणिकैर्वैदिकैर्वा तान्त्रिकैः क्रियते नतिः ।
स मध्यमो नमस्कारो भवेद्वाचनिकः सदा ॥
परेषां गद्यपद्याभ्यां नमस्कारो यदा भवेत् ।
स वाचिकोऽधमो ज्ञेयो नमस्कारेषु सर्वतः ॥ इति ।

प्रदक्षिणप्रमाणञ्चोक्तं तत्रैव—

प्रदक्षिणप्रमाणञ्च कुर्याद्धर्मार्थसाधनम् ।
प्रसार्य दक्षिणं हस्तं स्वयं नम्रशिराः पुनः ॥
दक्षिणं दर्शयन् पार्श्वं भक्तिश्रद्धासमन्वितः ।
सकृत् प्रदक्षिणं कृत्वा वर्त्तुलाकृतिसाधकः ॥

---

1. 'शोणितं' B. 2. 'च' C. 3. 'शक्तिकूटेन वा दद्या-' C. 4. 'यत्नतः' C.

[ अष्टाङ्गप्रणामलक्षणम् ]

पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा ।
वचसा मनसा चैव प्रणामोऽष्टाङ्ग ईरितः ॥ ५५५ ॥

[ प्रकारान्तरेणाष्टाङ्गप्रणामः ]

[1]साष्टाङ्गो दण्डवद्भूमौ निपत्य हृदयेन तु ।
चिबुकेन मुखेनाथ नासया मस्तकेन च ।
कर्णाभ्यां ब्रह्मरन्ध्रेण[2] भूमिस्पर्शनमेव वा ॥ ५५६ ॥

---

स च प्रदक्षिणो ज्ञेयः सर्वदेवौघतुष्टिदः ।
अष्टोत्तरशतं यस्तु देव्याः कुर्यात् प्रदक्षिणम् ॥
स सर्वकाममासाद्य पश्चान्मोक्षमवाप्नुयात् ॥

सप्तधा प्रणामलक्षणमुक्तं तत्रैव—

त्रिकोणमथ षट्कोणमर्धचन्द्रं प्रदक्षिणम् ।
दण्डमष्टाङ्गमुग्रञ्च सप्तधा नतिलक्षणम् ॥
दक्षिणाद् वायवीं गत्वा दिशं तस्याश्च शाम्भवीम् ।
ततोऽपि दक्षिणां गत्वा नमस्कारस्त्रिकोणवत् ॥
त्रिकोणाख्यो नमस्कारस्त्रिपुराप्रीतिदायकः ।
दक्षिणाद् वायवीं गत्वा वायव्याः शाम्भवीं तथा ॥
ततोऽपि दक्षिणां गत्वा तां त्यक्त्वाऽग्नौ प्रविश्य च ।
अग्नितो राक्षसीं गत्वा कौबेरीञ्च ततो विशेत् ॥
आग्नेयीञ्च ततो गत्वा नमस्कारः प्रकीर्तितः ।
षट्कोणाख्यो नमस्कारो दुर्गायाः प्रीतिदायकः ॥
दक्षिणाद् वायवीं गत्वा तस्माद्व्यावृत्य दक्षिणम् ।
गत्वा योऽसौ नमस्कारः सोऽर्धचन्द्रो मम प्रियः ॥
नमस्कारेषु जानीयादासां प्राकृतमद्रिजे ।
त्यक्त्वा स्वमासनस्थानं पश्चाद् गत्वा नमस्कृतः ॥
निपत्य दण्डवद् भूमौ दण्ड इत्युच्यते बुधैः ।
तथैव दण्डवद् भूमौ निपत्य हृदयेन च ॥
चिबुकेन मुखेनाथ नासया हनुकेन च ।

---

1. 'अष्टाङ्गो' B. 2. 'तु' C.

[ पुनर्दण्डवत् प्रणामः ]

कृताञ्जलिपुटो भूत्वा [1]भूमिष्ठः प्रणमेत्ततः ।

प्रत्येकं प्रणमेन्मन्त्री दण्डवत् प्रणिपातयेत् ॥ ५५७ ॥

[ देवाग्रे भ्रमणनिषेधः ]

देवञ्च मध्यगं कृत्वा [2]योऽग्रे च भ्रमणञ्चरेत् ।

[3]नमस्कारो वृथा तस्य अपराधो भवेदथ ॥ ५५८ ॥

[ अकृताञ्जलेः प्रणामनिषेधः ]

[4]अकृताञ्जलिना यस्तु नमस्कारं करोति वै ।

महान्धकारे नरके पच्यते नात्र संशयः ॥ ५५९ ॥

[ प्रणामे मूर्ध्ना भूमिस्पर्शस्य कर्त्तव्यता ]

पात्रान्तरे च प्रणमेन्मूर्ध्ना न च क्षितिं स्पृशेत् ।

शपन्ति देवतास्तस्य विफलं तत् प्रकीर्त्तितम् ॥ ५६० ॥

[ दण्डवत्प्रणामफलम् ]

प्रणामे देवतायास्तु यावन्तो रेणवस्तनौ ।

तावद्वर्षसहस्राणि ब्रह्मलोके महीयते ॥ ५६१ ॥

---

चक्षुषा चाथ कर्णाभ्यां ब्रह्मरन्ध्रेण चैव हि ।

तदष्टाङ्गमिति प्रोक्तं यद् भूमिं स्पृशते क्रमात् ॥

ब्रह्मरन्ध्रेण संस्पर्शः क्षितेर्यस्या नमस्कृतेः ।

स उग्र इति विज्ञेयो विष्णोस्तुष्टिप्रदायकः ॥

५६० । पात्रान्तरे इति कुड्यस्तम्भादावित्यर्थः ।

५६१ । प्रणामे इति । देवतायाः प्रणामे यावत्यो धूलिकणाः शरीरलग्ना भवन्ति तत्संख्याकसहस्रवर्षाणि ब्रह्मलोकावाप्तिः फलमिति । गन्धर्वतन्त्रे नमस्कारप्रशंसा—

देवमानुषगन्धर्वा यक्षराक्षसपन्नगाः ।

नमस्कारेण तुष्यन्ति महात्मानः समन्ततः ॥

नमस्कारेण लभते चतुर्वर्गं महोदयम् ।

सर्वत्र सर्वसिद्ध्यर्थं नतिरेव प्रशस्यते ॥

---

1. 'भ्रमित्वा' C. 2. 'योगे' B. 3. 'शपन्ती देवतास्तस्य नमस्कारं करोति च' C. 4. 'अकृत्वाऽञ्जलिना' B.

प्रदक्षिणनमस्कारैः परितोष्य महेश्वरीम् ॥ ५६२ ॥

[ पुनर्दर्पणादिदानम् ]

दर्पणं चामरं छत्रं भूयो गन्धाद्यमर्पणम् ।

[ पुनर्मुद्राप्रदर्शनम् ]

भूयोऽपि मुद्रानवकं महादेव्यै प्रदर्शयेत् ॥ ५६३ ॥

[ नित्यहोमः ]

नित्यहोमं ततः कुर्यात्त्रिपुराप्रीतिकारकम् ।

[ स्थण्डिलप्रमाणम् ]

[1]स्वदक्षिणे हस्तमात्रप्रमाणं स्थण्डिलं लिखेत् ॥ ५६४ ॥

---

नत्वा विजयते लोकान् नत्वा धर्मः प्रवर्तते ।
नमस्कारेण दीर्घायुरच्छिन्ना लभते प्रजाः ॥
चतुर्वर्गं लभेद् भक्तो नचिरादेव साधकः ।
नमस्कारो महायज्ञः प्रीतिदः सर्वतः सदा ॥
नमस्कुरु महादेवीं प्रदक्षिणञ्च भक्तितः ।
कायिको वाग्भवश्चैव मानसस्त्रिविधः स्मृतः ॥
नमस्कारश्च विज्ञेय उत्तमाधममध्यमः ।
कायिकैस्तु नमस्कारैर्देवास्तुष्यन्ति सर्वतः ॥
नमस्कारेषु सर्वेषु कायिकः प्रथमः स्मृतः ।
जानुभ्यामवनीं गत्वा संस्पृश्य शिरसा क्षितिम् ॥
क्रियते यो नमस्कारः स एव कायिकः स्मृतः ।
जानुभ्यां क्षितिमस्पृष्ट्वा शिरसा स्पृश्य मेदिनीम् ॥
क्रियते यो नमस्कारो मध्यमः कायिकस्तु सः ।
पुटीकृत्य करौ शीर्षे नमस्कारः प्रदीयते ।
अस्पृष्ट्वा जानुशीर्षाभ्यां क्षितिं सोऽधम उच्यते ॥ इति ।

५६३ । भूयोऽपीति । मुद्रानवकं सर्वसंक्षोभण्यादिमुद्रानवकमित्यर्थः । ( द्र० पृ० ६४०—६४४ ) ।

५६४-५७० । नित्यहोममित्यादिना नित्यहोममाह । तत्र स्थण्डिले मण्डलमाह—

---

1. 'स्वदक्षिणहस्तमात्रं प्रमाणं स्थण्डिले लिखेत्' A.

[ मण्डलकरणम् ]

त्रिकोणञ्चैव षट्कोणं विलिखेत्तत्र मण्डलम् ।

[ मण्डलषट्कोणे षडङ्गपूजा मध्ये देवीपूजा च ]

षट्कोणे च षडङ्गानि मध्ये देवीं प्रपूजयेत् ॥ ५६५ ॥

---

त्रिकोणमिति । अत्र होमप्रयोगस्यानुल्लेखात् संक्षेपहोमप्रयोग उच्यते—निरुक्तस्थण्डिले वीक्षणादिभिः संस्कृते, तथाच--

वीक्षणं मूलमन्त्रेण शरेण ताडनं मतम् ।
तेनैव प्रोक्षणं प्रोक्तं वर्मणाऽभ्युक्षणं मतम् ॥
प्रागग्रा उदगग्राश्च तिस्रो रेखाः समालिखेत् ॥

ततो मूलमुच्चार्य कुण्डाय नमः इति संपूज्य प्रागग्रेषु मुकुन्देशपुरन्दरान् उदगग्रेषु च ब्रह्मवैवस्वतेन्दून् षट्तारीः प्रयुज्य पूजयेत् यथा ऐँ ह्रीँ श्रीँ ऐँ क्लीँ सौः मुकुन्दाय नमः इत्यादि । ततः कुण्डमध्ये स्थण्डिले वा हुँगर्भं षट्कोणवृतत्रिकोणं तद्बहिरष्टदलपद्मं तद्बहिश्चतुरस्रं चतुर्द्वारसमेतं लिखित्वा तदुपरि बालाबीजेन ( ऐँ क्लीँ सौः ) पुष्पाञ्जलीन् दद्यात् । ततः प्रणवेन सर्वाणि होमद्रव्याण्यभ्युक्ष्य वह्नेर्योगपीठमर्चयेत् । यथा—कर्णिकोपरि आधारशक्त्यादीन् संपूज्य अग्न्यादिकोणचतुष्केषु ॐ धर्माय, ज्ञानाय, वैराग्याय, ऐश्वर्याय, पूर्वादिदिक्षु अधर्माय, अज्ञानाय, अवैराग्याय, अनैश्वर्याय, मध्ये अनन्ताय, पद्माय, अं अर्कमण्डलाय द्वादशकलात्मने, उँ सोममण्डलाय षोडशकलात्मने, मं वह्निमण्डलाय दशकलात्मने, ततः केशरेषु पूर्वादितो मध्ये च पीतायै, श्वेतायै, अरुणायै, कृष्णायै, धूम्रायै, तीव्रायै, स्फुलिङ्गिन्यै, रुचिरायै, ज्वालिन्यै रं वह्न्यासनाय । सर्वत्र प्रणवादिनमोऽन्तेन पूजयेत् । ततः कामेश्वरं कामेश्वरीं च पूजयेत् ।

अग्न्याहरणमाह गौतमीये--

पाषाणभवमग्निश्च यदि वाऽरणिसम्भवम् ।
श्रोत्रियाणां गेहजश्च वनस्थं वाऽथवा हरेत् ॥
निरग्निब्राह्मणाल्लब्धो ह्यर्धलाभकरो भवेत् ।
क्षत्रबन्धोश्चतुर्थांशं फलं दद्याद्धुताशनः ॥
वैश्याच्छूद्राच्च विफलं जायते होमकर्म तत् ।
तस्मात् सर्वप्रयत्नेन वह्निमुक्तं समाहरेत् ॥

[ क्रव्यादांशत्यागो वह्निस्थापनञ्च ]

[1]क्रव्यादांशं परित्यज्य वह्निं तत्र नियोजयेत् ।

[ वह्निदेवतयोरैक्यं विभाव्य इष्टपूजा ]

वह्निदेवतयोरैक्यं ध्यात्वेष्टं तत्र पूजयेत् ॥ ५६६ ॥

तन्त्रान्तरे—

द्विजातिभवनाद् वाऽपि वह्निमानीय साधकः ।
वौषडन्तेन मूलेन मन्त्रितं तद् विलोकयेत् ॥
अग्निमावाहयेदस्त्रमन्त्रेण तदनन्तरम् ।
हुं फडन्तेन मूलेन क्रव्यादांशं परित्यजेत् ॥

ततः ॐ वह्नेर्योगपीठाय नमः, चतुर्दिक्षु ॐ वामायै, ज्येष्ठायै, रौद्र्यै, अम्बिकायै, मूलमुच्चार्यामुकदेवताकुण्डाय नम इति कुण्डं संपूज्य यथोक्तं वह्निमानीय वीक्षणादिभिः संस्कृत्य रमिति तस्माद् वह्निमुद्धृत्य मूलमुच्चार्य हुँ फट् क्रव्यादेभ्यः स्वाहा इत्यनेन क्रव्यादांशं परित्यज्य फट् इति वह्निमन्त्रेण संरक्ष्य हुँ इत्यवगुण्ठ्य वमिति धेनुमुद्रयाऽमृतीकृत्य बाहुभ्यां समुद्धृत्य कुण्डोपरि त्रिः परिभ्राम्य जानुस्पृष्टमहीतलः शिवबीजबुद्ध्या आत्मनोऽभिमुखं देव्या योनावेनं निक्षिपेत् । ततो ह्रीं वह्निमूर्त्तये नमः इत्यभ्यर्च्य रं वह्निचैतन्याय नम इति चैतन्यं संयोज्य ॐ चित्पिङ्गल हन हन दह दह पच पच सर्वज्ञाऽऽज्ञापय स्वाहा इति ज्वालयेत् ।

ॐ अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ।
सुवर्णवर्णममलं समिद्धं विश्वतोमुखम् ॥

इत्युपतिष्ठेत् । ततोऽग्ने त्वममुकदेवतानामाऽसीति नाम कृत्वा ॐ वैश्वानर जातवेद लोहिताक्ष इहाऽऽवह सर्वकर्माणि साधय स्वाहा । इत्यनेनार्घ्यादिभिः संपूज्य ॐ अग्नेर्हिरण्यादिसप्तजिह्वाभ्यो नमः, ॐ सहस्रार्चिषे हृदयाय नमः, इत्यादि अग्निषडङ्गेभ्यो नमः, ॐ अग्नये जातवेदसे इत्याद्यष्टमूर्त्तिभ्यो नमः, ॐ ब्राह्म्याद्यष्टशक्तिभ्यो नमः, तद्बहिः पद्माद्यष्टनिधिभ्यः, तद्बाह्ये इन्द्रादिलोकपालेभ्यः, तद्बाह्ये वज्राद्यस्त्रेभ्यः । ततः प्रादेशमात्रं कुशपत्रद्वयं घृतमध्ये निक्षिप्य सव्यासव्यमध्यभागेषु इडां पिङ्गलां सुषुम्णां ध्यात्वा होमं कुर्यात् । स्रुवेण दक्षिणभागादाज्यं गृहीत्वा ॐ अग्नये स्वाहेति अग्नेर्दक्षिणनेत्रे, तथा वामभागादाज्यं गृहीत्वा ॐ सोमाय स्वाहेति

1. 'द्रव्यादि रं-' A.

[ घृतशोधनम् ]

**घृतं स्थाल्यां विनिक्षिप्य मूलमन्त्रेण शोधयेत् ।**

[ देव्या व्याहृतिहोमः ]

**देव्या व्याहृतिहोमञ्च कृत्वा साधकसत्तमः ।**

---

वामनेत्रे, मध्यभागादाज्यं गृहीत्वा ॐ अग्नीषोमाभ्यां स्वाहेत्यग्नेर्ललाटनेत्रे जुहुयात् । पुनर्दक्षिणतः ॐ नमः इति घृतं गृहीत्वा ॐ अग्नये स्विष्टकृते स्वाहेत्यग्निमुखे जुहुयात् । तत ॐ भूः स्वाहा, ॐ भुवः स्वाहा, ॐ स्वः स्वाहेति महाव्याहृतिहोमः, ॐ वैश्वानर जातवेद इहाऽऽवह लोहिताक्ष सर्वकर्माणि साधय स्वाहेत्यनेन त्रिवारं जुहुयात् । ततो मूलस्य पीठदेवतां मूलदेवताञ्चाग्नौ संपूज्य तन्मुखे मूलमन्त्रेण पञ्चविंशतिवारं जुहुयात् । वह्निदेवतयोरात्मना सहैक्यं विभाव्य मूलमन्त्रेणैकादशाऽऽहुतीर्जुहुयात् । ततो मूलदेवस्याङ्गदेवताभ्यः स्वाहा, आवरणदेवताभ्यः स्वाहेति, शक्तश्चेत् प्रत्येकमेकैकाहुतिं जुहुयात् । ततः संकल्पं विधाय स्वकल्पोक्तद्रव्येण होमं कुर्यात् । ततो मूलमन्त्रेण पूर्णाहुतिं दत्त्वा संहारमुद्रया स्वेष्टदेवतां हृदये समानीय क्षमस्वेति विसर्जयेदिति संक्षेपहोमविधिः ।

गन्धर्वतन्त्रे एकत्रिंशपटले च—

किंशुकैर्हवनं देव्याः कुसुम्भकुसुमैरपि ।
नागकेशरपुष्पैर्वा मधूकै रक्तपद्मकैः ॥
करवीरैर्जवापुष्पैर्मधुरत्रयमिश्रितः ।
सर्वसिद्धिप्रदं कुण्डं चतुरस्रं वरानने ॥
कुण्डं सुलक्षणं कृत्वा होमयेत् संस्कृतेऽनले ।
अथवा परमेशानि स्थण्डिलं रचयेद् बुधः ॥
नित्यं नैमित्तिकं कुर्यान्न काम्यं स्थण्डिले चरेत् ।
हस्तमात्रं चतुरस्रं गोमयेनोपलेपितम् ॥
अङ्गुष्ठपर्वमात्रोच्चं वालुकामण्डलं तथा ।
तत्रापि लेखनं कृत्वा तत्र होमः फलप्रदः ॥
यवानां तण्डुलैरेवमङ्गुलश्चाष्टभिर्भवेत् ।
अदीर्घयोजितैर्हस्तश्चतुर्विंशतिरङ्गुलैः ॥
एतत्प्रमाणहस्तैस्तु कुण्डादिकं समाचरेत् ।
त्रिपुराप्रीतिदो होमः कुण्डे त्रिकोणसंज्ञके ॥

[ जपदशांशहोमः ]

स्वाहान्तमूलमन्त्रेण दशांशं होममाचरेत् ॥ ५६७ ॥

[ प्राणाहुत्यादिदानम् ]

प्राणाहुतिस्तु मूलेन षडङ्गेन षडाहुतीः ॥ ५६८ ॥

---

पश्चिमात् पूर्वाग्रास्तिस्रो रेखाः प्रादेशप्रमाणाः ।
विलिख्य च मुकुन्देन्दुपुरन्दरस्वरूपकाः ॥
दक्षिणास्तिस्रो रेखा वै विलिख्य तदनन्तरम् ।
रेखाः स्युश्च वैवस्वतब्रह्मानन्तस्वरूपकाः ॥
त्रिकोणं मध्यतो देवि कृत्वा बाह्ये ततः परम् ।
षट्कोणं विधिना चैव कारयेदतिसुन्दरम् ॥
अष्टपत्रञ्च तद्बाह्ये वृत्तेन कर्णिका शुभा ।

चतुरस्रं चतुर्द्वारं मण्डलं विरचय्य मध्ये पुष्पाञ्जलिं निक्षिप्य स्रुवादिकमासादयेत् । स्रुव-आज्यं-दधि-दूर्वा-समिध-आज्यस्थाली-प्रणीता-प्रोक्षणी चैव वामतः । एवं परिकल्प्याम्भसा प्रोक्षणीमापूर्य वारत्रयमुत्पूय तानि प्रोक्ष्याभिमुखानि कृत्वा बालयाऽभिमन्त्र्य, तथैव दूर्वाभिर्नूलादग्रं पुनरग्रान्मूलं त्रिः परिमृज्य दूर्वाभिः पूर्वाग्रमुत्तराग्रञ्च विस्तरेत् । मूलविद्यां समुच्चरन् 'स्थण्डिलाय नमः' इति संपूज्य त्रिकोणमध्ये कामेश्वरीकामेश्वरौ यष्ट्वा तयोर्मिथुनीभावं ध्यात्वा तावभ्यर्च्य तस्या गर्भे वैश्वानरजातवेद इहाऽऽवह लोहिताक्ष सर्वकर्माणि साधय स्वाहेति मूलोद्गतं संविदग्निं ललाटनेत्रद्वारा निर्गतं वाय्वग्नियुक्तं पातयेत् । 'ॐ उत्तिष्ठ पुरुष हरिपिङ्गल लोहिताक्ष सर्वकर्माणि देहि मे दापय स्वाहे'ति वह्निमुत्थाप्य 'ॐ चित्पिङ्गल हन हन दह दह पच पच सर्वं ज्ञापय स्वाहे'ति कामेश्वरीगर्भे धृतं ध्यात्वा मूलमुच्चरन् वौषडिति वह्निं विलोक्य अस्त्रेण संरक्ष्य ज्वलदग्निमादाय स्थण्डिलं दक्षिणावर्त्तेन त्रिः परिभ्राम्य ज्वलदिन्धनमेकं हुं फडित्यनेन क्रव्यादाग्निं नैर्ऋत्यां त्यजेत् । जानुभ्यामवनीं स्पृष्ट्वा वह्निं मध्ये संस्थाप्य 'क्लीं महात्रिपुरसुन्दरीवह्निमूर्त्तये नमः' इति देवीं संपूज्य नाभिमण्डलाद् वहन्नासापुटेन तदग्निना बाह्याग्निमेकीकृत्य यजेत् । 'मूलमुच्चार्य ऐँ क्लीं सौः आं सोऽहं वह्निचैतन्याय नमः' इति कामेश्वरीगर्भे वह्निं सञ्चिन्त्य तद्देहे षडङ्गानि 'ॐ सहस्रार्चिषे हृदयाय नमः, ॐ स्वस्तिपूर्णाय शिरसे स्वाहा, ॐ उत्तिष्ठ पुरुषाय शिखायै वषट्, ॐ धूमव्यापिने कवचाय हुं, ॐ सप्तजिह्वाय नेत्रेभ्यो वौषट्, ॐ धनुर्धरायास्त्राय फट्'

[ आवरणदेवताहोमः ]

[1]तत आवृतिदेवार्थमेकैकामाहुतिं हुनेत् ।

[ मूलेन षडाहुतिहोमः ]

पुनर्मूलेन मन्त्रेण षडाहुतिं समाचरेत् ॥ ५६६ ॥

---

इति यष्ट्वा तप्तजाम्बूनदप्रभं शक्तिस्वस्तिकधरं वराभयशोभितकरपङ्कजं दिव्यालङ्कारभूषितविग्रहम् अम्भोजसंस्थं शुक्लाम्बरधरं त्रिनयनं बद्धमौलिं ध्यात्वा वह्नेः सप्तजिह्वाश्च पूजयेत्—ईशाने यूं लोहिताम् , पूर्वे रूँ रक्ताम् , आग्नेये लूं नीलाम् , नैर्ऋते वूँ कृष्णाम् , पश्चिमे शूँ शुभ्राम्, दक्षे कां करालीम् उत्तरे बहुरूपाम् इति । ततः 'कामेशीगर्भाद्भववह्नेः सर्वभवेभ्यो नमः' इति मन्त्रेण अमुकाग्नेरमुककर्म कल्पयामीति वह्नेर्गर्भाधान-पुंसवन-सीमन्तोन्नयन-जातकर्म-नामकरणान्नप्राशन-चूडोपनयन-गोदान-विवाहकर्म निर्वर्त्य परिषिच्य, परिस्तीर्य, परिधाय, पुनर्ध्यात्वा अग्निमन्त्रेणाग्निं त्रिकोणे पूजयित्वा सप्तजिह्वासु सप्ताहुतिं हुत्वा 'वैश्वानर' 'उत्तिष्ठ' 'चित्पिङ्गल' इति मन्त्रत्रयेणाऽऽहुतित्रयं विधाय षडङ्गानि षट्कोणेषु अष्टदलेषु—अग्नये, जातवेदसे, सप्तजिह्वाय, हव्यवाहनाय, अश्वोदराय, वैश्वानराय, कौमारतेजसे, देवमुखाय नम इति लोकपालांश्चभूगृहे पूजयेत् । वह्नेर्दक्षिणतो ब्रह्माणमाराध्य आज्यस्थालीं पुरतो निधाय बहुरूपायां जिह्वायां श्रीचक्रराजं तदन्तःस्थां चित्कलाम् अशेषरश्मिमण्डितामालोच्य यष्ट्वा नित्यं हुत्वा कुण्डं मण्डपधूपैरापूर्य दीपैरुज्ज्वाल्य समिधं हुत्वा जुहुयादिष्टमेव च । बलीन् प्रदाय ॐ भूरग्नये च, पृथिव्यै च, महते च स्वाहा । ॐ भुवो वायवे चान्तरिक्षाय च दिव्ये च महते च स्वाहा । ॐ स्वरादित्याय दिवे च महते च स्वाहा । ॐ भूर्भुवः स्वश्चन्द्रमसे च नक्षत्रेभ्यश्च महते च स्वाहा । इति चतुर्भिर्मन्त्रैर्महाव्याहृतिहोमं कृत्वा ब्रह्मार्पणमतः परम् । समिधं हुत्वा देवीमभ्यर्च्य विसृजेदिति ।

काम्यहोमे विशेषमाह तत्रैव—

नित्यहोमो मया प्रोक्तः काम्यहोममतः शृणु ।
मल्लिका-मालती-जातिकुसुमैर्मधुमिश्रितैः ॥
घृतपूर्णैः कुलैर्वाऽपि वागीशत्वं प्रजायते ।
जवापुष्पैराज्ययुक्तैः करवीरैस्तथाविधैः ॥

---

1. 'अथवावृतिदेवा-' B.

[ आहुतित्रयम् ]

प्रणवश्चाग्नये स्वाहा त्रिधाहुतिमनेन तु ।

[ देव्या विसर्जनम् ]

विसर्जयेत्ततो देवीं नित्यहोम इति स्मृतः ॥ ५७० ॥

---

हवनान्मोहयेन्मन्त्री लोकत्रयनिवासिनः ।
चम्पकैः पाटलैर्हुत्वा श्रियमाप्नोत्यनुत्तमाम् ॥
कमलैर्वरुणैर्होमः सम्यक्सम्पत्तिदायकः
रक्तोत्पलैर्जगद्वश्यं नीलैर्दुष्टान् वशं नयेत् ।
श्वेतोत्पलैः श्रियं राज्यं लभते हवनात् प्रिये ॥
कह्लारहवनैर्लक्ष्मीं सर्वसौभाग्यमेव च ।
बन्धूककुसुमैर्होमैः सर्वसत्त्वान् वशं नयेत् ॥
क्षीरं दधि मधु त्वाज्यं पृथग् हुत्वा वरानने ।
आयुर्बलमथाऽऽरोग्यं समृद्धिर्जायते नृणाम् ॥
रुधिराक्तेन छागस्य मांसेन निशि होमतः ।
मधुरत्रययोगेन गुरुणोक्तविधानतः ॥
परराष्ट्रं वशं नीत्वा कामभोगी भवेन्नरः ।
द्राक्षाभिर्लक्षहोमेन नारिकेलफलैस्तथा ।
राजानो वशमायान्ति समृद्धिरतुला तथा ॥
जम्बूफलैः स्त्रियः सर्वा वश्या भवन्ति निश्चितम् ।
श्रीफलैरतुलां लक्ष्मीं पत्रैश्चापि तथा भवेत् ॥
इक्षुखण्डैः सुखावाप्तिस्तद्रसैर्वशगा नृपाः ।
तिलाज्यहोमतो देवि सर्वकार्याणि साधयेत् ॥
घृतपायसहोमेन सिताज्यमधुना सह ।
त्रैलोक्यं वशमायाति धनधान्यमवाप्नुयात् ॥
सोपस्कारैश्च वटकैरुपसर्गान् विनाशयेत् ।
कर्पूरस्य च होमेन वाग् वश्या जायते नृणाम् ॥
कुङ्कुमैर्होमतो देवि सर्वदुःखान् विनाशयेत् ॥
कस्तूरीहोमतो देवा वशगा नात्र संशयः ।
चन्दनागुरुहोमेन सर्वांल्लोकान् वशं नयेत् ॥

[ होमदशांशेन तर्पणम् ]

**ततो होमदशांशेन तर्पयेज्जातिभेदतः ।**

[ दुग्धेन तर्पणोपदेशः मद्येन तर्पणनिषेधश्च ]

**दुग्धेन तर्पणं कुर्यान्न तु मद्येन तर्पयेत् ॥ ५७१ ॥**

[ मद्यस्य त्रैविध्यम् ]

**तर्पणं बहुधा विन्द्यान्मधुपिष्टगुडोद्भवम् ॥ ५७२ ॥**

[ ब्राह्मणादीनां तर्पणद्रव्याणि ]

**गोक्षीरं ब्राह्मणो दद्याद् गव्यं मद्यश्च बाहुजः ।**

---

हवनद्रव्याणां प्रमाणञ्चोक्तं तत्रैव—

श्रृणु देवि प्रवक्ष्यामि मानं हवनसिद्धये ।
पुष्पं समग्रं जुहुयाच्छतसंख्यास्तिलास्तथा ॥
लाजा मुष्टिप्रमाणाः स्युर्घृतं कर्षप्रमाणकम् ॥
चुल्लुकार्धं मधु क्षीरमन्नं ग्रासमितं भवेत् ।
समग्रैश्च सखण्डैश्च फलानाञ्च यथेच्छया ॥
रम्भाफलं चतुःखण्डं लघु चेत् खण्डितं नहि ।
नारिकेलस्य खण्डस्तु स्थूलं कुर्यान्मनःप्रियम् ॥
पर्वस्थाने चेक्षुदण्डं मनःसन्तोषकारकम् ।
द्राक्षाफलं समग्रं स्याद् गुञ्जामानं ततो भवेत् ॥
कर्पूरकौषिकादीनां मनःसन्तोषकारकम् ॥
एतदाहुतिमानञ्च कथितं सर्वसिद्धिकृत् ।
किंशुकैः पापसङ्घातनाशकैरथवा प्रिये ।
नानाद्रव्यैः पृथग्भूतैः संगृहीतैर्वरानने ॥
यथाशक्त्या तु मिलितैर्होमं कुर्याद् विचक्षणः ।
सर्वविघ्नसमूहं तन्नाशयेन्नात्र संशयः ॥ इति ।

५७१-५७३ । ततो होमेति । जातिभेदत इति ब्राह्मण-क्षत्रिय-वैश्य-शूद्राः स्वस्वजात्युक्तद्रव्यैर्होमसंख्यादशमांशसंख्याकैस्तर्पयेदित्यर्थः । तत्रापि ब्राह्मणो दुग्धेन तर्पणं कुर्यात् न तु मद्येन तर्पयेदिति पुनः पुनर्निषेधति निषेधदार्ढ्यार्थम् । तर्पणं बहुधेति,

वैश्यस्तु माध्विकं दद्याच्छूद्रः [1]पुष्परसादिकम् ॥ ५७३ ॥

[ देव्यै मद्यदाननिषेधः ]

न दद्याद् ब्राह्मणो मद्यं महादेव्यै कदाचन ।

[ ब्राह्मणस्य वामाचारिणोऽपि मद्यदाननिषेधः ]

[2]वामकामो ब्राह्मणोऽपि [3]मद्यं मांसं न भक्षयेत् ॥ ५७४ ॥

---

अत्र लक्षणया तर्पणशब्दस्य मद्यार्थकत्वं गृहीत्वा तस्य बहुविधत्वं दर्शयति—मधुपिष्ट-गुडोद्भवमिति । सुरायास्त्रैविध्यमुक्तं मनुसंहितायामेकादशाध्याये—

गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ।
यथैवैका तथा सर्वा न पातव्या द्विजोत्तमैः ॥ इति ।

५७४-५७५ । न दद्यादिति वचनमिदमुक्तं श्रीक्रमे । अत्र संवादिप्रमाण-मुक्तं मेरुतन्त्रे प्रथमपटले—

वाममार्गेण तत्राऽऽद्यवर्णं हित्वा प्रशस्यते ।
ब्राह्मणस्तु सुरां पीत्वा रौरवं नरकं व्रजेत् ।
वाममार्गी ब्राह्मणोऽपि मद्यं मांसं न भक्षयेत् ॥ इति ।

रुद्रयामले च—

वेदत्यागान्मद्यपानाच्छूद्रदारनिषेवणात् ।
तत्क्षणाज्जायते विप्रश्चाण्डालादपि गर्हितः ॥ इति ।

कालीकुलामृते चतुर्थपटले च—

ब्राह्मणस्तु सुरां दत्त्वा ब्राह्मण्यादेव हीयते ।
ब्राह्मणः पशुराख्यातः पाशवं कल्पमाचरेत् ॥

कालीकुलार्णवे च—

सुरा वै मलमन्नानां पुरीषं मलमुच्यते ।
तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥
सुरादर्शनमात्रेण कुर्यात् सूर्यावलोकनम् ।
तत्समाघ्राणमात्रेण प्राणायामत्रयञ्चरेत् ॥ इति ।

---

1. 'पुष्पासवादिकम्' C. 2. 'ध्यानकामो' A. 3. 'नित्यं' A.

[ मद्येऽनुकल्पः ]

यत्रैव विहितं मद्यं तत्र तत्र [1]द्विजोत्तमः ।
नारिकेलोदकं कांस्ये [2]ताम्रपात्रे सृजेन्मधु ॥ ५७५ ॥

[ बृहच्छ्रीक्रमतन्त्रमतेन निरुक्ततर्पणप्रकारः ]

एवमेव [3]प्रकारेण तर्पयेत्त्रिपुरेश्वरीम् ।
बृहच्छ्रीक्रमतन्त्रस्य मतमेतदुदीरितम् ।
सत्यत्रेताद्वापरेषु क्रमेण परिकीर्त्तितः ॥ ५७६ ॥

[ ज्ञानार्णवमतोल्लेखः ]

ज्ञानार्णवमतेनापि वर्णानुक्रमभेदतः ।
कथ्यन्ते [4]द्रव्यभेदास्तु सविकल्पस्य मन्त्रिणः ॥ ५७७ ॥
क्षीराज्यमधु[5]मैरेयद्रव्यभेदा भवन्ति हि ॥ ५७८ ॥

---

कुब्जिकातन्त्रे च—

भुक्त्वा मत्स्यञ्च मांसञ्च स्पृष्ट्वा हेतुञ्च भैरवि ।
त्रिरात्रोपोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ इति ।

वाराहीतन्त्रे नवमपटलेऽपि—

मद्यं मांसं तथा मत्स्यं मैथुनं परमेश्वरि ।
मानुषेण बलिं पञ्च ब्राह्मणो न स्मरेत् क्वचित् ॥ इत्यादि ।

यत्रैवेति । मद्ये अनुकल्पविधायकं वचनं कुलचूडामणौ—

यत्राऽऽसवमवश्यन्तु ब्राह्मणस्तु विशेषतः ।
गुडार्द्रकं तदा दद्यात् ताम्रे वा विसृजेन्मधु ॥ इति ।

५७७-५७८ । वर्णानुक्रमभेदत इति । ब्राह्मणक्षत्रियवैश्यशूद्रभेदेनेत्यर्थः । कथ्यन्ते इति । तथा च सविकल्पानां ब्राह्मणादिसाधकानां यथासंख्यं दुग्ध-घृत-मधु-मैरेयैस्तर्पणं भवतीति भावः । मैरेयलक्षणे शब्दकल्पद्रुमधृतं माधवाचार्योक्तं प्रमाणम्—

सीधुरिक्षुरसैः पक्वैरपक्वैरासवो भवेत् ।
मैरेयं धातकीपुष्पं गुडधानाम्लसंहितम् ॥ इति ।

---

1. 'द्विजः पुनः' C. 2. 'ताम्रे वा विसृजेन्मधु' B. 3. 'विधानेन' C. 4. 'वर्णभेदा-' C. 5. '-मैरेय-' C. '-मैत्रेय-' B.

[ आत्मनः कामकलारूपचिन्तनम् ]

[1]कामी कामकलारूपमात्मानं चिन्तयेत्ततः।
पूर्वोक्तेनैव विधिना चिन्तयेत् सुन्दरीं पराम्॥ ५७९॥

५७९। कामीति। आत्मानं कामकलारूपं चिन्तयेदित्यर्थः। कामकलायाः स्वरूपमुक्तं गन्धर्वतन्त्रे त्रिंशपटले—

तत्त्वं विध्यं शृणु प्राज्ञे सर्वतन्त्रेषु गोपितम्।
स्थूलं समं तथा नाम सूक्ष्मं मन्त्रतनूं तथा॥
नभोबिन्दुमुखी सा च चन्द्र-सूर्य-तमःप्रभा।
स्वमेरु-हार्दकलया शोभमाना मही यदा॥
पातालतलविन्यस्ता त्रिलोकीयं कलात्मिका।
ललितायास्त्रिभिर्बीजैः प्रकाशार्थो य ईर्यते॥
तेषां विमर्श ईकारो बिन्दुना यत् त्रिधागतम्।
तत् तुरीयस्वरूपार्णबिन्दुत्रयवदीरितम्॥
ईकारोर्ध्वगतो बिन्दुर्मध्यताञ्च गते रवौ।
स्तनौ दहनशीतांशू योनिर्हार्दकला भवेत्॥
तदात्मकस्तु देव्यास्ते साधकस्य च तद् भवेत्।
तदुद्भवं शृणु प्राज्ञे महोदयकरं परम्॥
ऊर्ध्वबिन्द्वात्मकं वक्त्रमधो बिन्दुद्वयात्मकम्।
कुचद्वयन्तु तच्छेषैः शेषाङ्गाणि विभावयेत्॥
इति ते गदिता कामकलाया बाह्यभावना।
तामेव त्वां पुनर्वक्ष्ये भावनामान्तरात्मिकाम्॥
मूलादिब्रह्मरन्ध्रान्तं स्फुरद्विद्युल्लताकृतिम्।
ध्यायेत् कुण्डलिनीं देवि तद्विद्यास्वरूपिणीम्॥
षट्चक्रभेदिनीं देवीं बिन्दुत्रयात्मिकां पराम्।
ताञ्च हार्दकलारूपां चिन्तयेत् पद्ममध्यगाम्॥
एवं कामकलारूपा जागर्ति सचराचरे।
सा च त्रयीमयी प्रोक्ता नास्ति किञ्चित् तया विना॥

1. 'कामं' C.

सृष्टिचक्रे यजेत् पूर्वां [1]मलयां दक्षिणां स्थितौ ।
पश्चिमां प्रलये चक्रे ग्रन्थिस्थानेषु चोत्तराम् ॥ ५८० ॥
तासां मन्त्रं प्रवक्ष्यामि ज्ञानार्णवानुसारतः ।
शिवचन्द्राग्निदीर्घाक्षिबिन्दुनाद[2]कलात्मकम् ॥ ५८१ ॥
[3]चन्द्रेशवह्नियामाक्षिनादबिन्दुकलान्वितम् ।
[4]शक्तिं कलाढ्यमन्ते च तुर्यबीजमुदीरितम् ॥ ५८२ ॥
श्रीबीजं कुरु तार्त्तीयं विद्या [5]वेदाक्षरी भवेत् ।
एषा पूर्वाम्नायविद्या रुद्रशक्तिरियं भवेत् ॥ ५८३ ॥
वाक्क्लिन्ने कामबीजञ्च मदद्रवे कुले हसौः ।
[6]वर्णिता रुद्रवर्णेयं दक्षिणाम्नायदेवता ॥ ५८४ ॥

---

साम्ना मुखं समाख्यातमृग्यजुर्भ्यां स्तनद्वयम् ।
अथर्वणा समाख्याता हार्दरूपा परा कला ॥
तुरीयं परमेशानि साक्षाद् ब्रह्मैव केवलम् ।
एतत् कामकलाध्यानं गुह्याद् गुह्यतमं परम् ॥ इति ।

५८०-५८३ । चतुराम्नायविद्यामाह—सृष्टिचक्रे इत्यादि । तत्र पूर्वाम्नायविद्यामन्त्रोद्धारमाह—शिवेति । शिवो हकारः, चन्द्रः सकारः, अग्नी रेफः, दीर्घाक्षिरीकारः, तथाच प्रथमाक्षरः हसरीं, एवं मन्त्रोद्धारेण द्वितीयः सहरीं, तृतीयः श्रीं, कलाढ्यं शक्तिबीजमिति चतुर्थः कलह्रीम् इति चतुरक्षरी पूर्वाम्नायरुद्रशक्तिः । व्यक्तमाह ज्ञानार्णवे दशमपटले—

चतुराम्नायविद्याभिर्मान्यं सिंहासनं प्रिये ।
हस्रीमात्मकमुच्चार्य सह्रीमात्मकमद्रिजे ॥
शक्तिः कलाभ्यामन्ते च तुर्यं बीजमुदाहृतम् ।
श्रीबीजं कुरु तार्तीयं विद्या वेदाक्षरी भवेत् ॥
उन्मनी नाम विद्येयं भोगमोक्षफलप्रदा ॥
पूर्वाम्नाये महाविद्येति ।

५८४ । वाक्क्लिन्ने इति । तथाच 'ऐं क्लिन्ने क्लीं मदद्रवे कुले हसौः' इति

---

1. 'समयां दक्षिणे' C. 2. '-कलात्मिकाम्' B. 3. 'चन्द्रेण वाग्नि-' B. 4. 'शक्तिकालाख्यमन्त्रेण' B 5. 'षोडाक्षरी' (?) B. 6. 'वर्णिते'त्यादिपादाष्टकं नास्ति C-पुस्तके ।

अवधूतेश्वरीनाम्नीं ज्ञात्वा तां साधकोऽर्चयेत् ।
वाग्भवश्च महामायां श्रीबीजं [1]हसखफ्रेमिति ॥ ५८५ ॥
रुद्रेश्वरेण संभिद्य बिन्दुनादाङ्कितं हसौः ।
पञ्चप्रणवमुद्दिष्टं सर्वपक्षेषु दुर्लभम् ॥ ५८६ ॥
एतत्संपुटितां विद्यां द्वात्रिंशार्णां लिखेद् बुधः ।
[2]नमो भगवति प्रान्ते चतुर्थं प्रणवं लिखेत् ॥ ५८७ ॥
ईश्वराख्यं क्रमेणैव [3]कुब्जिके च पदन्तथा ।
ऐमात्मकं परां विद्यां श्रीमात्मकमतः परम् ॥ ५८८ ॥

---

एकादशाक्षरी दक्षिणाम्नाय विद्या । एनाम् अवधूतेश्वरीं साधकः पूजयेत् । ज्ञानार्णवे मन्त्रोद्धारस्तु--

—दक्षिणाम्नाय उच्यते ।
वाग्भवं बीजमुच्चार्य क्लिन्ने कामस्य बीजकम् ।
मदद्रवे कुले हस्रौ विधेयं भोगिनी प्रिये ।
दक्षिणाम्नाय विद्येयमिति ।

५८५-५९० । वाग्भवमित्यादि । तथाच ऐँ, ह्रीँ, श्रीँ, हसखफ्रेँ, हसौँ, इति एते पञ्च प्रणवाः । एतत्संपुटितां द्वात्रिंशद्वर्णां विद्यां लिखेत् । सा च—नमो भगवति हसखफ्रेँ ह्रौँ कुब्जिके ऐँ ह्रीँ श्रीँ अघोरे घोरे अघोरमुखि क्लिं क्लिं किलि-किलि विच्चे । इति द्वात्रिंशदक्षरी ऋक् । इयं भोगमोक्षप्रदायिनी पश्चिमाम्नायदेवीति विशदोऽर्थः । अत्र यद्यपि ग्रन्थकारेण ज्ञानार्णवमतमुल्लिख्य मन्त्रविन्यासः कृतः, तथाऽपि मुद्रितज्ञानार्णवे मन्त्रोऽयमंशतो भिन्न इति ग्रन्थपाठः प्रदर्श्यते—

—पश्चिमाम्नाय उच्यते ।
वाग्भवश्च परा श्रीँ च हसखफ्रेमिति प्रिये ।
हस्रौ मन्तास्ततो देवि पञ्चैते प्रणवाः स्मृताः ॥
भगवत्यम्ब आलिख्य पृथक् पदमथेश्वरि ।
चतुर्थं प्रणवञ्चैव खसहफ्रेमिति प्रिये ॥

---

1. 'सहफाण्विनम् ?' B. 2. 'नमो भगवति पान्ते च' B. 3. 'छुरिके च पदद्वयं' B-C.

अघोरे चैव घोरे [1]अघोरमुखि [2]च संलिखेत् ।
[3]क्लिं क्लिं किलियुगं [4]विच्चे कुब्जिका शाम्भवी परा ॥ ५८९ ॥
पश्चिमाम्नायदेवेशी भोगमोक्षप्रदायिनी ।
[5]खफ्रेमात्मकमुच्चार्य [6]महाचण्डपदं लिखेत् ॥ ५९० ॥
योगेश्वरीपदं पश्चाद् [7]विद्यैषा कालिका मता ।
उत्तराम्नायविद्येयं नवार्णा परमेश्वरी ॥ ५९१ ॥

[ ग्रहादीनां पूजा ]

नवग्रहांश्च मेषादीन्नक्षत्राणि समर्चयेत् ।
योगांश्च करणान्येव [8]तिथिमासानृतूनपि ॥ ५९२ ॥

[ कलादीनां डाकिन्यादीनां च पूजा ]

कलाकाष्ठानि [9]पक्षांश्च डाकिनीं [10]याकिनीं तथा ।
लाकिनीं काकिनीश्चैव साकिनीं [11]ह्लाकिनीमपि ॥ ५९३ ॥

---

कुब्जिके चैव ह्स्रां च ह्स्रीं ह्स्रौँ ततः परम् ।
अघोरे चैव घोरे च त्वघोरमुखि चाऽऽलिखेत् ॥
ह्स्रां ह्स्रीं किणिद्वन्द्वं विच्चे द्वात्रिंशदक्षरी ॥
कुब्जिकेयं महाविद्या पश्चिमाम्नायदेवता ॥ इति ।

५९०-५९१ । खफ्रेमिति । तथाच 'खफ्रेँ महाचण्डयोगेश्वरी' इति नवाक्षरी कालिकानाम्नी उत्तराम्नायविद्या भवति । मन्त्रस्यास्योद्धारो ज्ञानार्णवतन्त्रे—

खफ्रेमात्मकमुच्चार्य महाचण्डपदं लिखेत् ।
योगेश्वरीपदं पश्चाद्द् विद्येयं कालिका प्रिये ॥
उत्तराम्नायविद्येयं नाम्ना कालीति विश्रुता ।
एताभिः परमेशानि पूज्यं सिंहासनं सदा ॥ इति ।

---

1. 'च घोषमुत्थित-' B. 2. 'ततो' A. 3. 'ह्रिं ह्रिं' C. 4. 'विच्छेत्' B. 5. 'खफ्रें अमुक-' (?) B. 6. 'महाचतुष्पदं' B. 7. 'विद्येयं' C. 8. 'मासान् पक्षान् ऋतूनपि' C. 9. 'मेषांश्च' B. 10. 'राकिणी' C. 11. 'हाकिनी-' C.

[ पूजास्थानं फलञ्च ]

श्रीचक्र[1]मध्ये संपूज्य साधकः शिवतां व्रजेत् ।

[ अङ्गबलिदानम् ]

अथवाऽङ्गबलिं दद्यादधुना साधकोत्तमः ॥ ५६४ ॥

[ बलिदानमन्त्रः ]

स्वाहान्तेनाऽऽत्मतत्त्वाद्यैर्मूलबीजपुरःसरैः ।

[ प्रसादस्वीकरणम् ]

[2]तस्याः प्रसादं स्वीकृत्य [3]चुल्लुकार्घ्योदकेन च ॥ ५६५ ॥

[ आत्मसमर्पणम् ]

आत्मार्पणं ततः कुर्यात् पूर्वोक्तं [4]मन्त्रमुच्चरन् ।

[ ईदृशी पूजा पुरश्चरणेऽपि ]

पुरश्चरणकालेऽपि [5]सपर्यैषा प्रकीर्त्तिता ॥ ५६६ ॥

[ पराङ्मुखार्घ्यदानम् ]

मूलमन्त्रं समुच्चार्य त्रिपुरासुन्दरीति च ।

पराङ्मुखार्घ्यस्वाहेति पराङ्मुखार्घ्य ईरितः ॥ ५६७ ॥

[ देव्यङ्गे सर्वदेवताविलयनम् ]

श्रीमत्त्रिपुरसुन्दर्याः शरीरे सर्वदेवताः ।

विलीनाः सन्तु मूलेन देव्यङ्गे [6]विहिताः स्मरेत् ॥ ५६८ ॥

[ आत्मनः पुनः कामकलारूपचिन्तनम् ]

पुनः कामकलारूपमात्मानं परिचिन्तयेत् ।

[ विसर्जनम् ]

ध्यात्वा चक्रेण सहितां श्रीमत्त्रिपुरसुन्दरीम् ॥ ५६९ ॥

खेचर्या शक्तिचक्रन्तु[7] क्षमस्वेति विसर्जयेत् ।

---

1. '-वाह्ये' B. 2. 'तस्मात्' C. 3. 'मुन्दुका-' C. 4. 'मनु-' C. 5. 'विद्यैषा परिकीर्त्तिता' B. 6. 'विनिता' (?) C. 7. '-ञ्च' C.

[ देव्यङ्गे षडङ्गन्यासः ]

देवो[1]मूर्त्तौ षडङ्गानि न्यस्य मूलं समुच्चरन् ।

[ यन्त्रस्थपुष्पाघ्राणम् ]

यन्त्रस्थं पुष्पमाघ्राय बद्ध्वा संहारमुद्रिकाम् ॥ ६०० ॥

[ विसर्जनमन्त्रः ]

गच्छ गच्छ परं स्थानं स्वस्थानं परमेश्वरि ।
यत्र ब्रह्मादयो देवा [2]लभेयुः परमं पदम् ॥ ६०१ ॥

[ विसर्जनानन्तरकृत्योपदेशः ]

विसृज्यानेन तां देवीं ततः पूरकवायुना ।
ध्यायेत्तु मन्त्रेणानेन देवीं संस्थापयेद् हृदि ॥ ६०२ ॥

[ शेविकासुन्दरीपूजनमन्त्रः ]

लेह्यचोष्यान्नपानादि ताम्बूलमनुलेपनम् ।
निर्माल्यभोजनं तुभ्यं ददामि श्रीशिवाज्ञया ॥ ६०३ ॥
अनेन मनुना मन्त्री [3]शेविकां सुन्दरीं यजेत् ।

[ कामकलाध्यानम् ]

ततः कामकलां ध्याये[4]दुर्वारामिन्दुमालिनीम् ।
सेन्दुखण्डाश्च साकारां निराकारेऽथ मेलयेत् ॥ ६०४ ॥

[ प्राणायामः षडङ्गन्यासश्च ]

प्राणायामं विधायाथ षडङ्गानि न्यसेद् बुधः ।

[ श्रीपादुकापूजा ]

तनुत्रयं समुच्चार्य ततः श्रीपादुकां [5]यजेत् ॥ ६०५ ॥

---

६०५ । तनुत्रयमिति मूलबीजत्रयमित्यर्थः । शिष्टं सुगमम् ।

---

1. 'सूक्तौ' A. 2. 'न विदुः' C. 3. 'शोषिकां सुन्दरीं त्यजेत्' A.
4. '-दुच्चरन् बिन्दुमालिनीम्' C. 5. 'जपेत्' A.

[ गुरुप्रणामः ]

ततश्च गुरवे दद्यान्नमस्कारत्रयं सुधीः ॥ ६१२ ॥

[ शङ्खजलप्रशंसा ]

देवार्चनावशिष्टं यत् सलिलं शङ्खमध्यगम् ।
अङ्गे लग्नं मनुष्याणां ब्रह्महत्यां व्यपोहति ॥ ६१३ ॥

[ श्रीचक्रपादोदकप्रशंसा ]

गङ्गापुष्करनर्मदासु यमुनागोदावरीगोमती-
गङ्गा[1]द्वारगयाप्रयागबदरीवाराणसीसिन्धुषु ।
रेवा[2]शोणसरस्वतीप्रभृतिषु ब्रह्माण्डभाण्डोदरे
तीर्थस्नानसहस्रकोटिफलदं श्रीचक्रपादोदकम् ॥ ६१४ ॥

[ भङ्ग्या स्वोक्तौ प्रामाण्योपन्यासः ]

नानातन्त्रमतं ज्ञात्वा श्रीगुरोर्मतमेव च ।
पूर्णानन्देन कृतिना सपर्यैषा प्रकीर्त्तिता ॥ ६१५ ॥

इति [3]श्रीपूर्णानन्दपरमहंसविरचिते श्रीतत्त्वचिन्तामणौ सपर्याविवरणं नामाष्टादशः प्रकाशः ॥ १८ ॥

---

प्रोक्षयेत् तेन तोयेन स्वात्मानं मूलमन्त्रतः ।
निर्माल्यं मस्तके धार्यं मूलमन्त्रेण मन्त्रिणा ॥
प्राश्य पादोदकं देवि नवेद्यं विभजेत् प्रिये ।
तद्भक्तेभ्यः स्वयं भुक्त्वा तन्मयो विहरेत् सुखम् ॥ इति ।

तत्रापि विशेषः पिच्छिलातन्त्रे एकादशपटले—

जवापुष्पं महेशानि दद्यान्न धारयेत् क्वचित् ॥ इति ।

---

1. '-तीर्थ' C. 2. '-सेतु-' B. '-सिन्धु-' C. 3. 'श्रीपूर्णानन्दपरमहंसविरचिते' अयमंशो नास्ति C.

[ मानसकर्मयोगः ]

अथवा मानसे कर्मयोगे तु परमव्ययम् ।
मूलोद्गतं [1]शक्तिचक्रं पुनर्मूलं नयेत् क्रमात् ॥ ६०६ ॥
[2]मूलं चाऽऽत्मनि चिद्रूपे यज्जुष्टं तत् तदेव हि ।
अस्मिन्नेवाव्यये तत्त्वे विलीनं तद् विचिन्तयेत् ॥ ६०७ ॥
[3]प्रवाहं नाशयेत् संविदग्नौ [4]संभेदकर्मणि ।
इदन्तालक्षणं द्रव्यं जुहुयादवहिर्मुखः ॥ ६०८ ॥
पुष्पादिकं ततो घ्रात्वा [5]ह्यन्तर्देशे विनिक्षिपेत् ।
कथितः कर्मयोगोऽयं येन तन्निष्ठता भवेत् ॥ ६०९ ॥

[ कर्मयोगाभ्यासे सिद्धिः ]

एतदभ्यासतश्चैव सिद्धो भवति योगिराट् ॥ ६१० ॥

[ निर्माल्यादीनां धारणाद्युपदेशः ]

निर्माल्यं शिरसा धार्यं सर्वा[6]ङ्गमनुलेपनम् ।
नैवेद्यं चोपभुञ्जीत दत्त्वा तद्भक्तिशालिने ॥ ६११ ॥

---

६०६-६०९ । अथवेति । मानसे कर्मयोगे इति ज्ञानयोगे इति भावः । तत्र परममव्ययतत्त्वं मूलाधारे शक्तिचक्रं विचिन्त्य तत् तत्त्वं चिद्रूपे आत्मनि ब्रह्मरन्ध्रस्थित-सहस्रदलकमले मेलयित्वा शक्तिचक्रेण मिलितं तन्मूलाधारं समानयेत् । पुनः शक्ति-चक्रमिलितमात्मचक्रम् अस्मिन्नेवाव्यये तत्त्वे विलीनं विभावयेत् । अस्मिन् मेलनकर्मणि जाते ज्ञानाग्नौ बाह्यवस्तुप्रवाहं भस्मीकुर्यात् , एवञ्च अन्तर्मुखो घटादिबाह्यवस्तूनि तत्र नाशयेत् । तथाच ज्ञानमयं नित्यं वस्तु एव प्रकाशितं भवेदात्मनीति संक्षेपः । अनेन कर्मयोगाभ्यासेन आत्मनिष्ठता भवेदिति भावः ।

६११ । निर्माल्यधारणादिकमुपदिशति—निर्माल्यमिति । व्यक्तमुक्तं शिवार्चन-चन्द्रिकाधृतमालिनीतन्त्रे—

अर्घ्यतोयेन देवेशि गन्धं पूजावशेषितम् ।
आलोड्य किञ्चिन्मूलेन मन्त्रेण त्वष्टकं शिवे ॥

---

1. 'सृष्टिचक्रं' C. 2. 'मूलमि'त्यादिपादद्वयं नास्ति B. 3. 'प्रवासं' C. 4. 'संभेज्य'? B. 'संभेत' C. 5. 'शुचौ देशे' C. 6. '-ङ्गे ताम्र लेपनम्' (?) C.

## एकोनविंशः प्रकाशः

——:*:——

[ त्रिपुरार्णवोक्तं त्रिपुरसुन्दरीस्तोत्रम् ]

अथ स्तोत्रं प्रवक्ष्यामि त्रिपुरार्णव ईरितम्

किं किं [1]द्वन्द्वं दनुजदलिनि क्षीयते न [2]श्रुतायां
[3]का का सिद्धिः कुलकमलिनि प्राप्यते नार्चितायाम् ।
का का कीर्त्तिः [4]सुरवरनुते [5]व्याप्यते न स्तुतायां
कं कं [6]भोगं त्वयि न चिनुते चित्तमालम्बितायाम् ॥ १ ॥

[7]सकुसं सकु(?)सं रम्भ [8]स्वारिता [9]मोक्षविभ्रमे ।
चिच्चन्द्रमण्डलान्तःस्थे नमस्ते हरवल्लभे ॥ २ ॥

जग[10]दुद्धारणोद्योग-योगभोगवियोगिनि ।
स्थितिभावस्थिते देवि नमः स्थाणुप्रि[11]येऽम्बिके ॥ ३ ॥

भावाभावपृथग्भा[12]वानुभावे वेदकर्मणि ।
[13]चैतन्यपञ्चके देवि नमस्तुभ्यं हराङ्गने ॥ ४ ॥

सृष्टिस्थित्युपसंहार[14]प्रत्युर्जितपदद्वये ।
चिद्विश्रान्तिमहा[15]सत्तामात्रे मातर्नमोऽस्तु ते ॥ ५ ॥

---

१। किं किमिति। पद्यमिदं तन्त्रसारोक्तकिङ्किणीस्तोत्रस्य प्रथमश्लोकमनुवदति पाठभेदेन ।

---

1. 'दुःखं' C. 2. 'स्तुतायां' C. 3. 'कालासिद्धिः' (?) A. 4. 'सुखधर-' B. 5. 'ख्याप्यते' C. 6. 'योगं' C. 7. 'यकुलं सकुलं' (?) A. 8. 'स्फारिता' C. 9. 'मोघवि-' A. 10. '-दुल्वादनो-' (?) A, '-दाह्लादनो-' C. 11. '-प्रियाम्बिके' B. 12. '-वसुभावोदय-' C. 13. 'पञ्चके' B-C. 14. '-प्रत्युज्झित-' C. 15. '-सत्ते मात्रे मात्रे' C.

वह्न्यर्कशीतकिरणब्रह्म[1]चक्रान्तरोदिते ।
चतुःपीठेश्वरि शिवे नमस्ते त्रिपुरेश्वरि ॥ ६ ॥
चराचरमिदं विश्वं प्रकाशयसि[2] तेजसा ।
मातृकारूपमास्थाय तस्यै मातर्नमोऽस्तु ते ॥ ७ ॥
स्मृता भव[3]भयं हंसि पूजिताऽसि शुभङ्करि (री) ।
स्तुता त्वं वाञ्छितं वस्तु ददासि करुणा[4]वरे ॥ ८ ॥
भक्तस्य नित्यपूजायां [5]रतस्य मम साम्प्रतम् ।
वाग्भवादिमहासिद्धिं [6]देहि त्रिपुरसुन्दरि ॥ ९ ॥
परमानन्दसन्दोहप्रमोदभरनिर्भरे ।
[7]दुःखत्रयपरिम्लानवदनं [8]पाहि मां शिवे ॥ १० ॥
शब्दब्रह्म[9]मयि यच्च देवि त्रिपुरसुन्दरि ।
यथाशक्ति [10]जपं पूजां गृहाण मदनुग्रहात् ॥ ११ ॥
अज्ञानादल्पबुद्धित्वादालस्याद् [11]दुष्टभावतः ।
[12]ममापराधं कार्पण्यं क्षमस्व परदेवते ॥ १२ ॥
अज्ञानामसमर्थानामस्वस्थाननिवासिनाम् ।
अशुद्धं बलमस्माकं शिशूनां हरवल्लभे ॥ १३ ॥
कृपामयि [13]कृपां भद्रे सकृन्मयि निवेशय ।
[14]तावदहं कृतार्थोऽस्मि न ते [15]किञ्चन हीयते ॥ १४ ॥

---

८। स्मृतेति। पद्यमिदमुपलभ्यते किङ्किणीस्तोत्रेऽपि।

---

1. '-चक्रान्तवेदिने' A-B. 2. '-शयति' B. 3. '-भयध्वंसि' A-B. 4. '-प्रिये' C. 5. 'नतस्य मम सम्मतम्' B. 6. 'देवि' A-B. 7. दुःखत्रयेत्यादिपादद्वयी A-पुस्तके नास्ति, 'दुःखमय-' B. 8. 'त्राहि' C. 9. '-मये स्वच्छे' C. 10. 'जलं' B. 11. 'दुर्लभा-' A, '-दुर्गभा-' B. 12. 'कृतापराधं' C. 13. 'दृशां भङ्गं' C. 14. 'भवताऽहं' (?) A-B. 15. 'किञ्चिन्महीयते' A-B.

यन्मया क्रियते कर्म जाग्रत्स्वप्नसुषुप्तिषु ।
तत् सर्वं तावकी पूजा भूयाद् भूत्यै रमे शिवे ॥ १५ ॥

द्रव्यहीनं क्रियाहीनं विधिहीनञ्च यद् भवेत् ।
तत् सर्वं कृपया देवि क्षमस्व परदेवते ॥ १६ ॥

यन्मयोक्तं[1] [2]महाज्ञानं तन्महत् स्वल्पमेव वा ।
तावत् सर्वं जगद्धात्रि क्षन्तव्यमयमञ्जलिः ॥ १७ ॥

---

1. '-क्तमिहाज्ञानात्' C. 2. 'महादानं' A.

[ शङ्कराचार्योक्तं स्तोत्रम् ]

[1]इमं स्तवं प्रवक्ष्यामि शङ्कराचार्यभाषितम् ।

[2]रत्नामृताम्बुनिधिमध्यलसत्प्रवाल-
द्वीपस्फुरत्परमनन्दनकाननान्तः ।
श्री[3]वृक्षमूलतलपश्चिमवक्त्ररत्न-
गेहान्तराद्भुतमहामणिपीठिकायाम् ॥ १ ॥

बिन्दुत्रिकोणवहिरष्टककोणबाह्या-
द्विकोणदिक्परचतुर्दशकोणयुक्तम् ।
वृत्ताष्टषोडशदला[4]नतवृत्तलोक-
भूपूश्चतुर्मुखमहं प्रणमामि चक्रम् ॥ २ ॥

पाशाङ्कुशामृतकपालसुशूलहस्तं
हस्त्याननं विविध[5]भूषणनीलदेहम् ।
नित्योत्सवं सकलविघ्नविनाशहेतुं
श्रीमद्गणेश्वरमहं प्रणमामि नित्यम् ॥ ३ ॥

पीयूषभाण्डमसिदण्डकपालखण्ड-
चण्डातिचण्डभुजदण्डमतिप्रचण्डम् ।
श्रीकुण्डलद्वयविमण्डितगण्डमीडे
नीलं वटुं वटुकनाथमहीन्द्रहारम् ॥ ४ ॥

चञ्चत्कपालसुकृपाण[6]सशूलदण्ड-
मुद्यद्डमड्डमरुमण्डितपाणिदण्डम् ।

---

1. 'क्रमान्तरं' A. 2. 'रक्तासृगम्बुनिधि-' C. 3. '-कल्पवृक्षतल-' C
4. '-नदवृत्तमोक-' A. 5. '-भीषणदीन-' A. 6. '-त्रिशूल-' A.

नीलाञ्जनप्रचयपुञ्जमिव प्रसन्नं
श्रीक्षेत्र[1]पालकममुं शरणं [2]श्रयामि ॥ ५ ॥

[3]चक्रातिचक्रपरिदारितदैत्यचक्र-
चक्राब्जिकम्बुपरिचुम्बिकरां कुमारीम् ।
दुर्गां निसर्गमुनिवन्दित[4]दुर्गदुर्ग-
सिंहासनोपरिगतां सततं श्रयामि ॥ ६ ॥

पद्मद्वयाभयवरोद्यतपाणिपद्मां
पद्मासनेन समलङ्कृत[5]पादपद्माम् ।
[6]पद्मां सुपद्मवदनां खलु [7]पद्मनाभ-
हृत्पद्ममध्यवसतिं सततं प्रपद्ये ॥ ७ ॥

उद्यत्सुधानिधिसहस्रमरीचिगौरीं
[8]वागीश्वरीं सकलवाङ्मयसागराणाम् ।
कण्ठे सदा लुठतु मे स्फटिकाक्षमाला
श्रीज्ञान[9]पुस्तकवराभयशस्तहस्ता ॥ ८ ॥

बन्धूकपुष्पवपुषं मदघूर्णमानं
[10]पुष्पेषुचापकुसुमेषुकरं [11]वराद्या ।
[12]यद्बन्धनात् कनककान्तिसमानकान्त्या
स्वालिङ्गितं रतिपतिं सततं स्मरामि ॥ ९ ॥

प्रीत्यावशं भुवि वसन्तमहं भवन्तं
[13]नृत्यन्तमद्भुतमहोत्सवदं वसन्तम् ।

---

1. '-नायकमहं' C. 2. 'प्रयाणि' A. 3. 'चक्रापपाणिछविदा-' A. 4. '-द्वन्द्वसिंह-' C. 5. '-पाणिपद्माम्' A. '-सद्म-' C. 6. 'पद्मान्तु पद्म-' A. 7. 'नाभिपद्म-' A. 8. 'गोरीश्वरीं' C. 9. '-पुष्कर-' A. 10. 'पुण्ड्रेक्षु-' C. 11. 'वराङ्गया' C. 12. 'वल्या क्रणत्-' C. 13. 'अत्यन्तसन्ततमहोत्-' C.

वन्दे सु[1]नन्दनवने शरदिन्दुकान्तं
सन्तानसन्तति[2]लतासु विकाशयन्तम् ॥ १० ॥
भक्त्या[3]श्रिताभयवरोद्यतपाणिपद्मौ
देवौ समानरचितासनसन्निविष्टौ ।
[4]द्वारे पुरे परमदैवतदेवतायाः
श्रीशङ्खपद्म च निधी (?) [5]निदधामि मूर्ध्नि ॥ ११ ॥
चिन्तामणिप्रणयदक्षिण[6]पाण्यभीति-
दानोल्लसत्कमलकोमलवामपाणीः ।
रक्तद्युतीः शशिधराः प्रकटाणिमाद्या-
स्त्रैलोक्यमोहनगताः परिपूजयामि ॥ १२ ॥
रक्तोत्[7]पलामृतकपालधराः कराभ्यां
वंशीतमालदलकोमलनीलदेहाः ।
ब्राह्म्यादिका रुधिरभूषणरक्तवस्त्रा
मातर्द्वितीयचतुरस्रगता भजामि ॥ १३ ॥
पाशाङ्कुशाङ्कितयथायथ[8]बद्धबद्ध-
[9]मुद्राविमुद्रितकरां तरुणारुणाभाम् ।
श्रीमत्तृतीयचतुरस्रगसर्वपूर्व-
संक्षोभपूर्वदलदैवतमर्चयामि ॥ १४ ॥
शोणाः सपाशसृणिपाणियुगाभिरामाः
कामा[10]द्यकर्षणमुखाः सुभगाश्च नित्याः ।

---

1. '-नन्दवदने' A. 2. '-गताछ' A. 3. '-श्रया-' C. 4. 'नारे पुरे' A. 5. 'निनमामि' B. 6. '-पद्मयभीति-' (?) A. 7. '-पलायत-' A. 8. '-बन्धमन्ध-' A. 9. '-मुद्राणि' A. 10. '-द्यकर्पस-' C.

गुप्ताः कलानिधिकलाः खलु सर्ववाञ्छा-
संपूर्णषोडशदले परिपूजयामि ॥ १५ ॥

श्रीदेव्यचिन्त्यमहिमा [1]अभिदीप्यमाना
रक्ताः [2]सुगुप्ततरनामधरा दयार्द्राः ।
शक्तीरनङ्गकुसुमादिकयाष्ट सर्व-
संक्षोभकेऽष्टदलके परिपूजयामि ॥ १६ ॥

शोणाः सबाण[3]धनुषः खलु सर्वपूर्व-
संक्षोभणादिकचतुर्दशदेवतास्ताः ।
सत्सम्प्रदायविधिना परिपूजयामि
सौभाग्यदायकचतुर्दशकोणचक्रे ॥ १७ ॥

[4]शुभ्रा वराभयकराः खलु सर्व[5]पूर्व-
सिद्धिप्रदा [6]दशदिशोद्भुतशक्तिशक्तीः ।
सर्वार्थसाधकबहिर्दशकोणचक्रे
संपूजयामि कुलकौलिकयोगिनीस्ताः ॥ १८ ॥

कर्पूरपूररुचिराङ्गधराक्षमालाः
श्री[7]तत्त्वपूजकभृतोऽति[8]निगर्भदेवी ।
सर्वार्थरक्षणकरे दशकोणचक्रे
सर्वज्ञिका [9]प्रमथिका दश पूजयामि ॥ १९ ॥

चापेषुपुस्तकलसत्स्फटिकाक्षमालां
बालप्रवालरुचिरां वशिनीप्रधानाम् ।

---

1. 'द्युतिदीप्य-' C. 2. 'सुगुप्ततरनाम-' B. 3. '-धनुभिः' A. 4. 'शोभा वरा-' A. 5. '-सिद्धिसिद्धिप्रदादिदशकाद्भुत-' A. 6. '-निदशका-' C. 7. 'ज्ञान-पुस्तकभृतो' C. 8. '-निगर्व-' C. 9. 'प्रथमिका' A.

सर्वादिरोगहरचक्रवरे [1]त्रिकोणे
वागूदेवताष्टकमहं सरहस्यमीडे ॥ २० ॥
रक्ता वराभयकराः शिरसा दधानाः
पाशाङ्कुशेषुधनुरायुधभूषणानि ।
श्रीमत्त्रिकोणबहिरात्मकदेवतास्ता
रक्षन्तु सन्ततम[2]नन्तगुणाश्चतस्त्रः ॥ २१ ॥
श्रीमत्त्रिकोणबहिरात्मकदेवतास्ता
देवीः षडङ्गयुवतीः परिपूजयामि ।
कुन्देन्दुकज्जलकडारपिशङ्गहव्य-
वाह[3]श्रियोऽभयवरोद्यतपाणिपद्माः ॥ २२ ॥
श्रीमत्त्रिकोणपरमाद्भुतसर्व[4]पूर्व-
सिद्धिप्रदेति पर[5]मामृतहव्यदेव्यः ।
कामेश्वरी [6]मम ददातु समस्तकामान्
वज्रेश्वरी भगवती भगमालिनी च ॥ २३ ॥
श्रीमत्त्रिकोणपुरविस्फुरितां त्रिनेत्रां
बालातपारुणतनुं तरुणेन्दुमौलिम् ।
पीयूषभाजनधराङ्कुशपाशहस्तां
कामेश्वरीं भगवतीं परिपूजयामि ॥ २४ ॥
पाशाङ्कुशामृतकपालक[7]मातुलङ्ग-
चापेषुसङ्गतकरामरुणां त्रिनेत्राम् ।
श्रीमत्त्रिकोणपरदैवतदक्षिणस्थां
वज्रेश्वरीं भगवतीं परिपूजयामि ॥ २५ ॥

1. '-ऽष्टकोणे' C. 2. '-नस्तगुणा-' C. 3. '-द्विषो-' C. 4. '-सिद्धि-' A. 5, '-मेतिरहस्यदेव्यः' C. 6. 'प्रथमिकास्तु समस्तकामा' B. 7. '-रामनङ्ग-' A.

चन्द्राननां त्रिनयनां तरुणेन्दुमस्तां
पाशाङ्कुशाक्षगुणपुस्तक[1]शस्तहस्ताम् ।
श्रीमत्त्रिकोणपरदैवतवामभागे
शुभ्रां भजे भगवतीं भगमालिनीञ्च ॥ २६ ॥

चक्रातिगुह्यपरमाद्भुतसर्व[2]पूर्वा-
[3]नन्दात्मकेऽतिपरमे नवमेषु पूर्वे ।
भक्त्या परापरतरातिरहस्यदेवीं
सेवे परापरमयीं परमेश्वरीं ताम् ॥ २७ ॥

[4]प्रत्यग्रजाग्रदरुणाम्बुजवक्त्रविम्ब-
चुम्बालिकालकुटिलालकपल्लवां ताम् ।
आनन्दसान्द्रकरुणामयसुप्रसन्ना(न्न-)
लीलानि(ति)लोलनलिनोत्पललोचनालिम् ॥ २८ ॥

सिन्दूरसुन्दरशरीरविराजमान-
राजीवदाडिमजवानवबन्धुजीवाम् ।
श्रीमन्महामुकुटकोटिमहार्घ्यरत्न-
सब्रह्म[5]चारिपरमामृतचन्द्ररेखाम् ॥ २६ ॥

सुभ्रूतया विजित[6]रूपपिनाकपाणे-
र्बाणासनर्द्धिविनिवेशितबाणलीलाम् ।
तद्विश्वकर्मपरिसूत्रितनासिकाग्रां
[7]पद्मासनां त्रिनयनां तरु[8]णेन्दुमस्ताम् ॥ ३० ॥

1. '-भोगहन्त्रीम्' A-B. 2. '-पूर्णा' B. 3. '-द्वन्द्वा-' A. 4. 'प्रत्यग्रे'ति पद्यं सिन्दूरे-त्याद्यनन्तरम् C. 5. 'चाति' B. 6. '-चारु-' C. 7. 'सद्मासनां' A.; 'पद्माननां' C. 8. '-णेन्दुहस्ताम्' B.

ईषद्विकाशितमनोहरहासदन्त-
वासःश्रिया जितनवोदितचन्द्ररेखाम्।
सौन्दर्यदैवतमहामृगनाभिचित्र-
[1]पत्रांशुमिन्दुकमनीयललाटपट्टाम् ॥ ३१ ॥

लावण्यभाण्डशुभगण्डयुगाभिरामा-
नौपम्यकान्ति[2]चिकुराभिविराजमानाम्।
श्रीकुण्डलद्वयविमण्डितगण्डशोभा-
पाण्डित्यखण्डितसुधानिधिमण्ड[3]लाभाम् ॥ ३२ ॥

कर्पूरपूरपरिपूरितचारुनाग-
वल्लीरसार्द्र[4]खपुराढ्यनिभाधरौष्ठीम्।
ग्रैवेयचुम्बितमणिद्युतिदीप्यमान-
[5]सच्छायया द्विगुणशोभितकम्बुकण्ठीम् ॥ ३३ ॥

लाक्षारसस्नपित[6]बालमृणालनाल-
[7]लीलालयामल[8]रसाञ्चितबाहुवल्लीम्।
रक्तोत्पलो[9]ज्ज्वलदलामलकोमलाभि-
र्बालप्रवालललिताङ्गुलिपाणिलीलाम् ॥ ३४ ॥

तद्विश्वकर्मपरियत्नविनिर्मितश्री-
रत्नाङ्गुरीयकनखद्युतिदीप्यमानाम्।
केनापि कारणवशेन गृहीतबद्ध-
पाशाङ्कुशेषुधनुरायुधभूषणानाम्(णां ताम्) ॥ ३५ ॥

---

1. '-पत्राष्ट-' C. 2. '-चिबुकाति-' C. 3. '-लाङ्गम्' C. 4. 'खलु वारुणिताध-' C. 5. 'मूर्च्छांयया' A 6. '-धार-' A. 7. 'वल्लीलयालवरमाञ्चित-' B. 8. '-वरमाहित-' A. 9. '-र्ध्वमदनामल-' A. '-र्ध्वनन्दनामक-' B.

त्रैलोक्यदुर्लभमहामणिनायकश्री-
संसक्तमौक्तिकफलोज्ज्वलहारलक्ष्मीम् ।
लावण्यवारिपरिपूर्णसुवर्ण[1]कुम्भ-
[2]शोभाभिभाविकुचमण्डलपूर्णकुम्भाम् ॥ ३६ ॥

लोकत्रयेऽप्यति[3]सुदुर्लभसाम्यसौम्य-
शोभाविभाकरवलित्रयशोभिमध्याम् ।
लावण्यनाभिगहनाभिगृहप्रविष्ट-
श्रीमन्महाद्युतिमयीं नवलोमराजीम् ॥ ३७ ॥

चञ्चन्मरीचिनिचयाञ्चितकाञ्चनाञ्चत्-
काञ्चीविकाशिरुचिरक्तविचित्रवस्त्राम् ।
श्री[4]कामकाननसमुद्भवरामरम्भा-
[5]स्तम्भाभिभाविसुकुमारतरोरुयुग्माम् ॥ ३८ ॥

वृत्तानुपूर्वविधिदुर्घटसन्निवेश-
जङ्घायुगाभिरम[6]णां मणिगूढगुल्फाम् ।
वाचस्पतेरपि वचोरचनाभिशोभि-
सौन्दर्यगोचरमनोहरपादपद्माम् ॥ ३९ ॥

श्रीब्रह्मविष्णुशिवमौलिलस[7]द्विमान(ा-)
मालोक्यमानकरुणारुणपादपद्माम् ।
श्रीसाधकाय करु[8]णामयसुप्रसन्न-
[9]दृष्टातिदिष्टवरदानमधःप्रसन्नाम् ॥ ४० ॥

---

1. 'कुम्भाशोभाविभाविकुसुमावभवोरुयुग्माम्' A. 2. 'शोभा'दिपादाष्टकं नास्ति A-पुस्तके ।
3. 'न दुर्लभ-' C. 4. '-राम-' C. 5. '-स्तम्भाविभाविकुसुमावभवोरु-' B.
6. '-णीयविमूढगुल्फाम्' C. 7. '-विलासमाणिक्यमानकषणारुणपन्नखाग्राम्' C. 8 '-णायसुख-प्रसन्नाम्' A. 9. '-पष्टाभिदिष्टवरदानविधिप्रसन्ना' A.

[1]त्रैलोक्यमोहनमयीं परमेश्वरीं तां
त्रैलोक्यकारणमयीं परमेश्वरीं ताम् ।
त्रैलोक्यविस्मयमयीं परमेश्वरीं तां
चक्रेश्वरीं शुभकरीं परिपूजयामि ॥ ४१ ॥

त्रैलोक्यमोहनमुखाब्जकचक्रमेतत्
स्थानेऽणिमादिप्रकटादिकसिद्धिदेवीम् ।
श्रीमद्गुरुक्रम[2]समस्तसमन्त्रमुद्राः
पुष्पैः प्रपूज्य परमेश्वरि तेऽर्चयामि ॥ ४२ ॥

[3]पद्मादिभूतमणिपञ्चदशीर्न याव
न्नित्या तिथिक्रममयीं खलु केऽपि धन्याः ।
कामेश्वरीप्रभृतिपञ्चदशादिनित्या
मन्त्रैः [4]परं परमयीं परि[5]पूजयामि ॥ ४३ ॥

त्वं [6]गीयसे प्रथमतस्त्रिपुरेति मातः
पश्चाद्द्वितीय[7]नवमत्रिपुरेश्वरीति ।
तार्त्तीयके त्रिपुरसुन्दरिकेति तुर्ये
मातः परा त्रिपुरवासिनिका त्वमेव ॥ ४४ ॥

त्वं पञ्चमे भगवती त्रिपुरा पराश्रीः
षष्ठे परा त्रिपुरमालिनिका त्वमेव ।
त्वं सप्तमे भगवती [8]त्रिपुरादिसिद्धा
त्वञ्चाष्टमे भगवती [9]त्रिपुरात्मकेति ॥ ४५ ॥

---

1. 'त्रैलोक्यमोहने'त्यादि पादत्रयं नास्ति B. 2. '-मनन्त-' A. 3. 'पक्षादि-' C. 4. 'पराः परमयीः' C. 5. '-पूजयन्ति' A. 6. 'गीयत' (?) C. 7. '-वसतौ' C. 8. 'त्रिपुरेति' C. 9. 'त्रिपुराम्बिकेति' C.

पूर्णे परापरमये परमेऽतिगुह्ये
श्रीमन्महात्रिपुरसुन्दरिका त्वमेव ।
श्री[1]मन्महात्मकमहाद्भुतचक्रराजे
त्वं गीयसे सुकृतिभिः खलु कैश्च देवी ॥ ४६ ॥

आदौ दशाष्ट दश षोडश चाष्ट चासि
पश्चाच्चतुर्दश दशासि ततो दशाष्टौ
पश्चाच्चतुष्टयमसि त्रितयश्च षट्कं
सप्तोत्तरा शतमयी त्वमसि त्वमेका ॥ ४७ ॥

कामेश्वरीति भगमालिनिकेति नित्य-
क्लिन्नेति [2]तैरुपरताऽपि [3]हिरण्डकेति ।
त्वं वह्निवासनिरतेति महादिभूत-
विद्येश्वरीति च तथा शिवदूतिकेति ॥ ४८ ॥

मातः परा त्वरितिका कुलसुन्दरीति
नित्यातिनित्यपरनीलपताकिनीति ।
त्वं सर्वलोकविजयाखिल[4]मालिकेति
ज्वालामयीति [5]निगदन्ति विचित्रकेति ॥ ४९ ॥

मातस्तत्राद्त्वर[6]मनत्त्वररूपिकायं
[7]संसाध्य शुद्धमतयो गणयन्ति नैव ।
श्रीब्रह्मविष्णुशिवतार्क्ष्यरवीन्द्रचन्द्र-
यक्षेन्द्रदर्पकगणेश्वरवह्निमुख्यान् ॥ ५० ॥

1. '-मनुरात्मक-' ? C. 2. 'ते रूपवतो-'(?) B. 3. 'हिरुण्डकेति' C. 4. '-मङ्गलेति' A. 5. 'मिनदत्यतिविचिकित्सकेति'(?) A-B. 6. '-मनुक्षण-' C. 7. 'संमध्यतुक्षमतयो गृह्यन्ति नैव' A-B.

संपूज्य केऽपि सकलै[1]र्वरणोपचारै-
र्ग्रन्थिं विभिद्य परमेष्ठिनमुद्वहन्तीम् ।
[2]मारात्मिकां मदनधामनि दीपरूपां
जिह्वाग्रतः सुकृतिनः परिपालयन्ति ॥ ५१ ॥

आधारवारिरुहमध्य[3]लसत्त्रिकोण-
[4]वामाशिखाग्रजपरां परमाङ्कुराभाम् ।
ज्ञानक्रियेष्टमयि [5]शक्तिविनाश[6]नाश-
श्रीब्रह्मविष्णु[7]गुणशक्तिवरा त्वमेका ॥ ५२ ॥

सृष्टिस्थितिप्रलय[8]कारणकर्तृभूतं
वेदान्त[9]वेद्यमजमव्ययमप्रमेयम् ।
अन्योन्यभेदकलहाकुलमानसास्ते
जानन्ति किं जडधियस्तव रूपम[10]म्ब ॥ ५३ ॥

स्तोत्रं त्वमेव परमेश्वरि गीयसे चेत्
स्तोता त्वमेव परमेश्वरि गीयसे चेत् ।
स्तुत्यं त्वमेव परमेश्वरि गीयसे चेत्
किं स्तूयसे खलु तदा परमेश्वरि त्वम् ॥ ५४ ॥

यः कालकल्पतरुमेतदनन्यबुद्धिः
श्रीमत्क्रमस्तवनृपं पठतीह नित्यम् ।
मुक्तिः करे वसति [11]सिद्धिभिरष्टभिर्वा
किं [12]तस्य मातरणिमादिभिरल्पिकाभिः ॥ ५५ ॥

---

1. '-र्धवलोपतारै-' A-B. 2 'जीवात्मिकां' C. 3. 'नमस्त्रिकोणे' B. 4. 'कामा' A-B. 5. 'सृष्टि-' C. 6. 'नाश्ये' C. 7. '-शिवरूपधरा त्वमेषा' C. 8. '-कर्तृप्रभूतभूतं' A. 9. '-वेदमतमव्यय-' B. 10. '-मम्बा' A-B. 11. 'सिद्धिरभीष्टभिर्वा' A-B. 12. 'किं तस्य याभिरणिमा-' A-B.

त्वां पूजयेत् क्रमकुलां सकलार्थसिद्धि-
स्तोत्रं पठिष्यति जनस्त्वयि जातभक्तिः ।
तस्मा[1]न्मयाऽपि तव भक्तिरसेन देवि
भक्तार्थसिद्धिकररत्नमिदं व्यधायि ॥ ५६ ॥

---

५५-५६ । यः कालेति । स्तवस्यास्य क्रमस्तव इति नामोक्तं स्तवकारेण, तत्र च श्रीचक्रवर्णनमारभ्य पूजाक्रमेण सर्वासामावरणदेवतानामुल्लेखो वर्णनञ्चात्रेति कारणं सम्भाव्यते, अत एव भङ्‌ग्या तमेवार्थमुल्लिखति त्वां पूजयेदित्यादिना ग्रन्थकार ।

---

1. 'न्ममापि' B.

—:०:—

[ त्रिपुरार्णवोक्तं त्रिपुरसुन्दरीकवचम् ]

अथ वक्ष्यामि कवचं त्रिपुरा[1]र्णवलक्षितम्[2] ।
समस्ताप[3]द्विमुक्त्यर्थं समस्तसम्पदाप्तये ॥ १ ॥
भूतप्रेतपिशाचादिपीडाशान्त्यै सुखाप्तये ।
समस्तरोगनाशाय समरे विजयाय च ॥ २ ॥
चौरसिंहद्वीपिगज[4]गरलादभयानके ।
अरण्ये शैलगहने मार्गे दुर्भिक्षके तथा ॥ ३ ॥
सलिलाग्निमरुत्पीडा [5]ऋक्षौ(?) पीडादिसङ्कटे ।
प्रजप्य नित्यकवचं सकृत् सर्वं [6]त्यजत्यसौ ॥ ४ ॥
सुखी जीवति निर्द्वन्द्वो निःसपत्नो जितेन्द्रियः ।
शृणु तत् कवचं देवि वक्ष्ये [7]भवभवान्तकम् ॥ ५ ॥
[8]येनाहमपि युद्धेषु देवासुरजयी [9]तथा ।
सर्वतः सर्वदात्मानं ललिता पातु सर्वदा ॥ ६ ॥
कामेशी पुरतः पातु [10]भगमाला [11]तदन्तरम् ।
दिशं पातु तथा दक्षं पार्श्वं [12]पातु स सर्वदा ॥ ७ ॥
नित्य[13]क्लिन्ना चोत्तरतो दिशं पातु सदा मम ।
अथैव पश्चिमे भागे रक्षेत् सा वह्नि[14]वासिनी ॥ ८ ॥

---

1. '-रान्तर-' A-B. 2. इतः परम् 'ईश्वर उवाच' C. 3. '-द्विशुद्ध्यर्थं' C. 4. '-गरलाभिभया-' A. 5. 'अब्धौ' C. 6. 'भवत्यसौ' C. 7. 'भवतु वर्त्मकम्' C. 8. 'सेनाऽह-' C. 9. 'सदा' C. 10. 'समाला तदनन्तरम्' A. 11. 'त्वनन्तरम्' C. 12. 'मे पातु' C. 13. '-क्लिन्नामुत्तरतो' B. 14. '-भामिनी' A.

महाचक्रेश्वरी रक्षे[1]दनन्तं विदिशं सदा ।
वामपा[2]र्श्वं सदा पाया[3]दुड्डी मे त्वरिता ततः ॥ ९ ॥
पालयन्तु दिशश्चान्या रक्षेन्मां [4]कुलसुन्दरी ।
नित्या मा मूर्ध्वतः पातु माधवः पातु सर्वदा ॥ १० ॥
नीला नीलपताकाख्या विजया सर्वतश्च माम् ।
करोतु मे मङ्गलानि सर्वदा सर्वमङ्गला ॥ ११ ॥
देहे पातु मनःप्राणान् ज्वालामालिनिविग्रहा ।
विचित्रा सर्वतो रक्षेत् षोडशी पातु सुन्दरी ॥ १२ ॥
अपारभवसंसारसिन्धुनिस्तारहेतवे ।
चत्वारो गुरवः पान्तु ममानिष्टविनाशकाः ॥ १३ ॥
विहितार्थप्रदायिन्यश्चिन्त्यमानमहौजसः ।
विघ्नं मम परिघ्नन्तु प्रसिद्धाः सिद्धयो दश ॥ १४ ॥
[5]वृन्दारकशिरोवृन्दवन्द्यमानपदाम्बुजा ।
अष्टौ वागुदेवता भव्यमूर्त्तयः पालयन्तु माम् ॥ १५ ॥
सर्वविघ्नविनाशिन्यो नित्यानित्यकलामयाः ।
कामाकर्षणकारिण्यो विघ्नं विघ्नन्तु षोडश ॥ १६ ॥
सर्वाशापूरके चक्रे त्रिपुरेशीसमन्विता ।
वसन्त्यो गुप्तयोगिन्यो मम कुर्वन्तु मङ्गलम् ॥ १७ ॥
जगत्स्तम्भनकारिण्यो जगद्वन्द्यपदाम्बुजाः ।
साधयन्तु महाभी[6]ष्टं मनोज्ञमिष्टदेवताः ॥ १८ ॥

1. '-दनन्तरदिशं' C. 2 '-र्श्वं सदा पातु हती मे' C. 3. 'दुड्डीने' A. 4. 'वह्निभामिनी' A. 5. 'वृन्दानिकार्णवेवृन्द' (?) A. 6. '-ष्टमनङ्गाद्यष्टदेवताः' C.

युक्तास्त्रिपुरसुन्दर्याः सर्वक्षोभकरे स्थिताः ।
चक्रे गुप्ततराः पान्तु योगिन्यो मां महौजसः ॥ १९ ॥
[1]दूर्वावतरदुर्मोहतिमिरार्कमरीचयः ।
मां महाशक्तियोगिन्यः पालयन्तु चतुर्दश ॥ २० ॥
सर्वसौभाग्यदे चक्रे त्रिपुरावासिनीयुता ।
सत्सम्प्रदाययोगिन्यो वर्धयन्तु मम[2] श्रियम् ॥ २१ ॥
सर्वसिद्धिप्रदायिन्यो वन्दिता दश देवताः ।
मदिरानन्दितमुखाः[3] सर्वार्थान् साधयन्तु ताः ॥ २२ ॥
त्रिपुराश्रीयुता देव्यः कुलकौ[4]लकुलोद्भवाः ।
सर्वार्थसाधके चक्रे स्थिता एताः पुनन्तु माम् ॥ २३ ॥
सर्वज्ञानेन सम्पन्नाः सर्वनिर्वाणहेतवः ।
रक्षन्तु मां महादेव्यो दश[5]रेखोपकारिकाः ॥ २४ ॥
युक्तास्त्रिपुरमालिन्यः सर्वरक्षाकरे स्थिताः ।
चक्रे निगर्भयोगिन्यः कुर्वन्तु मम [6]मङ्गलम् ॥ २५ ॥
[7]अधिकानल्पसङ्कल्पाः कल्पनाकामबन्धकाः ।
अष्टौ वाग्देवताः सन्तु सदा सकरुणा मयि ॥ २६ ॥
त्रिपुरासिद्धिसंयुक्ताः सर्वयोगहरे[8] स्थिताः ।
चक्रे रहस्ययोगिन्यो रोगानपनयन्तु मे ॥ २७ ॥
[9]महोजम्भे महास्तम्भे महामोहे महारणे ।
हेतवोऽस्मत्प्रिये सन्तु चतस्रो [10]मन्त्रदेवताः ॥ २८ ॥

---

1. 'सर्वावतरदुर्मोहमिवार्कस्य मरीचयः' A. 2. 'ममाश्रयम्' A. 3. 'स्वान्ताः' C. 4. '-शैल-' C. 5. 'विश्वोपकारिकाः' A. 6. 'सम्पदम्' C. 7. 'साधका-' C. 8. 'सर्वरोगहरे' C. 9. 'महाजम्भमहास्तम्भमहा-' A-B. 10. 'वाण-' C.

चक्राग्रे दक्षवामे [1]च [2]षट्कोणे विहितास्पदाः ।
तिस्रो रक्षन्तु मे एताः कामेश्वर्यादिदेवताः ॥ २९ ॥
सर्वसिद्धिप्रदे चक्रे त्रिपुराम्बासमन्विताः ।
योगिन्योऽतिरहस्या मे वितन्वन्तु समीहितम् ॥ ३० ॥
एतासामपि सर्वासामीश्वरीमिष्टदेवताम् ।
दुर्लभामपि देवानां [3]बालात्रिपुरसुन्दरीम् ॥ ३१ ॥
यदादिश्च यदन्तश्च यन्मध्यश्च न [4]जानते ।
ब्रह्मादयोऽपि [5]पान्तु श्रीमहात्रिपुरसुन्दरी ॥ ॥ ३२ ॥
सर्वानन्दमये चक्रे बैन्दवे विहितानया ।
परावररहस्याः स्युर्योगिन्यः सन्तु संमुदे ॥ ३३ ॥
समयार्चनवि[6]द्वेवि विद्वेषणपरायणः ।
दक्षे दक्षिणभागस्थो मां पातु वटुकेश्वरः ॥ ३४ ॥
महाविघ्नविनाशिन्यो वामभागे कृतास्पदाः ।
जगत्त्रितयवासिन्यो योगिन्यः सन्तु सम्मुदे ॥ ३५ ॥
[7]प्रत्यूहव्यूहविध्वंसकारणं करुणामयः ।
[8]मम प्रीत्यर्थतो हन्तु क्षेत्रपालः पुरः स्थितः ॥ ३६ ॥
अपस्मारादिदुर्द्धर्षसंहारैक[9]पदक्रमः ।
पृष्ठस्थाने स्थितो देवो मां [10]पातु च गणेश्वरः ॥ ३७ ॥
यश्चेदं पठति स्तोत्रं कदाचन शृणोति च ।
अचिरादेव नश्यन्ति तस्य सर्वेऽप्युपद्रवाः ॥ ३८ ॥

1. '-षु' C. 2. 'कोणेषु त्रिपुरान्तकाः' C. 3. 'वन्दे' C. 4. 'जायते' A. 5. 'मामेषा पातु त्रिपुर-' C. 6. '-विद्वेषिविशेषण-' C. 7. 'प्रचुर-' C. 8. 'समर्थं प्रार्थितो' B.; 'मम संप्रार्थिनी' A. 9. '-पराक्रमः' C. 10. 'पुनातु' C.

तन्मुखं कविता[1]रूपं तद्गृहं कमलालयम् ।
स देशः [2]सत्त्वशुद्धः स्याद् [3]यत्रायं पठ्यते स्तवः ॥ ३९ ॥
रोगार्त्तो मुच्यते रोगैर्बद्धो मुच्येत बन्धनात् ।
विघ्नवान् मुच्यते विघ्नैः पठन् स्तोत्रादिकं नरः ॥ ४० ॥
[4]ध्येयैषा त्रिपुरा रत्ना पठनीया प्रयत्नतः ।
अनया कमलासिद्धिरनया पापनाशनम् ॥ ४१ ॥
त्रिपुरार्णवतन्त्रस्य समाप्तं कवचं शुभम् ।
अथान्यत् कवचं वक्ष्ये षोडशीनां सुखावहम् ॥

देव्युवाच[5]—

भगवन् देवदेवेश लोकानुग्रहकारक ।
त्वत्प्रसादा[6]न्महादेव श्रुता मन्त्रा[7]स्त्वनेकशः ॥ १ ॥
साधनं विविधं देव कीलकोद्धारणन्तथा ।
शापादिदूषणोद्धारः श्रुत[8]स्त्वत्तो मया प्रभो ॥ २ ॥
[9]राजराजेश्वरीदेव्याः कवचं सूचितं मयि ।
इदानीं श्रोतुमिच्छामि कथयस्व मयि प्रभो ॥ ३ ॥

ईश्वर उवाच—

लक्षवारसहस्राणि वारितासि पुनः पुनः ।
स्त्रीस्वभावात् पुनर्देवि पृच्छसि त्वं मयि प्रिये ॥ ४ ॥
[10]अत्यन्तगुह्यं कवचं सर्वकामफलप्रदम् ।
प्रीतये [11]देवदेवेशि कथयामि शृणुष्व तत् ॥ ५ ॥

अस्य श्रीराजराजेश्वरीमहात्रिपुरसुन्दरीषोडशीविद्याकवचस्य

---

1. '-वश्यं' C. 2. 'सन्तु' A. 3. 'येनायं' A. 4. 'ध्येयैका' C. 5. 'देव्युवाच' नास्ति A. B. 6 '-दादहं' A. 7. 'मन्त्रां-' A. 8. '-स्त्वत्तो मम प्रिये' A-B. 9. 'राजराजे'त्यादि पादाष्टकं' नास्ति A. 10 'अत्यन्तं परमं गुह्यं' C. 11. 'तव' C.

महादेव ऋषिः प्रस्तारपङ्क्तिच्छन्दो राजराजेश्वरी श्रीमहा-
त्रिपुरसुन्दरी देवता [1]सर्वार्थसाधने विनियोगः ।

ॐ पूर्वे मां भैरवी पातु बाला मां पातु दक्षिणे ।
मालिनी पश्चिमे पातु [2]वशिनी तूत्तरेऽवतु ॥ ६ ॥
ऊर्ध्वं पातु महादेवी महात्रिपुरसुन्दरी ।
अधस्तात् पातु देवेशी पातालतलवासिनी ॥ ७ ॥
आधारे वाग्भवः पातु कामराजस्तथा हृदि ।
डामरः पातु मां नित्यं मस्तके सर्वकामदः ॥ ८ ॥
ब्रह्मरन्ध्रे सर्वगात्रे छिद्रस्थानेषु[3] सर्वदा ।
महाविद्या भगवती पातु मां परमेश्वरी ॥ ९ ॥
ऐँ क्लीं[4] ललाटे मां पायाद् ह्रीं हंसः पातु नेत्रयोः ।
नासायां कर्णयोश्चैव श्रीं[5] ह्रीं ह्रीं चिबुके तथा ॥ १० ॥
हसौ पातु[6] गले हृदये [7]स्वीं च[8] नाभिदेशके ।
[9]कलह्रीं [10]क्रीं श्रीं गुह्यदेशे [11]पातु हूँ ह्रीँ च पादयोः ॥११॥
स्त्रीँ मां सर्वतः पातु सक्लौँ पातु च सन्धिषु ।
जले स्थले तथाकाशे दिक्षु राजगृहे तथा ॥ १२ ॥
हुं त्रें मां त्वरिता पातु सह्रीं सक्लीं मनोभवा ।
हंसः पायान्महादेवी परं निष्कलदेवता ॥ १३ ॥
विजया मङ्गला दूती कल्याणी भगमालिनी ।
ज्वाला च मालिनी नित्या सर्वदा मां सदाऽवतु ॥ १४ ॥
इत्येवं[12] कवचं देवि [13]देवानामपि दुर्लभम् ।

---

1. 'पुरुषार्थ-' A. 2. 'कामिणी' A.; 'वासिनी' C. 3. 'च मे सदा' C. 4. 'हूँ' A. 5. 'हैं हाँ ह्रीँ' B. 6. 'पातु च गले' C. 7. 'हसह्रीँ' A. 8. 'च' नास्ति C. 9. 'क्लुँ' B. 10. 'क्लीँ' A. 11. 'पातु हूँ ह्रीँ च पादयोः । स्त्रीं मां सर्वतः पातु सक्लीँ पातु च सन्धिषु । जले स्थले तथाकाशे' अयमंशो नास्ति A. 12. '-तत्' A. 13. 'देवानामि'त्यादि पाददशकं' नास्ति C.

तत्र प्रीत्या मयाख्यातं गोपनीयं प्रयत्नतः ॥ १५ ॥
इदं रहस्यं परमं गुह्याद् गुह्यतरं प्रिये ।
धन्यं यशस्यमायुष्यं भोगमोक्ष[1]फलप्रदम् ॥ १६ ॥
दुःस्वप्ननाशनं पुंसां नरनारीवशङ्करम् ।
आकर्षणकरं देवि [2]स्तम्भमोहकरं शिवे ॥ १७ ॥
इदं कवचमज्ञात्वा राजराजेश्वरीं [3]शिवाम् ।
योऽर्चयेद् योगिनीवृन्दैः स भक्ष्यो नात्र संशयः ॥ १८ ॥
न तस्य मन्त्रसिद्धिः स्यात् कदाचिदपि शङ्करि ।
इह लोके च दारिद्र्यं रोग[4]शोकभयानि च ॥ १९ ॥
परत्र [5]नरकं गत्वा पशुयोनिमवाप्नुयात् ।
तस्मादेतत् सदाऽभ्यस्येदधिकारी भवेत्ततः ॥ २० ॥

मद्वक्त्रनिर्गतमिदं कवचं सुपुण्यं
पूजा[6]विधौ च पुरतो [7]यदि वा पठेच्च ।
सौभाग्यभोग[8]ललितानि शुभानि भुक्त्वा
देव्याः पदं भजति तत् पुनरन्तकाले ॥ २१ ॥

कुलार्[9]णवस्य तन्त्रस्य समाप्तं कवचं परम् ॥

त्रिपुरासुन्दरीशतनामस्तोत्रम्

समासेन प्रवक्ष्यामि देव्या नाम[10]शताष्टकम् ।
[11]तद् गुह्यं परमं जाप्यं महाद्भुतविनाशनम् ॥ १ ॥
[12]श्री(ः) चेतना महामाया महागौरी महेश्वरी ।
महाबुद्धिर्महाचण्डी महाकाली महा[13]कला ॥ २ ॥

---

1. '-प्रदं शिवम्' A. 2. 'स्तम्भोच्चाट-' A. 3. 'यजेत्' B. 4. '-दुष्ख-' C. 5. 'निलयं' C. 6. '-विधेश्च' A. 7. 'विधिना' A. 8. '-भाग-' A. 9. '-र्णवाख्य-' C.; कुलानन्दसंहितायां' A. 10. 'शतं शुभम्' C. 11. 'यद् गुह्यं परमं गुह्यं महाभयविना-' C. 12. 'महती चेतना माया' C. 13. '-बला' C.

महाक्षुधा महामुद्रा महानिद्रा महो[1]दया ।
[2]महालक्ष्मीर्महाभोगा महामोहा महोदया ॥ ३ ॥
महाजया महातुष्टिर्महालज्जा महाधृतिः ।
महाघोरा महादंष्ट्रा महाकान्तिर्महास्मृतिः ॥ ४ ॥
महापद्मा [3]महामेधा महाबोधा महातपा ।
महास्वधा महास्वाहा महाबाधा महासुरा[4] ॥ ५ ॥
महाबन्धनसंहन्त्री महाभयविनाशिनी ।
[5]महानेत्रा महावक्त्रा महाजिह्वा महाभुजा ॥ ६ ॥
महामहीरुहा पूर्णा महाच्छाया महानघा ।
महाशक्तिर्महाश्वासा महापर्वतनन्दिनी ॥ ७ ॥
महाब्रह्ममयी माता महासारा महावरा ।
महासुरघ्नी महती पार्वती चर्चिका शिवा ॥ ८ ॥
महाक्षान्तिर्महाभ्रान्तिर्महामाता महीयसी ।
महाकुला महालोला महामाया महाफला ॥ ९ ॥
महानीला महाशीला महा[6]शुभ्रा महाकला ।
महाचित्रा महासेतुर्महाहेतुर्यशस्विनी ॥ १० ॥
महाविद्या महा[7]साध्या महासत्या महागतिः ।
महासुरी महादुर्गा महादुःस्वप्ननाशिनी ॥ ११ ॥
महामोक्षप्रदा मोक्षा महादक्षा महीयसी ।
महाभद्रा महावाणी महारोगविनाशिनी ॥ १२ ॥

---

1. '-दरा' A. 2. 'महालक्ष्मी'रित्यादि पादचतुष्कं' नास्ति C. 3. 'महामेधा महाबोधा महातपा महास्वधा' अयमंशो नास्ति A-पुस्तके । 4. '-सुधा' C. 5. 'महानेत्रा' नास्ति A. 6. 'बाला' C. 7. '-घोरा' A.

महा[1]दारुर्महाकारा महामारी महेश्वरी ।
महाक्षेमङ्करी क्षेमा महैश्वर्यप्रदायिनी ॥ १३ ॥
महाविषघ्नी विषदा महादुर्गविनाशिनी ।
महादुर्गा महा[2]तारा महाकैलासवासिनी ॥ १४ ॥
महासुभद्रा सुभगा महाध्यर्या च महासती ।
महाप्रत्यङ्गिरा नित्या महाप्रलयकारिणी ॥ १५ ॥
महाशक्तिर्महामुक्तिर्महामङ्गलदायिका ।
[3]इदं यः कीर्त्तयेद् भक्त्या विषमस्थो भवेद् यदि ॥ १६ ॥
लौहपञ्जरमध्यस्थस्तस्य नश्यति बन्धनम् ।
राजानो [4]दासतां यान्ति भवेत् सर्वजनप्रियः ॥ १७ ॥
उत्तमां भूतिमाप्नोति तस्य नश्यन्त्युपद्रवाः ।
संग्रामे विजयेच्छत्रून् गरुडः पन्नगानिव ॥ १८ ॥
न विषं क्रमते तस्य न मृत्युः पावके जले ।
नाकाले मरणं तस्य कदाचिदपि सम्भवेत् ॥ १६ ॥
यद् यत् कामयते कामी तत्तदाप्नोति नान्यथा ।
बहुना च किमुक्तेन सर्वेषां मूर्ध्नि वर्त्तते ॥ २० ॥
रुद्रयामलतन्त्रोक्तं शतं नाम समीरितम् ॥

इति श्रीपूर्णानन्दपरमहंसविरचिते श्रीतत्त्वचिन्तामणावूनविंशतितमः प्रकाशः ॥ १६ ॥

---

1. '-धारा म-' C. 2. '-तत्त्वा' C. 3. 'य इदं' C. 4. 'वशतां' C.

१३। कुमारसम्भवम्—मल्लिनाथकृतटीका—भरतमल्लिक-नारायण-वामनकृतटीकासारभूतटिप्पणी—व्याख्या-
...न्वय-वङ्गानुवादादिसमेतम्। अध्यापक-श्रीरामचन्द्रकाव्यतीर्थ-संस्कृतम्। अध्यापक-श्रीचिन्तामणिभट्टाचार्यकृत-
...न्दीभाषानुवाद-सहितम्। सप्तमसर्गपर्यन्तम्। मूल्यम्—१॥० सार्धरौप्यकम्।

१४। छन्दोमञ्जरी—टीका-वङ्गानुवाद-सूचीपत्रादिभिः समेता। अध्यापक-श्रीरामचन्द्रभट्टाचार्य-काव्यतीर्थ-
...स्कृता। मूल्यम्—१) रौप्यकमात्रम्।

१५। सांख्यतत्त्वकौमुदी—वाचस्पतिमिश्र-कृता। सांख्यकारिकाव्याख्या-रूपा। टिप्पन्यादिसमेता।
...तीयविदुषा तर्कवागीश-रघुनाथचक्रवर्तिना कृतेन सांख्यतत्त्वविलासीयोपोद्घात-प्रकरणेन सहिता।
...स्कृतभूमिका-सूचीपत्रादिभिः समलङ्कृता। हेमन्तकुमारीसंस्कृतकालेजाध्यक्ष-श्रीरमेशचन्द्र-तर्कतीर्थ-संस्कृता।
मूल्यम्—१॥० सार्धरौप्यकम्।

१६। सामवेदसंहिता—सायणभाष्य-समेता। संस्कृतभाष्यसारवङ्गानुवाद-टिप्पणीसमलङ्कृता।
...लिकाता-"वङ्गवासी"कालेजाध्यापक-श्रीभवविभूतिभट्टाचार्य-विद्याभूषण-एम्-ए-संस्कृता।
छन्दआर्चिक-पर्यन्तं प्रथमखण्डम्। मूल्यम्—१२) रौप्यकद्वादशकम्।

१७। गोभिलगृह्यसूत्रम्—भट्टनारायणकृतभाष्य-टिप्पणी-सूचीपत्रादिसमेतम्। अध्यापक-श्रीचिन्तामणि-
...ट्टाचार्य-संस्कृतम्। सम्पूर्णं प्रथमखण्डम्। मूल्यम्—१२) रौप्यकद्वादशकम्।

१८। न्यायदर्शनम्—वात्स्यायनभाष्य-वार्त्तिक—तात्पर्यटीका—विश्वनाथवृत्ति—टिप्पन्यादिसमेतम्।
...ीन्द्रनाथ-गीताञ्जल्यनुवादात्मक-संस्कृतगीताञ्जलि-कृदध्यापक-श्रीअमरेन्द्रमोहन-तर्कतीर्थेन अध्यापक-श्रीतारानाथ-
...यायतर्कतीर्थेन च संस्कृतम्। तृतीयाध्याय-पर्यन्तं प्रथमखण्डम्। मूल्यम्—१०) रौप्यकदशकम्।

१९। श्रीतत्त्वचिन्तामणिः—पूर्णानन्दपरमहंसकृतः। टीका-टिप्पन्यादिसमेतः। अध्यापक-ᐟभुवनमोहन-
...ाव्यतीर्थेन अध्यापक-श्रीचिन्तामणिभट्टाचार्येण च संस्कृतः।
व्याप्तिग्रन्थकाण्डपर्यन्तं प्रथमखण्डम्। मूल्यम्—११) रौप्यकैकादशकम्।

२०। रघुवंशम्—मल्लिनाथकृतटीका-टिप्पणी-वाच्यान्तरान्वय-वङ्गानुवादादिसमेतम्। अध्यापक-श्रीहेमन्त-
...मारतर्कतीर्थ-संस्कृतम्। सम्पूर्णं प्रथमखण्डम्। मूल्यम्—२) रौप्यकद्वयम्।

## यन्त्रस्था ग्रन्थाः

२। वाल्मीकि-रामायणम्—किष्किन्ध्याकाण्डात्मकम्। अध्यापक-श्रीनरेन्द्रचन्द्रवेदान्ततीर्थ-एम्-ए-
...संक्रियमाणम्। खण्डशः प्रकाश्यमानम्। प्रतिखण्डं मूल्यम्—१) रौप्यकमात्रम्।

१६। सामवेदसंहिता—( उत्तरार्चिकम्, आङ्गलभूमिका-सूचीपत्रादिसहितम्। ) अध्यापक-श्रीभव-
विभूति-भट्टाचार्य-विद्याभूषण-एम्-ए-संस्कृता। मूल्यम्—१२) रौप्यकद्वादशकम्।

१७। गोभिलगृह्यसूत्रम्—सूचीपत्रात्मकं द्वितीयखण्डम्। अध्यापक-श्रीचिन्तामणि भट्टाचार्य-
सम्पादितम्। आसामसंस्कृत'एसोसियेशन'सभापति-सम्पादक-श्रीहट्टसंस्कृतकालेजाध्यक्ष-पाश्चात्यदर्शन-संस्कृतसाहित्या-
...ध्यापकचर-श्रीवनमालि-वेदान्ततीर्थ-एम्-ए-लिखिताङ्गलभूमिकादिभिः समलङ्कृतम्। मूल्यम्—२) रौप्यकद्वयम्।

१८। न्यायदर्शनम्—चतुर्थ-पञ्चमाध्यायात्मकं द्वितीयखण्डम्। न्यायसूचीनिबन्ध-सूचीपत्रादिसहितम्।
...वीन्द्रनाथ-गीताञ्जल्यनुवादात्मक-संस्कृतगीताञ्जलि-कृदध्यापक-श्रीअमरेन्द्रमोहन-तर्कतीर्थ-संस्कृतम्। अध्यापक-
श्रीनरेन्द्रचन्द्रवेदान्ततीर्थ-एम्-ए-लिखिताङ्गलभूमिकया समलङ्कृतम्। मूल्यम्—६) रौप्यकषट्कम्।

१९। श्रीतत्त्वचिन्तामणिः—विशादिपदविंशान्तप्रकाशात्मकं द्वितीयखण्डम्। सूचीपत्रादि-सहितम्।
अध्यापक-श्रीचिन्तामणि-भट्टाचार्य-संस्कृतम्। अध्यापक-श्रीप्रबोधचन्द्र-बाग्चि-एम्-ए-डि-लिट्-लिखिताङ्गल-
भूमिकया समलङ्कृतम्। मूल्यम्—२) रौप्यकद्वयम्।

२०। रघुवंशम्—द्वितीयखण्डम् ( १—९, ११—१४ सर्गाः )। अध्यापक-श्रीचिन्तामणि-भट्टाचार्य-
कृत-हिन्दीभाषानुवादात्मकम्। मूल्यम्—आनकाष्टकम्।

२१। चतुरङ्गदीपिका—आङ्गलभूमिकानुवाद-टिप्पणी-सूचीपत्रादिभिः समलङ्कृता। अध्यापक-श्रीमनो-
मोहनघोष-एम्-ए-काव्यतीर्थ-संस्कृता। मूल्यम्—२) रौप्यकद्वयम्।

२२। न्यायपरिशिष्टम् ( (प्र)-बोधसिद्धिः )—उदयनाचार्य-कृतम्। वर्धमानोपाध्यायकृत-प्रकाशटीका-
टिप्पन्यादिसमेतम्। आङ्गलभूमिका-सूचीपत्रादिभिः समलङ्कृतम्। अध्यापक-श्रीनरेन्द्रचन्द्रवेदान्ततीर्थ-एम्-ए-संस्कृतम्।
मूल्यम्—५) रौप्यकपञ्चकम्।

